सूत्रम् पृष्ठम्.

षष्ठाध्याये षष्ठी कण्डिका—

८१ पादादिशोधनजलकलशहस्तायाः पत्न्या वाचनम् १ ४१६
८२ इन्द्रियाधिष्ठानानां वागादीनां पत्न्या शोधनम् २ „
८३ यजमानाध्वर्युकर्तृकं शिरःप्रभृत्यङ्गानामनुषेचनम् ४ ४१७
८४ नाभ्यग्रे तृणनिधानादिपूर्वकं वपोत्खेदनम् ७ „
८५ वपया वपाश्रपणीवेष्टनम् ११ ४१८
८६ वपाच्छेदनादिकम् १२ „
८७ वपाश्रपणम् १५ ४१९
८८ वपाऽभिघारणम् १६ „
८९ उत्तमप्रयाजप्रैषः १७ „
९० निरूढपशौ आज्यभागकरणपक्षे उत्तमप्रयाजानन्तरं प्रथमं ध्रुवाऽभिघारपूर्वकं वपापृषदाज्ययोरभिघारणम्, आज्यभागाननुष्ठानपक्षे वपाऽभिघारपूर्वकं ध्रुवा-पृषदाज्ययोरभिघारणं च १८ ४२०
९१ आज्योपस्तारः, हिरण्यशकलावधानं, वपानिधानं, पुनर्हिरण्यशकलावधानं, तदुपरि सकृदभिघारणम्, इत्येवं पञ्चावत्तवपाकरणम् २० „
९२ वपायागप्रैषः २२ ४२१
९३ वपाश्रपण्योराहवनीये प्रासनम् २४ ४२१
९४ चात्वाले सर्वेषां मार्जनम् २५ „

षष्ठाध्याये सप्तमी कण्डिका—

९५ शमिता ऋत्विगेव, तदितरो वेति मतद्वयम् १ ४२२
९६ सोमविक्रयी ऋत्विगन्य एव ४ ४२३
९७ अखण्डहृदयादिपृथक्करणम् ५ „
९८ गर्ते पशुपुरीषनिधानपूर्वकं तस्मिन् लोहितनिरसनम् १३ ४२५
९९ वारणकाष्ठमये शूले हृदयप्रोतकरणपूर्वकं शामित्रे श्रपणम् १४ „
१०० उखायां हृदयातिरिक्तावदानश्रपणम् १५ „
१०१ निरूढपशुपुरोडाशे एकदेवतत्वादिभिः कपालसंख्या १६ „
१०२ अस्मिन्नवसरे हविष्कृदाह्वानमेव, दृषदुपलसमाहननं तु पशुपात्रप्रोक्षणोत्तरकालमेव १८ ४२६

| | सूत्रम् | पृष्ठम् |
|---|---|---|
| १०३ द्रव्यनिर्देशेन सहानुवाचनम् | १९ | ४२६ |
| १०४ उपभृति स्विष्टकृदवदानम् | २० | ,, |
| १०५ पशुपुरोडाशप्रैषः | २१ | ,, |
| १०६ याज्यादौ निर्गुणाभिधानेऽपि स्विष्टकृद्गुणसहितस्याग्नेरेवानुवाचनादावभिधानम् | २२ | ,, |
| १०७ पशुपुरोडाशे पश्वर्थमनुष्ठितैः प्रयाजादिभिरेवोपकारः, नातिरिक्तप्रयाजाद्यनुष्ठानम् | २६ | ४२७ |
| १०८ निरूढपशौ पश्वाद्यन्यतमदक्षिणा | २९ | ४२८ |


षष्ठाध्याये अष्टमी कण्डिका—


| | | |
|---|---|---|
| १०९ शमित्रनुशासनम् | १ | ४२९ |
| ११० शमितुः यथानुशासनकरणम् | २ | ,, |
| १११ शृतहविषः प्रश्नोत्तरे | ४ | ४३० |
| ११२ हृदयाद्यभिघारणम् | ६ | ,, |
| ११३ वेद्यां प्लक्षशाखासु हृदयादीनां प्रतिप्रस्थात्राऽवदानम् | ७ | ,, |
| ११४ जुह्वादिषु घृतेनोपस्तीर्य मनोताऽनुवाक्यप्रैषदानानन्तरं जुहूपभृतोर्हृदयादीनां गुदादीनां चावदानम् | ८ | ४३१ |
| ११५ अधस्तादुपरिष्टाच्च हिरण्यावदानम् | १० | ,, |
| ११६ उपस्तीर्णवसाहोमहवन्यां वसाग्रहणादिकम् | ११ | ,, |
| ११७ इडापात्र्यां वसाशेषासेचनपूर्वकं क्रोडादिप्रक्षेपः | १२ | ,, |
| ११८ सुगुप्ते स्थाने जाघनीगुदं स्थापयित्वा मैत्रावरूणप्रैषः | १३ | ,, |
| ११९ वसाहोमः | १६ | ४३२ |
| १२० स्विष्टकृद्यागः | १९ | ४३३ |
| १२१ वसाशेषेण वाजिनवद्दिशां व्याघारणं निःशेषम् | २० | ,, |


षष्ठाध्याये नवमी कण्डिका—


| | | |
|---|---|---|
| १२२ उपयुक्तातिरिक्तानां पश्वङ्गानां संमर्शनम् | १ | ,, |
| १२३ इडाधानम् | ३ | ,, |
| १२४ अध्वर्योराग्नीध्रादीन्प्रति प्रैषः | ७ | ४३४ |
| १२५ यथाप्रैषमाग्नीध्रानुष्ठानम् | ८ | ,, |
| १२६ प्रतिप्रस्थात्रा गुदकाण्डतृतीयहवनम् | १० | ,, |
| १२७ प्रतिप्रस्थातुर्मुखोपस्पर्शनकरणम् | ११ | ,, |

| | सूत्रम | पृष्ठम्. |
|---|---|---|
| १२८ धारानुयाजान्ते स्वरुहोमः | १२ | ४३७ |
| १२९ स्रुग्व्यूहनम् | १३ | ,, |
| १३० पशुपुच्छेन चत्वारोऽपि पत्नीसंयाजाः | १४ | ,, |

षष्ठाध्याये दशमी कण्डिका—

| | | |
|---|---|---|
| १३१ हृदयशूलोपगूहनम् | १ | ४३६ |
| १३२ उदकगमनमनुत्सहन् यूपाग्रे निषेचनपूर्वकं पूर्ववदुपगूहनम् | ४ | ४३७ |
| १३३ सर्वेषामुपस्पर्शनमभिमन्त्रणं वा | ५ | ,, |
| १३४ अग्नीषोमीयसवनीयव्यतिरिक्तेषु शूलावभृथः | ८ | ,, |
| १३५ व्रतविसर्गान्ते अपराग्नीनां पूर्वसमारूढनिर्मथिते वा चतुर्गृहीतहोमः | १० | ४३८ |
| १३६ अस्यामाहुतौ यथोत्साहं दक्षिणादानम् | १२ | ,, |
| १३७ निरूढपशौ सदोहविर्धानादिककरणनिषेधः | १४ | ४३९ |
| १३८ दार्विहोमेषु प्रयाजादिव्यतिरिक्ता अनर्थलुप्ता दर्शपूर्णमासधर्माः | १७ | ,, |
| १३९. स्मार्तहोमेषु होमार्थमवत्तस्य सशेषस्य होमः | २६ | ४४१ |
| १४० स्मार्तपशुषु अग्नीषोमीयाद्धर्माः | २९ | ,, |
| १४१ स्मार्तपशुषु शाखायां पशुनियोजनम् | ३० | ,, |
| १४२ सर्वावदानाभावे शेषात्स्विष्टकृदवदानम् | ३२ | ,, |
| १४३ पूर्णपात्रो दक्षिणा वरो वा | ३४ | ४४२ |

सप्तमाध्याये प्रथमा कण्डिका—

| | | |
|---|---|---|
| १ अन्ययागानां दर्शपूर्णमासपूर्वकत्वम् | १ | ४४३ |
| २ उपक्लृप्तसोमस्य अग्निष्टोमपूर्वकत्वम् | २ | ,, |
| ३ सोमापवर्गेऽपि अन्ययागार्थं न पुनराधानम् | ४ | ४४४ |
| ४ प्रतिवसन्तम् अग्निष्टोमानुष्ठानम् | ५ | ,, |
| ५ अपीतसोमपितृकस्य अपीतसोमपितामहकस्य च ऐन्द्राग्नपशुयागपूर्वकोऽग्निष्टोमः | ६ | ४४५ |
| ६ अग्निष्टोमे षोडशानाम् ऋत्विजां वरणम् | ७ | ,, |
| ७ चतुर्णामेव वा ब्रह्मादीनां वरणम् | ८ | ४४६ |

| | सूत्रम् | पृष्ठम्. |
|---|---|---|
| ८ अग्निष्टोमयागदेशनिरूपणम् | १० | ४४७ |
| ९ शुक्लपक्षे दीक्षारम्भः, तद्दिनादारभ्य पञ्चमे सप्तमे वा सुत्यायागः | २१ | ४४८ |
| १० दैवादिना सुत्याकालातिक्रमे नित्यानामनुष्ठानादीनामननुष्ठानमेव | २२ | ४४९ |
| ११ श्रुतिविरोधे पुण्याहनियमो नाश्रयणीयः | २५ | " |
| १२ यूपच्छेदनात्प्राक् यूपाहुतिहोमः | २८ | ४५० |
| १३ अरण्योः अग्नी समारोप्य अरणिपाणिः शालायाः पूर्वार्धभवं स्तम्भमालभ्येदमगन्मेति यजमानः पठेत् | ३० | " |

सप्तमाध्याये द्वितीया कण्डिका—

| | | |
|---|---|---|
| १४ शालायां सोमनिधानम् | १ | ४५१ |
| १५ सोमक्रयात्प्राक् यजमानाय हविष्यान्नोपहारः | २ | " |
| १६ गार्हपत्यं मथित्वा तन्मध्यात्सप्तसु प्रक्रमेषु अर्धव्यामे च आहवनीयव्याहरणं साग्निचयने | ३ | " |
| १७ क्रत्वर्थहिरण्यादिकं गोपायेत्येवमन्यस्मै उक्तवतः उत्तरे परिवृते अपराह्णे दीक्षा | ५ | ४५२ |
| १८ नखच्छेदादयो दीक्षाधर्माः | ६ | " |
| १९ स्नानादिकम् | १५ | ४५३ |
| २० धेन्वादिमांसप्रतिषेधः पुरुषार्थः | २२ | ४५४ |
| २१ शालाम्प्रविश्य दीक्षणीयेष्टिः | २५ | ४५५ |
| २२ अग्नीषोमीयपशुयागात् प्राक् उपांशुस्वरः | २९ | " |
| २३ दीक्षणीयायामुच्चैस्त्वम्प्रायणीयायाम्मन्दत्वमातिथ्यायाम्मन्दतरत्वं वा | ३० | " |
| २४ उपसदाम् उपांशुत्वम् | ३१ | ४५६ |
| २५ यजमानस्य अभ्यञ्जनादिकम् | ३२ | " |

सप्तमाध्याये तृतीया कण्डिका—

| | | |
|---|---|---|
| २६ कुशपवित्रैर्यजमानमार्जनम् | १ | ४५७ |
| २७ यजमानाङ्गुलिसङ्कोचनम् | ५ | ४५८ |
| २८ मुष्टिकरणवाग्यमने | ७ | " |
| २९ आहवनीयगार्हपत्यावन्तरेण यजमानस्य शालायां प्रवेशः | ९ | " |

| | सूत्रम् | पृष्ठम् |
|---|---|---|
| ३० पत्नीदीक्षा | ११ | ४५८ |
| ३१ आहवनीयगार्हपत्यावन्तरेण पश्चिमेन वा पत्न्याः शालायां प्रवेशः | १२ | ४५९ |
| ३२ औदुम्भणहोमाः | १३ | „ |
| ३३ आहवनीयस्य दक्षिणतः अवलगनरज्जुयुक्ते द्वे कृष्णाजिने निदधाति | १७ | „ |
| ३४ कृष्णाजिनयोः पश्चात् यजमान उपविश्य शुक्लकृष्णसंधि स्पृष्ट्वाऽऽरुह्य दक्षिणजानुनाऽऽस्ते | १९ | ४६० |
| ३५ अध्वर्युः यजमानवस्त्रस्यान्तरा मेखलां बध्नीते | २० | „ |
| ३६ अत्र नीविकरणम् | २३ | ४६१ |
| ३७ उष्णीषेण शिरस आच्छादनम् | २४ | „ |
| ३८ कृष्णविषाणायाः दशायां बन्धनम् | २५ | „ |

सप्तमाध्याये चतुर्थी कण्डिका—

| | | |
|---|---|---|
| ३९ अध्वर्युसमर्पितं दण्डं गृहीत्वोच्छ्रित्य दक्षिणस्कन्धे यजमानकर्तृकनिधानम् | १ | ४६२ |
| ४० एवं प्रतिप्रस्थाता तूष्णीं पत्नीं युगपन्मेखलादिना दीक्षयति | ५ | „ |
| ४१ कृष्णाजिनादिदण्डान्तैः दीक्षासंस्कारो, नाग्नावैष्णवेष्ट्या | ९ | „ |
| ४२ यजमानपत्न्योर्वाग्विसर्गः | १४ | ४६५ |
| ४३ व्रतदुघयोर्गवोर्दोहनादिकम् | १८ | „ |
| ४४ व्रताशनं यजमानस्य | २७ | ४६७ |
| ४५ पत्न्या व्रताशनम् | २८ | „ |
| ४६ दीक्षितस्य मूत्रपुरीषोत्सर्गप्रकारः | ३० | „ |

सप्तमाध्याये पञ्चमी कण्डिका—

| | | |
|---|---|---|
| ४७ दीक्षितस्य क्रोधादौ कर्तव्यम् | २ | ४६८ |
| ४८ दीक्षितस्य शूद्रसंभाषणादिकं वर्ज्यम् | ५ | „ |
| ४९ एतन्नियमातिक्रमे प्रायश्चित्तं नास्ति | १० | ४६९ |
| ५० दीक्षान्ते प्रायणीयेष्टिः | १३ | „ |
| ५१ प्रायणीयोच्छिष्टबर्हिरादिनिधानमुदयनीयार्थम् | १५ | „ |
| ५२ प्रायणीयं कर्म पूर्वशंयवन्तं भवति | २१ | ४७० |

सूत्रम् पृष्ठम्.

सप्तमाध्याये षष्ठी काण्डिका—


| | | |
|---|---|---|
| ५३ क्रयार्थं सोमस्योपरवदेशे आनडुहचर्मणि स्थापनम् | १ | ४७१ |
| ५४ सोमक्रयार्था चतुर्गृहीताहुतिः | ५ | ४७२ |
| ५५ पदहोमार्थं चतुर्ग्रहणम् | १० | ,, |
| ५६ सोमक्रयार्थम् अध्वर्युयजमानयोर्विमिताग्निष्क्रमणम् | ११ | ,, |
| ५७ सोमक्रयण्या गोर्लक्षणम् | १२ | ४७३ |
| ५८ गोरभिमन्त्रणम् | १३ | ,, |
| ५९ अध्वर्युयजमानयोर्गोरनुगमनम् | १४ | ,, |
| ६० गोः सप्तमे पदे हिरण्यं निधाय चतुर्गृहीतहोमः | १६ | ,, |
| ६१ सप्तमपदपरिलेखादिकम् | १७ | ४७४ |
| ६२ पाणिप्रक्षालनपूर्वकमनामिकायां हिरण्यबन्धनम् | २५ | ४७५ |


सप्तमाध्याये सप्तमी काण्डिका—


| | | |
|---|---|---|
| ६३ सोमोपनहनाहरणादिप्रैषः | १ | ,, |
| ६४ सोमोपनहनाहरणादिकम् | ५ | ,, |


सप्तमाध्याये अष्टमी कण्डिका—


| | | |
|---|---|---|
| ६५ सोमस्यान्यमूल्येन पणनपूर्वकं गवा क्रयः | १ | ४७७ |
| ६६ हिरण्यदर्शनेन सोमविक्रयिणः प्रलोभनम् | १६ | ४७९ |
| ६७ दीक्षितदक्षिणोरौ सोमनिधानम् | २१ | ४८० |
| ६८ स्वानभ्राजेति जपित्वा शिरःप्रावरणापसारणम् | २३ | ,, |
| ६९ सोमविक्रयिहस्ताद्धिरण्यस्याच्छेदनम् | २५ | ,, |


सप्तमाध्याये नवमी कण्डिका—


| | | |
|---|---|---|
| ७० गृहीतसोमस्य यजमानस्य मन्त्रवाचनमुत्थानमनः-प्रति गमनं च | १ | ४८१ |
| ७१ अनसि कृष्णाजिनमास्तीर्य सोमनिधानम् | ५ | ,, |
| ७२ सोमं वाससा संवेष्ट्य द्वितीयकृष्णाजिनमनसः पुरस्तादुच्छ्रिते दण्डे ध्वजस्थानीयमासजति | ८ | ४८२ |
| ७३ अनडुहोरनसि भेदेन योजनम् | १० | ,, |
| ७४ सुब्रह्मण्यः पलाशशाखयाऽनड्वाहौ प्रेरयति | १२ | ४८३ |
| ७५ अनसः पश्चात् काष्ठं गृहीत्वाऽध्वर्युः क्रीताय सोमायानुवाचयति | १३ | ,, |
| ७६ प्रथमायामृचि होत्रा पठितायाम् अध्वर्य्वादीनां शालागमनम् , यजमानस्य वाचनं च | १५ | ,, |

| | सूत्रम् | पृष्ठम् |
|---|---|---|
| ७७ सुब्रह्मण्याह्वानम् | १७ | ४८४ |
| ७८ अग्नीषोमीयपशूपस्थापनं प्रतिप्रस्थातुः | १८ | ,, |
| ७९ यजमानस्य पश्वालम्भनपूर्वकं वाचनम् | १९ | ,, |
| ८० शालासमीपे उत्तम्भककाष्ठेनानसोऽवरोधनम् | २२ | ४८५ |
| ८१ आसन्द्याहरणमध्वर्य्वादीनाम् | २४ | ,, |
| ८२ आसन्दीमभिमृश्य तत्र कृष्णाजिनमास्तीर्य सोमं निधाय शालाप्रवेशनम् | २५ | ,, |
| ८३ आहवनीयस्य दक्षिणतः सोमासन्दीस्थापनम् | ३० | ४८६ |

अष्टमाध्याये प्रथमा कण्डिका—

| | | |
|---|---|---|
| १ आतिथ्येष्टिः | १ | ४८७ |
| २ उदवसानीयायाः प्राक् सौमिकदीक्षणीयादिषु अन्वाधानादीनां निवृत्तिः | ४ | ४८८ |
| ३ उदककार्यार्थं मदन्तीनामपामधिश्रयणम् | ८ | ४९० |
| ४ परिधिप्रस्तरविधृतिबर्हिषां काष्मर्यकाष्ठमयादित्वम् | १० | ,, |
| ५ आतिथ्येष्टिपरिगृहीतपरिध्यादिचतुष्टयमेव अग्नीषोमीयोपसत्सु विनियोक्तव्यम् | ११ | ,, |
| ६ इडान्ता आतिथ्येष्टिः | १३ | ४९१ |
| ७ तानूनप्त्रोपक्रमः | १४ | ,, |

अष्टमाध्याये द्वितीया कण्डिका—

| | | |
|---|---|---|
| ८ अवान्तरदीक्षा | ४ | ४९३ |
| ९ यजमानषष्ठानां ब्रह्मादिऋत्विजां सोमालम्भादिकम् | ६ | ,, |
| १० प्रस्तराञ्जनादिकम् | ९ | ४९४ |
| ११ सुब्रह्मण्याप्रैषः | १२ | ,, |
| १२ प्रवर्ग्योपसदौ | १३ | ,, |
| १३ उपसदिष्टिः | १५ | ४९५ |
| १४ अपेषणेऽपि आज्यसान्नाय्येष्टिषु दृषदुपलाहननम् | १६ | ,, |
| १५ उपसादिष्टौ विशेषः | ३१ | ४९९ |
| १६ पूर्वाह्णेऽपराह्णे च एकस्या उपसदो द्विरनुष्ठानम् | ३२ | ,, |
| १७ एकाहस्त्र्युपसत्को द्वादशोपसत्कताऽहीनस्यैव | ३४ | ,, |

अष्टमाध्याये तृतीया कण्डिका—

| | | |
|---|---|---|
| १८ प्रथमादिषु तिसृषूपसत्सु त्रिस्तनादिव्रतम् | १ | ,, |

सूत्रम पृष्ठम्

१९ द्वितीयोपसद्दिने पूर्वाह्णोपसदं कृत्वा वेदिमानम् ६ ५००
२० अग्नीषोमीयपशुयागदिने पौर्वाह्णिकयापराह्णिकयोरुप-
सदोः समासेन प्रातरेव अनुष्ठानम् १६ ५०२
२१ उपसदन्ते प्रवर्ग्योत्सादनम् १८ ,,
२२ प्रवर्ग्योत्सादनानन्तरमग्निप्रणयनादिकम् १९ ,,
२३ शालाद्वार्ये चतुर्गृहीतहोमानन्तरं ज्योतिष्टोमाङ्गं गा-
र्हपत्यकार्यं तत्रैव २६ ५०४
२४ दक्षिणहविर्धानस्य दक्षिणचक्रमार्गे हिरण्यं निधाय
चतुर्गृहीतहोमः २७ ,,
२५ चतुर्गृहीतशेषेण अक्षधुरोर्मन्त्रावृत्त्या भेदेनाञ्जनम् २८ ,,
२६ उत्तरहविर्धानस्य दक्षिणचक्रमार्गे पूर्ववत् चतुर्गृहीत-
होमः अक्षधुरोरञ्जनं च ३० ५०५

अष्टमाध्याये चतुर्थी कण्डिका—

२७ हविर्धानमण्डपनिष्पादनम् १ ,,
२८ नित्याशनम् इडादिभक्षणं च हविर्धानमण्डपे कर्तव्यम् २३ ५०८
२९ वेदीमध्ये वर्तमानां पृष्ठ्यासंज्ञां प्रागग्ररेखाम् उभयतो
रत्निद्वयान्तराले द्वारस्थूणे पूर्वस्यां
पश्चिमायां च कर्तव्ये २५ ,,
३० दक्षिणहविर्धानस्य पूर्वार्धे अधः प्रदेशे उपरवान् खनेत् २६ ,,

अष्टमाध्याये पञ्चमी कण्डिका—

३१ उपरवखननार्थमभ्र्यादानादि १ ५०९
३२ यथाखातं पांसूत्किरणम् ९ ,,
३३ अवटयोः स्वं स्वं दक्षिणं हस्तं प्रवेश्याध्वर्युयजमान-
योः परस्परसंमर्शनादि १४ ५१०
३४ अवटानां प्रोक्षणादिकम् १९ ५११
३५ अवटोपरि अधिषवणफलकयोरुपधानम् २२ ,,
३६ तयोरुपरि चर्म निधाय पञ्चानां ग्राव्णां निधानम् २३ ,,
३७ यजमानमात्रीमौदुम्बरीं मिनुयात् २६ ५१२
३८ औदुम्बर्या मूर्धनि स्रुवेण होमः ३२ ,,

अष्टमाध्याये षष्ठी कण्डिका—

३९ सदोमण्डपस्य मानम् १ ५१३

| | सूत्रम् | पृष्ठम् |
|---|---|---|
| ४० प्रागायामस्य मध्ये औदुम्बरीम् उदगायामस्य मध्ये पृष्ठ्यां मिनुयात् | ६ | ५१३ |
| ४१ सदसो दक्षिणे तृतीयांशे, मध्ये अपरपूर्वपार्श्वयोश्च क्रमेण छदिस्त्रयस्यारोपणम् | ७ | ५१४ |
| ४२ सदसो मध्ये तृतीयांशे पूर्ववच्छादिस्त्रयमारोप्य तत उत्तरतश्छदिस्त्रयमारोपयेत् | ८ | ,, |
| ४३ सदः परित आच्छाद्य परिषीवणादीनि कुर्यात् | ९ | ,, |
| ४४ हविर्धानमण्डपस्य पश्चार्धस्य उत्तरतः आग्नीध्रं मिनुयात् | १० | ,, |
| ४५ आग्नीध्रीयादीन् सप्त धिष्ण्यान् निवपेत् | १२ | ,, |
| ४६ आग्नीध्राद्दक्षिणतो मार्जालीयम् | २० | ५१५ |
| ४७ सदोद्वारस्य पुरस्तात् स्थित्वा आहवनीयादीनां समन्त्रकं सन्दर्शनम् | २१ | ५१६ |
| ४८ अग्नीषोमीयपशुयागार्थं परिस्तरणादिकम् | २३ | ,, |
| ४९ अन्तःपात्यसमीपे स्थित्वा इध्मं बर्हिरुपसादये-त्यन्तं प्रेष्य शकटबर्हिरादिकमासादयेत् | २४ | ५१७ |
| ५० स्थाल्यामोप्य पत्न्यै समर्पितं सोमक्रयणीपदं शा-लाद्वार्यस्य पश्चिमतः परिकिरेत् | ३० | ५१८ |
| ५१ आहवनीयादिषु वा चतुर्धा विभज्य परिकिरेत् | ३१ | ,, |
| ५२ आज्योत्पवनादिकम् | ३२ | ,, |
| अष्टमाध्याये सप्तमी कण्डिका— | | |
| ५३ प्रचरण्या आहुतिद्वयं हुत्वा प्रणयनार्थं प्रैषं दत्त्वा आहवनीयं प्रति गमनं ग्रावादीन्गृहीत्वा | १ | ५१९ |
| ५४ आग्नीध्रीये धिष्ण्ये अग्निं निधाय हुत्वा आग्नीध्रे ग्रावा-दीनां निधानम् | ६ | ५२० |
| ५५ प्रोक्षणादिप्राकृतपदार्थानुष्ठानम् | ११ | ५२१ |
| ५६ जुह्वादीनि आज्यस्थाल्यन्तानि आसाद्य दक्षिणे शकटे कृष्णाजिनमास्तीर्य सोमनिधानम् | १५ | ,, |
| ५७ अन्वारब्धं सोमं विसृज्य उपस्थानम् | १६ | ,, |
| ५८ हविर्धानान्निष्क्रस्य समिदाधानादि कृत्वा यजमा-नस्य अङ्गुलिविसर्गः | १७ | ५२२ |
| ५९ पत्न्याश्च अङ्गुलिविसर्गः | १८ | ,, |

| | सूत्रम् | पृष्ठम्. |
|---|---|---|
| ६० अतःपरं दीक्षितस्य भोज्यान्नता | २० | ५२२ |
| ६१ अग्नीषोमीयपशुयागः | २३ | ५२३ |
| ६२ अग्नीषोमीयपुरोडाशयागः | २४ | ,, |


अष्टमाध्याये अष्टमी कण्डिका—


| | | |
|---|---|---|
| ६३ पश्वेकादशिन्यां यूपैकादशिनीपक्षे यूपानां रथाक्षसंज्ञकचतुरधिकशताङ्गुलान्तरेण निखननम् | ६ | ५२४ |
| ६४ वेदिपूर्वार्द्धे वैकादशधा समं विभज्य निखननम् | ७ | ,, |
| ६५ एकादशयूपानां निखननेतिकर्तव्यता | ९ | ,, |
| ६६ रथाक्षमात्रान्तरालपक्षे यूपान्तरालवृद्धिवत् वेदिवृद्धिः | २१ | ५२६ |
| ६७ यूपैकादशिन्यां दक्षिणतो द्वादशं यूपं निदध्यात् | २२ | ,, |
| ६८ द्वादशेऽपि यूपे यूपधर्मा भवन्त्येव | २३ | ,, |
| ६९ उत्तरस्य यूपस्योच्छ्रयणं कृत्वाऽकृत्वा वा द्वादशस्य निधानम् | २४ | ५२७ |
| ७० यूपोच्छ्रयणक्रमेणोपाकरणपूर्वकमाग्नेयादीन् पशूनालभेत | २५ | ,, |
| ७१ पश्वेकादशिन्यामेकयूपपक्षे यूपे आग्नेयं नियुज्योत्तरोत्तरं सारस्वतादीनां गले नियोजनम् | २६ | ,, |
| ७२ स्तोमायनसंज्ञकातिरिक्तानां पशूनां क्रमेण गमनम्, स्तोमायनानां तु युगपत् | २७ | ५२८ |
| ७३ पशुगणे उपप्रैषादिकं सर्वं दिग्व्याघारणान्तं तन्त्रेण कर्तव्यम् | २९ | ,, |
| ७४ पशुगणे उखादिकमपि तन्त्रेण कर्तव्यम् | ३० | ,, |
| ७५ पशुगणे मनोतावसाहोमौ पृथक् | ३५ | ५२९ |
| ७६ यूपैकादशिन्यां वशावपामार्जनान्ते शालाद्वार्यसमीपे पत्नीयूपोच्छ्रयणम् | ३६ | ,, |
| ७७ वक्ष्यमाणत्वाष्ट्रपशौ अन्यपशुविपरीतक्रमेण पदार्थाः | ३७ | ,, |


अष्टमाध्याये नवमी कण्डिका—


| | | |
|---|---|---|
| ७८ पर्यग्निकृतोत्सर्गान्तस्यैव त्वाष्ट्रपशुयागस्य कर्तव्यत्वम् | १ | ५३० |
| ७९ अग्नीषोमीयवपामार्जनान्ते सूर्यास्तात्प्राक् सोमार्थं नदीतो जलाहरणम् | ६ | ५३१ |

| | सूत्रम | पृष्ठम्. |
|---|---|---|
| ८० दैवात्सूर्यास्ते मणिकतो जलाहरणम् | ७ | ५३१ |
| ८१ सुब्रह्मण्याप्रैषः | ११ | ,, |
| ८२ शालाद्वार्यस्य पश्चिमतः पत्न्याः, उत्तरवेदेः पश्चिमतो यजमानस्योपवेशनपूर्वकं वसतीवरी-सम्बन्धिकर्म | १४ | ५३२ |
| ८३ आसन्द्यां सोमनिधानादिकम् | २२ | ५३३ |

नवमाध्याये प्रथमा कण्डिका—

| | | |
|---|---|---|
| १ अपररात्रे सौत्यकर्मोपक्रमः | १ | ५३५ |
| २ सवनीयपशौ तद्विकारे च एकवृत्स्तरणम् | ४ | ,, |
| ३ समविभक्तस्य सोमस्य अर्धे चर्मण उपरि स्थापितेषु ग्रावसु रथादवतारयेत् | ५ | ५३६ |
| ४ याजमानमुपस्थानम् | ६ | ,, |
| ५ पक्षिणां छन्दकरणात्पूर्वं प्रातरनुवाकोपाकरणम् | १० | ,, |
| ६ प्रातरनुवाके होत्रा शस्यमाने इन्द्रादिदेवताकेष्टिः | १५ | ५३७ |
| ७ हरिवदादिगुणविशिष्टेन्द्रदेवताका वेष्टिः | १६ | ,, |

नवमाध्याये द्वितीया कण्डिका—

| | | |
|---|---|---|
| ८ सोमपात्राणां विशिष्टदेशे उन्नेतृकर्तृकं स्थापनम् | १ | ५३८ |
| ९ जीवन्मेषरोमनिर्मितमन्यतरतोदशं पवित्रं द्रोणकलशे निदध्यात् | १५ | ५३९ |
| १० उभयतोदशं पवित्रं परिप्लवायां निदध्यात् | १७ | ५४० |

नवमाध्याये तृतीया कण्डिका—

| | | |
|---|---|---|
| ११ प्रचरणीहोमादयः | १ | ५४१ |
| १२ उक्थ्यसंस्थे क्रतौ प्रथमपरिध्यालम्भः | १४ | ५४२ |
| १३ षोडश्यतिरात्रयोरमन्त्रकः प्रवेशो वा | १५ | ,, |
| १४ षोडश्यतिरात्रयोर्मन्त्रेण रराट्याछदिरालम्भो वा | १६ | ५४३ |
| १५ मैत्रावरुणचमसस्य वसतीवरीतृतीयस्य च आधवनीयेऽवनयनम् | १८ | ,, |
| १६ एकधनावनयनम् | १९ | ,, |

सूत्रम् पृष्ठम्.

नवमाध्याये चतुर्थी कण्डिका--

| | | |
|---|---|---|
| १७ सोमस्योपांश्वभिषवे यजमानादीनामुपवेशनस्थानम् | १ | ५४३ |
| १८ अभिषवार्थमश्मग्रहणं वाग्यमश्चाऽऽहिङ्कारात् | ४ | ५४४ |
| १९ अपामालम्भः | ६ | ,, |
| २० सोमप्रक्षेपः पञ्चकृत्वः | ७ | ,, |
| २१ मितस्य सोमस्यालम्भः | ८ | ,, |
| २२ प्रतिप्रस्थाता स्वाङ्गुल्यन्तरेषु द्वौ द्वाविति सोमस्य षड्भागान् गृह्णाति | ९ | ,, |
| २३ तत्रापां सेचनम् | १० | ,, |
| २४ प्रहारकाले शत्रोस्तृणस्य वाऽभिध्यानम् | ११ | ,, |
| २५ सेकपूर्वकं प्रहारस्तत्संख्या च | १३ | ५४५ |
| २६ होतृचमसे सोमनिष्पीडनम् | १७ | ,, |
| २७ प्रतिप्रस्थाता पात्रं गृह्णाति | २१ | ,, |
| २८ हविर्धानान्निष्क्रामन्ति | २९ | ५४६ |
| २९ ग्रहहोमानन्तरं पात्रोन्मार्जनम् | ३२ | ५४७ |
| ३० अंशुहोमः | ३४ | ,, |
| ३१ उपांशुपात्रासादनम् | ३६ | ,, |

नवमाध्याये पञ्चमी कण्डिका--

| | | |
|---|---|---|
| ३२ महाभिषवस्य चतुष्कर्तृकत्वम् | १ | ५४८ |
| ३३ तत्रैच्छिकं रसप्रच्युतिपर्यन्तमाप्यायनम् | २ | ,, |
| ३४ सेकान्ते सरसानंशूनाधवनीयेऽवधायाहरति त्रिवारम् | ६ | ,, |
| ३५ उपांश्वभिषवमहाभिषवयोर्यौगपद्ये लाघवम् | ९ | ५४९ |
| ३६ उद्गातृकर्तृकद्रोणकलशनिधानमद्रिषु, ततश्चोदगग्रपवित्रवितानम् | १३ | ,, |
| ३७ उद्गातृभिरकरणेऽध्वर्युणैव कर्तव्यम् | १५ | ५५० |
| ३८ शुक्रादिग्रहग्रहणम् | १७ | ,, |
| ३९ पूतभृच्चमसग्रहणम् | २१ | ,, |
| ४० ग्रहसादनम् | २४ | ५५१ |
| ४१ अयोनिकेषु ग्रहासादनं विकल्प्य सिद्धान्तितम् | २५ | ,, |
| ४२ ग्रहहोमो भक्षहरणं च | २८ | ,, |
| ४३ वषट्कर्तुः प्रथमभक्षणम् | ३० | ,, |

सूत्रम् पृष्ठम्

नवमाध्याये षष्ठी कण्डिका।

४४ उदितेऽन्तर्यामग्रहणम् १ ५५२
४५ तस्य सर्वहोमः २ ,,
४६ अन्तर्यामग्रहेऽपमार्जनं नतून्मार्जनम् ३ ,,
४७ पात्रसादनम् ५ ,,
४८ ऐन्द्रवायवग्रहग्रहणम् ६ ,,
४९ तस्य च पयसा श्रयणम् ९ ५५३
५० श्रयणे सर्वत्र कुशैरन्तर्धानम् १० ,,
५१ बैल्वेन पात्रेण शुक्रग्रहः ११ ,,
५२ दशापवित्रेणाग्रयणोपग्रहे कृते त्रिर्हिङ्कारः १६ ,,
५३ देवतादेशात् प्राक् प्रातःसवनम् १७ ,,
५४ प्रातःसवने उच्चैः कर्माणि १८ ५५४
५५ माध्यन्दिने मध्यमानि १९ ,,
५६ तृतीयसवने नीचैः कर्माणि २० ,,
५७ उक्थ्यग्रहः २१ ,,
५८ ध्रुवग्रहः २२ ,,
५९ ध्रुवग्रहहोमपर्यन्तं मूत्रपुरीषकरणनिषेधः २३ ,,
६० वैश्वानरग्रहः २४ ,,
६१ होमात्पूर्वं निष्क्रमणं तदुत्तरं वा २६ ५५५
६२ विप्रुड्ढोमः २९ ,,
६३ अध्वर्योः सर्वेषां वा विप्रुड्ढोमकर्तृत्वम् ३० ,,
६४ अध्वर्युकर्तृकं वेदितृणद्वयादानम् ३१ ,,
६५ एकस्य चात्वाले प्रासनम् ३२ ,,
६६ अपरस्योद्गातृणामग्रे प्रासनम् ३३ ,,
६७ पवमानोपाकरणम् "सोमः पवते" मन्त्रेण
तृणदानपूर्वकम् ३४ ,,

नवमाध्याये सप्तमी कण्डिका।

६८ अतृणदानेन कुशमुष्टिदानेन वा बहिष्पवमानो-
पाकरणम् १ ५५६
६९ उद्गातृपुरस्तादध्वर्युप्रतिप्रस्थात्रोः प्रत्यङ्मुखोपवेशनं
तद्दक्षिणतो यजमानस्य २ ,,

| | सूत्रम् | पृष्ठम्. |
|---|---|---|
| ७० उद्गात्रा बहिष्पवमाने पठ्यमाने उन्नेतृकर्तृकं पूतभृच्चमसे सोमासेचनम् | ३ | ५५६ |
| ७१ अग्नीत्प्रतिप्रस्थातृप्रैषौ तत्रानेकपशुकेऽप्यविकृत एव प्रैषः | ४ | ५५७ |
| ७२ धिष्ण्यनिर्वापक्रमेणाङ्गारनिवापोऽग्नीत्कर्तृकः | ५ | ” |
| ७३ अनुपृष्ठ्यां बर्हिः स्तरणम् | ६ | ” |
| ७४ आश्विनग्रहः | ७ | ” |
| ७५ ग्रहावेक्षणम् | ८ | ५५८ |

नवमाध्याये अष्टमी कण्डिका ।

| | | |
|---|---|---|
| ७६ ध्रुवगुप्तिं कृत्वा रशनया यूपपरिव्याणम् | १ | ” |
| ७७ अग्निष्टोमाद्यतिरात्रान्तसंस्थासु सवनीयपशवः | २ | ५५९ |
| ७८ आग्नेयादिपशुचतुष्टयस्य स्तोमायनसंज्ञा | ४ | ” |
| ७९ होत्रादिऋत्विग्वरणक्रमः | ५ | ” |
| ८० प्रवृतहोमः | १० | ५६० |
| ८१ वपामार्जनान्तकर्मकरणे धिष्ण्योपस्थानम् | १२ | ” |
| ८२ उत्करान्तकर्मकरणे सदोऽभिमर्शादिसर्पणम् | १३ | ” |

नवमाध्याये नवमी कण्डिका ।

| | | |
|---|---|---|
| ८३ माध्यन्दिनतृतीयसवनयोः सर्पणम् | १ | ५६१ |
| ८४ पुरोडाशचरणम् | २ | ” |
| ८५ प्रधानहोमस्रौविष्टकृद्धोमौ हुत्वा होतृधिष्ण्ये पुरोडाशनिधानम् इडानिधानंवा | ९ | ५६२ |
| ८६ द्विदेवत्यहोमावसरः | ११ | ” |
| ८७ द्विदेवत्यानामुत्तरार्धे होमः प्रतिप्रस्थातृकर्तृक आदित्यपात्रेण | १२ | ” |
| ८८ अनुवषट्काराणामपि उत्तरार्धे होमः | १३ | ५६३ |
| ८९ अनुवषट्कारेषु वषट्कारधर्माणामाश्रावणादीनां न प्रवृत्तिः | १४ | ” |
| ९० द्विदेवत्यहोमशेषासेचनमादित्यस्थाल्याम् | १७ | ” |
| ९१ आदित्यस्थाल्या आदित्यपात्रेणापिधानम् | १८ | ” |
| ९२ नवानां चमसेषून्नयनम् | २० | ५६४ |
| ९३ शुक्रादुपस्तरणमभिघारणं च | २१ | ” |
| ९४ प्रथमं होतृचमसे उन्नयनम् | २२ | ” |

सूत्रम् पृष्ठम्.

नवमाध्याये दशमी कण्डिका ।

९५ शुक्रामन्थिचरणम् १ ५६४
९६ अध्वर्युः शुक्रेण प्रतिप्रस्थाता मन्थिना चरणं करोति २ ,,
९७ अपिधानापमार्जने यूपशकलाभ्याम् ३ ,,
९८ उभयोर्निष्क्रमणम् ४ ,,
९९ ग्रहौ गृहीत्वैवारत्निसन्धानपूर्वकमुत्तरवेद्यां निधानम् ५ ५६५
१०० अध्वर्युर्यूपस्य दक्षिणं देशं प्रतिप्रस्थाता चोत्तरं गच्छतः ६ ,,
१०१ यूपस्य अपरेणाशक्तौ पूर्वेण वा अरत्निसंधानम् ७ ,,
१०२ यूपशकलनिरासः ९ ,,

नवमाध्याये एकादशी कण्डिका ।

१०३ यूपमुभयतः क्रमेण होमः १ ५६६
१०४ होत्रादिचमसानामुपावर्तनं शुक्रस्याभ्युन्नयनम् ५ ,,
१०५ मन्थिशेषस्य शुक्रपात्रेऽवनयनम् तस्य होतृचमसे ६ ५६७
१०६ प्रथमोत्तमचमसहोमोत्तरं 'तृम्पन्तु' इति जपः ११ ,,
१०७ द्विदेवत्यहविःशेषभक्षणम् १३ ,,
१०८ अध्वर्युः होतुरपि प्रथमं भक्षयति १४ ५६८
१०९ सोमभक्षणे मन्त्रः १९ ५६९
११० मैत्रावरुणाश्विनग्रहप्रतिग्रहणम् २२ ,,
१११ तच्छेषनयनं होतृचमसे २३ ५७०
११२ ऐन्द्रवायवमैत्रावरुणाश्विनेषु पुरोडाशपयस्याधानानां प्रासनम् २४ ,,
११३ पात्राणां तेषां हविर्धानस्योत्तरे निधानमिडाऽऽधानं च २५ ,,
११४ चमसानामुद्यमनं युगपत् २७ ,,

नवमाध्याये द्वादशी कण्डिका ।

११५ सूक्तवाकोत्तरं वाजिनयागादीनां कर्तव्यता १ ,,
११६ सोमभक्षणं गात्रसंस्पर्शश्च ३ ५७२
११७ चमसालम्भः सोमासेको वा ५ ,,
११८ हविर्धानदक्षिणाधस्तात्परोक्षे चमसनिधानम् ८ ५७३
११९ तेषां नाराशंससंज्ञा ९ ,,
१२० होत्राचमसवदच्छावाकचमसोन्नयनादि १० ,,

| | सूत्रम् | पृष्ठम् |
|---|---|---|
| १२१ इडाप्राशनम् | १७ | ५७४ |
| १२२ शालान्तरे पत्नीभोजनम् | १८ | ,, |
| **नवमाध्याये त्रयोदशी कण्डिका ।** | | |
| १२३ ऋतुग्रहचरणम् | १ | ,, |
| १२४ शेषभक्षणम् | १७ | ५७६ |
| १२५ होतुर्द्विर्भक्षणम् | २२ | ५७७ |
| १२६ मार्जालीये पात्रं प्रक्षाल्य होतुः पुरस्तादध्वर्युरुपविशति | २४ | ,, |
| १२७ शस्त्रप्रतिगरः | २५ | ,, |
| १२८ सशस्त्रग्रहहवनसमये नाराशंसचमसकल्पनम् | ३१ | ,, |
| १२९ ग्रहचमसहोमः | ३२ | ५७८ |
| **नवमाध्याये चतुर्दशी कण्डिका ।** | | |
| १३० वैश्वदेवग्रहचरणम् | १ | ,, |
| १३१ उक्थ्यग्रहचरणम् | ९ | ५७९ |
| १३२ सर्वग्रहणचरणान्ते 'प्रस्तुहि' इति वाचनम् | २२ | ५८० |
| १३३ ततः सर्पणम् | २३ | ,, |
| **दशमाध्याये प्रथमा कण्डिका ।** | | |
| १ माध्यन्दिनसवनारम्भः | १ | ५८१ |
| २ सोमाभिषवः | ३ | ,, |
| ३ शुक्रादिग्रहाः | १० | ५८२ |
| ४ अहर्गणे सर्वपवमानोपाकरणं सदसि, ऋते प्रायणीयोदयनीये | १६ | ५८३ |
| ५ अग्नीत्प्रैषे विशेषः | १७ | ,, |
| ६ सप्रवर्ग्ये दधिघर्मस्ततो भक्षणम् | १८ | ,, |
| **दशमाध्याये द्वितीया कण्डिका ।** | | |
| ७ इडाभक्षणं होमश्च | ४ | ५८५ |
| ८ दक्षिणानिनयनम् | ७ | ,, |
| ९ रजतनिषेधः | ३५ | ५८८ |
| १० सर्वान्ते प्रतिहर्त्रे दक्षिणां दद्यात् | ३७ | ५८९ |

सूत्रम् पृष्ठम् ।

दशमाध्याये तृतीया कण्डिका ।

११ इन्द्राय मरुत्वते इति मन्त्रानुवाचनं ततो दाननिवृत्तिः १ ५८९
१२ मरुत्वतीयग्रहचरणम् ३ ,,
१३ वैश्वदेववन्माहेन्द्रग्रहचरणम् ११ ५९०
१४ अस्मिन्सवने पयस्या न भवति १९ ५९१
१५ सवनीयेषु सौम्यचरुवारुणैककपालावधिकौ च भवतः २० ,,
१६ पात्रप्रक्षालनान्तकर्मानन्तरमुक्थ्यग्रहचरणम् २१ ,,

दशमाध्याये चतुर्थी कण्डिका ।

१७ आदित्यग्रहचरणम् ३ ५९२
१८ माध्यन्दिनसवनान्ते सर्पणम् १२ ५९४

दशमाध्याये पञ्चमषष्ठकण्डिके ।

१९ आग्रयणग्रहचरणम् ( तृतीयसवनारम्भः ) १ ५९५
२० उक्थ्यग्रहचरणम् ५ ,,
२१ माध्यन्दिनसवनापेक्षयाऽत्रत्यो विशेषः ९ ,,

दशमाध्याये सप्तमी कण्डिका ।

२२ होतृचमससमुपस्पृश्य यज्ञायज्ञियस्तोत्रोपाकरणम् १ ६०१
२३ पत्नीसमीक्षणम् ३ ,,
२४ ध्रुववैश्वानरयोर्होतृयजमानचमसयोरवनयनम् ६ ,,
२५ अनुयाजसमिदादिचरणम् ९ ,,
२६ तृतीयसवनान्ते प्रसवः १२ ६०२
२७ स्रुग्व्यूहनम् १३ ,,

दशमाध्याये अष्टमी कण्डिका ।

२८ स्रुग्विमोकानन्तरं हारियोजनग्रहणम् १ ६०३
२९ सदसि प्राणभक्षणम् ७ ६०४
३० चात्वालस्यापरतः पूर्णपात्रचमसावमर्शः ९ ६०५
३१ आग्नीध्रे दधिभक्षणम् ११ ,,
३२ पशुवत् पत्नीसंयाजाः १२ ,,
३३ चात्वाले आसन्द्यौदुम्बरीसोमलिप्तपात्राणां नयनम् १४ ,,
३४ चात्वाले कृष्णविषाणामेखलयोः प्रासनम् १५ ,,
३५ तत्रैव प्रतिप्रस्थाता शङ्क्वयोक्त्रे प्रास्यति १६ ६०६
३६ अवभृथः २१ ,,

सूत्रम् पृष्ठम्.

दशमाध्याये नवमी कण्डिका ।


| | | |
|---|---|---|
| ३७ वाससोर्दाननिषेधः | ७ | ६०८ |
| ३८ उदयनीयेष्टिः | १० | ६०९ |
| ३९ उदवसानीयेष्ट्यनन्तरं नित्या सायमाहुतिः | २० | ६१० |
| ४० तदनन्तरं नित्यक्रियानुष्ठानम् | २३ | ६११ |
| ४१ अत्यग्निष्टोमादिषड् उत्तरसंस्था विकृतयः | २६ | ,, |
| ४२ तत्रत्यो विशेषः | २७ | ६१२ |
| ४३ राजन्यवैश्यकर्तृकसोमे विशेषः | २८ | ६१३ |


एकादशाध्याये प्रथमा कण्डिका ।


| | | |
|---|---|---|
| १ ब्रह्मत्वनिरूपणम् | १ | ६१५ |
| २ कर्मकाले वाग्यमादिब्रह्मकर्तृकपदार्थाः | २ | ,, |


इति श्री सकर्कभाष्यकात्यायनश्रौतसूत्रविषयानुक्रमणिका समाप्ता ।

शुभं भूयात् ।

# कात्यायनश्रौतसूत्रकर्कभाष्ययोः शोधपत्रम् ।

| अशुद्धम् | शुद्धम् | पृ० | पं० |
|---|---|---|---|
| निवृत्ति | निर्वृत्ति | १८ | २ |
| प्रागग्रमिध्मम् । प्रत्यग्र | प्रागग्रमिध्मम् । आचिनोतीति वर्तते । प्रत्यग्ग्र | २५ | ३ |
| स्रुवादिनां | स्रुवादीनां | २९ | ३ |
| एतानि प्रसङ्गाद्वै | एतानि | ,, | २७ |
| वारणानि । यान्य | यान्य | ३० | २ |
| प्रसङ्गाद्वै | वारणानि प्रसङ्गाद्वै | ,, | ११ |
| पञ्चमी कण्डिका | चतुर्थी कण्डिका | ३७ | १ |
| विकल्प स्यात् | विकल्पः स्यात् | ७२ | १४ |
| द्रव्यन्तरा | द्रव्यान्तरा | ८० | ७ |
| स्वर्देवसतिरेतं | स्वर्देवसवितरेतं | ११२ | १५ |
| इत्यालभते । समं | इत्यालभते । संयौति जनयत्यै· त्वेति १४॥ तच्चैतत् पिण्डार्थ· त्वाच्चरौ न भवति । समं | १५७ | ८ |
| सम्प्रैषवन | सम्प्रैषवचन | १७३ | १६ |
| स्य चादि | स्य चोदि | १८५ | २७ |
| विपरिणामो बर्हिषः | विपरिणामः | ,, | ,, |
| स्तृणाति | बर्हिषः स्तृणाति | १८६ | ३ |
| योहनीयं कल्पयत्पुप | याहवनीयं कल्पयत्युप | १८७ | १३ |
| मित्रावरूणौ | मित्रावरुणौ | १९० | १३ |
| "यजमानो | यजमानो | २३१ | २ |
| (१)पवित्रयो | पवित्रयो | २३१ | १९ |
| होत्रध्वीर्य्वग्नीध | होत्रध्वर्य्वग्नीध | २४८ | २३ |
| विप्रुषः सत्याः | विप्रुषः संजुहोमि सत्याः | २५२ | २२ |
| वर्तते | निवर्तते | २५७ | १८ |
| इत्युक्त्वादङ् | इत्युक्त्वोदङ् | २६४ | २६ |
| शाखाछेदनात्पूर्वं | शाखाछेदनानन्तरं व्रतोपाय· नीयाशनात्पूर्वं | २७० | २ |
| प्रकृतावपूंवत्वात् | प्रकृतावपूर्वत्वात् | २८६ | ५ |
| प्राश्पं | प्राश्यं | ३०७ | ९ |

| अशुद्धम् | शुद्धम् | पृ० | पं० |
|---|---|---|---|
| पञ्चमसूत्रमारभ्य कण्डिकासमाप्तिपर्यन्तं सर्वेऽप्यङ्का एकाङ्कसङ्कलनेन बोद्धव्याः । | | ३११ | ४ |
| नाहाय | नायाह | ३१५ | १६ |
| वेद्या | वेद्यां | ३४२ | २१ |
| प्रणयमन्त्रन | प्रणयनमन्त्र | ३५४ | २६ |
| ३९३ पृष्ठमारभ्य ४०० पृष्ठपर्यन्तं सर्वेऽप्यङ्का४९३-५०० पतिताः परं ते ३९३-४०० बोद्धव्याः | | ३९३ | १ |
| सप्तमी | षष्ठी | ४२१ | १ |
| सवविधेतु | सर्वविधेतु | ४३६ | १३ |
| ८।१।७) | ८।१।५) | ४६२ | १९ |
| पूवार्ध्याच्च | पूर्वार्ध्याच्च | ५०१ | १३ |
| यतः रत्निद्वया | यतः अरत्निद्वया | ५०८ | १६ |
| यजमान | यजमानं | ५१० | १४ |
| मेदे | भेदे | ५११ | ७ |
| सुब्रह्मण्या | सुब्रह्मण्यां | ५३१ | २७ |
| सुब्रह्मण्या | सुब्रह्मण्यां | ५३२ | १६ |
| रोमनिमित | रोमनिर्मित | ५३९ | १७ |
| (श० ब्रा० ४।२।४।२४) | (श०ब्रा०४।२।४।१२) | ५४० | १२ |
| पुनार्नग्राभ्या | पुनर्निग्राभ्या | ५४९ | २ |
| मीङ् हिंसाायाम् | मीङ् हिंसायाम् | ५४९ | २२ |
| उद्गातॄणा | उद्गातॄणां | ५५५ | १९ |
| आचायेणैतत् | आचार्येणैतत् | ५५८ | २४ |
| परिव्यणादि | परिव्ययणादि | ५५८ | २५ |
| प्रक्रन्ते | प्रवर्त्तन्ते | ५६३ | १० |
| पात्रणादि | पात्रेणादि | ५६३ | २९ |
| एवं प्राप्ते ब्रूः | एवं प्राप्ते ब्रूमः | ५७१ | १२ |
| गृहीत | गृहीतः | ५७४ | १९ |
| विकल्पाथः | विकल्पार्थः | ५७७ | २० |
| दक्षिणा | दक्षिणां | ५८७ | १२ |
| ब्रह्मोदगातृ | ब्रह्मोद्गातृ | ५८७ | २३ |
| द्वादशसूत्रमारभ्य पादसमाप्त्यन्तं सूत्राणामङ्का विपर्यस्ताः संजातास्ते यथाक्रमं बोद्धव्याः | | ५९६ | ४ |

श्रीगुरुभ्योनमः ॥

श्रीगणेशाय नमः ।

# कात्यायनश्रौतसूत्रसहितं कर्कभाष्यम्* ।

त्रयीसुसंवित्तिविवेकनिर्मलाः
समग्रनिःश्रेयससिद्धिहेतवः ।
समस्तशास्त्रार्थसतत्त्वबोधका
जयन्ति कात्यायनपादपांसवः ॥ १ ॥

( अधिकारनिरूपणप्रतिज्ञा )

## ( १ )अथातोऽधिकारः ॥ १ ॥

व्याख्यास्यत इति सूत्रशेषः । शास्त्रावतारसम्बन्धप्रयोजनाभिधानं दर्शपौर्णमासादौ कृतम्, इहार्थमात्रव्याख्यानं क्रियते ॥ तत्रायम् (२) अथ-शब्दः पूर्ववृत्तवेदाध्ययनानन्तर्यप्रज्ञप्त्यर्थः । पूर्ववृत्ते हि वेदाध्ययने उत्तरो विचार उपपद्यते । वेदवाक्यार्थनिरूपणं ह्यत्र भवति । अतः—शब्दस्तदेव वेदाध्ययनं हेतुत्वेन प्रदर्शयति । यस्मादधीतो वेदः अत उत्तरं विचारस्यावसर इति । अधिकारशब्देन च कर्मविषयः कर्त्तृव्यापारोऽभिधीयते । प्रतिज्ञा (३) सूत्रमेतत् । प्रतिज्ञातमिदमधिकारो व्याख्यास्यत इति । प्रतिज्ञाकरणं शिष्यबुद्धिसमाधानाय ।

अपरेऽन्यथा व्याचक्षते । नित्यनैमित्तिककाम्यकर्मोपनिबन्धनोत्तरकालमाचार्येण परिभाषोपनिबद्धा । तत्रायमथशब्दः कर्मानन्तर्यप्रज्ञप्तये । हेत्वर्थश्चातः-शब्दः । यस्मादभिहितानि कर्माणि अतस्ते-

---

*कर्काचार्येण कृतं भाष्यम् इति विग्रहः । भाष्यलक्षणन्तु—
सूत्रस्थं पदमादाय वाक्यैः सूत्रानुसारिभिः ।
स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः ॥ इति ।

[ १ ] ओंकारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा ।
कण्ठं भित्वा विनिर्यातौ तेनेमौ मङ्गलावुभौ ॥ इति ।

( २ ) अयमेवाथशब्दः अन्यार्थं नीयमानदध्यादिवदुच्चारणमात्रेण मङ्गलं साधयति ।

( ३ ) कर्तव्यार्थनिर्देशः प्रतिज्ञा ।
अल्पाक्षरमसन्दिग्धं सारवद्विश्वतोमुखम् ।
अस्तोभमनवद्यं च सूत्रं सूत्रविदो विदुः ॥ इति सूत्रलक्षणम् ।

धिकारोऽभिधीयते—क एतैरग्निहोत्रादिभिरधिक्रियत इति ॥ १ ॥

एवं प्रतिज्ञाते सति इदानीमिदं विचार्यते—किं फलवन्ति कर्माणि, उताफलवन्तीति ? । किं तावत्प्राप्तम् । अफलवन्तीति ब्रूमः । न हि तत्समनन्तरं फलमुपलभ्यते । आगमोऽपि नैवंविधोऽस्ति, येन अग्निहोत्रादिभिः प्राप्यं फलमुच्यते । ननु च "अग्निहोत्रं जुहुयात् स्वर्गकाम" इति, "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" इत्येवमादिना फलवत्ता गम्यते । नैतदेवम् । अत्र हि यागहोमयोः श्रुत्या विधानम् । यजेतेति यागस्य कर्त्तव्यतोच्यते, जुहुयादिति होमस्य । न चान्यत्पदान्तरमस्ति, यतः फलमवगम्यते । दर्शपूर्णमासशब्दः कर्मणि वर्त्तते, अग्निहोत्रशब्दश्च । स्वर्गकामशब्देन च कामनाविशिष्टः पुरुषो ऽभिधीयते । यजेतेत्यनेन च यागस्य कर्त्तव्यता उच्यते श्रुत्या, एवं जुहुयादिति होमस्य । तेन याऽत्र फलबुद्धिः सा मृषेति । एवं प्राप्ते इदमुच्यते—

( कर्मणां फलवत्त्वम् )

## फलयुक्तानि कर्माणि ॥ २ ॥

फलस्य साधकानीत्यर्थः । कुत एतत् । वाक्यात्-दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत, अग्निहोत्रं जुहुयात् स्वर्गकाम इति च । ननूक्तम्, योऽत्र कर्त्तव्यतावाचकः स यागस्य कर्त्तव्यतामाह होमस्य च । नैतदेवम् । यागमात्रस्य कर्तव्यतायां विधीयमानायां वाक्यमेवेदमनर्थकं स्यात् । न हि यागेनान्यस्य कर्त्तव्यता । तेन यागोऽप्यनर्थको वाक्यं च । अथ तु यागः साधनत्वेन विधीयते स्वर्गं प्रति तदा धात्वर्थविधानेन श्रुतिरप्यनुगृह्यते, वाक्यमप्यर्थवद्भवति । न च वेदे मात्रामात्रस्याप्यानर्थक्य(१) मिष्यते । अतः स्वर्गः साध्यो यागश्च साधनम् । तत्कथमिति चेत् । इह स्वर्गकामो यजेतेति पदद्वयं न विधायकं, न चानुवादकम् । न हि द्वयोर्विधीयमानयोः परस्परं सम्बन्धो भवति, न चानूद्यमानयोः । तस्मात्त्रैकमुद्देशकं पदमन्यत प्रतिनिर्देशकमिति । तत्र यदि यागोद्देशेन स्वर्गकामो विधीयते, स्वर्गं कामयमानेन यागः कर्त्तव्यइति, तदा वाक्यस्यानर्थक्यं भवति । यागस्य अदृष्टपरिकल्पना स्वर्गकामनायाश्च । अथ तु स्वर्गकामोद्देशेन यागो विधीयते तदा स तस्योपकारको भवति । पुरुषप्रयत्नरूपो ह्यसौ । स्वर्गकामस्य चानेक उपकारः

( १ ) अपौरुषेयत्वात् ।

पुत्रपश्वादिलाभरूपः । तत्र चैकवाक्योपात्तं स्वर्गमेव साधयतीति नातीवादृष्टपरिकल्पना । तस्मात् स्वर्गः साध्यो यागश्च साधनम् । अपि च यागस्य कर्त्तव्यतायामसामञ्जस्यं स्यात्, स्वर्गं कामयते यागं च करोतीति । तस्मात् स्वर्गकामोद्देशेन यागविधानम् । अतश्च फलवन्ति कर्माणीत्युक्तम्( १ ) । आह च—

स्वर्गकामो यजेतेति द्वे पदे चेद्विधायके ।
परस्परेण सम्बन्धो नानुवादेऽपि युज्यते ॥ १ ॥
अतोऽनूद्य पदेनैकेनापरेण विधीयते ।
यदि तत्रैव सम्बन्धस्ततो युज्येत नान्यथा ॥ २ ॥
अनूद्य यदि यागं तु स्वर्गकामो विधीयते ।
कामनायास्तथा यागादद्दष्टं परिकल्प्यते ॥ ३ ॥
स्वर्गकाममनूद्याथ यदि यागो विधीयते ।
तस्योपकारकत्वेन ततः स्वर्गस्य साध्यता ॥ ४ ॥
प्रयत्नरूपो यागोऽयं निष्फलः स च नेष्यते ।
विधेयोऽपि हि साध्यस्य साधनत्वेन जायते ॥ ५ ॥
स्वर्गश्च साध्यो नान्यत्तु साध्यं किञ्चिदपीष्यते ।
प्रयत्नरूपो यागोऽपि तेन स्यात्तस्य साधनम् ॥ ६ ॥
उद्दिश्य स्वर्गकामं तु स्फुटे यागविधौ सति ।
एकवाक्यगतः स्वर्गो यागेनेह प्रसाध्यते ॥ ७ ॥
साध्यं नान्यद्धि यागस्य न चान्यत् स्वर्गसाधनम् ।
साध्यसाधनसम्बन्धस्तेनेष्टः स्वर्गयागयोः ॥ ८ ॥

( मनुष्याणामेवाधानादिकर्मसु अधिकारः )

## सर्वेषामविशेषात् ॥ ३ ॥

अधिकारः सर्वेषां भवति देवमनुष्यरक्षःपिशाचतिर्यगादीनाम् । सर्वे ह्येते फलार्थिन इति । दृष्टश्चायमर्थो यथा सर्वेषामधिकार इति-"देवा वा एतत्सत्रमासत, गावो वा एतत् सत्रमासत" इति । अतः फलार्थित्वाविशेषात् सर्वेषामधिकार इति ॥ ३ ॥

---

( १ ) "अफलप्रेप्सुना कर्म कर्तव्यम्" इति वाक्यात् पुरुषेण फलेच्छामनुसंधाय कर्म न करणीयम् इत्येवोच्यते न तु कर्माणि फलं न विद्यते इति । अतः फलयुक्तानि कर्माणि इति सुदृढम् ।

एवं प्राप्ते आह—

मनुष्याणां वाऽऽरम्भसामर्थ्यात् ॥ ४ ॥

वाशब्दः पक्षव्यावृत्तौ। न सर्वेषामधिकारो, मनुष्या एव कर्मस्वधिक्रियन्ते। त एव हि यथाश्रुतं कर्मारब्धुं समर्था, न देवादयः। देवास्तावदवाप्तकामाः। न च तेषामवाप्तव्यमस्ति, यद्यागादिभिरवाप्यते। न च देवानामन्ये देवाः सन्ति यान्यजेरन्। ऋषीणामार्षेयाभावादनधिकारः। रक्षःपिशाचानामशुचित्वात्। (१)गवादीनामासन्नचेतनत्वात्। विद्याशून्यत्वाच्च। यच्च दर्शनमुक्तं "गावो वा एतत् सत्रमासत" इति, स सत्रप्रशंसार्थो ऽर्थवादः। तस्मान्मनुष्याणामेवाधिकारः ॥ ४ ॥

एवं सर्वमनुष्याणामधिकारप्राप्ताविदमाह—

( शूद्राणामङ्गहीनादीनां च श्रौतकर्मसु नाधिकारः )

अङ्गहीनाश्रोत्रियषण्ढशूद्रवर्जम् ॥ ५ ॥

मनुष्याणामङ्गहीनादिवर्जितानामधिकारः। कुत एतत्। आरम्भसामर्थ्यादेव। न ह्यङ्गहीनादयो यथाश्रुतं कर्मारब्धुं समर्थाः। अतोऽनाधिकारः। अङ्गेन हीनः अङ्गहीनः। यथा विष्णुक्रमणे पङ्गुरसमर्थः। अन्ध आज्यावेक्षणे। मूको मन्त्रोच्चारणे। बधिरश्च सम्बोधने। विष्णुक्रमादिभिश्च विना विगुणं कर्म भवति। अत एव नाधिकारः। अश्रोत्रियस्य सर्वयाजमानेष्वनधिकारः। अनधिकृतो ह्यसावश्रोत्रि( २ ) यत्वादेव। षण्ढश्चाशुचित्वादद्रव्यत्वाच्च। अशुचित्वं हि तस्य स्मर्यते अद्रव्यत्वं च। तस्मादेषामनधिकारः। ननु चारम्भसामर्थ्यादित्ययं हेतुर्यथा गवादिव्युदासे वर्त्तते एवमङ्गहीनादिव्युदासेऽपीति नारब्धव्यमेतत् सूत्रम्। सत्यमेतत्। अद्रव्यव्युदासार्थमङ्गहीनादीनामुपादानम्। आरम्भसामर्थ्यात्तस्याप्यनधिकारो माभूदिति। शूद्रः कस्मान्नाधिक्रियते द्रव्यवाननङ्गहीनश्च। सन्ति चान्यार्थानि दर्शनानि यैः शूद्रस्याप्यधिकारो गम्यते। हविष्कृदाह्वानविशेषं प्रकृत्योच्यते "आधावेति शूद्रस्य"। तथा व्रतविशेषे "मस्तु शूद्रस्य"। तथा पितृमेधे "अष्ठीवद्घ्नं शूद्रस्य" इति। एवं

---

( १ ) आसन्नेषु प्रत्यासन्नेषु चेतना बुद्धिर्येषां तत्त्वाद्गवादीनामित्यर्थः। पारलौकिकफलविषयकबुद्ध्यभावादिति यावत्।

( २ ) नाश्रोत्रियतते यज्ञे ग्रामयाजिहुते तथा।

प्राप्ते इदमाह । शूद्रवर्जम् ॥ ५ ॥

कुत एतत्—

ब्राह्मणराजन्यवैश्यानाᳬ श्रुतेः ॥ ६ ॥

ब्राह्मणादीनामेवाधानं श्रूयते—"वसन्ते ब्राह्मणोऽग्नीनादधीत, ग्रीष्मे राजन्यो, वर्षासु वैश्य" इति । तेनाधानाभावादनग्निः शूद्रः । सोऽग्निसाध्ये कर्मणि कथं प्रवर्त्तिष्यते । आत्मार्थं चाधीयन्ते अग्नयो न परार्थं । आत्मनेपदं ह्यत्र भवति आदधीतेति । तेन ब्राह्मणादय एवाधानेनाग्निमुत्पादयितुं समर्थाः, न शूद्रः । आधानाभावात् । अतः शूद्रस्यानधिकारः । यानि पुनर्दर्शनान्युक्तानि तानि रथकारविषयाणि । रथकारस्य हि शूद्रासम्बन्धात् शूद्रत्वमुच्यते । करण्यां हि स जातः । करणी च शूद्राद्दुहितेति ।

अथवा ब्राह्मणराजन्यवैश्यानामेवाध्ययनं श्रूयते-"वसन्ते ब्राह्मणमुपनयीत, ग्रीष्मे राजन्यं, वर्षासु वैश्यम्" इति । उपनयनं चाध्ययनार्थम् । अतस्तदभावादवैद्यत्वादनधिकारः शूद्रस्य । अपिच शूद्रस्य प्रतिषेधो भवत्यध्ययनं प्रति । श्रवणे त्रपु(१)जतु(२)भ्यां श्रोत्रपूरणम्, उच्चारणे जिह्वाच्छेदः, धारणे शरीरभेद इति । तस्मादवैद्यत्वाच्छूद्रो नाधिक्रियत इति ॥ ६ ॥

"ब्राह्मणोऽग्नीनादधीत, स्वर्गकामो यजेत" इति च विशिष्टलिङ्गश्रवणात् स्त्रिया अनधिकारे प्राप्ते इदमाह—

( पुंसा सहैव स्त्रिया अधिकारः )

स्त्री चाविशेषात् ॥ ७ ॥

स्त्री चाधिक्रियते । कुत एतत् । अविशेषात् । यस्माच्छ्रूयमाणमप्येतल्लिङ्गं न विशेषकं भवति अतो न पुंसामेवाधिकार इति । उद्दिश्यमानविशेषणं ह्येतत्, स्वर्गकामो यजेतेति । विधिसंस्पर्शाभावादविवक्षितं लिङ्गं संख्या च । यत्र पुनर्विधिसंस्पर्शोऽस्ति तत्र लिङ्गं संख्या च विवक्ष्यते । यथा "पशुमालभेत" इत्यत्र तद्विषयं

---

स्त्रिया क्लीबेनच हुते भुञ्जीत ब्राह्मणः क्वचित् ॥

इत्यर्थेऽस्त्रियषण्ढशूद्रगृहे ब्राह्मणस्य भोजननिषेधाद्यज्ञान्ते ब्राह्मणभोजनस्यावश्यकत्वादश्रोत्रियादीनामनधिकारः ॥

( १ ) वेदश्रवणे । त्रपु रङ्गम् । राङ्गा इति लोके प्रसिद्धम् ।

( २ ) लाक्षावाचको जतुशब्दः । लाहीति प्रसिद्धः ।

लाक्षा राक्षा जतु क्लीबे यावो ऽलक्तो द्रुमामय इत्यमरः ।

पुंस्त्वमेकत्वं च विधीयते। विशिष्टपश्वालम्भोऽन्यथा न भवति। तस्मात् स्त्रिया अप्यधिकारः ॥ ७ ॥

दर्शनाच्च ॥ ८ ॥

दृश्यते चायमर्थो यथा स्त्रिया अप्यधिकार इति। "मेखलया यजमानं दीक्षयति योक्त्रेण पत्नीम्" इति योक्त्रविधिपरे वाक्ये पत्न्या अधिकारं दर्शयति।

सा च पुंसा सहाधिक्रियते न पृथक्। येनैकस्मिन्कर्मणि पत्नीसाध्याः पदार्था दृश्यन्ते यजमानसाध्याश्च—"पत्न्याज्यमवेक्षते, यजमानो वेदं बध्नाति" इति। अपि च। तयोः समस्वकं द्रव्यं स्मर्यते, धर्मार्थकामेषु चानतिचारः। तस्मात् सहाधिक्रियते।

तुल्यफलत्वाच्च। कुत एतत्। सूत्रकारप्रस्थानात्। पत्नीः प्रकृत्याह—"अनुचरीर्वा फलाधिकारादितरासाम्" इति। क्रियाफलं च सकलमेकैकस्य भवति न विभागेन। स्वर्गकामो यजेतेत्यनेन यथा यजमानोऽभिधीयते एवं पत्न्यपीति। यथा यागेन यजमानः फलं साधयति तथा पत्न्यपीति। वाक्यान्तरेण सह क्रिया तयोः। तथाच स्मरणम्—

नास्ति स्त्रीणां पृथग्यज्ञो न व्रतं नाप्युपोषणम्।
शुश्रूषयति भर्त्तारं तेन स्वर्गे महीयते ॥ इति ॥ ८ ॥

(भर्तुराज्ञया उपवासादि सर्वं सुकर्म कर्तव्यम्। विधवायास्तु भर्तुर्ध्यानमेव) इत्यधिकं क्वचित्।

त्रयाणां वर्णानामङ्गहीनादिवर्जितानां स्त्रिया सहाधिकार उक्तः। अन्यस्यापि कस्यचिदिष्यते। तदर्थं सूत्रमारभ्यते—

(रथकारस्याधानमात्रे एवाधिकार इत्येकं मतम्, उत्तरकर्मस्वपि चाधिकारः इति द्वितीयम्)

रथकारस्याधाने ॥ ९ ॥

श्रुतत्वाद्रथकारोऽप्यधिक्रियते। श्रूयते हि "वर्षासु रथकार आदधीत" इति ॥ ९ ॥

तत्रैतद्विचार्यते—किं त्रैवर्णिको रथकारो रथक्रियायोगात्, उत जात्यन्तरमिति। उभयत्र प्रयोगदर्शनात् सन्देहः। किं तावत्प्राप्तम्। त्रैवर्णिक इति। तस्य ह्याधानप्राप्तौ सत्यामृतुमात्रविधानात् वाक्यभेदो न भवति। जात्यन्तरवाचिनि पुनस्तस्याधानसम्बन्धो वक्तव्यः ऋतुसम्बन्धश्चेति। तथासति वाक्यं भिद्येत। तस्मात् त्रैवर्णिको रथकारः। एवं प्राप्ते आह—

## नियतं च ॥ १० ॥

च-शब्दो वाशब्दस्यार्थे । निपातानामनेकार्थतोक्ता "उच्चावचेष्वर्थेषु निपतन्तीति निपाता" इति । अतश्चशब्दो वाशब्दस्यार्थे, वाशब्दश्च पक्षव्यावृत्तौ । न त्रैवर्णिको रथकारः । किं तर्हि जात्यन्तरमेव—तस्मिन्हि रथकारशब्दो रूढः स्मर्यते—"माहिष्येण करण्यां तु रथकारः प्रजायते" इति । क्षत्रियाज्जातो वैश्यायां माहिष्यः । वैश्येन शूद्रायां जाता करणी । माहिष्येण करण्यां जातो रथकारः । आनुलोम्येन सङ्करजातः । रथकारशब्दश्चात्र रूढः । रूढिश्च योगात् बलीयसी । सा हि श्रुतिपक्षनिक्षिप्ता । वाक्यपक्षनिक्षिप्तो योगः । अपि च त्रैवर्णिकस्य शिल्पोपजीवनं प्रतिषिद्धम् । तस्मादपि जात्यन्तरम् इति । तथा च मन्त्रलिङ्गम् "ऋभूणां त्वेति रथकार आदधीत" इति । सौधन्वना ऋभव इति च; सौधन्वनशब्देन स्पष्टमेव जात्यन्तरमभिधीयते । अथ यदुक्तञ्जात्यन्तरवाचिनि रथकारशब्दे वाक्यं भिद्यते इति । तद्विशिष्टविधानेन परिह्रियते ॥ १० ॥

अथ कस्मात्त्रैवर्णिक एव नाङ्गीक्रियते । सोऽपि हि रथकरणाद्रथकारो भवति । तस्येदमाधानम् । एवं च सति ऋतुमात्रविधाने लाघवं भवति । जात्यन्तरे तु विशिष्टविधानाङ्गीकरणे गौरवं स्यात् । एवमाशङ्कित उत्तरसूत्रम्—

## नाभात्रादिति वात्स्यः ॥ ११ ॥

न त्रैवर्णिको रथकारः शक्यते वक्तुम् । योगनिमित्तः शब्दो यावदेव योगः तावदेव प्रवर्त्तते । अतो न रथकाराख्याया रथकरणनिमित्तता । वात्स्यग्रहणं प्रत्ययदार्ढ्यार्थम् ।

"रथकारस्याधाने" इत्येवमादीनामपरा व्याख्या । रथकारस्याधाने दृष्टत्वाद्रथकारोऽधिक्रियत इत्युक्तम् । रथकारशब्दश्च जात्यन्तर एव रूढः । तेन यौगिकाशङ्कैव न भवति । अतोऽन्यथा व्याख्यायते ।

रथकारस्याधाने दृष्टत्वात् किमाधानमात्रमेव भवति उतोपरितनकर्मस्वप्यधिकार इति । तत्रैतदुच्यते-(सू०) नियतं च । चशब्दान्नैमित्तिकं काम्यं च कर्म प्रवर्त्तते । कुत एतत् । आधानं हि तस्य श्रुतम् । तच्च आत्मसंस्कारार्थम् अग्निद्वारेण । संस्काराश्चोपरितनकर्महेतवः । अतश्चोपरितनकर्मस्वप्यधिकार इति । एवं प्राप्ते

उच्यते—(सू०) नाभावादिति वात्स्यः। नैतदेवमुपरितनकर्मस्वप्य-धिकार इति। लिङ्गाभावात्। न ह्यधिकारलिङ्गान्यस्य दृश्यन्ते, यथा त्रैवर्णिकानाम् "एहीति ब्राह्मणस्य, आगह्याद्रवेति वैश्यस्य च राजन्यबन्धोश्च" इत्येवमादीनि। तेन लिङ्गाभावादनधिकारो गम्यते। एवमभिधाय पुनराधीतेन व्याख्यायते। अभावाल्लिङ्गानामुपरितनकर्मस्वधिकारो न स्यात्। अस्ति तु (लिङ्गस्य) भावः। न च लिङ्गाभावमात्रेणैवानाधिकारो गम्यते। आम्नानं हि तस्य श्रुतम्। तद्धि संस्कार्याग्निद्वारेण परार्थमिति। वात्स्यग्रहणमुक्तार्थम्।(१)अपि च लिङ्गमप्यस्ति–"आधावेति शूद्रस्य" तथा "मस्तु शूद्रस्य," "अष्टीवद्घ्नं शूद्रस्य" इति। शूद्रासम्बन्धाद्रथकारः शूद्र इत्यभिधीयते। तस्य हि मातामही शूद्रेति॥ ११॥

( स्थपतिनिषादस्य गावेधुकेष्टावधिकारः )

## निषादस्थपतिर्गावेधुकेऽधिकृतः॥ १२॥

एवं हि श्रूयते। "यस्य रुद्रः पशून् शमयेत् स वास्तुमध्ये रौद्रं गावेधुकं चरुं निर्वपेत्" इति। तामिष्टिं प्रकृत्यामनन्ति "एतया निषादस्थपतिं याजयेत्"इति। निषादस्थपतिर्यजेतेत्यर्थः। तत्रैतत्संदिह्यते–निषादानां स्थपतिर्निषादस्थपतिः उत निषादश्चासौ स्थपतिश्च निषादस्थपतिरिति। स्थपतिशब्द आधिपत्यवचनः। किं चातः। यदि षष्ठीसमासः तदा त्रैवर्णिको भवति, अथ समानाधिकरणस्तदा जात्यन्तरमिति। जात्यन्तरस्यावैद्यत्वात्षष्ठीसमासपरिग्रहे प्राप्ते उच्यते। निषादश्चासौ स्थपतिश्चेति समानाधिकरण इति। कुत एतत्। षष्ठ्यश्रवणात्। ननु च समासे सति लुप्यते षष्ठी। एतदेव ह्यनुपपन्नम्, यदश्रुता षष्ठी कल्प्या लोपश्चेति। इतरस्मिन्पुनः पक्षे द्वयोरपि पदयोः स्वार्थवृत्तिता भवति। तस्मात् समानाधिकरणोऽयं न षष्ठीसमासः। अपि च। निषादद्रव्यं हि दक्षि-

---

(१) 'अस्तितु भाव' इति सामान्येनोक्तं लिङ्गसत्त्वं प्रदर्शयति अपिचेत्यादिना। नाभावात् इति सौत्रपदे न अभावो नाभाव इति नशब्देन सुप्सुपेति समासः। उत्तरकर्मसु अनधिकारप्रयोजकत्वेनाभिमतस्य लिङ्गाभावस्याभावादित्यर्थः। उत्तरकर्मसु रथकारस्याधिकारोऽस्त्येवेति शेषः।

णा श्रूयते (हलाग्रस्थलोहं) "कूटं दक्षिणा काणो वा गर्दभ" इति ॥१२॥
( ब्रह्मचारिणः स्त्रीसङ्गे गर्दभेज्या आज्याहुती वा प्रायश्चित्तम् )

वाऽवकीर्णिनो गर्दभेज्या ॥ १३ ॥

अवकीर्णी–ब्रह्मचारी यः स्त्रियमुपैति तस्य वा गर्दभेज्या नैमित्तिकी, वा आज्याहुती इति। उभयं हि शाखान्तरे श्रूयते विकल्पेन ॥ १३ ॥

तत्रेतद्विचार्यते। स्थपतीष्ट्याम् अवकीर्णिपशौ च किमाधानसंस्कृतोऽग्निरुत लौकिक इति। किं तावत्प्राप्तम्। आधानसंस्कृत इति। दर्शपूर्णमासविध्यन्तग्राहके ह्येते कर्मणी। तत्र चाधानसंस्कृतोऽग्निरिष्टः। इहापि तद्वदेव भवतीत्येवं प्राप्ते आह—

( स्थपतीष्टौ अवकीर्णिपशौच लौकिकाग्न्यादीनामङ्गत्वम् )

लौकिके ॥ १४ ॥

लौकिकेऽग्नावेतदुभयं स्यात्। स्थपतीष्ट्या हि तत्प्रयुज्यते यत् दर्शपूर्णमासयोरङ्गम्। न चाधानं दर्शपौर्णमासाङ्गम्। प्रकरणाभावात्। स्वकाले हि पुरुषसंस्कारकत्वेन तद्विहितम्। अतो लैकिकोऽग्निरिति ॥ १४ ॥

भूमौ पशुपुरोडाशश्रपणम् ॥ १५ ॥

न कपालेषु ॥ १५ ॥

अप्स्ववदानहोमः ॥ १६ ॥

नाग्नाविति ॥ १६ ॥

(१)शिश्नात्प्राशित्रात्रदानम् ॥ १७ ॥

कर्त्तव्यमिति शेषः ॥ १७ ॥

कर्त्रधिकारो निरूपितः। इदानीमग्न्यधिकारनिरूपणायाह—

(स्मार्तानां कर्मणामौपासनाग्नौ कर्तव्यता नाहवनीयादिषु)

वैतानिकेषु सर्वार्थं सर्वार्थत्वात् ॥ १८ ॥

वैतानिका वितानार्हा आधानसंस्कृता अग्नय उच्यन्ते। तेषु सर्वं श्रौतं स्मार्त्तं च कर्म कर्त्तव्यम्। कुत एतत्। सर्वार्थत्वात्। सर्वार्था ह्येते अग्नयः। कथं ज्ञायते। यन्नाम द्रव्यमुत्पद्यमानमेव

(१) गर्दभस्य शिश्नात् प्राशित्रावदानं कार्यम्, वचनात्, न जौहवेभ्यो हृदयादिभ्य इति तत्त्वम्।

विशिष्टार्थसंयोगेनोत्पद्यते तस्य तादर्थ्यमेवावसीयते। न चैते वि-शिष्टार्थसंयोगिनः। तस्मात् सर्वार्था इति(१) ॥ १८ ॥

## दर्शनाच्च ॥ १९ ॥

दृश्यते चायमर्थो यथा स्मार्त्तमप्यत्र क्रियते। दक्षिणाग्निं प्रकृत्य श्रूयते—"माꣳसं तु तत्र न पचेयुः" इति। प्राप्तिपूर्वकश्च प्रतिषेधो भवति। न च श्रौतो मांसपाको दक्षिणाग्नावस्ति, यस्यैष प्रतिषेधः स्यात्। शामित्रे ह्यसौ विहित इति। अस्ति तु अविहिताप्रतिषिद्धः स्मार्त्तो मांसपाकः, तस्यैष प्रतिषेधो युज्यते। तस्मात्स्मार्त्तमप्यत्र क्रियते इति(२) ॥ १९ ॥

एवं प्राप्ते ब्रूमः—

## नौपासनश्रुतेः ॥ २० ॥

'नैतदेवं' स्मार्त्तमपि वैतानिकेषु कर्त्तव्यमित्येवं नास्ति। येन वैतानिकस्यापि स्मार्त्तकर्मसाधनभूत औपासनो दृश्यते। पितृमेधे "अङ्गारेणौपासनं निरस्यति" इति। यदि हि स्मार्त्तमपि वैतानिकेषु क्रियते, औपासनदर्शनं न स्यात्। दृश्यते(३) च। तस्मात्स्मार्त्ता-न्यौपासने क्रियन्त इति। अपिच। पूर्वमौपासनः। स्मरन्ति ह्येवं—"संस्कारैः संस्कृतः पूर्वैरुत्तरैरनुसंस्क्रियते" इति। पूर्वं च स्मार्त्ताः, श्रौ-ताश्चोत्तरे। न च वैतानिकोत्पत्त्युत्तरकालमौपासनस्य युक्तस्त्यागः। अग्न्युत्सादित्वप्रसङ्गात् ॥ २० ॥

## अधिश्रयणीये माꣳसप्रतिषेधः ॥ २१ ॥

यश्च दक्षिणाग्नौ मांसपाकप्रतिषेधः सोऽधिश्रयणीयाद्धविर्विषयः। दक्षिणाग्निं प्रकृत्य श्रूयते—"नवावसिते वैनमाहरेयुस्तस्मिन्पचेयुः" (श० ब्रा० २।३।२।८) इति। पाकद्रव्यं चाविशेषान्मांसमपि

(१) आधानेनोत्पादितानामग्नीनां प्रयोजनापेक्षायां सामर्थ्येन सर्वाग्निकार्यार्थता विज्ञायत इति भावः।

(२) तथा च स्मार्तं दशश्राद्धं प्रकृत्य अग्नौकरणार्थमग्निमाह मार्कण्डेयः—

आहिताग्निस्तु जुहुयाद्दक्षिणाग्नौ समाहितः।
अनाहिताग्निस्त्वौपासनेऽग्न्यभावे तथाऽप्सु वा ॥ इति।

(३) अत्र याज्ञवल्क्यः—कर्म स्मार्तं विवाहाग्नौ कुर्वीत प्रत्यहं गृही। दायकालाहृते वापि श्रौतं वैतानिकाग्निषु ॥ इति।

भवति । तस्यैव प्रतिषेध इति(१) ॥ २१ ॥

इति कर्काचार्यकृते भाष्ये प्रथमाध्याये प्रथमा कण्डिका ॥ १ ॥

"स्वर्गकामो यजेत" इत्येवमादीनां फलवत्ता प्रतिपादिता । अधिकारनिरूपणं च कृतम् । इदानीं तस्यैव साङ्गस्य फलवतः कर्मणो निरूपणायाह—

( यागस्वरूपनिरूपणप्रतिज्ञा )

यज्ञं(२) व्याख्यास्यामः ॥ १ ॥

यज्ञशब्दो व्याख्यास्यत इत्यर्थः ॥ १ ॥

प्रतिज्ञा कृता । तामाह—

( यागस्वरूपनिरूपणम् )

द्रव्यं देवता त्यागः(३) ॥ २ ॥

व्रीहियवपश्वादि द्रव्यम् । देवताशब्दस्तु चोदनालक्षणः । या यत्र चोद्यते सा तत्र देवता । न हि जात्या काचिद्देवताऽस्ति वैदिके व्यवहारे । तद्धितेन द्रव्यं प्रति देवतात्वं गम्यते, चतुर्थ्यन्तेन वा । तस्य द्रव्यस्य देवतां प्रति या उत्सर्गक्रिया स यागः । यज्ञो याग इति चानर्थान्तरम् । अस्मिन्नेवार्थे लोके यज्ञशब्दः प्रसिद्धः । प्रसिद्धोऽपि सन्नुच्यते अङ्गप्रधानविवेकनिरूपणाय ॥ २ ॥

निरूपितं प्रधानं फलसंयुक्तम्, इदानीम् अङ्गनिरूपणायाह—

( अफलयुक्तानाम् अयागहोमरूपाणां यागाङ्गत्वनिरूपणम् )

तदङ्गमितरत् समभिव्याहारप्रकरणाभ्याम् ॥ ३ ॥

यदन्यत् फलासंयुक्तमयागहोमरूपं तत् तस्यैव फलवतो यागस्याङ्गम् । धर्मः शेषोऽङ्गमिति चानर्थान्तरम् । कुत एतत् । समभिव्याहारप्रकरणाभ्याम् । समभिव्याहारशब्देन वाक्यमभिधीयते । यथा "पौर्णमासेनेष्ट्वेन्द्राय विमृधेऽनुनिर्वपति" इति । प्रकरणाज्ञानसामर्थ्याद्दर्शपूर्णमासाङ्गत्वे प्राप्ते वाक्यात्पौर्णमासाङ्गतोच्यते ।

(१) अतः श्रौतान्येव वैतानिकेषु गार्हपत्यादिषु कर्तव्यानि, स्मार्तानि त्वावसथ्येऽग्नावेवेति सिद्धम् ।

(२) यज्ञो यागो यजनमिष्टिरिति पर्यायाः, यज्ञं यागं व्याख्यास्याम इत्यर्थः, यागस्वरूपं कथयिष्य इति यावत् ।

(३) अग्न्यादिदेवतोद्देशेन पुरोडाशादिद्रव्योत्सर्गो याग इति भावः ।

उभयाकाङ्क्षालक्षणं प्रकरणमुच्यते। तद्यथा। दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेति यागस्य फले विधानं साधनत्वेन। साधनस्य च इतिकर्तव्यतापेक्षा। इतिकर्त्तव्यता च साध्यसव्यपेक्षा। तयोः च साकाङ्क्षावतोः सम्बन्धः प्रकरणम्। उभयोराकाङ्क्षावत्त्वे सति तत्सम्बन्धप्रतिपादकवाक्यपरिकल्पना, वाक्यादभिधानसामर्थ्यम्, अभिधानसामर्थ्याद्विनियोक्त्री श्रुतिरिति। एवं वाक्यप्रकरणाभ्यां शेषविनियोग इति।

ननु च तन्त्रे श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानानि शेषविनियोगप्रमाणानि दृश्यन्ते। सूत्रकारेण तु प्रमाणद्वयमुपन्यस्तम्। शेषाणामनुपन्यास इति। नैष दोषः। कर्मविवेचनकाले एव तानि ह्यभिहितानि। तत्र तत्रोच्यते, "काष्ठं हिरण्यं वाऽभिजुहुयात् श्रुतेः" इति। काष्ठहिरण्ययोः श्रुतेर्विनियोजकत्वमुक्तम्। लिङ्गस्य च "तेषामारम्भेऽर्थतो व्यवस्था तद्वचनत्वात्" इति।

क्रमस्तु द्विप्रकारः सन्निधानलक्षणो यथासंख्यलक्षणश्च। तत्र यः सन्निधानलक्षणः स विकृतिविषयः। अन्यतराकाङ्क्षोऽपि हि तत्र सम्बन्धो भवति। विकृतिसन्निधौ यदपूर्वमङ्गमाम्नायते तत् साध्याभावात्साकाङ्क्षं, तस्यानर्थक्यं मा भूदिति वैकृतस्य प्रधानस्य तत्प्रत्यपेक्षा कल्प्यते। सोऽयमन्यतराकाङ्क्षालक्षणः क्रमः। तेनापि विनियोगो ज्ञापित एवाचार्येण। यथा विदेवनादीनामभिषेचनीये। यथासंख्यलक्षणेनापि विनियोग उक्त एव। यथा "काᳪस्यवानस्पत्यमार्तिकैरभिचारब्रह्मवर्चसप्रतिष्ठाकामा यथासंख्यम्" इति।

समाख्ययाऽपि च विनियोगो ज्ञापित एव "शेषमितरे यथाख्यम्" इति। अतो विनियोगप्रमाणद्वयमेवात्राभिहितम्।

यच्च पितृभूत्याचार्येण यथासंख्यलक्षणक्रमं प्रकृत्योपांशुयाजे "दब्धिर्नामास्यदब्धोऽहं भ्रातृव्यं दभेयम्" इत्यस्य विनियोग उक्तः, तन्नातीव शोभते। प्रकरणेन हि तस्य सम्बन्ध उभयाकाङ्क्षालक्षणः। तेनानुमन्त्रणेन प्रकरणिनोऽपेक्ष्यन्ते। प्रकरणिभिरपि आग्नेयोपांशुयाजाग्नीषोमीयैस्तदपेक्ष्यते। तेन प्रकरणेनानुमन्त्रणसम्बन्धः। तद्यदि विशेषे व्यवस्थाप्यते क्रमेण, प्रकरणं बाधितं स्यात्।

यथासंख्यलक्षणेन विनियोगः प्रदर्शित एव—"कवचिनिषङ्गिकलापिदण्डिनो यथासंख्यम्" इत्येवमादि ॥ ३ ॥

अथ यागहोमरूपस्याङ्गभाव उक्तः। इदानीं यागहोमयोरङ्गत्वप्रतिपादनायाह—

( यागहोमरूपाणामपि अफलयुक्तानां यागाङ्गत्वम् )

यजतयश्चाफलयुक्तास्तदङ्गम् ॥ ४ ॥

चशब्दाज्जुहोतयश्च । ननु दर्शपूर्णमासाभ्यां स्वर्गकामो यजेते-त्यनेन यागस्य फलसम्बन्ध उक्तः, कुतोऽफलयुक्ता यजतय इति । अत्रोच्यते । नात्र सर्वस्य फलवत्ता, किं तर्हि य एव दर्शपूर्णमास-शब्दवाच्यः स फलवान् । कश्चासौ । यो दर्शपूर्णमाससंयोगेनोत्पन्नः। यथा "आग्नेयोऽष्टाकपालः पौर्णमास्याममावास्यां चाच्युतो भवति" इति आग्नेयस्य दर्शपौर्णमाससंयोगः । दर्शशब्देन च चन्द्र-मसोऽदर्शनाद्वैपरीत्यलक्षणयाऽमावास्योक्ता । तथा "तावब्रूतामग्नी-षोमावाज्यस्यैव नावुपांशु पौर्णमास्यां यजन्" इति उपांशुयाजस्य पौर्णमासीसंयोगः, "ताभ्यामेतमग्नीषोमीयमेकादश-कपालं पौर्णमास्यामप्रायच्छत्"इत्यस्य च। तथा च"ऐन्द्रं दध्यमावा-स्यायाम् ऐन्द्रं पयोऽमावास्यायाम्" इत्यमावास्यासंयोगः । एवमेते यागा लक्षणया दर्शपूर्णमासशब्देनाभिधीयन्ते । तेषामेव फलविधा-नम् । इतरे प्रयाजादयो निष्फलाः । तेषामपि फलवदुपकारः परिक-ल्प्यते । तेन तादर्थ्यात्तदङ्गता । तस्मात्साधूक्तम्—"यजतयश्चाफलयु-क्तास्तदङ्गम्" इति । अङ्गाधिकारे पुनस्तदङ्गग्रहणमपूर्वसंसूचनार्थम् ॥४॥

यजतिजुहोत्योर्विवेकायाह—

यजतिजुहोतीनां को विशेषः(१) ॥ ५ ॥

इति ॥ ५ ॥

( यागानां होमानां च विवेचनम् )

तिष्ठद्धोमा वषट्कारप्रदाना याज्यापुरोऽनु-वाक्यावन्तो यजतयः(२) ॥ ६ ॥

उच्यन्ते ॥ ६ ॥

उपविष्टहोमाः स्वाहाकारप्रदाना जुहोतयः(३) ॥ ७ ॥

---

(१) यजतीनां यागानां जुहोतीनां होमानां च परस्परं को विशे-षः को भेद इति प्रश्नः ।

(२) तिष्ठता होमो येषु ते तिष्ठद्धोमाः, वषट्कारेण प्रदानं येषु ते वषट्कारप्रदानाः, तथा याज्यावन्तः पुरोऽनुवाक्यावन्तश्च ये ते यजतय उच्यन्ते इति देवयाज्ञिकः ।

(३) उपविष्टेन कर्त्रा होमो येषु ते उपविष्टहोमाः, स्वाहाकारेण प्रदानं येषु ते स्वाहाकारप्रदानाः, ये उपविष्टहोमाः स्वाहाकारप्रदा-नाश्च ते जुहोतय उच्यन्ते ।

उच्यन्ते। अनेन प्रकारेण तद्धर्मानुकथनं कृतमाचार्येण। यजतीनां तिष्ठद्धोमादयो धर्माः। जुहोतीनां चोपविष्टहोमादयः। लक्ष्यलक्षणसम्बन्धे त्वदृष्टपरिकल्पनम्। तस्माद्धर्मानुकथनायैतदुक्तम्॥७॥

अङ्गत्वे लक्षणमुक्तम्। तेषां च ऋत्विक्कर्तृकत्वमुक्तं प्रदेशान्तरे "शेषमितरे यथाख्यम्" इति।

ये इतरे ते किं ब्राह्मणा उत क्षत्रियवैश्यावपीति। क्षत्रियवैश्यावपीति ब्रूमः। समर्था ह्यधिक्रियन्ते। सामर्थ्यं च वैद्यत्वात्त्रयाणामपि इत्येवं प्राप्ते आह—

( ब्राह्मणानामेवार्त्विज्येऽधिकारः )

ब्राह्मणा ऋत्विजो भक्षप्रतिषेधादितरयोः॥ ८॥

ब्राह्मणानामेवार्त्विज्ये ऽधिकारो न क्षत्रियवैश्ययोः। तयोर्हि शेषभक्षप्रतिषेधः। अग्निहोत्रोच्छिष्टं प्रकृत्योच्यते "तद्धं नाब्राह्मणः पिबेदग्नौ ह्यधिश्रयन्ति तस्मान्नाब्राह्मणः पिबेत्" इति। एवं च कृत्वा क्षत्रियवैश्ययोर्भागस्य होमविधानं कृतं न भक्षणमिति(१)॥८॥

दर्शनाच्च॥ ९॥

दृश्यते चायमर्थो यथा ब्राह्मणानामेवार्त्विज्यमिति। "द्वया वै देवा–देवा आहैव देवा, अथ ये ब्राह्मणाः शुश्रुवाꣳसोऽनूचानास्ते मनुष्यदेवास्तेषां द्वेधा विभक्त एव यज्ञ, आहुतय एव देवानां, दक्षिणा मनुष्यदेवानां ब्राह्मणानाꣳ शुश्रुवुषामनूचानानामाहुतिभिरेव देवान्प्रीणाति दक्षिणाभिर्मनुष्यदेवान्ब्राह्मणान्" इति। दक्षिणाशब्दश्च परिक्रयार्थे द्रव्ये वर्त्तते। तेन ब्राह्मणानामेवार्त्विज्यमिति। अपि च स्मरन्ति "ब्राह्मणस्याधिकाः प्रवचनयाजनप्रतिग्रहा" इति॥ ९॥

इदानीमिदं विचार्यते। कर्मणामारम्भे किं याथाकाम्यं कर्तुरुत नियोगतो ऽनुष्ठयानीति। किं तावत्प्राप्तम्। सूत्रेणैव पक्षः—

फलयुक्तानामारम्भे याथाकामी फलार्थित्वात्(२)॥१०॥

---

(१) तथा च शाखान्तरम् "न राजन्यो न वैश्यो वा साम्नाय्य पिबेत्सोमपीथी ह्येष" इति।

(२) फलसम्बद्धानां काम्यानां कर्मणां द्वादशाहादीनामारम्भे कर्तुर्याथाकाम्यमिच्छया प्रवृत्तिः। कुतः?। तस्य कर्तुः फलार्थित्वादित्यर्थः। काममनतिक्रम्य यथाकामम्, तस्य भावो याथाकामी

फलार्थिनो हि कर्म चोद्यते । तस्माद्याथाकाम्यं प्राप्तम् ॥ १० ॥
(सत्यवदनादिनियमाः, गृहदाहादिनिमित्ताः क्षामवत्यादयः, अग्निहोत्रादीनि च नियोगतोऽनुष्ठेयानि, न तत्र याथाकाम्यम् )

न नियमनिमित्ताग्निहोत्रदर्शपूर्णमासदाक्षायणाग्रयणपशुषु प्रवृत्तेः ॥ ११ ॥

नियमेषु न याथाकाम्यम् । यस्मान्नियोगतस्तत्र शास्त्रं प्रवर्त्तयति—"सत्यवादी स्यादधः शायी स्यात्" इति च । पक्षे नैतन्नियमशास्त्रं प्रवृत्तम् । प्रागेव यस्माद्याथाकाम्यं प्राप्तम् । यदितु नियोगतो नानुष्ठेयम्, सत्यवदनशासनमनर्थकमेव स्यात् । तस्मात्सत्यवदनादि नियोगतोऽनुष्ठेयं सत्यवदनशासनानर्थक्यं मा भूत् । तस्मान्नियमेषु न याथाकाम्यम् ।

निमित्तेऽपि यद्विधीयते तत्रापि न याथाकाम्यम् । निमित्तोद्देशेन विधानात्—"गेहदाहे अग्नये क्षामवते" इति । यदि गेहदाहे क्षामवत्यादिषु याथाकाम्यं स्यात्, गेहदाहग्रहणमनर्थकमेव स्यात् । प्रागपि गेहदाहग्रहणाद्याथाकाम्यं सिद्धमेव । तस्मान्नैमित्तिकेषु न याथाकाम्यम् ।

अग्निहोत्रेऽपि न याथाकाम्यम् । "यावज्जीवमग्निहोत्रं जुहुयात" इति श्रूयते । ननु च "अग्निहोत्रं जुहुयात्स्वर्गकाम" इति च । तत्र प्रकरणात् काम्यस्यैवैष कर्मणो धर्मस्ततश्च याथाकाम्यमित्येवं प्राप्ते उच्यते । प्रकरणादेष कर्मधर्मः स्यात् यावज्जीविकता । तत्रापि लक्षणया कर्माभ्यास उपदिश्यते । विहिता हि तस्य सायंप्रातः परिसमाप्तिः । तेन यावज्जीवं जुहुयादित्यनेनाभ्यासो (१)लक्ष्यते । कर्तृधर्मे पुनर्जुहुयादिति स्वार्थे एव वर्त्तते, नाभ्यासं लक्षयति । जीवनं च निमित्तं ज्ञातो होमो विधीयते । तस्मात्कर्तृधर्मो यावज्जीविकता । ततश्च न याथाकाम्यम् ।

---

याथाकाम्यमिति यावत् । ब्राह्मणादित्वाद् गुणवचनब्राह्मणादिभ्य इति ष्यञि षित्वान्ङीषि यस्येति चेत्यकारलोपे हलस्तद्धितस्येति यकारलोपे औचित्यमौचिती इतिवत् रूपद्वयम् ।

(१) यावज्जीवनं तावता कालेन अग्निहोत्रं कुर्यात् इति अग्निहोत्रोद्देशेन जीवनावच्छिन्नकालविधाने सायं प्रातश्च परिसमापनीयस्य कर्मणो जीवनावच्छिन्नकालानुष्ठानासंभवात् जीवनावच्छिन्नकालैकदेशस्य च अग्निहोत्रकर्मणि नान्तरीयकतया तद्विधानैरर्थक्यात् यावज्जीवम् अग्निहोत्रमभ्यस्येत् इति लक्षणयाऽभ्यासो विधीयते इत्यर्थः ।

यत्पुनरुक्तम् "अग्निहोत्रं जुहुयात्स्वर्गकाम" इति। स पृथक्काम्यः प्रयोगः, अयमपरो जीवननिमित्त इति। तत्रैतद्भवति। काम्येऽपि प्रयोगे क्रियमाणे नैयमिकः कृत एव भवति। सोऽप्यग्निहोत्रप्रयोग एवेति।

दर्शपूर्णमासादिष्वप्येवमेव द्रष्टव्यम्। तत्रापि हि काम्यचोदना यावज्जीवचोदना च। "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" "यावज्जीवं दर्शपूर्णमासाभ्यां यजेत" इति च। दाक्षायणग्रहणं काम्यसम्बन्धाऽऽशङ्कया(१)।

आग्रयणेष्ट्यामपि शाखान्तरादयाथाकाम्यम्। स्वशाखायामपि च नवं प्रकृत्यामनन्ति "अनयोर्वा अयं द्यावापृथिव्यो रसोऽस्य रसस्य हुत्वा देवेभ्योऽथममश्नाम" इति। अशनस्य च नित्यकर्त्तव्यता। न च देवताभ्योऽहुत्वाऽसौ नित्यकर्त्तव्यता क्रियते। अतो नित्यता गम्यते। अपि च प्रायश्चित्तविधानमत्र भवति। "अनिष्ट्वाऽऽग्रयणेन नवस्याश्नीयात्० वैश्वानरं निर्वपेत्" (का० श्रौ० अ० २५। ८। १६) इति। तस्मादाग्रयणेऽपि न याथाकाम्यम्।

पशावप्येवम्। निरूढं प्रकृत्यामनन्ति "तं वै संवत्सरो नानीजानमतीयात्" इति॥ ११॥

## सोमे चैके॥ १२॥

सोमे च न याथाकाम्यम्। एवं हि श्रूयते "वसन्ते वसन्ते ज्योतिषा यजेत" इति। साभ्यासं वसन्तग्रहणं ज्योतिष्टोमस्य निमित्तम्, यथा जीवनमग्निहोत्रस्य। एके पुनरन्यथा वदन्ति। ज्योतिष्टोमेन स्वर्गकामो यजेतेति फलयुक्ता चोदना तस्मादिह याथाकाम्यम्। अत्रोच्यते। पृथक्प्रयोग एवायम्। एकः स्वर्गकामप्रयोगोऽपरो नैयमिकः कर्तृधर्म इति। एवं च कृत्वा गवामयने श्रूयते "कथमेषां सोमोऽनन्तरितो भवतीति सवनैरिति ब्रूयात्" इति। यदवश्यं कर्त्तव्यं तस्य कारणान्तरेणानन्तराय उच्यते। तस्मादत्रापि न याथाकाम्यम्। तथा च स्मरणम्—"क्लृप्तानां पशुसोमानां निष्कृत्यर्थमसम्भवे। इष्टिं वैश्वानरीं नित्यं निर्वपेदब्दपर्यये"॥ १२॥

## चातुर्मास्येषु ऋतुमुखश्रुतेः॥ १३॥ (२)

चातुर्मास्येषु च न याथाकाम्यम्। कुत एतत्। ऋतुमुखश्रु-

(१) प्रजादिफलस्य गुणनिमित्तत्वाच्च दाक्षायणस्य काम्यत्वमिति भावः।
(२) ऋतोः मुखं प्रथमदिनं प्रतिपत् तत्रेत्यर्थः 'अत एव चातुर्मास्यपर्वाणि प्रतिपद्येवानुष्ठीयन्ते। अत्रार्थे "एषा ह संवत्सरस्य प्रथमा रात्रिर्यत्फाल्गुनी पौर्णमासी योत्तरा एषोत्तमा या पूर्वा" इति श्रुतिः शरणम्। श० ब्रा०कां०६।२।२।१८। उत्तरा पौर्णमासी प्रतिपदित्यर्थः।

तेः । "ऋतुमुखे ऋतुमुखे चातुर्मास्यैर्यजेत" इति श्रूयते ॥ १३ ॥
किञ्च—

नियतसहपाठात् ॥ १४ ॥

अपि च । नित्यैः सह चातुर्मास्यानां पाठो भवति "त एतान्यज्ञक्रतूँस्तेनिरेऽग्निहोत्रं दर्शपूर्णमासौ चातुर्मास्यानि पशुबन्धꣳ सौम्यमध्वरम्" इति । सह पाठाच्च तुल्यताऽवगम्यते ॥ १४ ॥

दर्शनाच्च ॥ १५ ॥

दृश्यते चायमर्थो यथा नित्यानि चातुर्मास्यानि । गवामयनं प्रकृत्योच्यते "कथमेषां चातुर्मास्यान्यनन्तरितानि भवन्तीति पयस्ययेति ब्रूयात्" इति । दीक्षितत्वात्तेषां प्रतिषेधे सति कारणान्तरेण चातुर्मास्यानामनुग्रहं दर्शयति "पयस्ययेति ब्रूयात्" इति । यच्च नामावश्यं कर्त्तव्यं तस्य कारणान्तरेणानुग्रहो भवति ।

अपरे सर्वकर्मविषयं दर्शनं मन्यन्ते—"कथमेषामग्निहोत्रमनन्तरितं भवति कथमेषां पौर्णमासꣳ हविरनन्तरितं भवति" इत्येवमादि सर्वत्र कारणान्तरेणानुग्रहो दृश्यते ॥ १५ ॥

(१)नोत्सर्गयोगात् ॥ १६ ॥

न च नित्यानि चातुर्मास्यानि । उत्सर्गेण हि तानि युज्यन्ते— "इति नूत्सृजमानस्य" इति । यन्नाम नित्यं कथं तस्योत्सर्ग इति ॥१६॥

(२)स्यात् त्रिꣳशद्वत् ॥ १७ ॥

भवेद्वा नित्यत्वेऽप्युत्सर्गो यथा दर्शपौर्णमासयोः "तस्मात्तु त्रिꣳशतमेव वर्षाणि यजेत" इति । अपि च । तन्नित्यमुच्यते यदवश्यं कर्त्तव्यम् ॥ १७ ॥

द्विप्रकारं कर्म, नित्यं काम्यं च । तत्र नित्यं प्रकृत्य चिन्त्यते— किं सगुणमेव कर्त्तव्यम् उत निर्गुणमपीति ।

गुणाम्नानात्सगुणमेवेत्येवं प्राप्ते आह—

( नित्यं कर्म यथाशक्ति सगुणं कर्तव्यम् )

विगुणे फलनिर्वृत्तिरङ्गप्रधानभेदात् ॥ १८ ॥

---

(१) एवं सिद्धान्तितेऽन्तरा पूर्वपक्षोऽयमिति देवयाज्ञिकः ।
(२) उक्तमेव सिद्धान्तं द्रढयति स्यादिति ।

विगुणेऽपि नित्ये कर्मणि फलाभिनिर्वृत्तिर्भवति । कुत एतत् । यतोऽङ्गानि प्रधानानि च भिन्नानि । इह "यावज्जीवं दर्शपूर्णमासाभ्यां यजेत" इति दर्शपूर्णमासयोरेव कर्त्तव्यतोच्यते नाङ्गानाम् । अतश्च प्रधाने कृते यत्फलं तत्सिद्धं भवत्येव । अतश्च धात्वर्थमात्रमेव कर्त्तव्यम् । न तेनान्यस्य कर्त्तव्यता । यत्र च साधनत्वेन यागस्य श्रवणं तत्र साध्यापेक्षा भवति इतिकर्त्तव्यतापेक्षा च । न चात्र साधनत्वम् । तस्माद्विगुणादपि फलं भवति । अङ्गाम्नानं तर्हि किमर्थम् । काम्यप्रयोगविषयमित्यदोषः ॥ १८ ॥

प्रायश्चित्तविधानाच्च ॥ १९ ॥

विगुणेऽपि नित्ये प्रायश्चित्तं विधीयते "भिन्ने जुहोति, स्कन्ने जुहोति" इत्येवमादि । यदि हि विगुणं फलं न साधयेत, प्रायश्चित्तविधानवैयर्थ्यप्रसङ्गः स्यात् ॥ १९ ॥

तथा च दृष्टम् ॥ २० ॥

विगुणमपि नित्यं कर्म यथाकथञ्चित्परिसमाप्यमानम्(१) । "यत्पयो न स्यात् केन जुहुया इति व्रीहियवाभ्यामिति यद् व्रीहियवौ न स्यातां केन जुहुया इति या अन्या ओषधय" इत्येवमाद्यभिधाय पुनरुपसंहरति "न वा इह तर्हि किंचनासीदथैतदहूयतैव सत्यꣳ श्रद्धायाम्" (श. ब्रा. ११।३।१।३) इति यथाकथञ्चित्परिसमाप्तिं दर्शयति । न चैते (अहूयतेत्यादयः) विधयः । विधिविभक्तेरभावात् । तस्माद्विगुणमपि नित्यं फलं साधयत्येव ॥ २० ॥

अपरेऽन्यथा व्याचक्षते । गुणाज्ञानसामर्थ्यान्नित्यं सगुणमेव कर्त्तव्यम् । सूत्रव्याख्या च-विगुणेऽपि नित्ये फलाभिनिर्वृत्तिर्भवत्येव । यदि नाम दैवान्मानुषाद्वा प्रतिबलात् (प्रतिबन्धात्) सर्वाङ्गोपसंहारो न शक्यते कर्तुं, कतिपयाङ्गोपसंहारेणापि कर्त्तव्यमेव । यथा शक्नुयात् तथा कुर्यात् इत्युपपदार्थोऽत्र परिकल्प्यते । सर्वदा कर्त्तव्यं सगुणं चेत्यशक्यमेव । अवश्यम्भावि हि दैवान्मानुषाद्वा प्रतिबलाद्वैगुण्यमिति । एवं च कृत्वा विकृतौ नित्ये कर्मणि प्राकृताङ्गानुवृत्तिर्दृश्यते । यथा वरुणप्रघासेषु "अथाध्वर्युरेवाहाग्निमग्नीत्सम्मृड्ढीत्यसम्मृष्टमेव भवति सम्प्रेषितमथ प्रतिप्रस्थाता प्रतिपरैति स पत्नीमुदानेष्यन्"

(१) नित्यं कर्म यथाकथञ्चित् श्रुताङ्गपरित्यागेनापि यथाशक्त्यङ्गोपेतमनुष्ठातव्यत्वेन श्रुतौ दृष्टम् । तथा हि "यत् पयो न स्यात्" इत्यादि ।

इति पत्न्यानयनविधिपरे वाक्ये अग्निसम्मार्गमेवं दर्शयति । तथा महापितृयज्ञे "स यज्ञोपवीती भूत्वाऽऽज्यानि गृह्णाति" इत्येवंविधिपरे वाक्ये लेखाकरणहरणो[१]त्तरपरिग्रहादीन्पदार्थाननुवदति । यदि हि नित्यस्याङ्गसम्बन्धो न स्यात्, लेखाकरणाद्यनुवादो न स्यात् । भवति च, तस्मान्नित्यानामप्यङ्गसम्बन्धः । पशौ च दर्शयति । "स उत्तरमाघारमाघार्यासꣳस्पर्शयन् स्रुवौ पर्येत्य जुह्वा पशुꣳ समनक्ति" इति पशुसमञ्जनविधिपरे वाक्ये उत्तराघारं दर्शयति । यच्चोच्यते—'न यागेनान्यत् साध्यते'इति । आम्नानसामर्थ्याद् उपात्त दुरितक्षयो वा उत्पित्सुदुरितप्रतिबन्धो वा भवत्येव । तस्मान्नित्येऽप्यङ्गसम्बन्धः ॥

अथ काम्ये कर्मणि कथम्? । काम्ये विगुणे ऽपि फलाभिनिर्वृत्तिर्भवत्येव । तत्रापि चाङ्गानि प्रधानानि भिन्नानि । प्रायश्चित्तविधानं भवति अश्वमेधे अश्वं प्रकृत्य "अथ यदि स्रामो(नासारोगः)विन्देदथ यद्यक्ष्यामयो विन्देत्" इत्येवमादि(२) । यदि विगुणं काम्यं फलं न साधयेत्प्रायश्चित्तविधानमनर्थकं स्यात् । (सू०)तथा च दृष्टम् । दृश्यते च विगुणेऽपि काम्ये फलम् । वृष्टिकामेष्टिः कारीरी द्व्यहकालतया समाम्नाता शाखान्तरे । तां प्रकृत्य श्रूयते "यदि वर्षेत्तावत्येव जुहुयात्" इति । यद्यपरिसमाप्तायामेवेष्ट्यां वृष्टिर्भवति तस्मिन्नेव काल परिसमापयेत् । न द्व्यहकालतामाद्रियेत । यदि हि विगुणमपि काम्यं फलं न साधयेत्, कथं वृष्टिर्दृश्यते । तस्माद्विगुणेऽपि काम्येऽस्ति फलमित्येवं प्राप्ते आह—

( काम्यं कर्म सगुणमेवानुष्ठेयम् )

## न श्रुतिलक्षणत्वात् ॥ २१ ॥

नैतदेवं विगुणेऽपि काम्ये फलमिति । सगुणं हि श्रुत्या लक्षितम् । "सौर्यं चरुं निर्वपेद् ब्रह्मवर्चसकाम" इति । ब्रह्मवर्चसं साध्यं यागश्च साधनम् । सेतिकर्त्तव्यताकं च साधनं साध्ये व्याप्रियते । तेनेतिकर्त्तव्यतासम्बन्धः । तस्मात्सगुणमेव काम्यं फलं साधयतीति ।

---

( १ ) हरणमुल्मुकाहरणम् ।

( २ तथा पञ्चशारदीये उत्सृष्टान् पशून् प्रकृत्य ताण्ड्ये प्रायश्चित्तविधानं श्रूयते-'अपोनप्त्रियोऽप्सु मृत'इत्यादिकामिति देवयाज्ञिकः।

नित्ये पुनः सर्वदा कर्त्तव्यत्वादवश्यम्भाविनि वैगुण्ये उपपदार्थः परिकल्प्यते—'यथा शक्नुयात्' इति। काम्येषु पुनरवश्यं कर्त्तव्यत्वाभावान्नैतत्परिकल्प्यते ॥ २१ ॥

प्रायश्चित्तविधानं तर्हि किमर्थम्—

प्रायश्चित्तं तत्कालम्(१) ॥ २२ ॥

काम्यमपि कर्म प्रक्रान्तं परिसमापनीयमेव। फलाभावेऽपि प्रायश्चित्तानुष्ठानमर्थवत्। तत्रापि अन्यत्फलं दोषपरिहारः। तेनार्थवत्प्रायश्चित्तम् ॥ २२ ॥

दृष्टे तत्परिमाणम् ॥ २३ ॥

अथ यद्दृष्टिदर्शनमुक्तं, न तदिष्टिफलम्। ऋतुस्वभावजनिताया वृष्टेस्तद्दर्शनम्, तत्र तावत्प्रमाणता (तावत्कालप्रमाणता) कर्मण उच्यते॥२३॥

इति कर्काचार्यकृतभाष्ये प्रथमाध्याये द्वितीया कण्डिका ॥ २ ॥

वाक्यप्रकरणाभ्यां शेषविनियोग उक्तः, इदानीं मन्त्राणां लिङ्गेन विनियोग उच्यते। तत्राध्येतृप्रसिद्धा एव मन्त्रास्ताननुवदति—

ऋचो यजूꣳषि सामानि निगदा मन्त्राः ॥ १ ॥

नियताक्षरपादावसाना ऋगित्युच्यते। अनियताक्षरपादावसानं यजुः। प्रगीतं मन्त्रवाक्यं सामेत्युच्यते। तत्र विशेषणं गीतिः। विशेष्याण्यक्षराणि। न चागृहीतविशेषणा विशेष्ये बुद्धिरुत्पद्यते। अतः पूर्वप्रतीतत्वाद्गीतिरेव सामशब्देनाभिलक्ष्यते। ननु चैवं रथन्तरादयः शब्दा गीतौ वर्त्तन्ते। तत्र "रथन्तरेण स्तुवीत, बृहता स्तुवीत" इति च गुणगुण्यभिधानं स्तुतिः सा साम्ना नोपपद्यते। तत्रोच्यते। स्वयमेव गीतेः स्तुत्यनभिधायकत्वात् ऋगक्षराभिव्यक्तिद्वारेण स्तुत्यभिनिर्वृत्त्यर्थतेति। एवं च कृत्वा "ऋच्यध्यूढं साम गीयते प्रजापतिहृदयमनृचं गीयते" इत्येवमादीन्युपपन्नार्थानि भवन्ति। एवं च ऋचो मन्त्रत्वे उक्ते साम्नोऽपि च वक्तव्यम्। निगदाः

---

(१) तस्य काम्यस्य कर्मणो विनाशकाले यत् प्रायश्चित्तं तत्तस्य नष्टस्य कर्मणः प्रत्यवायपरिहारजनेन सार्थकमिति भावः।

प्रैषा इत्यनर्थान्तरम्। एतच्चतुष्टयं (१)मन्त्रशब्देनाभिधीयते ॥ १ ॥

( यजुषां लक्षणम् )

## तेषां वाक्यं निराकाङ्क्षम् ॥ २ ॥

तेषामिति सर्वनामशब्देन यजुषां परामर्शः। ऋचः सामानि च-वाक्यव्यवस्थारूपाण्येव प्रायशः पठ्यन्ते। तेन यजुःषु कियन्मात्रं वाक्यमित्यपरिज्ञाते आह। तेषां वाक्यं निराकाङ्क्षम्। यावति पदसमूहे उच्चरिते पदान्तराकाङ्क्षा न भवति तावदेकं वाक्यं नैरुत्सुक्यात्। यथा "देवस्यत्वा" इत्येवमादि "अग्नये जुष्टं गृह्णामि" इत्येवमन्तम् ॥ २॥

यत्र पुनः श्रूयमाणैः पदैर्नैरुत्सुक्यम्, यथा "कर्मणे वां वेषाय वाम्" इति, तत्राध्याहृत्यापि क्रियापदं नैरुत्सुक्यं कर्तव्यमित्याह—

( अनुषङ्गोऽध्याहारो वा मन्त्रेषु कर्तव्यः )

## मिथः सम्बद्धम् (२) ॥ ३ ॥

यत्तैः पदैः सह सम्बध्यते तदध्याहर्त्तव्यम्। न हि क्रियापदशून्यं पदजातमर्थाभिधायकं भवति। अथवाऽनुषङ्गार्थमिदमुच्यते।

यथा दर्शपौर्णमासयोः, "अस्मादन्नादस्यै प्रतिष्ठाया" इति अधस्तनमन्त्रवाक्यात् "ततो निर्भक्त" इत्यत्रानुषज्यते (३) ॥ ३ ॥

( सामर्थ्यानुसारेण मन्त्रविनियोगः )

## तेषामारम्भेऽर्थतो व्यवस्था तद्वचनत्वात् ॥ ४ ॥

तेषां मन्त्राणां प्रकरणसमधीतानामारम्भेऽर्थतो व्यवस्था भव-

---

(१) ननु निगदानां यजुष्ट्वमेव, तत्कथं चातुर्विध्यं मन्त्राणामिति चेद्, न। उपांशु यजुषा, उच्चैर्निगदेनेति भेदबोधनाय पृथगुपादानात्। वस्तुतस्तु तेषां यजुष्ट्वमेव। ऋगादावप्युच्चैस्त्वादिधर्माणां व्यत्यासदर्शनात्। एवञ्च त्रिविधा एव मन्त्राः। अतएव मन्त्राधिकरणे "अहे बुध्निय मन्त्रं मे गोपाय यमृषयस्त्रयीविदा विदुः ऋचः सामानि यजूंषि" इत्येवमुक्तम्। सूत्रकारोक्तिस्तु बाह्यधर्मद्वयविषयेति भावः।

(२) यावदेव मिथः सम्बद्धं परस्परान्वयि तावदेकं यजुः, अतोऽन्यत् यजुरन्तरमित्यर्थः।

(३) मन्त्रघटकपदस्य आकाङ्क्षापूरणाय संबन्धः अनुषङ्गः। आकाङ्क्षापूरणाय लौकिकपदस्य संबन्धः अध्याहार इति तयोर्भेदः।

ति। यो यत्पदार्थाभिधानसमर्थो मन्त्रः स तत्र विनियुज्यते। कुत एतत्। तद्वचनत्वात्। तमेवार्थं वक्तुं शक्नोति नार्थान्तरम्। यथा "उरुप्रथा उरु प्रथस्व" इति प्रथनम्। ननु च प्रतिपदार्थं मन्त्रविनियोग उक्तः (आचार्येण)। सत्यमेतत्। अनुक्तसङ्ग्रहार्थत्वाददोषः। यथा "प्रचतुस्यन् सर्वान्नयेति प्रतिमन्त्रम्" (का.श्रौ.४।१२।१३)॥ ४॥

( मन्त्रान्ते कर्म कर्तव्यम )

मन्त्रान्तैः कर्मादिः सान्निपात्योऽभिधानात् (१) ॥ ५ ॥

कर्मणि प्रयुज्यमानानां मन्त्राणां मन्त्रान्तस्य कर्मादेश्च संनिपातः संलग्नता कर्त्तव्या। कुत एतत्। अभिधानात्। अभिहितो मन्त्रः कर्माभिधातुं शक्नोति। ततश्च तदनुष्ठीयते॥ ५॥

अनियमं वात्स्यः ॥ ६ ॥

वात्स्य आचार्यो ऽनियमं मेने। आदौ वा मन्त्रमुक्त्वा कर्मानुष्ठानं क्रियते, कृते वा कर्मणि मन्त्रवचनमिति। एवमपि हि कर्माभिधायकत्वं मन्त्रस्य भवति॥ ६॥

आदिं त्वाचार्याः ॥ ७ ॥

तु-शब्दः पक्षव्यावृत्तौ। नानियमः। मन्त्रान्ते एव कर्मादिमाचार्या इच्छन्ति। यत्कारणं मन्त्रेण स्मृतं कर्म कर्त्तव्यम्(२) मन्त्राज्ञानसामर्थ्यादेवावगम्यते। एवं (३)दृष्टार्थता भवति। इतरथा अदृष्टं परिकल्प्येत। तच्च नेष्यते दृष्टे सति॥ ७॥

( सूत्रे आदिमात्रोपादाने सर्वो मन्त्रः प्रयोक्तव्यः )

त आद्युक्ताः ॥ ८ ॥

त एते मन्त्रा आदिमात्रे उक्ते सति समस्ताः प्रयोक्तव्याः(४)॥ ८॥

---

(१)सकलस्य मन्त्रस्य कर्मणि विनियोगात् सकलेन सम्पादितं स्मरणं कर्माङ्गं, तच्च स्मरणं यथा नष्टं न भवेत् तथा कर्तव्यम्। अतो मन्त्रान्तस्य तदादेश्च सम्बन्धं कृत्वा कर्मानुष्ठेयमिति तात्पर्यम्।

(२)तदुक्तम् "अनुष्ठाने पदार्थानामवश्यम्भाविनी स्मृतिः। अनन्यसाधनानन्यकार्यैर्मन्त्रैः प्रसाध्यते" इति।

(३)मन्त्रैरेव स्मृतं कर्म कृत्वाऽभ्युदयकारि भवतीत्येवंरूपादृष्टार्थताऽत्र।

(४)न तु सूत्रे यावदवयवोपादानं तावदेव पठनीयं, शास्त्रबाधात्।

(उत्तरमन्त्रस्यादिना पूर्वमन्त्रसमाप्तिर्बोध्या)

परादिना पूर्वान्तः ॥ ९ ॥

परस्य मन्त्रस्यादिना पूर्वस्यान्तः प्रतिपत्तव्यः । ननु च वाक्यलक्षणेनैव तत्सिद्धं किमर्थं पुनरुच्यते ? । वाक्यसमुच्चयविधानार्थंतयेत्यदोषः । यथा "विश्वेषां देवानां भागधेयी स्थ" इत्यत्र "अमूर्या उपसूर्ये" इत्येवमादि(१)प्रयुज्यते ॥ ९ ॥

( ऋक्साममन्त्राणामुच्चैः पाठः, याजुर्वेदिकानामुपांशु )

उपांशु प्रयोगः श्रुतेः(२) ॥ १० ॥

शाखान्तरे "उच्चैर्ऋचा क्रियते, उच्चैः साम्नोपांशु यजुषा" इति यजुषामेवोपांशुत्वम् । वेदोपक्रमाणि चैतानि वचनानि वेदोपसंहाराणि च । तेन ऋगादीनां वेदोपलक्षणार्थता । ऋग्वेदविहितं सामवेदविहितं चोच्चैर्वक्तव्यम् , उपांशु याजुर्वेदिकामिति(३) ॥ १० ॥

( प्रैषाणामुच्चैः पाठः )

न सम्प्रैषाः ॥ ११ ॥

याजुर्वेदिकत्वेऽपि सति सम्प्रैषा नोपांशु भवन्ति । संबोधनार्थत्वात्तेषाम्(४) ॥ ११ ॥

इदं विचार्यते । बर्हिःशब्दः किं संस्कारनिमित्त उत जातिनिमित्त इति । संस्कारनिमित्त इति ब्रूमः । संस्कृतेषु तृणेषु प्रयोक्तारो बर्हिः-शब्दं प्रयुञ्जते । नन्वसंस्कृतेष्वपि प्रयोगो दृश्यते "बर्हिरादाय गावो गता" इति प्रदेशान्तरे वक्तारो वदन्ति । तत्साहश्यात्स प्रयोगः इत्येवं प्राप्ते आह—

---

( १ ) आदिपदेन "अष्टगृहीतं जुहोति सन्ततमनुगृह्णन् युञ्जान इति" इत्यस्य ग्रहणम् । अत एव तत्राष्टानामेकमन्त्रत्वम् । एवमेव "देवस्य त्वेत्यभ्रिमादाय" इत्यत्र त्रयाणां ग्रहणं भवति ।

( २ ) 'उच्चैर्ऋचा क्रियते उच्चैः साम्नोपांशु यजुषा' इति शाखान्तरे श्रवणात् । 'स उपांशु यजुर्भिश्चरति' इति शतपथश्रुतौ ।

( ३ ) अस्य सूत्रस्येष्टिपशुसोमव्यतिरिक्तं कर्माग्निहोत्रादिकं विषयः । तेषु तत्र तत्र विशेषस्य वक्ष्यमाणत्वात् ।

( ४ ) तच्च नोपांशूच्चारितैरेभिः सम्भवतीति भावः ।

( बर्हिःशब्दो जातिनिमित्तो न संस्कारनिमित्तः )

कौशं(१)बर्हिः ॥ १२ ॥

कुशा एव बर्हिःशब्देनोच्यन्ते । न संस्काराः । कुत एतत् । असंस्कृतेष्वपि प्रयोगदर्शनात् "उपक्षीणानि तृणानि बर्हिर्गावश्चरन्ति" इति । सादृश्यात् स प्रयोग इति चेत् न । इतरेतराश्रयदोषप्रसङ्गात् । बर्हिःशब्देनोद्दिश्य संस्कारविधानम्, संस्कारनिमित्तश्च बर्हिःशब्द इति । जातिनिमित्तत्वे पुनरेष दोषो न भवति । तस्माज्जातिनिमित्तो बर्हिःशब्द इति । चिन्तायाः प्रयोजनम्—"बर्हिषा यूपावटमवस्तृणाति" इत्यत्र संस्कारा न कर्त्तव्याः ॥ १२ ॥

( परिमाणानुक्तौ सामर्थ्यानुसारेण तत्कल्प्यम् )

अर्थात्परिमाणम्(२) ॥ १३ ॥

यत्र परिमाणविशेषो न श्रूयते तत्र सामर्थ्यात्परिमाणं भवति । यथा वसोर्द्धारायाम् अर्थात्परिमाणबोधः । अर्थबाधो माभूदिति । न ह्यङ्गुष्ठपर्ववृत्तपुष्करस्रुवेण वसोर्द्धाराहोमः सम्भवति ॥ १३ ॥

( बन्धनानि विषमधातूनि )

(३)अयुग्धातूनि यूनानि ॥ १४ ॥

यूनानां बन्धनार्थानामयुग्मा धातवो भवन्ति । धातवस्तृणमुष्टिप्रक्षेपाः ॥ १४ ॥

( बर्हिर्बन्धनप्रकारः )

प्रागग्रे यून उदगग्रं बर्हिराचिनोति (४) ॥ १५ ॥

---

( १ ) कुशा दर्भाः तस्येदं कौशम्, शैषिकाधिकारस्थेन "तस्येदम्" इत्यणा साधुत्वम् ।

( २ ) यावता परिमाणेन प्रयोजनं भवति तावत्परिमाणं स्रुगादि भवतीत्यर्थः ।

( ३ ) अयुजो विषमा एकत्रिपञ्चसप्तनवादिसंख्या धातवस्तृणमुष्टिप्रक्षेपाः येषां तानीत्यर्थः । तदुक्तमापस्तम्बेन 'त्रिधातु पञ्चधातु वा शुल्बं करोति' इति । तित्तिरिसूत्रेऽपि 'त्रिरन्वाहितं शुल्बं कृत्वा' इत्युक्तम् ।

( ४ ) प्रागग्रे यूने प्रागग्रे सन्नहने बन्धनार्थायां रज्जौ उदगग्रं बर्हिराचिनोति बन्धनार्थं स्थापयतीत्यर्थः ।

( इध्मबन्धनप्रकारः )

उदगग्रे प्रागग्रामिध्मम् ॥ १६ ॥

प्रत्यग्ग्रन्थीनवगूहति(१) ॥ १७ ॥

प्रत्यक्शब्दः पश्चाद्भागवचनः न दिग्वाचको बर्हिष्यसम्भवात् ॥१७॥

( इध्मस्याष्टादशत्वादिपालाशत्वादिकम् )

अष्टादशे(२)ध्मं परिधिवृक्षाणाम् ॥ १८ ॥

अष्टादशकाष्ठमिध्मं कुर्यात् परिधिवृक्षसम्बन्धिनम् । परिधिवृक्षाः पलाशादयः ॥ १८ ॥ (अग्रे अ० २ क० ८ सू० १ उक्ताः) ।

एकविंशतिं वा ॥ १९ ॥

एकविंशतिकाष्ठं वेध्मं कुर्यात् । शाखान्तरात्(३) । वा-शब्दो विकल्पार्थः ॥ १९ ॥

ततः परिधीनेके (४) ॥ २० ॥

"तद्धैक इध्मस्यैवैतान्परिधीन्परिदधति" इति वचनात् ॥ २० ॥

अपरिमितं (५)प्रणयनीयं त्रियूनम् ॥ २१ ॥

---

(१) इध्मबर्हिर्बन्धनार्थानां यूनानां ग्रन्थीन् प्रत्यगवगूहति । यूनेन गाढं बध्वा यूनस्याग्रमूले सङ्कलय्य प्रदक्षिणमावेष्ट्य इध्माबर्हिषोरग्रभागे प्रोतयित्वा तयोर्मूलभागे अवगूहति प्रेरयतीत्यर्थः ।

(२) अत्राष्टादशसंख्या उपलक्षणं, तेन सामिधेनीविवृद्धौ काष्ठवृद्धिर्भवति । ह्रासस्तु न, प्रकृतिवदित्युक्तेः । अत एवापस्तम्बः 'सामिधेनीविवृद्धौ काष्ठानि विवर्धन्ते, प्रकृतितो ह्रसमानासु प्रकृतिवत्' इति ।

(३) तथा चापस्तम्बः "खादिरं पालाशं वैकविंशतिदारुमिध्मं करोति" इति ।

(४) एके आचार्याः तत एकविंशतिसंख्याककाष्ठकादिध्मात्त्रीणि काष्ठान्यरत्निमात्राण्येवोपादाय परिधीन् परिदधति । 'तद्धैक इध्मस्यैवैतान् परिधीन् परिदधति' इति श्रुतेः ।

(५) अपरिमितत्वं च प्रागुक्तेध्मकाष्ठसंख्यापेक्षयाऽतिशयेनाधिकसंख्यकाष्ठकत्वम् । अतश्चतुर्विंशतिसामिधेनीको य इष्टकापशुस्तत्र सप्तविंशतिकाष्ठानि भवन्ति, भवन्ति च प्रणयनीयेऽष्टाविंशतिसंख्यानि ।

अपरिमितं प्रणयनीयमिध्मं बहुतरं कुर्यात् । शाखान्तरात् । त्रिवृतं च कुर्यात् । अत्र केचिद्दृग्वृद्धौ काष्ठविवृद्धिमिच्छन्ति । तदयुक्तम् । न हीध्मकाष्ठप्रक्षेपस्य सामिधेनीनां च शेषशेषिभावः । काष्ठानि ह्यग्नीन्धनार्थानि । सामिधेन्यश्चेध्यमानाग्न्यनुवादिन्यः । इध्यमानानुवादनाच्चादृष्टम् । न ह्यासां काष्ठप्रक्षेपं प्रति करणत्वेन विधानम् । तस्मादृग्वृद्ध्या न काष्ठविवृद्धिरिति । अभ्युपगम्यापि ब्रूमः--यद्यपि शेषशेषिभावः स्यात् तथापि शेषवृद्धौ शेषिणो वृद्धिरन्याय्यैव ॥२१॥

( वेदबन्धनकालः । )

## निरुप्याज्यं वेदो (१)ऽसीति यजमानो वेदं करोति ॥ २२ ॥

सूत्रे क्त्वाप्रत्ययादेशो ल्यप् कालार्थः । न ह्याज्यनिर्वापस्यात्र विधानम् । विहितो ह्यसावन्यत्र वेदबन्धस्य कालज्ञापनायानूद्यते । यथा निरुप्याज्यं प्रातर्दोहनमन्यस्मिन्निति ॥ २२ ॥

( वेदनिर्माणप्रकारः । )

## कुशमुष्टिꣳ सव्यावृत्तं वत्सजानुं, त्रिवृतं, मूतकार्यं वा ॥ २३ ॥

सव्यावृत्तं प्रदक्षिणावृत्तं वत्सजानुसदृशं वेदं करोति । अथवा त्रिवृतं वेण्याकारम् । मूतकार्यं वा । वा-शब्दो विकल्पार्थः ॥ २३ ॥

---

(१) अस्य मन्त्रस्य बहुयजमानके ऊहो भवति । तेन 'आवाभ्यां वेदो भूयाः, अस्मभ्यं वेदो भूयाः' इति भवति प्रयोगः । 'पित्र्यायां देवपितृभ्य' इति च ।

(२) देवयाज्ञिकैरेतत् सूत्रद्वयमेकसूत्रत्वेन व्याख्यातम् । तथा च सूत्रस्वरूपमेवं सम्पद्यते—'कुशमुष्टिꣳ सव्यावृत्तं वत्सजानुं त्रिवृतं मूतकार्यं वा पशुब्रह्मवर्चसान्नाद्यकामा यथासंख्यम्' । पशुब्रह्मवर्चसान्नाद्यकामा यजमाना यथासंख्यं यथोपदेशक्रमेण एवमाकारं वेदं कुर्युः । तत्र पशुकामः कुशमुष्टिं सव्यावृत्तं प्रदक्षिणावृत्तं वत्सजानुं वेदं करोति । ब्रह्मवर्चसकामः कुशमुष्टिं त्रिवृतं करोति । अन्नाद्यकामो मूतकार्यमिति यथासंख्यशब्दार्थः ।

पशुब्रह्मवर्चसान्नाद्यकामा यथासंख्यम् ॥ २४ ॥

यथासंख्येन वेदाकारान् कुर्युः ॥ २४ ॥

( अवध्यर्थकस्याङोऽभिविध्यर्थकत्वम । )

आ(१)ऽमुष्मादिति कर्मसु तच्च ॥ २५ ॥

यत्राङ्प्रयोगः कर्मविषयः, यथा 'आ प्रयाजेभ्यः, आ इडायाः' इति च, तत्र तच्च कर्म प्रतिपत्तव्यं यदाङाऽभिसम्बध्यते । अभिविधौ कर्मविषय आङः प्रयोग इत्यर्थः ॥ २५ ॥

( अन्तत्वनिर्देशोऽपि अभिविध्यर्थः । )

अन्तवचने च ॥ २६ ॥

तच्च कर्म प्रतिपत्तव्यम् । यथा शंय्वन्तं भवतीति ॥ २६ ॥

( प्रतिकर्माहवनीयोद्धरणम । )

प्रतिकर्मोद्धरणमप्रसङ्गे ॥ २७ ॥

कर्म कर्म प्रत्युद्धरणमाहवनीयस्य कर्त्तव्यम् । न चेदन्यार्थमुद्धृतः सन्ननपवृत्तः ॥ २७ ॥

अपवृत्तकर्मा लौकिकोऽर्थसंयोगात् ॥ २८ ॥

अपवृत्तं यस्मिन्कर्म स लौकिकः प्रतिपत्तव्यः ।कुत एतत् ? । अर्थसंयोगात् । यदर्थमुद्धृतस्तेनार्थेन संयोगात् । लौकिकवद् द्रष्टव्यः । आहवनीयसंस्कारस्वरूपं कर्माभिनिर्वृत्त्युत्तरकालं गार्हपत्ये समवैति । कर्माभिनिर्वृत्तिमात्रार्थैव तस्य पृथक्क्रियेति ॥ २८ ॥

( अनारभ्याधीतानां प्रकृतिमामित्वम् । )

अप्रकरणोत्पत्तिरनारभ्यवाद आश्रयित्वात्सर्वगुणः ॥ २९ ॥

यो न कस्याचित्प्रकरणे उत्पन्नः, न चारभ्य किञ्चिच्छ्रूयते, वाक्यप्रकरणाभ्यामङ्गभावं नोपयातीत्यर्थः, स सर्वगुणो भवति—प्रकृत्यर्थो विकृत्यर्थश्च । यथा 'यस्य खादिरः स्रुवो भवतीति' अनारभ्यविहिता स्रुवखादिरता प्रकृत्यर्था विकृत्यर्था च । कुत एतत् ? ।

---

(१) आ अमुष्मादिति च्छेदः, यदाङा संयुक्तं तदपि कर्तव्यमध्ये ज्ञेयम, न त्ववधित्वेनेत्यर्थः ।

आश्रयित्वात् । स्रुवाश्रया हि खादिरता । स्रुवश्च प्रकृतौ विकृतौ च विद्यते ॥ २९ ॥

तस्मादुभयार्थतेत्येवं प्राप्त आह—

## प्रकरणे चाविशेषात् ॥ ३० ॥

च-शब्दो वा-शब्दार्थे । वा-शब्दश्चावधारणे । प्रकरणे एव निवेशः । प्रकरणशब्देन प्रक्रियन्ते यस्मिन् धर्मा इति प्रकृतिरुच्यते । तत्रानारभ्यविधेर्निवेशो न विकृताविति । कुत एतत् ? । अविशेषात् । अविशेषेण हि प्रकृतितो विकृतौ चोदको धर्मान्प्रापयति, तत्रानारभ्यविधेरपि प्रापितत्वात् । यद्यनारभ्यविधिः पुनः प्रापयेद् द्विरुक्तता-दोषः स्यात् । न हि प्राप्तस्य सतः प्राप्तिसम्भवः । स्यादेतदेवम्—अनारभ्यविधिनैव पूर्वं प्रापिते खादिरत्वे पश्चाच्चोदकस्तद्वर्जमङ्गानि प्रापयिष्यत्येवं द्विरुक्तादोषो न भवतीति । नैतदेवम् । वैकृतं हि प्रधानं चोदनासारूप्यात्प्रकृतिमपेक्षते,नानारभ्यविधिम् । चोदनासा-रूप्याभावात् ॥ ३० ॥

## दर्शनाच्च ॥ ३१ ॥

एवं च कृत्वा विकृतौ प्रयाजादीनां दर्शनमुपपद्यते । "तस्यै प्रयाजेषु तायमानेषु(१) ब्राह्मणो वीणागाथी दक्षिणत उत्तरमन्द्रामुदाघ्नंस्तिस्रः स्वयम्भृता गाथा गायति" इति गाथागानविधिपरं वाक्यं प्रयाजान्दर्शयति । ते च प्रकृतिसव्यपेक्षत्वे भवन्ति विकृतौ, नानारभ्य-विधिसव्यपेक्षायाम् । तस्मादनारभ्यवादस्य प्रकृतिगामित्वम् । रूपोदाहरणं खादिरत्वम् । अन्येऽप्येवमादयः । कार्यं तु विचारस्य—ताण्ड्यके काम्याः प्रतिपत्कल्पा अनारभ्याधीतास्ते यदि प्रकृतिविकृत्यर्थास्ततो विकृतावपि प्रयोगः, अनारभ्यवादानां तु प्रकृत्यर्थत्वे विकृतावप्रयोगः । न हि विकृतिरनारभ्यवादमपेक्षते, प्रकृतिसव्यपेक्षत्वात ॥ ३१ ॥

( स्रुवादिभिन्नानां होमसंबन्धिपात्राणां वैकङ्कतत्वम् । )

## वैकङ्कतानि पात्राणि (२) ॥ ३२ ॥

(१) तनोतेः कर्मणि लटि "तनोतेर्यकि" इत्याकारः ।

(२) "ततो विकङ्कतः समभवत्तस्मादेष यज्ञियो यज्ञपात्रीयो वृक्षः" इति श्रुतेः ।

भवन्तीति सूत्रशेषः ॥ ३२ ॥

( स्रुवादीनां खादिरत्वादिकम् । )

खादिरः स्रुवः ॥ ३३ ॥

स्यात् ॥ ३३ ॥

स्फ्यश्च (१) ॥ ३४ ॥

चशब्दात्खादिर एव ॥ ३४ ॥

पालाशी (२) जुहूः ॥ ३५ ॥

भवति ॥ ३५ ॥

आश्वत्थ्युपभृत् ॥ ३६ ॥

भवतीत्येव ॥ ३६ ॥

( अहोमसंबन्धिनां पात्राणां वारणकाष्ठमयत्वम् । )

वारणान्य(३)होमसंयुक्तानि ॥ ३७ ॥

---

(१) "खादिरः स्फ्य" इति श्रवणात् ।

(२) हूयते अनया इति जुहूः, सा पालाशी कर्त्तव्या । "यस्य-पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोति" इति श्रुतेः ।

(३) होमेन संयुक्तानि यानि न भवन्ति पात्राणि तानि वारणानि भवन्ति । यथा उलूखल-मुसल-कूर्च्चे, डापात्री-पिष्टपात्री-पुरोडाश-पात्री-शम्या-शृतावदाना, भ्न्यु, पवेषा, न्तर्धानकट-प्राशित्रहरण-षडवत्त-ब्रह्मयजमानासन-होतृषदनानि । तत्रोलूखलमुसले स्वायत्त-प्रमाणे, कूर्चो बाहुमात्रः पीठाकारः, इडापात्री अरत्निमात्री मध्यसङ्गृहीता, पिष्टपात्री अतिविपुला, पुरोडाशपात्री प्रादेशमात्री समचतुरस्रा षडङ्गुलपरिमण्डलखातवती, शम्या प्रादेशमात्री, प्रादेशमात्रं तीक्ष्णाङ्गुष्ठपर्वमुखं शृतावदानम, अभ्रिररत्निमात्री तीक्ष्णमुखा, उपवेषोऽरत्निमात्रः प्रादेशमात्रो वा हस्ताकृतिः, अन्तर्धानकटस्त्व-र्धचन्द्राकारो द्वादशाङ्गुलः, षडवत्तं च उभयत्रखातवत, आसनानि चारत्निमात्राणि वा प्रादेशमात्राणि वा प्रादेशपृथूनि, एतानि प्रसङ्गाद्दे

वारणानि । यान्यहोमसंयुक्तानि तानि वारणानि भवन्ति । वैकङ्कतानि पारिशेष्याद्धोमसंयुक्तानि ॥ ३७ ॥

( स्रुगादीनां लक्षणानि । )

बाहुमात्र्यस्स्रुचः पाणिमात्रपुष्करास्त्वग्बिला हंस-समुखप्रसेका मूलदण्डा(१) भवन्ति ॥ ३८ ॥

बाहुप्रमाणाः स्रुचः कर्त्तव्याः । प्रसृताङ्गुलिः पाणिरामणिबन्धनाद्धस्त उच्यते, तन्मात्रं पुष्करं भवति ॥ ३८ ॥

अरत्निमात्रः(२) स्रुवोऽङ्गुष्ठपर्ववृत्तपुष्करः ॥३९॥

अङ्गुष्ठपर्वणो यावद्वृत्तं तावत्प्रमाणं पुष्करं भवति ॥ ३९ ॥

---

प्रसङ्गाद्वैकङ्कतानि प्रतिपादनीयानि । यथा प्रकृतौ वैकङ्कती ध्रुवा, अग्निहोत्रहवणी अग्निहोत्रहोमार्था स्रुक्, सोमे ग्रहचमसद्रोणकलशादीनि । तत्रापि हविर्धानाधिषवणफलक-परिप्लवा-सम्भरण्यादीनि वारणान्येव । षोडशिपात्रं खादिरम् । अंश्वदाभ्यग्रहणपात्रमौदुम्बरम् । वाजपेये सप्तदश सोमग्रहाः सुराग्रहाश्च भवन्ति तेषां पात्राणि वारणान्येव । सुराग्रहपात्राणि तु मृन्मयान्यपि, शाखान्तरे तथैवोक्तेः । एवमन्यदप्यूह्यम् । "खादिरः स्रुवः, पर्णमयी जुहूराश्वत्थ्युपभृद्, वैकङ्कती ध्रुवैतेषां वृक्षाणामेकस्य स्रुचः कारयेद् बाहुमात्र्योऽरत्निमात्र्यो वा प्रागग्रास्त्वक्तोबिला हंसमुख्यः स्फ्यः शम्या प्राशित्रहरणमिति खादिराणि वारणान्यहोमार्थानि भवन्ति" इत्यापस्तम्बोक्तेरिति दिक् ।

(१) बाहुः प्रमाणमासां ता बाहुमात्र्यः । पाणिः प्रमाणमस्य तत्पाणिमात्रम्, पाणिमात्रं पुष्करं मुखं यासां ताः पाणिमात्रपुष्कराः । त्वक्प्रदेशे बिलं मुखं यासां तास्त्वग्बिलाः । प्रसिच्यते क्षीयते अनेनेति प्रसेकः, हंसमुखसदृश प्रसेकः प्रणालिका यासां ताः हंसमुखप्रसेकाः । मूले दण्डो यासां ताः मूलदण्डाः-स्रुचो भवन्ति ।

(२) अरत्निः प्रमाणमस्यासावरत्निमात्रः । अङ्गुष्ठपर्वणो वृत्तम् अङ्गुष्ठपर्ववृत्तम्, अङ्गुष्ठपर्ववृत्तप्रमाणं वृत्तं पुष्करं मुखं यस्य असावङ्गुष्ठपर्ववृत्तपुष्करः स्रुवो भवति ।

स्फ्योऽस्याकृतिरादर्शाकृति प्राशित्रहरणं चमसाकृति(१)र्वा ॥ ४० ॥

भवति ॥ ४० ॥

( ऋत्विजां विहारगमनागमनमार्गः सोत्तरवेदिकयागेषु । )

चात्वालोत्करावन्तरेण संचरः(२) ॥ ४१ ॥

अर्थलक्षणं यत्सञ्चरणं तच्चात्वालोत्करावन्तरेण भवति ॥ ४१ ॥

( ऋत्विजामिष्टिषु गमनागमनमार्गः । )

प्रणीतोत्करावदिष्टिषु ॥ ४२ ॥

अर्थलक्षणमेव यत्सञ्चरणं तदिष्टिषु प्रणीतोत्करावन्तरेण भवति । अन्तरेण सञ्चर इत्यनुवर्त्तते ॥ ४२ ॥

इति कर्काचार्यकृतकातीयश्रौतसूत्रभाष्ये प्रथमाध्याये तृतीया कण्डिका ॥ ३ ॥

इदानीमिदं विचार्यते । श्रुतद्रव्याभावे किं द्रव्यान्तरेण कर्त्तव्यम् उत नेति ? । किं तावत्प्राप्तम् । सूत्रेणैव पक्षः—

( काम्ये प्रतिनिधिर्नास्ति । )

(३)चोदिताभावेऽनारम्भस्तत्सिद्धित्वात्तस्य ॥ १ ॥

चोदितस्य द्रव्यस्याभावे नारब्धव्यं तत्कर्म । कुत एतत् ? । तदेव हि साधनं तस्य कर्मणः श्रुतम् । अतो द्रव्यान्यत्वे कर्मणो-

---

(१) याज्ञिकदेवैरेकमेव सूत्रं त्रेधा विभक्तम्, तन्मते "स्फ्योऽस्याकृतिः" "आदर्शाकृति प्राशित्रहरणम्" "चमसाकृति वा" इति सूत्राणां रूपाणि भवन्ति ॥

(२) अयं च सोत्तरवेदिकेषु वरुणप्रघासमहाहविःपशुसोमेषु ज्ञेयः । चात्वालस्यैष्वेव सत्त्वात् ।

(३) अग्रिमेण सूत्रेण नित्यकर्मविषयकविशेषस्य वक्ष्यमाणत्वात् काम्यकर्मविषयकमेतत्सूत्रमिति भावः ।

ऽन्यत्वं भवति। द्रव्यदेवतं हि कर्मणो रूपमिति ॥ १ ॥

सत्यमेतदेवं काम्ये। अथ नित्ये कथमिति(१)। नित्येऽपि श्रुतद्रव्याभावे कर्मान्तरबुद्ध्या अनारम्भे प्राप्त आह—

( नित्यकर्मणि प्रतिनिधिः। )

## नियते सामान्यतः प्रतिनिधिः स्यात् ॥ २ ॥

नित्ये कर्मणि श्रुतद्रव्याभावे प्रतिनिधिनाऽऽरब्धव्यं तत्कर्म श्रुतद्रव्यसदृशेन। कुत एतत्?। उच्यते। व्रीहिभिर्यजेतेत्यत्र नियममात्रं व्रीहिश्रुतिः। न च नियमानुरोधेन यावज्जीवश्रुत्युपरोधः शक्यः कर्त्तुम्। अवश्यकर्त्तव्ये कर्मणि नियममात्रस्यैवानुपादानं युक्तरूपम्। तस्मात्प्रतिनिधिना तत्कर्म परिसमापनीयम्। यद्येवं, कुतः श्रुतद्रव्यसामान्यत इति?। उच्यते। व्रीहिभिर्यजेतेत्यनेन व्रीहिजात्युपलक्षितानां व्यक्तिविशेषाणामङ्गभावो विहितो भवति। न हि व्रीहिजात्या अमूर्त्तत्वादष्टाकपालाभिनिर्वृत्तिः शक्यते कर्तुम्। न च व्यक्तिविशेषाणां जातिशब्दादृतेऽन्यद्वाचकमस्ति। तस्माद्व्यक्तिविशेषा एवात्राङ्गभूताः। तेन सदृशेषूपादीयमानेषु कियतामपि व्यक्तिविशेषाणामुपादानं कृतं भवति। तस्मात्साधूक्तं नियते सामान्यतः प्रतिनिधिः स्यादिति ॥ २ ॥

नित्ये प्रतिनिधिर्भवति। काम्येऽपि प्रक्रान्ते प्रतिनिधिर्भवत्येवं, तदर्थमाह—

( आरब्धे काम्ये प्रतिनिधिर्भवत्येव। )

## आरम्भान्नियमः ॥ ३ ॥

आरब्धं हि तत्कर्म। आरम्भश्च समाप्तेर्निमित्तम्। न च प्रतिनिधिद्रव्यमन्तरेण समाप्तिस्तस्य भवति। तस्मात्तत्रापि प्रतिनिधिर्भवत्येव(१)॥३॥

---

(१) इदमत्र तत्त्वम्, द्रव्यान्यत्वेऽपि न कर्मान्यत्वम्, कर्मान्यत्वकारणभूतानां शब्दभेदादीनामभावात्। यथा चैत्रप्रयोगवैशाखीप्रयोगयोरभेदः, उभयत्रापि दर्शपूर्णमासपदानुवृत्तेः। यथा वा शाबलेयबाहुलेययोर्भेदेऽपि न गोत्वं भिन्नमेवमत्रापि व्रीहिनीवारभेदेऽपि न कर्मभेदः। एवञ्च श्रुतद्रव्यापचारे द्रव्यान्तराऽनुपादाने कर्मस्वरूपभङ्गभिया आरब्धं प्रतिनिधिनापि समापनीयमिति।

दोषश्चासमाप्तौ स्यात्सामान्यात् ॥ ४ ॥

अपिच प्रक्रान्तस्य काम्यस्यासमाप्तौ दोषो(१) भवति । तदपि हि नित्यैः समानं भवति । यथैव नित्यस्याकरणे शिष्टविगर्हणम्, एवं काम्यस्यापि प्रक्रान्तस्य असमाप्तौ शिष्टविगर्हणम् । ननु च शिष्टविगर्हणं नाम को दोषोऽस्ति ? । अस्ति दोषो येन शिष्टा विगर्हन्ते । अथापि नाम नास्ति दोषः, शिष्टविगर्हणमेव दुष्टमिति ॥ ४ ॥

दर्शनाच्च ॥ ५ ॥

दर्शयति च द्रव्यान्तरेण समाप्तिम् "यदि सोमं न विन्देत्पूतीकानभिषुणुयात्" इति । अभिषवेण च समाप्त्यभिधानम् ॥ ५ ॥

एवं दर्शने कृते तदाक्षिपति—

अन्यार्थं दर्शनं न पुनर्ग्रहणात् ॥ ६ ॥

तद् दर्शनमन्यार्थं भवति यदन्यविधिपरे वाक्येऽन्यमर्थं ज्ञापयति, यथा कृष्णलहोमविधिपरे वाक्ये प्रयाजान्दर्शयति । न चेदमन्यार्थम् । कुत एतत् ? । पुनर्ग्रहणात् । सोमाभावे सति पुनर्द्रव्यान्तरमन्यदत्र विधीयते ॥ ६ ॥

एवं स्थिते सत्युच्यते—

अन्यार्थं पुनर्ग्रहणम् ॥ ७ ॥

पुनर्ग्रहणमेवेदमन्यार्थम् । कोऽन्योऽर्थ इतिचेत् । सोमाभावे यागस्यावश्यकर्त्तव्यत्वात्सुसदृशद्रव्यप्राप्तौ विसदृशेष्वपि पूतीकेषु व्यापारो वाक्यस्य, द्रव्यमात्रं तु प्राप्तमेव । येन विशेषो नियम्यते तस्मात्समाप्तिदर्शनमेवेदमिति ॥ ७ ॥

इदं श्रूयते-"पयो व्रतं ब्राह्मणस्य, यवागू राजन्यस्यामिक्षा वै-

---

(१) "देवताभ्यो वा एष आवृश्च्यते यो यक्ष्ये इत्युक्त्वा न यजते, त्रैधातवीयेन यजेत, न तेन देवताभ्य आवृश्च्यते" इति तैत्तिरीये निन्दाप्रायश्चित्तयोः स्पष्टं दर्शनात् आरब्धस्यावश्यं समाप्तिरिति प्रतिभाति । अतएव जैमिनिरपि षष्ठे "प्रक्रमात्तु नियम्येतारम्भस्य क्रियानिमित्तत्वात्" इति सूत्रयाञ्चकार ।

श्यस्य" इति । तदभावे चिन्त्यन्ते-किं प्रतिनिधिरत्र प्रसज्यते, उत न प्रसज्यते ? ।

न प्रसज्यत इत्याह—

( पयोव्रतादावपि प्रतिनिधिरस्ति । )

व्रते प्रसङ्गो, ननियमशब्दात् ॥ ८ ॥

व्रते प्रतिनिधिर्न भवति । येन नियमशब्दोऽत्र भवति । व्रतँ ह्येवास्याऽतोऽशनं भवतीति । एवकारश्रवणात् प्रतिनिधिव्युदासः । न ह्यत्रान्यद्विहितं यद् व्युदस्यते । एवं स्थिते उच्यते । व्रते प्रतिनिधिः प्रसज्यते । न 'न प्रसज्यते' इति । कुत एतत् ? । यतो नायं नियमशब्दः । अन्यार्थो ह्ययमिष्टाशनस्तावकः । "पुरा केशश्मश्रोर्वपनाद्यत् कामयेत तदश्नीयात्" इति हि प्रकृत्य "व्रतँ ह्येवास्यातोऽशनं भवति" इति संस्तवोऽयम् ॥ ८ ॥

इदानीमिदं विचार्यते । श्रुतद्रव्याभावे प्रतिनिहिते द्रव्यान्तरे छागाभावे मेषे किं श्रुतद्रव्यशब्देनोपलक्षणम् उत प्रतिनिहितद्रव्यशब्देनेति । किं तावत्प्राप्तम् ? । प्रतिनिहितशब्देनेति । शब्देन हि द्रव्यमभिधेयम् । न चाविपरिणतरूपः शक्नोति तदभिधातुम् । तस्माद्विपरिणाम इत्येवं प्राप्त उच्यते—

( प्रतिनिहितद्रव्यस्य श्रुतद्रव्याभिधायकशब्देनैवाभिधानम् । )

शब्देऽविप्रतिपत्तिः ॥ ९ ॥

प्रतिनिहिते द्रव्ये श्रुतद्रव्याभिधायिनि शब्दे अविप्रतिपत्तिरविपरिणामः । अनूह इत्यर्थः । कुत एतत् । प्रतिनिध्युपादानं हि श्रुतद्रव्यबुद्ध्या क्रियते, न तु द्रव्यान्तरबुद्ध्या । यत्र वचनेन द्रव्यान्तरं विधीयते, यथा "नैवारं चरुं(१) निर्वपेत्" इति, तत्र द्रव्यान्तरबुद्धिर्भवति । न चेह वचनमस्ति । तस्माद्भूयोऽवयवसामान्येन श्रुतद्रव्यमेवेदमिति कृत्वा प्रतिनिध्युपादानम् । अतः श्रुतद्रव्यशब्देनैवाभिधानम् ॥ ९ ॥

यदि वचने सति द्रव्यान्तरबुद्धिर्भवति ततः सोमाभावे "पूती-

---

(१) उपलक्षणमिदम् "सारस्वतीं मेषीम्" "ऐन्द्रं मेषम्" "ऐन्द्र ऋषभ" इत्यादीनाम्, अतस्तत्र भवत्यूह इति ।

कानभिषुणुयात्"इति पूतीकानां वाचनिकत्वादस्तु विपरिणाम इत्येवं प्राप्त आह—

( पूतीकानां सोमशब्देनैवाभिधानम्। )

## सोमेन जात्यभावात् ॥ १० ॥

सोमाभावे सत्यपि वचने सोमशब्देनैवोपलक्षणं कर्त्तव्यम्। न ह्यत्र द्रव्यान्तरबुद्ध्या पूतीकोपादानम्। द्रव्याभावे यागस्यावश्यकर्त्तव्यत्वाद् द्रव्यान्तरे प्राप्ते तद्गतविशेषनियमः क्रियते। तस्मात्सोमशब्देनोपलक्षणं कर्त्तव्यम् ॥ १० ॥

(१)पृषदाज्ये तर्हि वाचनिकत्वाद्विपरिणामोऽस्त्वित्येवं प्राप्त आह—

( पृषदाज्यस्यापि आज्यशब्देनैवाभिधानम्। )

## आज्ये चादर्शनात् ॥ ११ ॥

आज्ये चाविपरिणामः। कुत एतत्। अदर्शनाद् द्रव्यान्तरस्य। न ह्यत्र द्रव्यान्तरबुद्ध्या दध्युपादीयते। किं तर्हि आज्यसंस्काराय। तस्मिन्सति पृषद्गुणकमाज्यं भवति। यदप्युच्यते—"द्वयं वा इदꣳ सर्पिश्चैव दधि च"इति, तद् गुणभूतस्यैव दध्नः प्रशंसार्थम्(२) ॥११॥

किञ्च—

## पशौ मन्त्रवर्णात् ॥ १२ ॥

पशौ हि मन्त्रवर्णो भवति "स्वाहा देवा आज्यपा" इति पृषदा-

---

(१) अयम्भावः—प्रकृतौ आज्यपदयुक्ता "देवान् आज्यपानावह" "देवानामाज्यपानां प्रिया धामानि" "देवा आज्यपा आज्यमजुषन्त" इत्यादयो मन्त्राः सन्ति। इदानीं तेषु देवा आज्यपा इत्यादिपदानां स्थाने "देवाः पृषदाज्यपा" इत्यादयः शब्दाः प्रयोक्तव्याः, न वा ?। तत्र नैवारचरुवदत्रापि भविष्यत्यूहः; वचनेन विहितत्वादिति पूर्वपक्ष्याशयः।

(२) वस्तुतस्तु लोके पृषच्छब्दस्य चित्रगुणबोधकत्वादत्रापि पृषदाज्येनेत्यस्य चित्रेणाज्येनेति भविष्यति बोधः। तथा च सति चित्रतारूपगुणमात्रविधानेन वाक्यस्य चारितार्थ्ये जाते न प्राकृतादन्यस्य कस्यचिद् द्रव्यस्य ग्रहणमिति कस्य स्थाने ऊहो भविता।

स्यसाधनकत्वेऽपि सत्युच्यते ॥ १२ ॥

किञ्च—

श्रुतेश्च ॥ १३ ॥

एकवचनश्रुतिर्भवति "अथ पृषदाज्यं गृह्णाति" इति। यदि च दध्नः प्राधान्यं स्यात्तर्हि द्विवचनेन भवितव्यम्। न च तदस्तीति ॥ १३ ॥

अथ यत्र वैकल्पिकं द्रव्यमुपात्तं नष्टम्—यथा व्रीहिषु नष्टेषु, किं व्रीहिसामान्येन प्रतिनिध्युपादानम्, उत श्रुतद्रव्यं यवा उपादेयाः ?। श्रुतद्रव्याभावे सति प्रतिनिधिरिष्यते न श्रुतद्रव्ये सतीति यवा उपादेया इति प्राप्त आह—

( वैकल्पिकोपात्तद्रव्यापचारे प्रतिनिधेरेवोपादानम्। )

विकल्पे प्रवृत्तं कर्मान्तरत्वात्(१) ॥ १४ ॥

यस्मिन्विकल्पे यत्प्रवृत्तं द्रव्यं तत्सामान्येन प्रतिनिध्युपादानं कर्तव्यम्। न श्रुतद्रव्यमपि यवा उपादेयाः। किं कारणम् ?। सर्वेषु वैकल्पिकेषु द्रव्येषु यजमानः स्वयमेवैकं साधनत्वेनाङ्गीकरोति। तत्र तदेव साधनं नान्यत्। अश्रुतसममेव इह तदिति। यदि तदप्युपादीयते कर्मान्तरबुद्धिः स्यात्। न च सेष्यते। तस्मात्प्रक्रान्तद्रव्यसादृश्येन प्रतिनिध्युपादानमिति ॥ १४ ॥

उक्तेन न्यायेन प्रतिनिहितद्रव्यनाशे तत्सामान्येन प्रतिनिध्युपादाने प्राप्त आह—

( प्रतिनिधिनाशे श्रुतसदृशस्योपादानं न प्रतिनिधिसदृशस्य। )

प्रतिनिधौ तत्कालात् ॥ १५ ॥

प्रतिनिधिद्रव्ये नष्टे न प्रतिनिधिसामान्येन प्रतिनिधिरुपादेयः, किं तर्हि श्रुतमेव द्रव्यम्। न तदभावे तत्सामान्येन प्रतिनिधिरुपा-

(१) "सोमेन जात्यभावात्" इत्यत्र नकारस्य पृथक् छेदं कृत्वा तस्यात्रानुवृत्तिः कर्तव्या। एवञ्च विकल्पे प्रवृत्तं यवादिकं न प्रतिनिधेयम्। कुतः ?। उपादीयमानप्रतिनिहितद्रव्यसाहित्येन कर्मान्तरत्वात्तस्येति वा व्याख्येयम्।

देयः । कुत एतत् । तत्कालात् । स एव हि कालः प्रतिनिधेः यः श्रुतद्रव्याभाव इति । अतस्तस्मिन्नष्टे न तत्सामान्येन प्रतिनिधिरुपादातव्यः श्रुतद्रव्यमेवोपादेयमिति ॥ १५ ॥

अथ यत्र श्रुतं द्रव्यमर्थाभिनिर्वृत्त्यसमर्थं विद्यते खदिरादि, अर्थाभिनिर्वृत्तिसमर्थं च प्रतिनिधिद्रव्यम् । श्रुतद्रव्ये अर्थाभावः, प्रतिनिधिद्रव्ये चार्थाभिनिर्वृत्तिसमर्थे श्रुतद्रव्याभावः । तत्र किं श्रुतद्रव्याभाव उतार्थाभावः । तत्रैदुच्यते—

( कार्याक्षमश्रुतद्रव्यसत्त्वेऽपि तत्समर्थप्रतिनिधेरेवोपादानम् । )

## अर्थद्रव्यविरोधे ऽर्थसामान्यं तत्परत्वात् ॥ १६ ॥

तस्मिन्नर्थद्रव्यविरोधे यदर्थाभिनिर्वृत्तिसमर्थं तदश्रुतमपि प्रतिनिधिद्रव्यमुपादेयम् । कुत एतत् ? । अर्थाभिनिर्वृत्त्यर्थत्वाद् द्रव्यस्य । येनार्थो न निर्वर्त्यते तत् श्रुतमपि सद् अश्रुतसममेव(१) ॥ १६ ॥

अथ यत्र गुणद्रव्यविरोधस्तत्र कथम् । यथा कृष्णानां व्रीहीणां दर्विहोम इति । अकृष्णा व्रीहयः सन्ति, कृष्णाश्च नीवाराः । तत्रैतदुच्यते—

(विहितगुणकेऽपि प्रतिनिधौ अविहितगुणकस्यापि श्रुतस्यैवोपादानम्।)

## गुणद्रव्ययोर्द्रव्यं प्रधानयोगात् ॥ १७ ॥

गुणद्रव्यविरोधे द्रव्यमुपादेयं न गुणः । तद्धि प्रधानेन युज्यते । कथम् ? । येन युज्यमानं यागमभिनिर्वर्त्तयति अतः सन्निकृष्टं यागस्य द्रव्यं, विप्रकृष्टो गुणः । अतः सन्निकृष्टविप्रकृष्टयोश्च सन्निकृष्टे सम्प्रत्यय इति ॥ १७ ॥

एवं प्राप्त आह—

## (२) न समत्वात् ॥ १८ ॥

नैतदेवम्-द्रव्यमेव प्रधानेन युज्यते न गुण इति । सममेतदुभ-

(१) तदुक्तं षष्ठाध्याये तृतीये पादे जैमिनिना "अर्थद्रव्यविरोधेऽर्थो द्रव्याभावे तदुत्पत्तिर्द्रव्याणामर्थशेषत्वात्" इति सूत्रेण ।

(२) मध्ये पूर्वपक्षोऽयम् ।

यम् । द्रव्यमपि प्रधानयोगि, आम्नानसामर्थ्याद् गुणोऽपीति ॥ १८ ॥

एवं प्राप्त उच्यते—

## गु(१)णानुग्रहात् ॥ १९ ॥

गुणेनानुगृहीतं द्रव्यमेव प्रधानयोगि । गुणस्तु विशेषणं विशेष्यं द्रव्यम् । विशेषणविशेष्ययोश्च विशेष्ये सम्प्रत्यय इति न सममेतत् (२) ॥ १९ ॥

इति कर्काचार्यकृतकातीयश्रौतसूत्रभाष्ये प्रथमाध्याये चतुर्थी कण्डिका ॥ ४ ॥

अधुनेदं विचार्यते—यान्येकप्रधानसम्बन्धीन्यङ्गकर्माणि किं तेषां क्रमविशेषेणानुष्ठानम् उतानियमः क्रमं प्रतीति ? । किं तावत्प्राप्तम् । सूत्रेणैवोपक्रमः—

( श्रुत्यर्थपाठैः क्रमानियमः । )

## कर्मणामानुपूर्व्यं न, युगपद्भावात् ॥ १ ॥

अग्न्यन्वाधानादीनां कर्मणामानुपूर्व्यं नास्ति । यौगपद्येन हि तानि प्रधानापेक्षायां गृह्यन्ते । न चैषां क्रमनियामकं किञ्चित्कारणमस्ति, येन क्रमोऽवसीयते । तेनैकत्वात्कर्तुरवश्यंभाविनि क्रमे यः कश्चित् क्रम आस्थेयः ॥ १ ॥

## अर्थनिर्वृत्तेश्च ॥ २ ॥

अपि चैवं सति सुखेनैवार्थाभिनिर्वृत्तिर्भवति । इतरथा क्रमविशेषे आश्रीयमाणे विस्तरेण स्यात्, तत्र प्रधानकालातिक्रमः स्यादिति ॥ २ ॥

## (३)स्याद्वाऽऽनुपूर्व्यनियमः श्रुत्यर्थक्रमेभ्यः ॥ ३ ॥

---

(१) उक्तमेव सिद्धान्तं स्थापयति ।

(२) अत एवाग्निहोत्रे पुंवत्साया अग्निहोत्र्याः पयसोऽभावे पुंवत्सत्वलक्षणं गुणं हित्वा स्त्रीवत्साया अप्यग्निहोत्र्याः पयसा होमो भवति, भवति चार्द्राणां परिधीनामभावे शुष्कैरेव कार्यसिद्धिः ।

(३) एवमङ्गानामनुष्ठाने क्रमानियमो नेति पूर्वपक्षे सिद्धान्तमाह ।

भवेद्वा क्रमानियमो नानियमः । श्रुतिरेव क्वचित्क्रमस्य नियामिका भवति । यथा द्वादशाहे-"तेषां गृहपतिः प्रथमो दीक्षते, अथ ब्रह्माणं दीक्षयत्यथोद्गातारम्" इत्येवमादि । ब्रह्मादीनां यजमानत्वात् प्राप्तासु दीक्षासु क्रमपरेयं श्रुतिः । तथा "आश्विनो दशमो गृह्यते", "तं तृतीयं जुहोति" इति । अर्थाच्च क्रमनियमो गम्यते, यथा ऽवघातपेषणयोः । अन्यथा पुरोडाश एव न सिध्यति । पाठक्रमादपि च क्रमोऽवसातुं शक्यते द्विप्रकारात्, श्रुतिपाठात् मन्त्रपाठाच्च । विशिष्टेन क्रमेण पदार्थानां विधिपाठः । मन्त्राणामपि च तदभिधानक्रमो विशिष्ट एव । तत्रैतच्छक्यते वक्तुं येन क्रमेण पदार्थानामवगमस्तेनैवानुष्ठानमिति । इतरथा प्रतीतक्रमहानिरप्रतीतोपादानं चायुक्तमापद्यते । तस्मात्पाठक्रमादपि क्रमोऽवगम्यते ॥ ३ ॥

## प्राकृतं च विकृतौ ॥ ४ ॥

इतश्च पाठक्रमादपि क्रमोऽवसीयते । येन प्राकृतं पदार्थजातं विकृतौ चोदकप्राप्तमन्यपरे वाक्ये तेनैव क्रमेणानुवदति । यथा पितृयज्ञे "उत्तरेण परिग्रहेण परिगृह्य प्रतिमृज्याह प्रोक्षणीरासादयेत्यासादयन्ति प्रोक्षणीरिध्मं बर्हिरुपसादयन्ति" एवमादि "स यज्ञोपवीती भूत्वाऽऽज्यानि गृह्णाति" इति यज्ञोपवीतित्वविधिपरे प्राकृतं क्रमं दर्शयति।

अपरे ऽन्यथैतत्सूत्रं वर्णयन्ति । प्राकृतं च वैकृतश्च यत्र कर्मणि ह्यवादेशसंयुक्तं भवति तत्र पूर्वं प्राकृतं कर्त्तव्यं पश्चाद्वैकृतम् । न्यायेन ह्यचरितार्थत्वात्पूर्वं वैकृतमेव भवति । सूत्रप्रस्थानात्पूर्वं प्राकृतमिति। सूत्रस्य च वेदवाक्यमूलताऽनुमीयते । एवं च कृत्वा पराावुत्तराघारमाघार्य पशुं पूर्वं समनक्ति इति-प्राकृतं च ह्यवादेशसंयुक्तं ध्रुवासमञ्जनम्, पशुसमञ्जनं तु वैकृतम्, तद् अचरितार्थत्वात्पूर्वमेव प्राप्नोति, तेन पूर्वग्रहणं कुर्वन्नाचार्योऽमुमर्थं ज्ञापयति ध्रुवासमञ्जनमेवात्र पूर्वं मा भूदिति । तथा ज्योतिष्टोमे "आसाद्य हवींषि सम्मृश्याप उपस्पृश्य राजानमादाय प्रपद्यते" इति श्रुतिः । तत्र सूत्रकारेणोक्तम्-"आसाद्याज्यानि दक्षिणेऽनसि कृष्णाजिनमास्तीर्य तस्मिन्सोमं निदधाति" इति । (का० सू० ८।७।१७) हविःसम्मर्शनात्मालम्भनोदकोपस्पर्शनानि "प्राकृतं चविकृतौ" इत्यनेनैव सिद्धानि ॥ ४ ॥

( पाठक्रमादर्थक्रमो बलीयान् । )

विरोधेऽर्थस्तत्परत्वात् ॥ ५ ॥

अथ यत्र विरोधः पाठक्रमार्थक्रमयोस्तत्र कथमिति । यथा "स वै पर्णशाखया वत्सानपाकरोति तामाच्छिनत्तीषेत्वेति" इति पाठः । अर्थस्तु नैवं निवर्त्यते । वत्सापाकरणायैव हि शाखाच्छेदनम् । तेन पाठक्रमार्थक्रमयोरर्थक्रमो बलीयान् । तेनोक्तमाचार्येण विरोधेऽर्थस्तत्परत्वादिति । अर्थार्थो हि पाठः ॥ ५ ॥

( श्रौतक्रमस्य सर्वापेक्षया बलवत्त्वम् । )

श्रुतिः क्रमादानुमानिकत्वात् ॥ ६ ॥

अथ यत्र श्रुतिपाठक्रमयोर्विरोधस्तत्र कथम् । यथा संस्थिते यज्ञे ब्राह्मणतर्प्पणं श्रुत्याऽभिहितम् । पाठात्तु प्राक् स्विष्टकृत्समनन्तरं प्राप्नोति । तत्रैतदाह-पाठक्रमाद् बलीयसी श्रुतिः । प्रत्यक्षत्वात् संस्थिते यज्ञ इति । पाठक्रमे त्वनुमानम्, नूनमेतेनैव क्रमेणानुष्ठानं येनैवं पाठ इति ॥ ६ ॥

अथ यत्र चोदनापाठस्य मन्त्रपाठस्य च विरोधस्तत्र कथम् । यथाऽऽज्याधिश्रयणे "सोऽसावाज्यमधिश्रयतीषेत्वा" इति पठित्वा "तत्पुनरुद्वासयत्यूर्जेत्वा" इति चोदनापाठः । मन्त्रपाठे तु आज्याधिश्रयणमन्त्रप्रभृति "घर्मोऽसि विश्वायुः" इत्यवमादीन् बहून् पदार्थानुपक्रम्योद्वासनमन्त्रः "ऊर्जे त्वा" इति पठ्यते । यदि चोदनापाठो बलवान् अधिश्रयणसमनन्तरमुद्वासनम् । अथ मन्त्रपाठस्तत उपरिष्टादिति । किमत्र युक्तम् ?—

( चोदनापाठाद् मन्त्रपाठो बलवान् । )

मन्त्रचोदनयोर्मन्त्रबलं प्रयोगित्वात् ॥ ७ ॥

मन्त्रपाठचोदनापाठयोर्मन्त्रपाठो बलवान् । कर्मणि क्रियमाणे प्रयुज्यते ह्यसौ मन्त्रः । अतश्च सन्निकृष्टो मन्त्रः । विप्रकृष्टो चोदनापाठः(१) ॥ ७ ॥

---

(१) एतदुक्तं भवति-स्मारकक्रमेण तावदनुष्ठानक्रमः । न च मन्त्रे अनन्यार्थे सति ब्राह्मणस्य स्मारकत्वम् ? । अप्रयुज्यमानतया सामर्थ्याभावात् । न हि निर्वपामीतिवन्निर्वपेदिति पदमुच्चारितमनुष्ठा-

ततश्च सन्निकृष्टविप्रकृष्टयोः सन्निकृष्टे सम्प्रत्यय इत्येवं प्राप्ते आह—

न(१) समत्वात् ॥ ८ ॥

नैतदेवं 'मन्त्रपाठो बलवान्' इति । सममेतदुभयम् । कर्माणि प्रयुज्यते मन्त्रः । चोदना तु कर्मणः प्रवर्त्तिकैव । अपि च पूर्वं प्रवृत्ता चोदना, विहिते हि पदार्थे पश्चान्मन्त्रः प्रयुज्यते ॥ ८ ॥

गु(२)णानां तु भूयस्त्वात् ॥ ९ ॥

तु-शब्दः पक्षव्यावृत्तौ । नैतत्समम् । मन्त्रपाठो बलवान्(३) । स हि प्रयुज्यमान उत्तरं पदार्थं बुद्धौ सन्निधापयति, नैवं चोदनापाठः । पदार्थस्मारको हि मन्त्रः । तस्मान्मन्त्रपाठो बलीयान् ॥ ९ ॥

क्रमनियमे कारणान्युक्तानि । तेषां च बलाबलमिदानीं विचार्यते । यत्र बहूनां प्रधानानां सह क्रिया तत्र किमेकैकस्य प्रधानस्य सकलं गुणकाण्डमावर्तयितव्यम्, उत प्रत्येकपदार्थेनानुसमय इति? । सकलं गुणकाण्डमेकैकस्य कर्त्तव्यमिति ब्रूमः । न पदार्थानुसमयः । पदार्थानुसमये हि प्रथमस्य पदार्थे कृते द्वितीयस्य तस्मिन्नेव क्रियमाणे पूर्वस्य व्यवधानं स्यादित्येवं प्राप्ते आह—

( पदार्थानुसमयः । )

तुल्यसमवाये सामान्यपूर्वमानुपूर्व्ययोगात् ॥ १० ॥

तुल्यानां प्रधानानां सह प्रयोगे सति सामान्यं पूर्वं कर्त्तव्यम् । समानः पदार्थः सर्वेषां पूर्वः पूर्वः कर्त्तव्यः(४) । एवं क्रियमाणे आ-

---

नौपायिकमनुष्ठेयप्रकाशनं करोति, किं तु सम्बन्धिमात्रतया प्रयोगबहिर्भूतं सत् "अनेन वाक्येनेदं विहितम् अत एतत् करोमि" इत्येवमालोचनेन स्मारकं भवति । मन्त्रस्तु प्रयुज्यमान एवाभिधानत एव स्मारक इति देवयाज्ञिकाः ।

(१) मध्ये पूर्वपक्षोऽयम् ।

(२) सिद्धान्तयति ।

(३) "तस्मादेतदृषिणाऽभ्यनूक्तम्" इत्यादिना श्रुतिरपि मन्त्राणाङ्गुणभूयस्त्वं कथयति ।

(४) तद्यथा—बहुषु हविषु प्रथमं सर्वेषां विभस्मीकरणम्, ततः

नुपूर्व्येण पदार्था युज्यन्ते, तन्मन्त्राश्च । इतरथोत्तरपदार्थाभिनिर्वृ- त्युत्तरकालं पूर्वेषु क्रियमाणेषु आनुपूर्व्ययोगो न स्यात् । तस्मात्प- दार्थानुसमयः । अथवा आनुपूर्व्ययोगादिति सकले गुणकाण्डे ऽपवृ- ज्यमाने आनुपूर्व्या क्रमेण अप्रयुक्तानि प्रधानानि भवन्ति । तत्र सह- त्वप्रापकः प्रयोगवचनो बाध्यते । यत्पुनरुच्यते पूर्वस्य पदार्थे कृते तस्मिन्नेव द्वितीयस्य क्रियमाणे व्यवधानमिति, तत् सहत्वाविधानेन परिह्रियते । आह च—

सकलं गुणकाण्डं चेदेकैकस्यापवृज्यते ।
सहत्वप्रापको नैव प्रयोगवचनो भवेत् ॥

अतः पदार्थानुसमये क्रियमाणे क्रमश्चानुगृहीतो भवति, सह- त्वश्चेति । एवं च सति सप्तदशसु प्राजापत्येषु षोडशभिः पदार्थैः समानजातीयैर्व्यवधानमिष्यते । अनेनैव मुख्यक्रम-प्रावृत्तिक- क्रमावुक्तावेव भवतः । कथम् । प्रथमस्य नियोगं कृत्वा द्वितियादीनां नियोगे कृते यदि प्रोक्षणं द्वितीयतृतीयप्रभृति क्रियते सप्तदशभिर- ष्टादशभिर्वा पदार्थैः प्रथमस्य प्रोक्षणस्य व्यवधानं स्यात् । मुख्य- क्रमेऽप्येवम् । काण्डक्रमं तु वक्ष्यत्युपरिष्टात् ॥ १० ॥

उक्तेन न्यायेन "चतुरो मुष्टीन्निर्वपति" इत्यत्र मुष्टिनाऽनुसमये प्राप्ते, "अष्टौ कपालान्युपदधाति" इत्यत्र च कपालानुसमये प्राप्ते आह—

( चतुर्मुष्टिकनिर्वापस्यैकपदार्थत्वं न मुष्टेः । )

## नैककर्मणि सम्बन्धात् ॥ ११ ॥

निर्वापकर्मणि न मुष्टिनाऽनुसमयः कार्यः । चतुर्मुष्टिको निर्वाप एकः पदार्थः, पदार्थावयवो मुष्टिः । न चावयवेनानुसमयः कर्त्त- व्यः । पदार्थेन ह्यनुसमयो भवति । पदार्थश्च कर्त्तव्यः । अवयवस्तु तादर्थ्येनैव क्रियते, संख्या मुष्टयश्च । मुष्टीनां निर्वापसम्बन्धः संख्या- याश्च । संख्याया मुष्टिसम्बन्धे वैरू(१)प्यलक्षणवाक्यभेदप्रसङ्गात् ।

---

सर्वेषामर्थे पात्रीस्थापनम्, ततः सर्वेषां तत्रस्थाभिघारः, ततः सर्वेषां पात्रीषूपस्तारः, ततः सर्वेषामुद्वासनम्, ततः सर्वेषां वेद्यामासादनम्, ततः सर्वेषामालम्भ इत्येवंरूपः पदार्थानुसमयः कर्तव्य इत्यर्थः ।

(१) वैरूप्यं चैवम्—"चतुरो मुष्टीन्निर्वपति" इत्यत्र निर्वापं प्रति

तस्मादुभयोर्निर्वापसम्बन्धः । व्यवच्छेद्यव्यवच्छेदकभावस्त्वार्थो न तु वाक्यावगतः(१)। तेन वाक्यभेदो न भवति(२) ॥ ११ ॥

एवं सर्वत्र पदार्थानुसमये प्राप्ते आह—

( ग्रहणावदानयोः क्रमेण सादन-प्रदानान्तत्वम् । )

ग्रहणसादनान्तदानप्रदानेषु तु व(३)चनात् ॥ १२ ॥

ग्रहणं सादनान्तम्, अवदानं प्रदानान्तं कर्त्तव्यम् । शाखान्तरात् ॥ १२ ॥

एवं सर्वत्रावदाने प्रदानान्ते प्राप्ते आह—

( अनेकद्रव्यकाभिन्नदेवताकदधिपयोयागादौ नावदानं प्रदानान्तम् । )

न द्रव्यभेदे गुणयोगादिति वात्स्यः ॥ १३ ॥

द्रव्येषु भिन्नेषु देवतायामभिन्नायां नावदानं प्रदानान्तं कर्त्तव्यम् । यथा सप्तदशसु प्राजापत्येषु, स्विष्टकृद्यागे चानेकहविष्के । कुत एतत् । सर्वाङ्गाणां प्रधानम्प्रति गुणत्वेन योगात् । तद् यद्यवदानं प्रदानान्तं क्रियते गुणानुरोधेन प्रधानावृत्तिः कृता स्यात् । न चासाविष्यते ॥ १३ ॥

इदमन्यद्विचार्यते—कस्मिंश्चित्कर्मणि प्रक्रान्ते ऽपरिसमाप्ते एव नित्यस्य कालआयाते किं नित्यं कर्त्तव्यमुत न कर्त्तव्यमिति ? । व्यवधानान्न कर्त्तव्यमित्येवं प्राप्ते आह—

---

मुष्टीनामुपादेयत्वं विधेयत्वमङ्गत्वं चेत्येकं त्रिकम्, संख्यां प्रति च तेषामुद्देश्यत्वमनुवाद्यत्वं प्रधानत्वं चेत्यपरम्, एतत् परस्परविरुद्धं त्रिकद्वयं मुष्टीनामापद्यतइति ।

(१) ये चत्वारस्ते मुष्टयः ये मुष्टयस्ते चत्वार इति परस्परव्यवच्छेद्यव्यवच्छेदकभावोऽरुणैकहायनीन्यायेन द्रव्यस्य गुणावच्छेद्यत्वेन गुणस्य च द्रव्यावच्छेदकत्वेनार्थाद्भवतीति भावः ।

(२) एवम् 'अष्टाकपालं निर्वपति' 'द्विरवद्यति' 'त्रिरभ्यङ्क्ते' 'त्रिः पावयति' इत्यादावपि द्रष्टव्यम् ।

(३) "अथातो गृह्णात्येवायं वां मित्रावरुणेति" इत्यादिकं वचनमिति भावः ।

( प्रक्रान्तेऽसमाप्तेऽपि नित्यस्य स्वकालेऽनुष्ठानम् । )

## प्रवृत्ते नियतं दोषविशेषात् ॥ १४ ॥

प्रवृत्ते कर्मणि नियतस्य कालआयाते नियतमेव कर्त्तव्यम् । अकरणे हि दोषः स्यात् । ननु पूर्वस्यापि व्यवधाने दोष एव । सत्यमेवम् । अत्र तु विशिष्टतरो दोषः प्रधानस्यैवाक्रियेति, तत्र गुणभूतानां पदार्थानां व्यवधानमात्रम् । अपिचासम्बद्धेन व्यवधानेऽप्यदोषः । तस्मान्नियतमेव तावत्कर्त्तव्यम् ॥ १४ ॥

ज्योतिष्टोमे उक्थ्यविग्रहाणां परतः षोडशी श्रूयते । तत्र च काललियमोऽस्ति "समयाध्युषिते षोडशिनः स्तोत्रमुपाकरोति" इति । तद् यदि दैवान्मानुषाद्वा प्रतिबन्धादुक्थ्यविग्रहणामुत्कर्षः स्यात् षोडशिनोऽप्युपाकरणकालश्चायातः तत्र किं षोडशिन उपाकरणं कर्त्तव्यम्, उतोक्थ्यविग्रहाणां परतः(१) क्रमेणेति ? ।

प्रवृत्ते नियतमिति न्यायेन षोडशिन उपाकरणे प्राप्ते उच्यते—

( षोडशिस्तोत्रस्योक्थ्यविग्रहोत्तरमेवानुष्ठानं न स्वकाले । )

## षोडशिनि त्वानुपूर्व्यभूयस्त्वात् ॥ १५ ॥

षोडशिनि तु नैवम् । क्रमेणोक्थ्यविग्रहाणां परत उपाकरणं कर्त्तव्यम् । एवं गुणभूयस्त्वम् । इतरथा षोडशिनो वैगुण्यम्, उक्थ्यविग्रहाणां च । उत्कर्षेतु षोडशिन एवेति । तस्मादुत्कृष्यते षोडशी(२) ॥ १५ ॥

अग्निहोत्रादीन्युदाहृत्य चिन्त्यते-किं पाठक्रमेणैषामनुष्ठानम्, उतानियमः क्रमस्प्रतीति ? । पाठक्रमेणानुष्ठानमिति ब्रूमः । पाठो हि नियामकः क्रमस्येत्युक्तम् । एवं प्राप्ते आह—

---

( १ ) "तं पराञ्चमुक्थ्येभ्यो विगृह्णाति" इति वचनात् ।

( २ ) तदुक्तं पञ्चमाध्यायस्य प्रथमपादान्त्याधिकरणे तन्त्ररत्ने "न ग्रहणक्रमानुग्रहार्थमुत्कर्षो विधीयते, किं तर्हि यागक्रमानुग्रहार्थम् । तस्य च स्तोत्रं प्रति प्राधान्यमविवादम् । अतस्तस्य यागाभ्यासस्य कालेनाङ्गस्य स्तोत्रस्य कालो बाध्यत इति युक्त एवोत्कर्षः" इत्यादिना ।

( प्रधानकर्मसु क्रमोऽनियतः । )

अनियमः फलसंयुक्तेषु ॥ १६ ॥

प्रधानकर्मसु क्रमं प्रत्यनियमः । कानिचिन्नियतकालान्येव प-ठ्यन्ते, कानिचित्कामनया क्रियन्ते । नचैषां परस्परतः सम्बन्धोऽस्ति, यथाऽङ्गकर्मणामेकप्रधानसम्बन्धः । यस्यैव निमित्तमायातं तदेव कर्त्तव्यम् ॥ १६ ॥

पाठक्रमस्तर्हि किमर्थः ?—

क्रमो विध्यर्थः कर्मण्यसम्भवात् ॥ १७ ॥

विधानार्थः क्रमो नानुष्ठानार्थः । सर्वस्वारात्परे कर्मण्यसम्भवात् । मरणकामस्यासौ विहितस्ततोऽनुष्ठानक्रमस्यासम्भव इति ॥१७॥

इति कर्काचार्यकृतकातीयश्रौतसूत्रभाष्ये पञ्चमी कण्डिका ।

अवत्तस्यावदानस्य नाशे किं हविरन्तरमुत्पाद्यते उतान्यत्तत एवावदीयते ? । किं तावत्प्राप्तम् । सूत्रेणैव सिद्धान्तः—

( अवत्तस्य हविषो नाशे हविरन्तरमुत्पाद्यम् । )

अवत्तनाशेऽन्यद् गुणानुग्रहात् ॥ १ ॥

अवत्तनाशेऽन्यद्धविरुत्पादयितव्यम् । कुत एतत् । गुणानुग्रहात् । एवं गुणानुग्रहः कृतो भवति । इतरथा गुणहीनेन यागः कृतः स्यात् । ये पूर्वस्मिन् हविषि गुणाः कृताः ते ह्यवदाननिष्ठाः, तद्विनाशाच्च विनाशमुपगताः । तस्माद् गुणहीनं तत् । न च गुणहीनेन याग इष्यते ॥ १ ॥

एवं प्राप्ते आह—

(१)न पूर्वशेषात् ॥ २ ॥

नैतदेवं हविरन्तरमुत्पादयितव्यम् । यतः पूर्वस्यैव हविषः सं-

---

( १ ) अयम्भावः–पुरोडाशस्य यौ मध्यपूर्वार्धावयवौ तदपादानकं तदवयवभूतमवदानद्वयं यागसाधनम् । नष्टे च मध्यपूर्वार्धावयविनि पूर्वसकलरूपे पुरोडाशे यो मध्यावयवः पूर्वार्धावयवश्चावदानापादानभूतः स एवावदानापेक्षयाऽवयवी, तस्मिन्नवदानोद्धरणेन

स्कृतस्य शेषो विद्यते। ननु ह्यवदानविनाशेन गुणविनाशात् संस्कारहीनं तदिति। नेत्युच्यते। उपभोगेन हि संस्काराणामपवर्गो भवति। नचोपभुक्तास्ते, प्रक्षेपाभावात्। तस्मात्तत एवावदेयम् ॥ २ ॥

अचोदितत्वाच्च ॥ ३ ॥

नचैवं विधा चोदनाऽस्ति, अवदाननाशे हविरन्तरोत्पत्तिः कार्येति। अतस्तत एवावदेयम् ॥ ३ ॥

स्विष्टकृद्वदानुपूर्व्ययोगात् ॥ ४ ॥

अपि च। तत एवावदीयमाने स्विष्टकृद्वदेतद्धविर्भवति। सस्विष्टकृद्भवतीत्यर्थः। प्रधानावदानसमनन्तरं हि स्विष्टकृदर्थमवदानं भवति। यदि तदेव न गृह्यते स्विष्टकृदर्थमपि ततो न गृह्यते। ततो हविष उत्पत्तिरनर्थिकैव स्यात्। (१)न च सेष्यते ॥ ४ ॥

इत्येवं प्राप्ते आह—

गुणहानौ तु शेषभावात् ॥ ५ ॥

तु-शब्दः पक्षव्यावृत्तौ। न तत एव पुनरवदेयम्। गुणहीनं हि तदित्युक्तमेव। ये तत्र संस्कारास्ते ह्यवदाननिष्ठास्तद्विनाशाच्च विनाशमुपगताः। तस्मात्संस्कारहीनत्वान्न ततोऽवदेयम्। अपि च। "मध्यात्पूर्वार्द्धाच्चावद्यति" इति श्रुतिः, तदभावाच्च गुणहीनमेव तदिति। तस्माद्धविरन्तरोत्पत्तिः कार्येति(२)। आह च—

---

विनष्टेऽपि मध्यान्तरस्य पूर्वार्धान्तरस्य चावदानद्वयोपलक्षणत्वेन विद्यमानत्वात्पुनस्तत एवावदेयम्। न चैवं सति कृत्स्नस्य मध्यपूर्वार्धावयवादवदेयमिति शङ्क्यम्। "मध्यादवद्यति" इत्येतावन्मात्रस्य वचनबोधितत्वान्न तु सकलस्य मध्यपूर्वार्धादिति तत्त्वम्।

(१) शेषात्तु प्रधानार्थेऽवदीयमाने स्विष्टकृदर्थमपि ततोऽवदीयतएवेति पूर्वहविः स्विष्टकृद्वद्भवतीति पूर्वपक्षे गुण इति हृदयम्।

(२) इदमुक्तं भवति-कृत्स्नस्य हि पुरोडाशस्य यो मध्यदेश-

संस्काराणां पुरोडाशे ऽवदानं प्रयोजकम् ।
तद्विनाशाच्च नष्टास्ते नावदेयमतस्ततः ॥

अपि च ।

गृहीतौ मध्यपूर्वार्धौ तौ च नष्टावुभावपि ।
अतः शेषस्य शेषत्वात्प्रधानत्वं न युज्यते ॥ ५ ॥

नियते सामान्यतः प्रतिनिधिः स्यादित्युक्तमधस्तात् । तेन देवतादीनामपि प्रतिनिधाने प्राप्ते आह—

( अग्नि-शब्द-देवता-क्रियाणां प्रतिनिधिर्नास्ति । )

## न देवता-ऽग्नि-शब्द-क्रियाः परार्थत्वात् ॥ ६ ॥

न प्रतिनिधेयान्येतानि । न ह्येतानि प्रतिनिधीयमानानि यदर्थं प्रतिनिधीयन्ते तत्कार्यं कुर्वन्ति । देवतायास्तावद् ऐन्द्रयागे तदस्मरणे यद्यग्निः प्रतिनिधीयते न तत्कार्यं करोति । ऐन्द्रयागनिबन्धनं यदपूर्वं न तद् आग्नेयेन साध्यते(१) । अग्नेरप्याहवनीयादेरभावे यद्यग्न्यन्तरं प्रतिनिधीयते नाहवनीयकार्यं करोति । अन्यद्ध्यदृष्टमाहवनीयस्याधिकरणत्वे, अन्यदग्न्यन्तराधिकरणत्वे इति । शब्दो मन्त्रः । सोऽपि मन्त्रान्तरस्य कार्ये न वर्त्तते । न हि पेषणमन्त्रः प्रथनं प्रकाशयति । क्रिया द्विप्रकारा दृष्टार्था अदृष्टार्था च । सा च प्रतिनिधीयमाना क्रियान्तरकार्यं न करोति । न हि पेषणमवघातकार्ये वर्त्तते । अदृष्टार्थायामपि क्रियायामभिधीयते—न हि प्रयाजा अनुयाजकार्ये वर्त्तन्ते, न चानुयाजाः प्रयाजानाम् । प्रतिनियतानि ह्यदृष्टानीति ॥६॥

---

शस्तदपानको यस्तस्योपरितनोऽङ्गुष्ठपर्वमात्रभागः सोऽवदातव्यः, अन्यस्त्ववदेयस्यापादानभूतो नावदातव्यः । स हि इडादिशेषकार्यार्थः, अतो न तस्य हविष्ट्वम्, यस्य तु हविष्ट्वं नासौ विद्यत इत्यवश्यं हविरन्तरमुत्पादनीयम् ।

( १ ) एवं च गत्यभावाद्यागस्यापि लोपः । न हि त्यागमात्रं यागः किन्तु देवतोद्देशेन त्यागः, तेनासत्यां देवतायां प्रधानस्यैव यज्ञार्थस्य स्याल्लोप इति ।

## कामं देवताम् ॥ ७ ॥

योऽग्नि-शब्द-क्रियाः प्रतिनिधत्ते स कामं देवतामपि प्रतिनिदध्यात्। अग्नि-शब्दादीनामप्रतिनिधेयत्वार्थमिदमुक्तम्। येन देवता प्रतिनिधातुं नैव शक्यते। न ह्याग्नेये इन्द्रस्य देवतात्वम्। चोदनालक्षणं हि तत्। तेनान्यत्रान्या देवतैव न भवति। अचोदितत्वात् ॥ ७ ॥

(निषिद्धानां माषादीनां प्रतिनिधित्वं नास्ति।)

## प्रतिषिद्धं प्रत्यवायात ॥ ८ ॥

नेति वर्त्तते। यत्प्रतिषिद्धं न तत्प्रतिनिधेयम्। यथा श्यामाकचरौ कोद्रववरटाः, मौद्गे चरौ माषाः इति। प्रतिनिधित्वेन हि निषेधो भवति "अयज्ञिया उ वै कोद्रववरटाः अयज्ञिया माषा" इति। प्रतिनिधित्वेन प्राप्तेऽयं प्रतिषेधः(१)। प्रतिषेधविध्यतिक्रमे च प्रत्यवायः ॥ ८ ॥

( यजमानस्य प्रधानकार्ये प्रतिनिधिर्नास्ति। )

## स्वामी फलयोगात(२) ॥ ९ ॥

---

( १ ) तदुक्तम्, व्रीहिर्यवो वा श्यामाको नीवारो वा हविर्भवेत्। वेणुयवा मसूरं वा शाकं मूलं फलं जलम् ॥ सत्यं वा हविरेतेषु यथासम्भवमाचरेत्। प्रतिनिध्यन्तरवत्सत्यं विज्ञेयं हविरत्ययें ॥ प्रधानदेवतोद्देशात् सन्त्यजेत्सत्यमात्मनः। अतोऽन्यदपि वा ग्राह्यं सदृशं धान्यमात्रकम् ॥ न ग्राह्यं सर्वथा माषवरकोदारकोद्रवम्। यद्वा व्रीहियवाभावे तुषतण्डुलयोगिनीः ॥ ओषधीः परिगृह्णीयादणुकोद्रववर्जिताः। ग्राम्याणां वा भवेत् ग्राम्यमारण्यानामरण्यजम् ॥ यवाभावे तु गोधूमास्ततो वेणुयवादयः। इति।

(२) "स्वामी फलयोगात्"। नेत्यनुवर्तते। स्वामी यजमानो न प्रतिनिधेयः। मृते तावत् कः पुरुषान्तरं प्रतिनिदध्यात्, को ऽध्वर्य्वादीन् प्रवर्तयेत्। स्वयं प्रवर्तमानेषु च तेषु न मृतस्याकर्तुः फलं सिध्यति। यदि तु प्रतिनिहितो दक्षिणादानं द्रव्यत्यागं च करोति; तदा तस्य सम्यक्फलसम्बन्धान्मुख्य एव स्वामी स्यान्न

स्वामी यजमानः । यः स्वद्रव्यपरित्यागेन फलं साधयति तस्य यद्यन्यः प्रतिनिधीयते स एव तत्कर्मफलेन युज्यते न पूर्वः । अतो न तस्यार्थे वर्त्तते । तस्मात्स्वामिनोऽप्यप्रतिनिधानम् ॥ ९ ॥

एवं सर्वत्राप्यप्रतिनिधाने प्राप्ते आह—

( यजमानस्य गुणकार्ये प्रतिनिधिर्भवत्येव । )

## गुणेषु प्रतिनिधिः परार्थत्वात् ॥ १० ॥

पात्रासादनाद्याज्यावेक्षणादिषु गुणपदार्थेषु स्वाम्यपि प्रतिनिधीयते । कुत एतत् । परार्थौ ह्यसौ । न तत्र प्रधानवत्स्वार्थं साधयति । तस्मात्क्रत्वर्थाभिनिर्वृत्तये स्वाम्यपि प्रतिनिधीयते ॥ १० ॥

---

प्रतिनिधिः । पत्नी त्वस्वतन्त्रा ऽनग्निश्च मृते पत्यौ पुरुषान्तरं प्रतिनिधाय प्रयोक्ष्यतीत्यनाशङ्कनीयमेव । प्रोषिते अन्यत्र व्यापृते वा यजमाने ये तावत् क्रत्वर्था आज्यावेक्षणादयः तेषु यथासमाख्यमध्वर्य्वादय एव कर्तारो विद्यन्त इति न प्रतिनिधिना कार्यम् । पुरुषसंस्काराणां च ऋत्विग्वरणादीनां क्रत्वर्थत्वात् विनाऽपि यजमानेन नास्ति वैगुण्यम्, पत्न्या अपि तदनुष्ठानसम्भवात् । यानि च ब्रह्मचर्यादीनि फलं प्रति योग्यतायाः कारणानि तानि बहिरवस्थितेनापि यजमानेन क्रियमाणानि क्रतोरुपकारकाण्येव । तस्मात् वेदबन्धनाज्यावेक्षणादावध्वर्य्वादेर्विद्यमानत्वादितरत्र ब्रह्मचर्यादावसम्भवात्प्रतिनिधेरनुपपन्नो यजमानप्रतिनिधिः । कुतः ? फलयोगात् । न हि पुरुषान्तरेण क्रियमाणानि ब्रह्मचर्यादीनि यजमानस्य फलयोग्यतां सम्पादयन्तीत्यसम्भवः प्रतिनिधेः । तस्मान्न प्रवासादिनाऽपचरिते स्वामिनि तत्स्थाने स्वाम्यन्तरं प्रतिनिधेयमिति ।

ननु पत्न्यां मृतायां किमस्ति प्रतिनिधिरुत नेति ? । नायमस्याधिकरणस्य विषयः । तदापि हि यदा तावत् "भार्यायै पूर्वमारिण्यै दत्वाऽग्नीनन्त्यकर्मणि" इत्ययं पक्षः समाश्रीयते तदाऽग्न्यभावादेवानधिकारः सिद्धः । यदा तु नाग्नयः पत्न्यै दत्ताः तदाऽप्याचारप्रामाण्यान्नापत्नीकस्य दर्शपूर्णमासाद्यनुष्ठानम् । अग्निहोत्रमात्रं तु वचनादनुष्ठीयते । तदापि "अपत्नीकोऽप्यग्निमाहरेत्" इति वचनान्नास्ति पत्न्याः प्रतिनिधिरिति तन्त्ररत्ने इति देवयाज्ञिकाः ।

( सत्रेषु वचनात्स्वामी प्रतिनिधीयते । )

सत्रेषु तु श्रुतेः ॥ ११ ॥

सत्रेषु पुनः स्वामी श्रवणादेव प्रतिनिधीयते । "अथ यदि संदीक्षितानां कश्चित्प्रमीयते तस्य यो नेदिष्ठी स्यात्तमुपदीक्ष्य तेन सह यजेरन्" इति श्रुतेः(१) ॥ ११ ॥

( सत्रेषु प्रतिनिहितस्य नेदिष्ठिनो यजमानसंस्कारयोगः । )

स तद्धर्मा कर्मयोगात् ॥ १२ ॥

स नेदिष्ठी चिन्त्यते—यजमानधर्मैर्युज्यते, उत न युज्यते इति ? । अयजमानत्वान्न युज्यते इत्येवं प्राप्ते ब्रूमः । स तद्धर्मा । स नेदिष्ठी तद्धर्मा स्यात् । कुत एतत् । कर्मयोगात् । यजमानकर्मणा हि तस्य योगः । तद्धर्मसंस्कृतेन तत्कर्मानुष्ठानं कृतम्, अयमपि तद्धर्मसंस्कृत एव करिष्यतीति(२) ॥ १२ ॥

इदं विचार्यते-किं सत्राणि ब्राह्मणानामेव भवन्ति उत त्रयाणामपि वर्णानामिति । वैद्यत्वात् त्रयाणामपि वर्णानामिति प्राप्ते आह—

( सत्रेषु ब्राह्मणानामेवाधिकारः । )

सत्राणि ब्राह्मणानामृत्विक्श्रुतेः ॥ १३ ॥

ब्राह्मणानामेव सत्राणि न क्षत्रियवैश्ययोरिति । कुत एतत् । ऋत्विक्श्रवणात् । "ये ऋत्विजस्ते यजमाना" इति श्रुतेः । न चर्त्विजो यजमाना भवन्ति ।

---

( १ ) काम्यमपि यत् प्रारब्धं तदवश्यं समापनीयमित्युक्तम्, आवश्यकत्वाच्च यथाशक्ति प्रयोक्तव्यम् । अतो यद्यपि 'ये यजमानास्तऋत्विज' इति यजमानशब्दस्य स्वामिभूतकर्तृवचनत्वात् एकशब्दोपात्तयोश्च स्वामिकर्तृत्वयोरार्त्विज्योद्देशेन विधिसम्भवात् स्वामिभिरेवार्त्विज्यं कर्तव्यम्, तथापि स्वामिगता सप्तदशादिसंख्या तत्राङ्गम्, तया विना च वैगुण्यम्, अतस्तत्सम्पादनाय पुरुषान्तरं प्रतिनिधेयमिति भावः ।

( २ ) तथाच "सप्तदशावराः सत्रमासीरन्" इति शास्त्रमनुगृहीतं भवति, इतरथा संस्कृताः षोडशैवेति शास्त्रबाधः स्यात् ।

परकीये कर्मणि यः प्रवर्त्तते स ऋत्विगित्युच्यते। तेनानेन प्रकारेण ऋत्विजां यजमानसंस्कारा विधीयन्त इति।

गौण्या वृत्त्या एवमृत्विजां यजमानत्वं भवति। एवं च सति यजमानसंस्कारेभ्यो ऽदृष्टपरिकल्पनम्।

तेनान्यथा वर्ण्यते–ऋत्विक्शब्देनार्त्विजीनान्पदार्थाननूद्य तत्कर्तृत्वेन यजमानानां विधानम्। एवं दृष्टार्थता भवति। प्रत्याम्नानाच्च ऋत्विजो निवर्त्तन्ते। नन्वेवमपि ऋत्विक्शब्देन गौण्या वृत्त्या तत्कर्माभिधानम्। सत्यमेवम्। इतरस्मिन्पक्षे गौणी वृत्तिरदृष्टपरिकल्पना चेति। तस्मादृत्विक्पदार्थेषु यजमानानां कर्तृत्वेन विधानम्।एवं सति येन क्रियमाणा आर्त्विजीनाः पदार्थाः सगुणा भवन्ति तस्यैवाधिकार इति। तस्माद् ब्राह्मणानामेवाधिकारः सत्रेषु ॥१३॥

( एककल्पानामेव सत्रेऽधिकारः। )

## एककल्पानामवैगुण्यात् ॥ १४ ॥

तानि चैककल्पानां भवन्ति। एकः कल्पो येषां तनूनपाद्याजित्वं नाराशंसयाजित्वं वा तेषां सत्रेऽधिकारः। एवमवैगुण्यं भवति(१) ॥ १४ ॥

यद्येवं तुल्यप्रमाणानां भवन्तु। एवमपि हि श्रूयते–"यजमानसम्मितौदुम्बरी कार्या"इति। यस्यैव यजमानस्य प्रमाणं नोपसंह्रियते तस्यैव वैगुण्यं स्यादिति। एवमाशङ्किते आह—

( अतुल्यप्रमाणानामपि सत्रेऽधिकारः। )

## न परार्थत्वात् ॥ १५ ॥

नातुल्यप्रमाणकैर्वैगुण्यं भवति। परार्थो हि यजमानोऽत्र, न तनूनपाद्याजित्ववत्स्वार्थार्थता। तत्र तनूनपाद्याजिनां नाराशंसेन वैगुण्यं, नाराशंसानां च तनूनपातेति। इह पुनर्न तथा। इह हि यजमानसम्मितौदुम्बरी कार्या। सा च येन केनचिद्यजमानेन सम्मि-

---

(१) अयमर्थः–वसिष्ठादीनां नाराशंस एव यज्ञाङ्गम्, तद्युक्त एव क्रतुः फलसिद्धौ पर्याप्तो भवति, एवं तनूनपाद्युक्त एवेतरेषाम्। अत एककल्पानामेव सहाधिकारो न भिन्नकल्पानामिति सिद्धम्।

ता भवतीति । तस्माद्वैषम्यं तनूनपातेति (१) ॥ १५ ॥

( सत्रसम्बन्धिगृहपतिकार्येऽपि क्षत्रियादीनामनधिकारः । )

वैश्यराजन्ययोर्गार्हपते ॥ १६ ॥

यद्यार्त्विजीनेषु पदार्थेषु क्षत्रियवैश्ययोरनधिकारः, गार्हपते तर्हि पदार्थेऽधिकारोऽस्त्वित्येवमाशङ्किते अधस्तनसूत्रान्नेति प्रतिषेधोऽपकृष्यते । गार्हपतेऽपि पदार्थे वैश्यराजन्ययोर्नाधिकारः । कुत एतत् । विषमो हि तयोर्ब्रह्मसामकल्पः–"बार्हदङ्गिरं ब्राह्मणस्य ब्रह्मसाम कुर्यात्, पार्थुरश्मँ राजन्यस्य, रायोवाजीयं वैश्यस्य" इति । तेनेतरेणेतरस्य वैगुण्यमितरस्य चेतरेणेति । तस्माद् गृहपतित्वेनापि वैश्यराजन्ययोर्नाधिकारः ॥ १६ ॥

प्रक्रान्तेषु सत्त्रेषु तद्विषयमेव चिन्त्यते । अस्ति सहस्रसंवत्सरं सत्त्रम् । किं तन्मनुष्याणां भवति केन चित्प्रकारेण उत न भवतीति । किं तावत्प्राप्तम् । सूत्रेणैव पक्षः—

( संवत्सरशब्दस्य दिनपरत्वात्सहस्रसंवत्सरसत्रे मनुष्याणामेवाधिकारः )

(२)सहस्रसंवत्सरममनुष्याणामसम्भवात् ॥ १७ ॥

---

(१) नन्वेवमग्नीनामपि परार्थत्वाद्यस्य कस्य चिदग्निषु साधितं कर्म सर्वेषां फलसाधकं भविष्यतीत्यनाहिताग्नीनामप्यधिकारः सत्रेषु भवतीति प्राप्ते उच्यते । "दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेत" इत्यस्य प्रकृतितः प्राप्तेः 'य एतेनानिष्ट्वा' इति वचनादकृतदर्शपूर्णमासज्योतिष्टोमानामनाहिताग्नीनां नास्ति सत्रेष्वधिकारः । तथाऽग्न्योऽन्याधानगतात्मनेपदादनाधातॄणां न कार्यसिद्धौ पर्याप्नुवन्तीत्यनाहिताग्नीनामनधिकारः । आदधीतेत्यात्मनेपदाद्धि आधातुरेवाधानफलेन भवितव्यम्, कर्मयोग्यता चाग्नीनां फलम्, अतोऽन्येनाहिता अन्यस्य कर्म न साधयन्ति । यजमानेन सम्मितौदुम्बरी कार्येति तु शास्त्रार्थो येन केनचिदपि प्रयोगगतेन यजमानेन सम्पाद्यत इति वैषम्यम् ।

(२) पञ्चविंशतिब्राह्मणे श्रूयते–"पञ्च पञ्चाशतस्त्रिवृतः संवत्सराः,

अमनुष्याणामिति पर्युदासे सति देवानां स्यात् । ते च पूर्वं निराकृताः "मनुष्याणां वाऽऽरम्भसामर्थ्यात्" इत्यत्र । तस्मान्नञः प्रतिषेधार्थता वर्ण्यते । अमनुष्याणामिति मनुष्याणां न भवति इत्येतदुक्तं भवति । तथाचोत्तरसूत्रे मनुष्यविषयैवाभ्यनुज्ञा "स्याद्देहानित्यत्वात्" इति । किमिति मनुष्याणां न भवति । तदायुष्ट्वस्यासम्भवात् । न हि सहस्रायुषो मनुष्याः सन्ति(१) ॥ १७ ॥

## (२)स्याद्देहानित्यत्वात् ॥ १८ ॥

भवेद्वा सहस्रसंवत्सरं मनुष्याणामेव । कुत एतत् । देहानित्यत्वादिति । न हि नियतपरिमाणं मनुष्याणामायुरिति । कश्चिच्छतं वर्षाणि जीवति, कश्चिदभ्यधिकतरम्, अपरिमितायुषो मनुष्या इति ॥ १८ ॥

## (३)तस्य च कार्यत्वात् ॥ १९ ॥

क्रियते ह्यायुरायुषः प्रापकेण कर्मणा । यथा "मित्रविन्दा श्री-राष्ट्र-

---

पञ्च पञ्चाशतः पञ्चदशाः, पञ्च पञ्चाशतः सप्तदशाः, पञ्च पञ्चाशत एकविंशा विश्वसृजाᳬ सहस्रसंवत्सरम्" इति । तत्र सन्देहः किमयं सहस्रसंवत्सरशब्दो मुख्य उत गौणः ? । यदाऽपि मुख्यस्तदापि किं मनुष्यव्यतिरिक्तानां स्वतःसहस्रायुषां गन्धर्वादीनामधिकारः, उत मनुष्याणामेव रसायनमित्रविन्दादिसम्पादितसहस्रायुषाम, अथवा कुलकल्पः, अथवा साम्युत्थानम्, अथवा विश्वसृजामयनं कुर्वतां सहस्रायुष्ट्वम्, अथवाऽर्धतृतीयशतानां यजमानानामधिकारः ? । यदाऽपि गौणत्वम् तदाऽपि किं मासेषु संवत्सरशब्दः, उत द्वादशरात्रिषु, उत दिवसेषु ? इति पक्षाः । तत्र प्रथमं पक्षं तावदाह ।

(१)अतः श्रुतिबलादमनुष्याणां गन्धर्वादीनामाधिकार इति भावः ।

(२)गन्धर्वादीनामनधिकारित्वस्य पूर्वं व्यवस्थापनात्, 'वसन्ते ब्राह्मण' इत्यादिना मनुष्याणामेव वैतानाग्निमत्त्वात्, साकल्येन यथोदितानुष्ठानकर्तृत्वाच्च मनुष्याणामेवाधिकार इत्याशयवान् आह ।

(३)ननु मनुष्यदेहस्यानित्यत्वेऽपि सहस्रायुष्ट्वं तेषां कथं सम्भवतीत्यत आह ।

मित्रायुष्कामस्य" इति मित्रविन्दया आयुर्भवतीति गम्यते। तथा च काठके "आयुष्कामस्यामृतचरुः" इति ॥ १९ ॥

(१) नासम्भवात् ॥ २० ॥

न हि तत्प्रापकेण कर्मणा सहस्रायुष्ट्वं भवति (२)। प्रायशः शतायुष्ट्वमेव मनुष्याणामनूद्यते "शतायुर्वै पुरुष" इति(३) ॥ २० ॥

शास्त्रसम्भवादिति भारद्वाजः ॥ २१ ॥

अस्ति हि शास्त्रम् आयुषोऽभिवृद्ध्यर्थं "मित्राविन्दया आयुष्कामो यजेत" इति। न च तत्रायुषः परिमाणमुक्तम्। भविष्यति कश्चित्कर्माभ्यासेन सहस्रायुरिति(४) ॥ २१ ॥

नादर्शनात् ॥ २२ ॥

नैतदेवम्—सहस्रपरिमाणमायुः कर्मणा क्रियत इति। नैवंविधं वाक्यमस्ति। आयुर्दीर्घं भवतीत्येतावद् गम्यते। न च दृश्यन्ते सहस्रायुषो मनुष्याः। कथं तर्ह्यायुष्प्रापकाणि कर्माणि विहिना-

---

(१) एवं रसायनैर्मित्रविन्दादिभिरायुष्प्रापकैः कर्मभिश्च मनुष्या अपि दीर्घमायुः प्राप्स्यन्तीत्याशङ्क्याह।

(२) अयमभिप्रायः—न हि रसायनादेः सहस्रायुष्ट्वस्य च सम्बन्धो दृष्टचरः, नापि रसायनादीनां तथाविधं सामर्थ्यं दृष्टं, येन मनुष्याः सहस्रं वर्षाणि जीवेयुः। एभिर्जाठरोऽग्निरभिवर्धते, वलीपलितादयो नश्यन्ति, स्वरवर्णमेधादीनां जननं भवतीतात्येतावदेव कल्पयितुं शक्यते न सहस्रायुष्ट्वम्।

(३) ननु शतान्यायूंष्यस्येति विग्रहः करिष्यते। नैवम्। न हि द्विवचनबहुवचनान्ताभ्यां समास इष्यते। प्रमाणाभावात्, अभिधानासामर्थ्याच्च। नन्वेवमेकत्वेऽपि प्रमाणाभावात्तेन कथं विग्रहः। उच्यते। एकत्वं जात्यपेक्षं प्रातिपदिकाभिहिता जातिरेकेति। यद्वा जातिराश्रयमन्तरेणानुपपद्यमाना एकं तावदाश्रयमाक्षिपतीत्येकत्वसिद्धिरिति दिक्।

(४) नच 'शतायुर्वै पुरुष' इत्यनेन विरोधः। तस्य शतस्तावकत्वादिति गृहाण।

नि । उच्यते । अपमृत्युनिरासार्थानि तानि । अपमृत्युनाऽपि मरणं भवति । आथर्वणे पठ्यते "एकशतमपमृत्यूनाम्" इति । तेनैकं परमायुस्तदुल्लङ्घनं कर्मणाऽपि न शक्यते कर्त्तुम् । तस्मादपमृत्युजयार्थान्यायुष्प्रापकाणि कर्माणि । तथा चाह—"मर्त्याः पितरः, पुरा ह्यायुषो म्रियते यस्तद्धाऽऽधत्ते" इति (श० ब्रा० २ । १ । ३ । ४.) परमायुषः पूर्वमपि अपमृत्युना मरणं दर्शयति । तथा चापपुनर्मृत्युं जयति सर्वमायुरियादिति । तथा च मानवे "कथं मृत्युः प्रभवति" इत्युक्त्वा—

"अनभ्यासेन वेदानामाचारस्य च वर्जनात् ।
आलस्यादन्नदोषाच्च मृत्युर्विप्रान् जिघांसति" इत्याह—

अपमृत्युनाऽपि मरणं भवतीत्यमुमर्थं ज्ञापयति । अतः सहस्रायुष्कस्यासम्भवादित्युक्तम् ॥ २२

## (१)कुलसत्त्रमिति कार्ष्णाजिनिः(२) ॥ २३

यजमानकुलीनाः परिसमापयिष्यन्त्येतत्सत्त्रम् । तच्च पैतृकरिक्थन्यायेन । न ह्यत्रान्या गतिरस्ति ॥ २३ ॥

## (३)साम्युत्थानमिति लौगाक्षिः ॥ २४ ॥

कार्ष्णाजिनिपक्षनिराकरणार्थमेतत्सूत्रम् । कुलसत्रं कैश्चिदारब्धं केचित्समापयिष्यन्ति । न चावयवात्फलमिष्यते । यद्येवं, वरं साम्युत्थानमेव ॥ २४ ॥

(४)सर्वथैतदपि नोपपद्यते अत आह—

---

(१)कुलस्य पितृ-पुत्र-पौत्रादेः सत्रं कुलसत्रमिति विग्रहः ।

(२)कार्ष्णाजिनिराचार्यः कुलसत्रङ्करणीयमिति मन्यते ।

(३)वस्तुतस्तु 'शास्त्रफलं प्रयोक्तरि' इति न्यायात् सकलानुष्ठातृणामेव फलं नैकदेशानुष्ठातृणाम् । न च कुलसत्रम् एकेन सकलं कृतम् । अतो विफलमनुष्ठानं स्यात् । न च तद्युक्तमिति चतुर्थः साम्युत्थानपक्षोऽस्त्वित्यत आह ।

सामिशब्दोऽर्धांशार्थे, अर्धसमाप्ते सत्रे उत्थानं त्यागः साम्युत्थानमिति । 'सामि त्वर्धे जुगुप्सिते' इत्यमरोक्तेः ।

(४)वस्तुतस्तु अयमप्यनुपपन्न एव, असमाप्तात् कर्मणः फलानुत्पत्तेः ।

अह्नां वा शक्यत्वात् ॥ २५ ॥

अह्नां वैतत्सहस्रमङ्गीकर्त्तव्यम, न संवत्सराणाम् । अशक्यत्वात् । मुख्यार्थासम्भवे च गौणी वृत्तिराश्रीयते । तेन संवत्सरशब्दो

---

तर्हि सत्रावधायकवचनबलादेव सत्त्रिणां दीर्घायुर्भविष्यतीति पञ्चमः पक्षोऽस्तु । मैवम् । न ह्यस्य वचनस्य सोऽर्थः सम्भवति । तद्वाचकपदाभावात् । न च कल्पयितुं शक्यते, सम्भावितायुष्काणामपि सत्रान्तरेषु प्रवृत्तानां दैवान्म्रियमाणानां तत्सत्रावाधबलादायुर्वृद्ध्यदर्शनात् ।

तर्हि 'पञ्च पञ्चाशत' इत्यस्य पुरुषपरत्वमङ्गीकृत्य सार्धद्विशतानां पुरुषाणामधिकारेऽभिहिते संवत्सरचतुष्टयेन सहस्रसंवत्सरत्वं सम्पद्यते । यत एकोऽपि त्रिवृत्स्तोमकयागयुक्तः पञ्चपञ्चाशत्संख्यैर्यजमानैः प्रत्येकं कर्तृभूतैः सम्बध्यमानस्तत्संख्यो भवति तथा पञ्चदशादयोऽपीति । तेन चतुःसंवत्सरमिदं सत्रमधंतृतीयैर्यजमानशतैः क्रियमाणं सहस्रसंवत्सरम्भवतीति षष्ठः पक्षोऽस्तु ।

सोऽप्यनुपपन्नः । 'चतुर्विंशतिपरमाः सत्रमासीरन्' इति वचनादधिकानां तत्राधिकाराभावात् । संख्याशब्दसंवत्सरशब्दयोर्मध्ये अन्यतरस्य गौणत्वमाश्रित्य मनुष्याधिकार आश्रयणीयः । तत्रापि संख्याशब्दस्य मुख्यत्वादेकार्थनिश्चयसामर्थ्याच्च न स्वार्थत्यागः । संवत्सरपदं तु जघन्यत्वात् सावन-सौर-चान्द्र-नाक्षत्राद्यनेकार्थसाधारणत्वेनार्थनिश्चयासामर्थ्यात् गौणं भवति । तर्हि "यो मासः स संवत्सर" इति वचनात्संवत्सरशब्दस्य मासपरत्वे सति सहस्रमासमेतत्सत्रमिति सप्तमः पक्षोऽस्तु ।

सोऽपि नोपपद्यते । यतः अष्टमे वर्षे उपनीतो द्वादश वर्षाणि वेदमधीत्य विंशतिवयस्को विवाहं कृत्वा जातपुत्रोऽग्नीनादधीत, तस्मादाधानादूर्ध्वं ज्योतिष्टोमानुष्ठानोत्तरकालमस्यायुषि न सम्भवन्ति सहस्रमासाः ।

ननु तर्हि "संवत्सरप्रतिमा वै द्वादश रात्रय" इति प्रयोगाद् द्वादशरात्रिषु संवत्सरशब्दः । प्रतिमाविशेषणं तत्र संवत्सरशब्दः, न तस्य द्वादशरात्रिषु प्रयोगः । तस्मादष्टमः पक्षोऽप्ययुक्त इत्याशयेनोक्तं 'सर्वथैतदपि नोपपद्यते' इति ।

गौण्या वृत्त्याऽहर्विषयः(१) ॥ २५ ॥

संख्यायाः कस्माद् गौणी वृत्तिर्नाश्रीयतेऽत आह—

श्रुतिसामर्थ्यात् ॥ २६ ॥

श्रुत्या हि संवत्सरशब्दोऽहर्विषयः प्रदर्शितः "अहर्वै संवत्सरः" इति(२)। तस्मादह्नां सहस्रमङ्गीकर्त्तव्यम् ॥ २६ ॥

प्रकृत्यनुग्रहाच्च ॥ २७ ॥

एवं च प्रकृतिरनुगृहीता भवति । प्रकृतौ हि द्वादशाहे अहानि संख्येयानि, इहापि तद्वदेव संख्यायोग इति ॥ २७ ॥

इति कर्काचार्यकृतकातीयश्रौतसूत्रभाष्ये षष्ठी काण्डिका ।

अत्रेदं विचार्यते । प्रधानकर्मणां यौगपद्ये सहप्रयोगे सति किमङ्गकर्मणां तन्त्रम् उत प्रतिप्रधानमावृत्तिरिति । प्रतिप्रधानमावृत्तिरिति ब्रूमः । प्रधानानि बहूनि । प्रत्येकं चाङ्गवत्ता सम्पादनीया । न चानावृत्तैरङ्गैरसौ सम्पद्यते । तस्मात्प्रतिप्रधानमावृत्तिरित्येवं प्राप्ते उच्यते ।

( प्रधानकर्मणां सहप्रयोगे प्रयाजाद्यङ्गकर्मणां तन्त्रम् । )

कर्मणां युगपद्भावस्तन्त्रम् ॥ १ ॥

प्रधानानां सहप्रयोगे सत्यङ्गानां तन्त्रं सकृत्क्रिया ॥ १ ॥

कुत एतत्—

---

(१) यथा त्रिवृत् पञ्चदशः सप्तदश इत्येते शब्दाः स्तोमवाचकाः सन्तः स्तोमयुक्ते एकैकस्मिन्नहनि यागरूपे लक्षणया वर्तन्ते,नत्वहःसङ्घे क्वचिदपि त्रिवृदादिशब्दाः प्रयुक्ताः । तैश्च शब्दैः सामानाधिकरण्यात् संवत्सरशब्दः स्वावयवभूते अहनि तथैव लक्षणया वर्तत इति भवति तस्याहःपरत्वमिति तत्त्वम् ।

(२) उपलक्षणमिदम् । "आदित्यस्त्वेव सर्वऋतवो यदैवोदेत्यथ वसन्तो, यदा सङ्गवोऽथ ग्रीष्मो, यदा मध्यन्दिनोऽथ वर्षाः, यदाऽपराह्णोऽथ शरद्, यदैवास्तमेत्यथ हेमन्तः" इत्यत्रापि श्रुतौ दिनपरत्वं स्पष्टमिति भावः ।

शक्य–पुरुषार्थकृतत्वैकार्थसमवायश्रुतिभ्यः ॥ २ ॥

युक्तं यत्प्रधानकर्मणां सहप्रयोगे सत्यङ्गानां सकृत् क्रियेति। कुत एतत्। शक्यत्वात्। शक्यते ह्यदृष्टोपकारिणाऽङ्गेनानेकेषामुपकर्तुम्। अगृह्यमाणविशेषत्वात् प्रदीपवत् (१)।

पुरुषार्थकृतत्वाच्च। प्रधानान्यङ्गवन्ति कर्त्तव्यानीति पुरुषार्थः, सकृत् कृतैरेवासौ कृत एव भवति।

एकार्थसमवायश्रुतेश्च। एकस्मिन्नर्थे फले बहुभिः प्रधानैः साध्ये अङ्गानां समवायश्रुतिर्भवति–"ता एकविंशतिराहुतयो द्वावाघारौ, पञ्चप्रयाजा, द्वावाज्यभागौ, आग्नेयः पुरोडाशस्तद्दश, अग्नीषोमीय उपांशुयाजो, ऽग्नीषोमीयः पुरोडाशो, ऽग्निः स्विष्टकृद्, इडा, त्रयोऽनुयाजाः, सूक्तवाकश्च, शंयोर्वाकश्च, अथ यदेवादः पत्नीसंयाजेषु सम्प्रगृह्णाति, समिष्टयजुश्चेति आहुतीनामेकविंशतिसंख्या दृश्यते। सा च तन्त्रपक्षे भवति। इतरथा आहुतिशब्दो लक्षणया तद्विधिपर एव स्यात्।

अपरेऽन्यथा वर्णयन्त्येतत्सूत्रम्। शक्यपुरुषार्थत्वात। शक्यते हि सकृत्कृतेनाप्यनेन बहूनामुपकर्तुम् पुरुषार्थवत्, यथा पुरुषार्थेन प्रदीपेनेति। अपि च। कृतमप्यङ्गं यदि पुनः क्रियते तत् कृतत्वादेकार्थवत्कृतं भवति। यथा प्रदीप एव कृतः पुनः क्रियते। समवायस्तूक्त एव। अतः सहप्रयोगे प्रधानानामङ्गानां सकृत् क्रियेति ॥ २ ॥

सह प्रयोग एव प्रधानानां कुतः—

फल–कर्म–देश–काल–द्रव्य–देवतागुण-सामान्ये(२) ॥ ३ ॥

---

(१) यथा एक एव प्रदीपो बहूनां मध्ये कृतः सन् सर्वेषामुपकरोति, यथा वा षट्सु भावनासु लिङ्पदेनैव कथम्भावमपेक्षमाणास्वपि सकृदाम्नाता एवाङ्गविधयः षण्णामपि प्रत्येकमङ्गानि समर्पयन्ति तथेदमिति भावः।

(२) सामान्यशब्दस्य द्वन्द्वान्तत्वात् प्रत्येकं सम्बन्धः। तथा च फलसामान्ये कर्मसामान्ये देशसामान्ये कालसामान्ये द्रव्यसामान्ये देवतागुणयोः सामान्ये च सह प्रयोग इति भवति सूत्रार्थः।

यत्रैकेन प्रयोगवचनेन बहूनि प्रधानान्युपादाय फले विधीयन्ते तत्र सहप्रयोगः । इतरेतरसव्यपेक्षाणि हि तानि विहितानि । यथा "वैश्वदेवेन प्रजाकामं याजयेत्"इति । तत्र वैश्वदेवशब्देन समुदायवचनेनाष्टानां हविषां सहत्वम्, यदि च तेषां कर्मापि समानं भवति पञ्चप्रयाजता ऽयनुयाजतेत्येवमादि । भिन्नाङ्गकर्मणां सहप्रयोगे सतीतरेतरवैगुण्यं स्यात् । देशसामान्ये च सहप्रयोगो, न भिन्नदेशानाम् । अशक्यत्वात् । कालसामान्येऽप्येवम् । परिक्रयद्रव्यसामान्ये च सहप्रयोगो युक्तः, यथा त्रिसंयुक्तेषु "त्रयाणां वामनत्रयाणां श्यामत्रयाणां बभ्रुः"इति । देवतासामान्ये पुनः समानमुच्चारणम् । यथा सप्तदशसु प्राजापत्येष्वनुवाचने प्रैषे च । यदि च तासां देवतानां गुणो ऽपि समानो भवति यथा तत्रैवोपांशुत्वम् । गुणभेदे पुनरशक्यं सहोच्चारणम् । यथोपांशुयाजदेवताऽग्नीषोमयोः, पुरोडाशाग्नीषोमयोश्च ॥ ३ ॥

( श्री–राष्ट्रादिफलादिभेदे मित्रविन्दाग्नेयादीनां भेदः । )

## तद्भेदे भेदः ॥ ४ ॥

तेषामेव सहत्वकारणानां यत्र भेदस्तत्र सहत्वं न भवति । यथा (१)मित्रविन्दाप्रतिकामाग्नेययोः प्रयोगवचनभेदात् भेदः । कर्मभेदेऽपि भेदो भवति, यथा कस्यचित्पञ्चप्रयाजता कस्यचिन्नवप्रयाजता । तत्र सहत्वे इतरेतरवैगुण्यमापद्यते । देशभेदेऽपि भेदो भवति, यथा वरुणप्रघासेषु मारुत्याः । कालभेदेऽपि दर्शस्य पौर्णमासस्य च सहत्वं भिद्यते । द्रव्यभेदेऽपि त्रयाणां त्रिसंयुक्तानां भेदः ॥ ४ ॥

सहत्वे प्रधानानामङ्गानां तन्त्रमुक्तम् । क्वचित्तयोः सङ्गतिरेव नास्ति । यथा वैश्वदेवे देशो विरुध्यते । प्रधानानां प्राचीनप्रवणो देशः "प्राचीनप्रवणे वैश्वदेवेन यजेत" इति । तदङ्गानां समो देशश्चोदकप्राप्त्या "समे दर्शपूर्णमासाभ्यां यजेत" इति । तेनाङ्गप्र-

---

(१)श्री–राष्ट्रादिभिन्नाभिन्नफलेच्छयाऽनुष्ठीयमानयोर्मित्रविन्देष्ट्यन्तर्गतयोराग्नेययोस्तत्तत्फलकप्रयोगवचनभेदाद्भेद इत्यर्थः । फलभेदे प्रयोगवचनभेदश्च पूर्वाचार्यैर्दर्शितः–"यथा च मित्रविन्दाया अनेकार्थत्वमीरितम् । एकैकफलभेदेन प्रयोगवचनः पृथक्" ॥ इति ।

धानानामसङ्गतिरत्र । कालोऽपि चात्र विरुध्यते, प्रधानानां पश्चान्तः कालः तदङ्गानां पश्चादिरिति । एतदालोच्य सूत्रितम्—

( साङ्गवैश्वदेवादेरेव प्राचीनप्रवणादिदेशादिविधानान्नाङ्गकालविरोधः । )

(१)देशकालौ विरोधे न कृत्स्नोपदेशात् ॥ ५ ॥

कृत्स्नं ह्येतत्कर्म साङ्गं देशे काले च विधीयत इति । न ह्यङ्गरहितस्य प्रधानस्य पृथग्वचनम् ।

"देशकालौ विरोधे" इत्येतत्सूत्रमपरेऽन्यथा वर्णयन्ति । किं प्रयोगवचनैकत्वे सति कर्मादीनि सर्वाणि सहत्वविरोधकानि उत देशकालावेवेति ? । "तद्भेदे भेद" इत्युक्तत्वात्सर्वाणीत्येवं प्राप्ते आह—

देशकालावेव विरोधकौ न कर्मादीनि । शाब्दो हि सहप्रयोगः । कर्मादीनामशाब्दता । तेन वैश्वदेवे कर्मभेदेऽपि सति अष्टानां हविषां सहत्वम् । कथं कर्मभेद इति चेत् । पयस्यायाः सान्नाय्यपयोविध्यन्तेन वृधन्वन्तता प्राप्नोति । इतरेषां पौर्णमासविध्यन्तेन वार्त्रघ्नता । शब्दबलीयस्त्वात्सहप्रयोगः । द्रव्यभेदेऽपि शुनासीरीये परिक्रयभेदेऽपि प्रयोगवचनैकत्वात्सहप्रयोगः । तस्माद्देशकालावेव सहप्रयोगस्य विरोधकौ प्रयोगवचनैकत्वे सति न कर्मादीनि । एतस्यां व्याख्यायां "न कृत्स्नोपदेशात्" इति सूत्रं पूर्वपक्षमुत्थाप्य पूर्ववद्व्याख्येयम् ॥ ५ ॥

---

(१)देवयाज्ञिकैरेतत्सूत्रं द्विधा कृतम्, "देशकालौ विरोधे" "न कृत्स्नोपदेशात्" इति । तत्र "देशकालौ विरोधे" इत्यस्य देशकालौ तन्त्रस्य विरोधकाविति, प्रतिप्रधानं भिद्येते इत्यर्थः । एवञ्च यस्यामेव पूर्णिमायाम् आग्नेयानुष्ठानं न तस्यामेवाग्नीषोमीयस्य । न च षड्भिः पर्वभिर्दर्शपौर्णमासानुष्ठानमेवं सति स्यात् इति वाच्यम् । इष्टापत्तेः । एवं देशस्यापि । तथा च न तयोस्तन्त्रमिति पूर्वपक्षे "न कृत्स्नोपदेशात्" । नैतदेवं प्रतिप्रधानं देशकालयोरावृत्तिः । कस्मात् । कृत्स्नसाङ्गप्रधानयागस्य पौर्णमासादौ उपदेशात् । यदा तु एकस्यैवानुष्ठानं न तदा कात्स्न्यं, त्रयाणां देवानां प्राधान्यादिति समाहितम् ।

अस्ति ज्योतिष्टोमः । तत्रोपसत्कालीनः सुब्रह्मण्यानिगदः "त्र्यहे सुत्यामागच्छ" इति । स च चोदकेन द्वादशाहे प्राप्तः । तत्र च द्वादश उपसत्कालीनान्यहानि, द्वादश सौत्यानि । तत्रैतत्सन्दिह्यते-किं सकृत्सुत्या-शब्दोच्चारणम् , उत भेदेन प्रतिसुत्यमिति । कुतः सन्देहः । यदि प्रकृतौ "त्र्यहे सुत्यामागच्छ" इत्यनेन सुत्योपलक्षणं कृतं ततो भेदेन प्रतिसुत्यमुपलक्षणम्, अथ यागसाधनभूतदेवतेन्द्रस्मरणं चिकीर्षितं ततः सकृत् सुत्याशब्दोच्चारणम् । किं तावत्प्राप्तम् ।

सूत्रेणैव पक्षः—

( द्वादशाहादौ 'द्वादशाहे सुत्यामागच्छ' इत्येवं सकृदेव सुब्रह्मण्यानिगदे सुत्योपलक्षणम् । )

## अहर्गणे सुब्रह्मण्यायाः सर्वोपलक्षणं प्रकृतिवत् ॥ ६ ॥

अहर्गणे उपसत्कालीने सुब्रह्मण्यानिगदे सर्वाण्यहानि भेदेनोपलक्षयितव्यानि । एवं प्रकृतिवद्विकृतिः कृता भवति । प्रकृतौ ह्येकं सौत्यमहरासीत्, तदेवोपलक्षितं "त्र्यहे सुत्यामागच्छ" इति, इह द्वादश सौत्यान्यहानि, तत्र च यदेव नोपलक्ष्यते तस्यैवोपलक्षणसंस्कारहानाद्वैगुण्यमापद्यते । तस्माद् 'द्वादशाहे' 'त्रयोदशाहे' इत्येवमादि सर्वेषामुपलक्षणमिति ॥ ६ ॥

एवं प्राप्ते आह—

## तन्त्र कालकर्म प्रत्यहमविधानात् ॥ ७ ॥

लुप्तविभक्तिको निर्देशः । तन्त्रेण उपसत्काले सुत्याशब्दोच्चारणं कर्म । सकृत् सुत्या-शब्दोच्चारणमित्यर्थः । कुत एतत् । प्रत्यहमविधानात् । नह्येवंविधं वाक्यमस्ति 'प्रत्यहमुच्चारणम्' इति । ननु चोदकेन विधानम्, प्रकृतावेकं सौत्यमहस्तदुपलक्षितम् "त्र्यहे सुत्यामागच्छ" इति, विकृतौ बहूनि सौत्यानि, तानि सर्वाण्युपलक्षयितव्यानि । अत्रोच्यते । न हि प्रकृतौ सुत्योपलक्षणं चिकीर्षितम् । न हि तयोपलक्षितया किञ्चित्प्रयोजनमित्यत्राहष्टं परिकल्प्यम् । यागसाधनभूतदेवतेन्द्रस्मरणं चिकीर्षितम् । तच्चोपसत्कालीनानामह्नां निगदद्वारेण 'त्र्यहेऽतीते सुत्यां प्रति भवतेन्द्रागन्तव्यम्' इति । ननु चात्राप्यदृष्टमेव । नहीन्द्र आमन्त्रणं शृणोति, न च श्रुत्वाऽऽगच्छ-

तीति(१)। सत्यमेवेदम्। अनेन प्रकारेण यागसंस्तवोऽयम्। येन सा-धनान्यचेतयमानान्यपि चेतनवत्संस्तूयन्ते यथा "श्रोता ग्रावाणः" इति। न हि ग्रावाणः शृण्वन्ति, संस्तवार्थैतदुच्यते। यथाच "शृ-णोतु देवः सविता हवं मे" इति यागः संस्तूयते एवमनागच्छन्न-पीन्द्र आगच्छतीवाशृण्वन्नपि सविता शृणोतीवेति। यागसंस्तव-नेन च कर्तुरुत्साहसंजननमिति दृष्टो ऽर्थः। स्तुत्योपलक्षणं पुनर्दृष्ट-स्यांशोऽपि नास्तीति ॥ ७ ॥

( एकद्रव्ये कर्मावृत्तौ मन्त्रवचनं सकृत। )

## एकद्रव्ये कर्मावृत्तौ सकृन्मन्त्रवचनं कृतत्वात् ॥ ८ ॥

यत्रैकद्रव्यविषयः कर्मणोऽभ्यासस्तत्र किं प्रतिक्रियं मन्त्राभ्या-वृत्तिरुत सकृन्मन्त्रवचनमिति। क्रियाऽभ्यावृत्तौ तच्छेषस्य मन्त्रस्या-वृत्तिप्राप्तौ सकृदुच्यते। एकद्रव्यविषये कर्मणोऽभ्यासे सकृन्मन्त्रो वक्तव्यः। कुत एतत्। कृतत्वादभिधानसंस्कारस्य। अपि च सा-भ्यासा एकैवेयं क्रियेति। क्रियादौ च मन्त्रवचनमुक्तम् ॥ ८ ॥

उक्तेन न्यायेन हविषो ग्रहणे, बर्हिषो लवने, तस्यैव स्तरणे, आ-ज्यग्रहणे च सकृन्मन्त्रवचने प्राप्त आह—

( हविर्ग्रहणबर्हिस्तरणादौ मन्त्रावृत्तिः। )

## (२)न ग्रहणलवनस्तरणाज्यग्रहणेषु तु ॥ ९ ॥

तु-शब्दोऽवधारणे। ग्रहणादिषु नैव सकृन्मन्त्रवचनम्। न ह्य-त्राभिधानसंस्कारस्य कृतत्वमस्ति। ग्रहणे तावद् यावदेव मुष्टिना गृहीतं तावदेव मन्त्राभिधानेन संस्कृतम्, अन्यद् गृह्यमाणमभिधान-संस्कारसव्यपेक्षमेवेति। लवनस्तरणयोरप्येवम्,आज्यग्रहणे च ॥९॥

( आज्यस्य द्वितीयग्रहणादौ वचनान्मन्त्रनिवृत्तिः। )

## वचनादाज्ये ॥ १० ॥

---

(१)देवतानां विग्रहवत्त्वस्य मीमांसकैरनङ्गीकारात् इन्द्रशब्दस्यै-वात्र देवतात्वम्। न च शब्दस्यामन्त्रणश्रवणमागमनं वा घटत इत्याशयः।

(२)यद्यप्येकः पदार्थो निर्वापादिः तथापि प्रत्यभ्यासं संस्कारभे-

आज्ये वाचनिकी मन्त्रनिवृत्तिरुक्ता उत्तरेषु ग्रहणेषु—"त्रिस्त्रिरेव यजुषा गृह्णीयात्त्रिवृद्धि यज्ञ इति,तदु नु सकृत् सकृदेव" इति ॥१०॥

( अन्त्यमुष्टिग्रहणे च वचनान्मन्त्रनिवृत्तिः । )

## मुष्टौ चोत्तमे ॥ ११ ॥

मुष्टौ चोत्तमे "तूष्णीं चतुर्थम्" इति ॥ ११ ॥

(१)दीक्षितस्यामनोज्ञस्वप्नदर्शने मन्त्रवचनमाम्नातम् । तथा नदीतरणे, अववर्षणे, अमेध्यदर्शने, प्रयाणे च । तत्रैतत्सन्दिह्यते किं युगपदनेकामनोज्ञस्वप्नदर्शने सकृन्मन्त्रवचनमुत भेदेनेति ? । तथा नदीतरणेऽपि च स्रोतसां भेदे किं भेदेन मन्त्रवचनम् उत सकृदिति ? । अववर्षणेऽपिच युगपदनेकधारासन्निपाते किं प्रत्यववर्षणं मन्त्रवचनमुत सकृदिति ? । एवं युगपदनेकामेध्यदर्शने । वनीवाहनप्रयाणेऽपि च किं प्रतिप्रयाणं मन्त्रवचनमुत प्रथमे प्रयाणे इति ।

( अनेकामनोज्ञस्वप्नदर्शनादौ सकृन्मन्त्रवचनम् । )

तत्र प्रत्येकं मन्त्रवचने प्राप्ते आह—

## स्वप्न—नदीतरणाववर्षणामेध्यदर्शन—प्रयाणेषु तु सकृत् कालद्रव्यैकार्थत्वात् ॥ १२ ॥

यथासम्भवं हेतुविभागः । अनेकस्वप्नदर्शने कालैकत्वात् सकृन्मन्त्रवचनम् । नदीतरणे द्रव्यैकत्वात् । स्रोतसाम्भेदेऽप्येकमेव नदीद्रव्यमिति सकृन्मन्त्रः । अववर्षणेऽपि कालैकत्वात् । तथाऽमेध्यदर्शने । प्रयाणेषु तु एकार्थत्वात् । एक एवायमर्थो गमनं नाम । तस्यादावेव मन्त्रवचनं न प्रतिप्रयाणमिति ॥ १२ ॥

अथ यत्र कालभेदेन पुनस्तदेव निमित्तमापतति तत्रापि किं सकृद्वचनमुत भेदेनेति । अभिहितमेव तदिति कृत्वा सकृन्मन्त्रवचने

---

दो भवति, मन्त्रवता निर्वापेण द्रव्यं संस्कर्तव्यम्, अतो यस्मिन्नेव मुष्टौ मन्त्रो नोच्यते तस्यैव मन्त्रकृतेन संस्कारेण हानं स्यात् । कार्यप्रयुक्तो हि संस्कारो न क्रियास्वरूपप्रयुक्तः, कार्यं चात्र भिन्नम् । तस्मात् प्रतिमुष्टि मन्त्रावृत्तिरिति भावः ।

(१)अमनोज्ञः अशुभः ।

प्राप्ते आह—

( कालभेदेन निमित्तप्राप्तौ मन्त्रावृत्तिः । )

न निमित्तभेदात् ॥ १३ ॥

नात्र सकृन्मन्त्रवचनम् । भिद्यते ह्यत्र निमित्तमिति कृत्वा मन्त्राभ्यावृत्तिः ॥ १३ ॥

( आधानादिसंस्कारस्य प्रतिकर्म नावृत्तिः । )

अप्रधानकाले सकृदसन्निपातात् ॥ १४ ॥

अप्रधानकालीनं यदङ्गं, यथा आधानं, तस्य प्रतिकर्म प्राप्तौ सत्यामुच्यते । सकृत्कर्त्तव्यम् । न हि तत्कांचित् कर्मविशेषं सन्निपतितं यस्यापवर्गेऽपवृज्यते(१) । अतः स्वकालत्वात्सकृदेव कर्त्तव्यम् ॥ १४ ॥

( पश्वनेकत्वेऽपि यूपैक्यम् । )

यूपः ॥ १५ ॥

सोऽप्यग्न्याधेयवद् द्रष्टव्यः । सोऽप्यप्रधानकालीन एव "दीक्षासु यूपं छिनत्ति" इति । तस्मात्सोऽपि साधारणः पशुत्रयेऽपि । नन्वग्न्याधेयाधिकरणन्यायेनैव गतार्थत्वादवाच्यमेतत् । "पशवे वै यूपमुच्छ्रयन्ति" इति प्रतिपशुप्राप्ताशङ्कानिवृत्त्यर्थमतिदेशः ॥ १५ ॥

( यूपस्येव स्वरोरैक्यम् । )

स्वरुश्च सꣳस्थावचनात् ॥ १६ ॥

स्वरुरपि यूपवद् अग्नीषोमीयसवनीयानुबन्ध्यानां साधारण एव । कुत एतत् । संस्थावचनात् । संस्थावचनं हि भवति "स्वरुहोमेन हि यूपः संस्थाप्यते" इति । यदि च प्रथममेव हूयेत यूपः साधारणो न भवेत् । तस्मात्सोऽपि यूपवत्साधारणः ॥ १६ ॥

तन्निर्वृत्तेश्च ॥ १७ ॥

अपि च । तत एव यूपात्स्वरुर्निर्वर्त्यते । "तस्य यः प्रथमः शक-

---

(१) अनभिहितकर्मविशेषेण सर्वोद्देशेनाधाने कृते यद्यपि कारणवशात् किञ्चित्कर्म प्रथममापतति तथापि न तादर्थ्यमेव भवति, प्रथमावस्थायामेव सर्वार्थत्वावधारणादिति भावः ।

लः परापनेत् स स्त्ररुः कार्यः" इति समामनन्ति ॥ १७ ॥

दर्शपूर्णमासादिषु कर्मसु चिन्त्यते-किं सर्वं स्वयमेव कर्त्तव्यम् उत किञ्चित्परकर्तृकमपीति ?। फलार्थिनः कर्म चोदितम्, अतस्तेनैव सर्वं कर्त्तव्यमित्येवं प्राप्ते आह—

( दक्षिणाऽऽम्नानात् ऋत्विजां गुणकर्मकर्तृत्वम् । )

(१)कर्माणि पुरुषाणाम् ॥ १८ ॥

अधिकारः । कुत एतत् । परिक्रयाम्नानात् । दृश्यते हि तत्र परिक्रयः "गौर्दक्षिणा हिरण्यं दक्षिणा" इत्येवमादि ॥ १८ ॥

एवं सर्वत्र प्राप्ताविदमुच्यते—

( स्वामिनो द्रव्यपरित्यागादिप्रधानकर्मकर्तृत्वम् । )

प्रधानꣳ स्वामी फलयोगात् ॥ १९ ॥

यत्प्रधानं स्वद्रव्यपरित्यागरूपं(२) तत्स्वामी करोति । फलयुक्तं हि तदिति । तच्च कुर्वन् फलेन युज्यत इति । एकसूत्रमेवेदमपरे वर्णयन्ति—परिक्रयाम्नानात् सर्वत्र पुरुषाणां कर्तृत्वे सति प्रधानं स्वामी करोति । फलयोगादित्युक्तमेव(३) ॥ १९ ॥

किमेतदेव स्वामी करोति । नेत्याह—

---

(१) अत्र परिक्रयाम्नानादिति शेषः । तथाच दर्शपूर्णमासादिकर्माणि होत्रध्वर्य्वादीनां कर्तव्यं भवति, न यजमानस्य परिक्रयाम्नानादिति सूत्रार्थः । न च यजमानस्य साक्षादकर्तृत्वे अर्थिनः साङ्गं कर्तव्यमिति विरोधः । प्रयोजकत्वेनापि तस्य कर्तृत्वोपपत्तेः ।

(२) परसत्तापादनेति प्रमादपाठः । यागे तदसम्भवात् । दाने यजमानकर्तृकत्वस्य च दानवाचनेत्यादिना पुनर्विधानात् ।

(३) ननु च प्रधानसमकर्तृकत्वादङ्गानामपि स एव कर्ता सेत्स्यति । न, तत्र प्रयोजकत्वेनापि कर्तृत्वानुग्रहात् । द्रव्योत्सर्गे ह्यक्रियमाणे न किञ्चित् यजमानेन कृतं स्यादिति तं करोति । न ह्यात्मनेपदेन फलार्थिकर्तृत्वं गम्यते, किं तर्हि भावनाक्षिप्तकर्तृत्वस्य सतः फलसम्बन्धित्वम् । अतश्च फलेन कर्तुरन्यत्र न गन्तव्यम्, न तु फलार्थिनोऽन्येन व्यापारकरणं विरुध्यते । तावता च सिद्धोऽङ्गेष्वनियम इति । अतोऽङ्गेष्वन्यकर्तृकत्वं प्रधाने च स्वामिकर्तृकत्वमिति । अन्ये-

( आशीःप्रार्थनमन्त्रजप-मुण्डनसंस्कारादिकं यजमानकर्तृकम् । )

पुरुषयोगिमन्त्र—संस्कारयोस्त्यागे सामर्थ्यात् ॥ २० ॥

पुरुषयोगी यो मन्त्रः "तनूपा ऽअग्नेऽसि तन्वं मे पाहि" इत्येवमादिः प्रत्यक्षाशीर्युक्तः, यश्चात्मसंस्कारः पावनमुण्डनादिः, तौ द्वावपि त्यागे प्रतिपत्तव्यौ । त्यागशब्देन त्यागाधिकृतो लक्षणया यजमानोऽभिधीयते । यजमानयोगिनौ भवत इत्यर्थः । यजमान एव हि समर्थ आशीःप्रार्थनं कर्तुम् । संस्कारोऽपि च फलप्रतिग्रहयोग्यतापत्त्या यजमानयोग्येव ॥ २० ॥

( वाचानिकशुक्रग्रहान्वारम्भादिकं च यजमानकर्तृकम् । )

वचनादन्यत् ॥ २१ ॥

अन्यद् वचनाद्यजमानस्य भवति । यथा "शुक्रं यजमानोऽन्वारभते" इति । ऋत्विजामपि वचनेन संस्कारो भवति, यथा "हिरण्यमालिनो वाजपेयेन चरन्ति" इति ॥ २१ ॥

( ऋत्विजां समाख्यानुरोधेन कर्मकरणम् )

शेषमितरे यथाऽऽख्यम् ॥ २२ ॥

इतरे स्वामिव्यतिरिक्ताः शेषं यथाख्यं कुर्वन्ति । या यस्याख्येति ॥ २२ ॥

( धृतब्रह्मसूत्राः कर्म कुर्युः )

उपवीतिनः ॥ २३ ॥

कुर्वन्ति । स्मृतेः(१) ॥ २३ ॥

---

ष्वपि कर्म कुर्वत्सु यजमानेन यत्नेन कृताकृतप्रत्यवेक्षणं कर्तव्यमेव । अन्यथा हि ऋत्विजः कर्मकर्तृत्वात्प्रमादेन सर्वं कर्म सावधानतया यथाश्रुतं न कुर्वन्ति, वैगुण्येऽपि तेषां स्वार्थविनाशाभावात् । तदुक्तं भट्टाचार्यैः, "यथैवाध्वर्युणा पदार्थाः कर्तव्यास्तथैव यजमानेनाप्रमादात्स्वार्थं प्रत्यवेक्षितव्या" इति ।

(१) तदुक्तं शाङ्खायनश्रौतसूत्रे "यज्ञोपवीती देवकर्माणि करोति" इति ।

( प्राक्संस्थान्युदक्संस्थानि वा कर्माणि कार्याणि )

प्राञ्च्युदग्वा ॥ २४ ॥

"प्राञ्च्युदञ्चि च कर्माणि सन्तिष्ठेरन्" इति श्रुतेः(१)॥ २४ ॥

( परिभ्रमणपरिस्तरणादीनि च प्रदक्षिणं कार्याणि )

(२)आवृत्तिसामन्तेषु प्रदक्षिणम् ॥ २५ ॥

आवृत्तौ सामन्ते च प्रदक्षिणं, स्मृतेः ॥ २५ ॥

( पित्र्याणि कर्माणि दैवकर्मविपरीतक्रमेण, सकृद् दक्षिणसंस्थानि चानुष्ठेयानि )

(३)विपर्यस्य पित्र्येषु सकृद्दक्षिणा च ॥ २६ ॥

पित्र्येषु कर्मसु विपर्यासेनाप्रदक्षिणं कार्यम् । सकृच्च । यद्भ्यस्तरूपं दैवे स्मर्यते तत्पित्र्ये सकृत्कर्त्तव्यम् । यथा परिसमुह्योपलिप्योल्लेखनम् । (४)दक्षिणाच दिक् । न प्राच्युदीची वा ॥ २६ ॥

---

(१) तथाच श्रुत्यन्तरम्, "तं प्राञ्चमनुसमस्यति प्राची हि देवानां दिगथो ऽउदञ्चमुदीची हि मनुष्याणां दिक्" इति, "तथो हास्यै तत्प्रागेव कर्मकृतं भवति तद्वै प्राङ् निदध्यात् अथोदक् प्राङेव यज्ञोऽनुसन्तिष्ठाता इति तथो हास्योदगेव कर्मानुसन्तिष्ठते" इति च । पात्राणामासादनं दक्षिणत आरभ्योदक्संस्थं, पश्चादारभ्य प्राक्संस्थं वा कार्यम् । परिस्तरणपर्युक्षणादिकमप्युत्तरतः समापनीयम्, त्रिरुल्लेखनाद्यपि एवमेव कर्तव्यम् इति तत्त्वम् ।

(२) सामन्तशब्देन परिस्तरण–पर्युक्षण–नित्यपरिषेक–पदपरिलेख–पिण्डपरिलेखादिकर्म उच्यते । समन्ततो भवं सामन्तम् सार्वत्रिकमिति तद्व्युत्पत्तेः । तथा च श्रूयते "दक्षिणान् बाहूनन्वावर्तन्ते" इति ।

(३) यत् परिस्तरणादि प्रदक्षिणमुक्तं तत् पित्र्ये अप्रदक्षिणम्भवति इति भावः ।

(४)"एषा वै दिक् पितॄणां" ( या दक्षिणा दिक् सा पितॄणाम् ) इति श्रुतेः ।

( क्रियार्थप्रधानद्रव्यनाशे साङ्गावृत्तिः ।)

प्रधानद्रव्यव्यापत्तौ साङ्गावृत्तिस्तदादेशात् ॥ २७ ॥

प्रधानस्य च यत्साधनद्रव्यं तस्य व्यापत्तौ विनाशे साङ्गावृत्तिर्भवति(१)। तेन ह्यादिष्टान्यङ्गानि, तद्विनाशाच्च विनाशमुपगतानि। अपरेऽन्यथा वर्णयन्ति। द्रव्यमेव संस्पर्शिभिरङ्गैः सहावर्त्तते, नारादुपकारकैरपि। तेन तान्यादिष्टानीत्युक्तार्थम् ॥ २७ ॥

इति कर्काचार्यकृतकातीयश्रौतसूत्रभाष्ये सप्तमी कण्डिका।

इदं श्रूयते-"व्रीहिभिर्यजेत यवैर्यजेत" इति। तत्रैतत्सन्दिह्यते-किमुभावपि व्रीहियवौ यागं प्रत्यङ्गभावमुपनेयौ उत विकल्पेनेति ?। किं तावत्प्राप्तम्। सूत्रेणैव पक्षः—

( व्रीहियवयोरन्यतरेण यागानुष्ठानम्।)

गुणानामेकार्थानाᳬं सर्वारम्भश्चोदितत्वात् ॥ १ ॥

ये गुणा एकप्रयोजना यथा व्रीहियवादयस्तैः सर्वैस्तत्कर्मारब्धव्यम्। कुत एतत्। चोदितत्वात्। चोदिता हि ते यागाभिनिर्वृत्ताविति(२)। य एव गुणोऽङ्गभावं नोपनीयते तस्यैव श्रुतिरनर्थिका स्यादिति ॥ १ ॥

एवं प्राप्ते आह—

न कृतत्वात् ॥ २ ॥

नैतदेवं सर्वैस्तत्कर्मारब्धव्यमिति। किं कारणम्। कृतत्वात्। एकेनैव यदा तत्कर्माष्टाकपालाभिनिर्वृत्तिरूपं निर्वर्तितं भवति तदा द्वितीयोपादानमनर्थकं स्यात्। सर्वे हि ते इतरेतरनिरपेक्षा एव विधीयन्ते ॥ २ ॥

अथ यद्येकेनैव निर्वर्त्तिते यागे द्वितीयश्रुत्यनुग्रहाय यागाभ्यावृत्तिः क्रियते-तत्रैतदुत्तरसूत्रम्—

---

(१) तदुक्तमापस्तम्बेन "यद्यप्रत्तदेवतᳲ हविर्व्यापद्येतान्यद्धविः संस्कृत्य प्रयच्छेद्देवतायै" इति।

(२) तच्चोभयोर्यागसाधनत्वे एवेति भावः।

अनारभ्यत्वात् ॥ ३ ॥

अनारभ्योऽयमर्थः, यदुत गुणानुरोधेन प्रधानाभ्यावृत्तिः । तस्माद्विकल्पः (१) ॥ ३ ॥

दर्शनाच्च ॥ ४ ॥

दृश्यते चायमर्थो यथा व्रीहियवयोर्विकल्प इति । हविरुद्वपनं प्रकृत्य श्रूयते-"वर्षवृद्धा उ ह्येवैते यदि व्रीहयो यदि यवा" इति(२) । अपि च । समुच्चये सति न व्रीहिभिः कृतो भवति न यवैरिति सङ्कीर्णमन्यदेव द्रव्यान्तरं भवति ॥ ४ ॥

श्रुत्यानर्थक्यमिति चेत् ॥ ५ ॥

इति चेत् पश्यसि व्रीहियवयोरेवान्यतरस्य विकल्पेनान्यतरस्य श्रुतिरनर्थिका स्यात् ॥ ५ ॥

कालान्तरेऽर्थवत्त्वं स्यात् ॥ ६ ॥

कालान्तरे द्वितीया श्रुतिः सार्थिका भविष्यति । न ह्येकस्मिन्कर्मणि समुच्चयः सम्भवतीत्येतदुक्तम् (३) ॥ ६ ॥

आघारं प्रकृत्य गुणाः समाम्नाताः । "ऋजुमाघारयति सन्त-

---

(१) न समुच्चय इति हृदयम् ।

(२) ज्योतिष्टोमे हि द्रव्यदेवतासंयोगानामदृष्टानामपर्यायविधानात् प्रकरणेन युगपद्ग्रहणात्सर्वसम्पादनाय युक्तं यदभ्यस्यते, व्रीहियवौ तु द्वाभ्यां वाक्याभ्यामन्योन्यनिरपेक्षौ यागद्रव्यप्रकृतितया विधीयमानौ तद्द्वारेण प्रयोगवचनो गृह्णन् पर्यायेणैव गृह्णाति न युगपत्, येन बलात्प्रधानाभ्यासः स्यात्, अतो विकल्प एव । समुच्चित्य यजने तु वाक्यद्वयमपि बाधितं स्यादिति दिक् ।

(३) तदुक्तं शाखान्तरे "व्रीहिभिरिष्ट्वा व्रीहिभिर्यजेतायवेभ्यो यवैरिष्ट्वा यवैर्यजेताव्रीहिभ्यो दर्शपूर्णमासौ" इति । अतो व्रीह्याग्रयणानन्तरं प्राग्यवाग्रयणात् व्रीहिभिरेव दर्शपूर्णमासयागः, यवाग्रयणानन्तरं प्राग्व्रीह्याग्रयणात् यवैरिति । अत्र दर्शपूर्णमासावित्यनेन दर्शपूर्णमासयोरेवायं द्रव्यनियम उक्तः, तेनान्यासु विकृतिषु नायं द्रव्यनियम इति धूर्तस्वामिनः ।

तमाघारयति दीर्घमाघारयति प्राञ्चमाघारयति" इति। तेषामेककार्यत्वादुक्तेन न्यायेन विकल्पे प्राप्ते आह—

( ऋजुत्वादिधर्माणामाघारे समुच्चयः )

## धर्ममात्रेषु समुच्चयोऽविरोधे ॥ ७ ॥

ये गुणा धर्ममात्राः तेषां समुच्चयः। कुत एतत्। अविरोधे हि ते वर्त्तन्ते। कथम्। ऋजु सन्ततं न विरुणद्धि, न च संततं दीर्घं, न च दीर्घं प्राञ्चम्। प्रतिनियतानि ह्यदृष्टानि। तस्मादृज्वादीनां समुच्चयः। ननूक्तमेककार्यत्वादिति। सत्यं परमेकं कार्यम्, अवान्तरकार्याणि तु भिन्नानि। यदृजुना क्रियते न तत्सन्ततेन, यत्सन्ततेन न तद् दीर्घेण, यद् दीर्घेण न तत्प्राञ्चेति ॥ ७ ॥

होत्राधानयोः क्रियमाणानुवादिनामग्निमन्थनप्रणयनादिषु होतृकाणाम् आधानमन्त्राणां च भूर्भुवः स्वरिति किमेषां समुच्चय, उत विकल्प इति? । मन्त्राणां क्रियाभिधायकत्वं तत्साधनाभिधायकत्वं च दृष्टं प्रयोजनमिति विकल्पे प्राप्ते आह—

( होतृकाधानमन्त्राणां समुच्चयः )

## होत्राधानयोः ॥ ८ ॥

होतृकाणां मन्त्राणाम् अधस्तनसूत्रोपात्तः समुच्चयोऽनुकृष्यते। यत्कारणमदृष्टार्था हि ते क्रियमाणानुवादिनः। करणमन्त्राणां च विकल्प इष्यते। दृष्टार्थत्वात्। क्रियमाणानुवादिनस्त्वदृष्टार्था इति समुच्चयः(१)। आधानमन्त्राणां तु समुच्चयो वाचनिकः "त्रिभिरक्षरैर्गार्हपत्यमादधाति पञ्चभिराहवनीयम्" इति ॥ ८ ॥

सर्वत्र होतृकाणां समुच्चये प्राप्ते आह—

( होतृकाणां याज्याऽनुवाक्यामन्त्राणां न समुच्चयः। )

## न याज्यानुवाक्यासु विरोधात् ॥ ९ ॥

एकस्मिन् प्रकरणे याज्यानुवाक्यालक्षणयुक्तानां समुच्चयो न भवति। देवतास्मरणार्था ह्यनुवाक्या। हविःसमर्पणार्था च याज्या।

---

(१) तथाच श्रुतिः "त्रिः प्रथमामन्वाह त्रिरुत्तमाम्" "आग्नेयीरन्वाह" "एकादशान्वाह नवान्वाह दशान्वाह"इत्यादि।

अतो दृष्टार्थत्वाद्विकल्पः । तथाचाह "ह्वयति वा अनुवाक्यया प्रयच्छति याज्यया" इति ॥ ९ ॥

## दर्शनाच्च ॥ १० ॥

दृश्यते चायमर्थो यथा याज्यानुवाक्यायास्तु न समुच्चयः । प्राजापत्यान्प्रकृत्यामनन्ति "एकानुवाक्या भवत्येका याज्यैकदेवत्या हि" इति । देवतैकत्वं हेतुं ब्रुवन् याज्यानुवाक्ययोरेकत्वं च प्रदर्शयति । तथा पितृयज्ञे पुरोनुवाक्यां प्रकृत्यामनन्ति "एकया वै देवान्प्रच्यावयन्ति द्वाभ्यां पितॄन्" इति अनुवाक्याद्वित्वविधिपरे वाक्ये एकत्वं दर्शयति (१) ॥ १० ॥

(एकस्मिन् कर्मणि आम्नातानामनेकप्रायश्चित्तानां समुच्चयः ।)

## प्रायश्चित्तेषु दोषनाशात् ॥ ११ ॥

एकस्मिन् कर्मणि प्रायश्चित्तबहुत्वे आम्नाते(२) किं समुच्चय, उत विकल्प इति । विकल्प इति ब्रूमः । कुतः । दोषनिर्घातार्थं हि प्रायश्चित्तं भवति । दोषदर्शने हि सति तदाम्नायते । ततस्तन्निर्हृतिरेव प्रयोजनं, तेन विकल्प्यते(३) ॥ ११ ॥

---

(१) एवमेव महापितृयज्ञे पुरोऽनुवाक्याप्रस्तावे "स द्वे पुरोऽनुवाक्ये अन्वाहैकया वै देवान् प्रच्यावयन्ति द्वाभ्यां पितॄन्" इत्यत्र पुरोऽनुवाक्याद्वित्वविधिपरे वाक्येऽन्यत्रैकत्वं सिद्धं दर्शयति । तस्मादत्रापि विकल्प एवेति भावः ।

(२) "यो ऽमावास्यां पौर्णमासीं वाऽतिपातयेदग्नये पथिकृते ऽष्टाकपालं पुरोडाशं निर्वपेत्" "यो ऽमावास्यां पौर्णमासीं वाऽतिपातयेद्वैश्वानरन्द्वादशकपालं निर्वपेत्" इत्यादिना बोधिते इत्यर्थः ।

(३) अयमभिप्रायः, वैगुण्यं निमित्तीकृत्य वाक्येन विधीयमानानि प्रायश्चित्तानि वैगुण्यनाशाय प्रत्येकं समर्थानि विज्ञायन्ते । तेषां विकल्पसमुच्चयविचारे अदृष्टार्थत्वात्समुच्चये प्राप्ते एकैकेन वाक्येन निरपेक्षविधानाद् द्वारैक्याद्विकल्प एव न समुच्चयः । तदुक्तं द्वादशाध्याये तृतीयपादे चतुर्दशसूत्रे जैमिनिना "प्रायश्चित्तेषु चैकार्थ्यान्निष्पन्नेनाभिसंयोगस्तस्मात्सर्वस्य निर्घात" इति ।

एकेन च निर्हृते दोषे द्वितीयमनर्थकमित्येवं प्राप्ते आह—

नाश्रुतेः ॥ १२ ॥

प्रायश्चित्ते कृते दोषः प्रयातीति नैवं श्रुतिरस्ति ॥ १२ ॥

प्रत्यक्षाच्च ॥ १३ ॥

प्रत्यक्षेणापि दोषनिर्घातो न दृश्यते । "भिन्ने जुहोति स्कन्ने जुहोति" इति कृतेऽपि होमे न भिन्नमभिन्नं भवति । न च स्कन्नमस्कन्नम् । अतो धर्ममात्रं, तस्मात्समुच्चयः ॥ १३ ॥

स्याद्वा दर्शनात् ॥ १४ ॥

भवेद्वा केषुचित्प्रायश्चित्तेषु दोषनिर्घातार्थता, यथा महाव्याहृतिहोमेषु । दोषनिर्घातो ह्यत्र दृश्यते "स यथा पर्वणा पर्व सन्दध्यादेवꣳ हैव स सन्दधाति य एताभिर्भिषज्यति" इति सन्धानमेवञ्चे दर्शयति ॥ १४ ॥

---

अस्यार्थः, प्रायश्चित्तेषु विकल्पः स्यात्, कुतः । एकार्थ्यात् । कथमेकार्थ्यम् । यत एकेषां निष्पन्नेन दोषेण केवलस्य तस्याभिसंयोगो "यद्यृक्तो यज्ञ आर्त्तिमियाद् भूः स्वाहेति गार्हपत्ये जुहुयात्" इति, तस्मात् सर्वस्य दोषस्यैकेन निर्घातः । एकेन चान्निर्हृते दोषस्तर्हि द्वितीयादीनि प्रयोगान्तरार्थानि भवन्ति । एवं स्मार्तेष्वपि द्रष्टव्यम् । तत्र द्वितीयं सूत्रम् "समुच्चयस्त्वदृष्टार्थेषु (१२. ३. २५) । यानि पुनर्न दोषनिर्घातार्थानि तेषु समुच्चयः । कानि पुनस्तानि । यानि न शिष्टस्याक्रियायां प्रतिषिद्धस्य करणे वा विधीयन्ते, यथा "यस्याहुतमग्निहोत्रꣳ सूर्योऽभ्युदियान्मैत्रं चरुं निर्वपेत् सौर्यमेककपालम्" तथा "यस्याहुतमग्निहोत्रꣳ सूर्योऽभ्युदियादग्निꣳ समाधाय वाचं नियम्य दम्पती सर्वाहमुपासीयाताम्" इति । यत्र दोषो न दृश्यते दोषस्याभावान्निर्घातार्थता च नास्ति, केवलमभ्युदये निमित्ते कर्म विधीयते तन्नैमित्तिकं कर्मणः प्रकरणे उत्पन्नत्वात् कर्माङ्गं विज्ञायते । तत्र यावन्ति चोद्यन्ते तानि सर्वाणि प्रयोगवचनेन सङ्गृह्यन्ते । अतस्तेषां समुच्चयः । तदेवं जैमिनेः सिद्धान्तः—प्रमादापतितस्य वैगुण्यस्य समाधानार्थानां विकल्पः, निमित्ते सति कर्माङ्गाणां समुच्चय इति सङ्क्षेपः ।

एवं प्राप्ते आह—

नान्यार्थत्वात् ॥ १५ ॥

नैतदेवं सन्धानभैषज्ये दृष्ट्वा विकल्प इति । किं कारणम् । अन्यार्थं होत । किमर्थं इति चेत् । महाव्याहृतिस्तुत्यर्थे, इत्थं नाम प्रशस्तो महाव्याहृतिहोमो येन सन्धानभैषज्ये क्रियेते । तस्माददृष्टार्थत्वम्(१) ॥ १५ ॥

इदानीमिदं विचार्यते । कर्मणि प्रयुज्यमानानां मन्त्राणां किं यथाम्नातस्वरेण प्रयोगः, उत भाषिकस्वरेण भाषिकस्वरो ब्राह्मणस्वरः, आहोस्विदेकश्रुत्या तानेनेति ? । किं तावत्प्राप्तम् । सूत्रेणैव पक्षः—

( कर्मणि जपादिवर्जं मन्त्राणामेकश्रुतिः )

मन्त्रे स्वरक्रिया यथाम्नातमविशेषात् ॥ १६ ॥

कर्माणि प्रयुज्यमाने मन्त्रे आम्नातस्वरेण प्रयोगः । कुत एतत् । अविशेषात् । न विशेषोऽवस्रातुं शक्यते अनेन स्वरेण अनेन वा प्रयोग इति । तस्मात्समाम्नायस्वरः ॥ १६ ॥

---

(१) अपरा व्याख्या "स्याद्वा दर्शनात्" । प्रायश्चित्तानि द्विविधानि-कानि चिद्वैगुण्यस्य प्रमादापातितस्य समाधानार्थानि, कानि चिन्निमित्ते कर्माङ्गाणि । तत्र यानि वैगुण्यसमाधानार्थानि तेषु दोषनिर्घातः स्यात् । कुतः । दर्शनात् । "स यथा पर्वणा" इत्यादिना तदुक्तम् । एकेन च निर्हते दोषे न द्वितीयस्य प्रयोजनमित्येकमेव किञ्चिद्विकल्पेन कर्तव्यमिति सिद्धान्तः । एवमेव सर्वेषु प्राप्ते आह "नान्यार्थत्वात्" । यानि प्रायश्चित्तानि न दोषनिर्घातार्थानि किन्तु भेदनादिनिमित्ते सति कर्माङ्गाणि तेषु दोषेऽसति न तन्निर्घातार्थता । कुतः । अन्यार्थत्वात् । तत्र हि न प्रायश्चित्तस्य विनष्टसमाधानं कार्यम् । किञ्च स एवार्थो दृष्टः, न च होमादिना भिन्नं स्कन्नं वा अभिन्नमस्कन्नं च कर्तुं शक्यते, अत एवंविधे निमित्ते यानि विधीयन्ते तान्यदृष्टार्थान्येव, तस्मात्तेषु समुच्चय इति । एवं च जैमिनिसिद्धान्तेनाविरोधि व्याख्यानं भवति, अतो युक्तमेवेति दिक् ।

एवं प्राप्ते आह—

भाषिकस्वरो वोपपन्नमन्त्रोपदेशात् ॥ १७ ॥

वा-शब्दः पक्षव्यावृत्तौ। भाषिकस्वरो वा भवति। ब्राह्मणस्वरः न मन्त्रस्वरः। कुत एतत्। उपपन्नस्वरस्यैव मन्त्रस्य विद्यमानस्वरस्य ब्राह्मणे स्वरान्तरेणोपदेशो भवति। तस्माद्भाषिकस्वर इति ॥ १७ ॥

एवं प्राप्ते आह—

(१)तानो वा नित्यत्वात् ॥ १८ ॥

वा-शब्दः पक्षान्तरपरिग्रहे। नैतदस्ति यद्भाषिकस्वर इति। तानेन प्रयोगः एकश्रुत्या प्रयोग इत्यर्थः ॥ १८ ॥

कुत एतत्—

एकश्रुति दूरात्सम्बुद्धौ यज्ञकर्मणि सुब्रह्मण्या-साम-जप-न्यूङ्ख-याजमानवर्जम् ॥ १९ ॥

स्मर्यते ह्येवम्-"एकश्रुति दूरात्सम्बुद्धौ" इति वर्त्तमाने "यज्ञकर्मण्यजपन्यूङ्खसामसु" इति(२)। एवमादिवर्जितानां मन्त्राणाम् एकश्रुत्या तानेन प्रयोगः। ननु चेयं स्मृतिः, श्रुत्या च मन्त्रप्रयोगः स्वरान्तरेणोच्यते। नैव श्रुतिर्मन्त्रप्रयोगार्था। "तं प्रथयत्युरुप्रथा

---

(१) तान एकश्रुतिरित्यर्थः। यत्र ब्राह्मणे मन्त्रे स्वर उपलभ्यते स तन्मन्त्रपूर्वोत्तरभागे भाषिकस्वरस्य प्रवृत्तत्वात् तन्मन्त्रेऽप्यविच्छेदार्थम्।

(२) "सुब्रह्मण्योमिन्द्रागच्छ" इत्यादिर्निगदः सुब्रह्मण्या, सामानि उद्गातृभिर्यज्ञे गीयमानानि, जपाश्च-"धूरसि", "इन्द्रस्य बाहुरसि" "मयीदम्" इत्याद्याः "जपति" इति शब्देन चोदिता मन्त्राः, न्यूङ्खास्तु पृष्ठ्ये षडहे होतृवेदे प्रसिद्धा ओकारा द्वादश "पिबा सोममिन्द्र मन्दतु त्वा यं तो ओ ओ ओ ओ ३ ओ ओ ओ ओ ३ ओ ओ ओ ओ ३ "सुषाव हर्यश्वाद्रिः" इत्यादयः, याजमानं च सर्वं विष्णुक्रमणादिकम् तत्सम्बन्धिनो ये मन्त्राः "दिविविष्णुः" इत्याद्याः, एषु नैकश्रुतिर्भवतीति सूत्रस्य हृदयम्।

उरुप्रथस्वेति" प्रयोगवचनेनोपसंगृहीतत्वात् । लिङ्गेन प्रथने प्राप्नोत्येव, तत्र श्रुतिरर्थवादार्था "उरु ते यज्ञपतिः प्रथताम्" इति । प्रशस्तमेतत्प्रथनं येन यज्ञपतिरपि प्रजया पशुभिश्च प्रथत इति । अपि च नित्या स्मृतिरविच्छिन्नपारम्पर्यात् । अथ वा नित्यत्वादिति–नित्यं वैदिकं वचनं स्मृतीनां मूलमित्येवं स्मृतेर्नित्यत्वम् ॥ १९ ॥

आधाने श्रूयते "षड् देया द्वादश देया" इत्येवमादि । तत्र सन्देहः । किं दानसंयोगे संख्या विकल्प्यते उत समुच्चीयत इति ? । सर्वासामाम्नातत्वात्समुच्चये प्राप्ते आह—

( आम्नातानेकसंख्याकदक्षिणानां विकल्पः )

## संख्याविकल्पो दानसंयोगे कृतत्वात् ॥ २० ॥

दानसंयोगे या संख्या श्रूयते सा विकल्पेन भवितुमर्हति । कुत एतत् । एकेन संख्याविशेषेणानत्यर्थस्य निर्वर्तितत्वात् । आनत्यर्थञ्चैतद्दानं न धर्ममात्रम् । "स एष यज्ञो हतो न ददक्षे तं देवा दक्षिणाभिरदक्षयन्" इति प्रकृत्यामनन्ति "ता वै षड् दद्यात्" इत्येवमादि ॥ २० ॥

अस्त्यग्नीषोमीयः पशुः तत्र श्रूयते "श्वभ्र ऊवध्यमवदधाति । वसां जुहोति । अध्यूध्नीं होत्रे प्रयच्छति । वनिष्ठुमग्नीधे प्रयच्छति" इति । तच्च चोदकेन पञ्चपश्वादिपशुगणे प्राप्तम् । तत्र सन्देहः—किमूवध्यादीनां समुच्चयः, उत विकल्प इति ? । किं तावत्प्रतिभाति । एकेनैव द्रव्येण तस्याः क्रियाया निर्वर्तितत्वाद्विकल्पे प्राप्ते आह—

( पशुगणे द्रव्यार्थक्रियाणां वसाहोमादीनां समुच्चयः )

## ऊवध्य–वसा–ऽध्यूध्नी–वनिष्ठुषु समुच्चयो द्रव्यसंस्कारतद्भेदाभ्याम् ॥ २१ ॥

ऊवध्यादिषु समुच्चयो न विकल्पः । कुत एतत् । द्रव्याणि हि तया क्रियया संस्क्रियन्ते प्रतिपाद्यन्ते । नात्र द्रव्यं क्रियार्थं, क्रियैव द्रव्यार्थेति क्रियानिर्वृत्त्युत्तरकालं चरितार्थस्य द्रव्यस्य प्रतिपत्तिः संस्कारः । संस्कार्याणि च भिन्नानि । यस्यैव पशोः शेषसंस्कारो

न क्रियते तस्यैव संस्कारहानाद्वैगुण्यमापद्यते। तस्मात्समुच्चय(१) इति। भूतभव्यसमुच्चारणन्यायेन द्रव्यमन्यत्र क्रियार्थम्, एकेनैव च क्रियाया निर्वर्त्तितत्वान्न द्वितीयेन प्रयोजनमिति ॥ २१ ॥

ज्योतिष्टोमे क्रयं प्रकृत्यामनन्ति "हिरण्येन क्रीणाति। वाससा क्रीणाति। गवा क्रीणाति" इत्येवमादि। तत्रैतत्सन्दिह्यते–किं क्रयचोदनागुणेषु समुच्चयः, उत विकल्प इति? किं तावत्प्राप्तम्। इतरेतरनिरपेक्षत्वाद्दक्षिणासंख्याविकल्पवत् विकल्पप्राप्ताविदमाह–

( सोमक्रयसाधनानां हिरण्यादीनां समुच्चयः )

चोदनागुणेषु च प्रक्लृप्त्युपबन्धाभ्याम् ॥ २२ ॥

अधस्तनसूत्रोपात्तसमुच्चयानुकर्षणार्थः च-शब्दः। क्रयचोदनागुणेषु समुच्चयो न विकल्पः। प्रक्लृप्ते एव हि सोमे विद्यमाने कर्ममध्ये क्रयश्चोदितः। तेनास्य धर्ममात्रता। न ह्ययमप्राप्तस्य सोमस्य परिप्रापणार्थः क्रयः। धर्ममात्रत्वाद्यथा चोदितः तथा कार्यः। चोदना च सर्वद्रव्याणाम्। तस्मात्समुच्चयः। अपि च संख्यैवोपबध्यते–"तं वै दशभिरेव क्रीणीयान्नादशभिः" इति ॥ २२ ॥

( गार्हपत्याहवनीययोर्मध्ये न गच्छेत्, नचोदपात्रादिकं नयेत् )

(२)गार्हपत्याहवनीयौ न व्यवेयात ॥ २३ ॥

अर्थलक्षणेषु सञ्चरणेषु ॥ २३ ॥

( प्रदक्षिणमप्रदक्षिणं वाऽऽवृत्येतरथावृत्तिः )

(३)विवृत्यावृत्य वेतरथावृत्तिः ॥ २४ ॥

विवर्त्तनमप्रदक्षिणम्। आवर्त्तनं प्रदक्षिणम्। एते शास्त्रतः कृत्वा इतरथावृत्तिः कार्या ॥ २४ ॥

---

( १ ) उपलक्षणमिदं गुदजाघन्यादिष्वपि समुच्चयस्य।

( २ ) विना वचनं गार्हपत्याहवनीयौ न व्यवेयात् तयोर्व्यवायं न कुर्यात, तयोरन्तरालेन न गच्छेत्। नापि स्फ्योदपात्रादिकमन्तरालेन नयेदित्यर्थः।

( ३ ) विवृत्य–अप्रदक्षिणमावृत्य, आवृत्य–आवर्तनं कृत्वा प्रदक्षिणमावृत्य वा इतरथावृत्तिः प्रत्यावृत्तिः कर्तव्येत्यर्थः।

(विहितपदार्थानुष्ठानानन्तरं प्रवेशमार्गेण निष्क्रमणम्)

अतीत्य निष्क्रमणम् ॥ २५ ॥

यत्र सञ्चरणमार्गेण शालाप्रविष्टः, यथा अन्तरेणापराग्नी गत्वा व्रतग्रहणे, तत्र तत्पदार्थाभिनिर्वृत्त्युत्तरकालमतीत्य तेनैव मार्गेण निष्क्रमणम् ॥ २५ ॥

(अग्न्यायतनादुत्तरतः कर्मणोऽनुष्ठानम्)

(१)उत्तरतउपचारो यज्ञः ॥ २६ ॥

"उत्तरतउपचारो वै यज्ञः" इति श्रुतेः । अनियतदेशस्य कर्मणो देशोऽयम् ॥ २६ ॥

(वचनाद् ब्रह्मयजमानयोर्दक्षिणत उपवेशनम्)

दक्षिणतो ब्रह्मयजमानयोरासने ॥ २७ ॥

भवतः । "ब्रह्मा वै यज्ञस्य दक्षिणत आस्ते" इति वचनात् । "अथ हैपैव तुला यद्दक्षिणो वेद्यन्त" इति प्रकृत्य "तस्माद्दक्षिणं वेद्यन्तमधिस्पृश्येवासीत" इति ॥ २७ ॥—

(यजमानस्य ब्रह्मणः पश्चादुपवेशनम्)

पश्चाद्यजमानो वेदिस्पृक् ॥ २८ ॥

ब्रह्मणः पश्चाद्यजमानो वेदिसंलग्न आस्ते(२) ॥ २८ ॥

(यजुर्वेदविहितस्य कर्मणोऽध्वर्युकर्तृकत्वम्)

अध्वर्युः कर्मसु वेदयोगात् ॥ २९ ॥

अध्वर्युवेदविहितस्य कर्मणश्चत्वार ऋत्विजः कर्त्तारः । तेषाम-

---

(१) यज्ञ उत्तरतउपचारो भवति, उत्तरतः विहारादुत्तरदेशे उपचरणं कर्मकरणं यस्यासावुत्तरतउपचारः, सर्वं कर्म विहारादुत्तरदेशे कर्तव्यमित्यर्थः ।

(२) तथाच श्रुतिः, "अथ हैपैव तुला यद्दक्षिणो वेद्यन्तः स यत्साधु करोति तदन्तर्वेद्यथ यदसाधु तद् बहिर्वेदि तस्माद्दक्षिणं वेद्यन्तमधिस्पृश्येवासीत" इति ।

गृहीतकर्तृके कर्मण्यध्वर्युः कर्त्ता । कुत एतत् । वेदयोगात् । अध्वर्युणा हि वेदो युज्यते । समाख्यायते "अध्वर्युवेद" इति । यदि तद्वेदविहितानामध्वर्युः कर्त्ता तदेतदुपपद्यते ॥ २९ ॥

( यजुर्वेदविहितकर्मणोऽग्नीदादिकर्तृकत्वं काचित्कम् )

## (१)वचनविरोधाभ्यामन्यः ॥ ३० ॥

तद्यथा "प्रतिप्रस्थाता मन्थिनं जुहोति" इति वचनात् । विरोधादपि पेषणोपधानयोर्युगपद्विधानेऽग्नीत् ॥ ३० ॥

( हविरादीनामन्तरङ्गबहिरङ्गभावः )

## (२)हविष्पात्रस्वाम्यृत्विजां पूर्वं पूर्वमन्तरम् ॥३१॥

समावेशे सत्युत्तरमुत्तरं बहिर्भवति पूर्वं पूर्वमन्तरं भवति ॥३१॥

## (३) ऋत्विजां च यथापूर्वम् ॥ ३२ ॥

ऋत्विजां च यथापूर्व-समावेशे सत्युत्तरमुत्तरं बहिर्भवति पूर्वं पूर्वमन्तरं भवति ॥ ३२ ॥

## न वाचोदितत्वात् ॥ ३३ ॥

न वाऽयमन्तर्बहिर्भावो भवति । न ह्यस्य ब्राह्मणे चोदनेति । एवमभिहिते पुनराधीतेन व्याख्यायते । अचोदितत्वात् नायमन्तर्बहिर्भावः स्याद्यदि न स्मर्येत । स्मर्यते च । तस्मादस्त्येवेति(४) ॥ ३३ ॥

---

( १ ) वचनाद्विरोधाच्चाध्वर्योरन्योऽपि यजुर्वेदविहितस्य कर्मणः कर्ता भवतीति सूत्रार्थः ।

( २ ) हवींषि च पात्राणि च स्वामी च ऋत्विजश्च हविष्पात्रस्वाम्यृत्विजः तेषाम् ।

( ३ ) चकाराद्धविषां, तत्पात्राणां, सत्र—गणयागादौ स्वामिनां चैवमन्तर्बहिर्भावो ज्ञेयः ।

( ४ ) तद्यथा "तामन्तरेण यूपं चाग्निं च हरन्ति" "प्रत्याहृत्य वा सोमाहवनीययोरव्यवायात्" इत्यादि । अन्तर्बहिर्भावश्चात्राव्यवधिकः । तेन वपा अग्नेरव्यवहिता, यूपस्तु पात्रत्वाद्वपापेक्षया बहिः, प्रतिप्रस्थाता तु ऋत्विक्त्वाद्यूपादपि बहिर्भवतीति भावः ।

( प्रतपनादयः संस्कारा गार्हपत्ये )

गार्हपत्ये संस्काराः ॥ ३४ ॥

(१)प्रतपनादयो भवन्ति ॥ ३४ ॥

( गार्हपत्याहवनीयान्यतरत्र श्रपणम् )

श्रपणं वाऽऽहवनीये ॥ ३५ ॥

आहवनीये वा भवति, गार्हपत्ये वा(२) । एवमेवहिं श्रूयते॥३५॥

"आज्येन यूपं समनक्ति"इति श्रूयते । तत्रैतच्चिन्त्यते–किमाज्यशब्दः संस्कारिनिमित्त उत जातिनिमित्त इति ? । किं तावत्प्राप्तम् । प्रयोगप्राचुर्यात्संस्कारनिमित्त इत्येवं प्राप्ते इदमाह—

( आज्यशब्दो जातिनिमित्तः )

घृतमाज्यं लिङ्गात् ॥ ३६ ॥

आज्ये चोदिते घृतं प्रतीयात् । (३)जातिनिमित्त आज्यशब्दो न संस्कारनिमित्त इति । असंस्कृतेऽपि हि प्रयोगो दृश्यते । क्वथमाज्यं, क्षीणमाज्यं तैलमुपसेचनं वर्त्तते । नन्वयमेकदेशे प्रयोगः । सत्य-

---

( १ ) प्रतपनम् आदिर्येषां ते प्रतपनादयः, तेच अधिश्रयण–पर्यग्निकरण–पात्रप्रतपनादयः । एतेषां संस्काराणां विशेषवचनाभावे गार्हपत्येऽनुष्ठानमित्यर्थः ।

( २ ) आदिविकल्पोऽयम्; नेच्छाविकल्पः । "तच्छापिण" इति तच्छ्रापित्वस्य नियतत्वेनानुवादात् । तदुक्तम् "रूपं कालोऽनुनिर्वाप्यः श्रपणं देवतास्तथा । आदौ ये विधृताः पक्षास्त इमे सर्वदा स्मृताः" इति । रूपं कर्मस्वरूपं दाक्षायणपौर्णमासादिकम् , काल उदितानुदितादिः, अनुनिर्वाप्यो वैमृधादित्यौ, श्रपणं हविःश्रपणं गार्हपत्ये वाऽऽहवनीये वा, देवता ऐन्द्रं भवति माहेन्द्रं वेति । एतेषां विकल्पानां मध्ये यः प्रथमं स्वीकृतः स एव यावज्जीवं कर्तव्यः, न पक्षान्तरम् । एवमेते पञ्चैवादिविकल्पाः । अन्ये सर्वेऽपीच्छाविकल्पा इति दिक् ।

( ३ ) प्रयोजनं "आज्येन यूपमनक्ति" "आज्यमासिच्योद्गात्रे सौम्यं प्रयच्छति" इत्येवमादौ संस्काराभावः ।

मेवम्। एकदेशप्रयोगोऽपि वाचकशक्तिमन्तरेण न भवति। लिङ्गाच्च। लिङ्गं चाश्वमेधे ब्रह्मौदनं प्रकृत्य भवति "यदाज्यमुच्छिष्यते तेन रशनामभ्यञ्ज्यादक्त" इति। असंस्कृतेऽप्याज्यशब्दप्रयोगो भवति। अपरे लिङ्गादिति वर्णयन्ति—लिङ्गाद्द्रव्यमेव भवतीति। आज्यनिर्वापं प्रकृत्यामनन्ति "महीनां पयोऽसि" इति। मह्म इति ह वा एतासामेकं नाम यद् गवामिति(१)॥ ३६॥

( द्रव्यन्तराविधाने आज्येन होमः )

तस्य होमोऽनादेशे ॥ ३७ ॥

तस्येत्यवयवलक्षणा षष्ठी। द्रव्यान्तरस्याविधाने तेन होमः कर्त्तव्यः(२)॥ ३७॥

( पुरीषं चात्वालाद्ग्राह्यम् )

चात्वालात्पुरीषम् ॥ ३८ ॥

यज्ञकर्मणि यत्पुरीषं तच्चात्वालाद् ग्राह्यम्॥ ३८॥

( आज्यसाध्ययागा ध्रौवाज्येनानुष्ठेयाः )

(३)आहवनीययजतयो ध्रुवायाः ॥ ३९ ॥

---

(१) तथाच मण्डनमिश्राः—

"घृतार्थे गोघृतं ग्राह्यं, तदभावे तु माहिषम्।
आज्यं वा, तदभावे तु साक्षात्तैलं ग्रहीष्यते॥
तैलाभावे ग्रहीतव्यं तैलं जार्तिलसम्भवम्।
तदभावेऽतसीस्नेहं, कौसुम्भं, सर्षपोद्भवम्॥
वृक्षस्नेहोऽथवा ग्राह्यः पूर्वालाभे परः परः।
तदभावे यवव्रीहिश्यामाकान्यतरोद्भवम्॥
पिष्टमालोड्य तोयेन घृतार्थे योजयेत् सुधीः।
वृक्षतैलेषु पुन्नागनिम्बैरण्डोद्भवं त्यजेत्" इति॥

(२) तद्यथा "सव्येनावृत्य दक्षिणाग्नौ जुहोत्यग्नय इति सरस्वत्या इति च" इति, "नमः कृतायेति जुहोति" इति च। अत्र सर्वत्राज्येनैव होमो भवति।

(३) आहवनीये ये आज्यहविष्का यागा भवन्ति ते ध्रुवायाः स-

"सर्वस्मै वा एतद्यज्ञाय गृह्यते यद् ध्रुवायामाज्यम्" इति वचनात् । तत्र केचिदुपस्तरणाभिघारणे अपि ध्रौवादेवाज्यादिच्छन्ति, उपस्तरणाभिघारणे अपि यज्ञसाधने एवेति । तत्पुनरयुक्तम् । ह्यवदानसंस्कारके ह्येते न यज्ञसाधने । कुत एतत् । उत्पद्यमान एवायं यागोऽष्टाकपालसाधन एवोत्पन्नः "आग्नेयोऽष्टाकपालो भवति" इत्यनेन । तत्रान्यद् द्रव्यान्तरं न विकल्प्यते, न समुच्चीयते, न च वैपरीत्येन बाध्यबाधकभावेन वाभिसम्बध्यते । उत्पत्तिगुणविरोधात् । अतो ह्यवदानसंस्कारोऽयम् । तथाचाह "स आज्यस्योपस्तीर्य द्विर्हविषोऽवदायाथोपरिष्टादाज्यस्याभिघारयति सैषाऽऽज्येन मिश्राहुतिर्हूयते" इति । मिश्रणत्वेनाज्यमभिधीयते न यागसाधनत्वेनेति । अथ संस्कारकाण्यपि ध्रौवाद् गृह्यन्ते तदानीं पुरोडाशाभिघारणोपस्तरणप्राणदानादीन्यपि तत एव प्राप्नुवन्ति । अस्तु तथेति चेत् । न, स्थाल्यानर्थक्यात् (१) ॥ ३९ ॥

( इडादीनामपि ध्रौवाज्येनानुष्ठानं केषांचिन्मते )

## इडाप्राशित्राघारांश्चैके ॥ ४० ॥

ध्रौवादेवेच्छन्ति । तत्रापि हि यज्ञसंशब्दनं भवति । "पाकयज्ञिययेव वा एतादिडया ऽचारिषुः" इतीडायाम्, तथा प्राशित्रं प्रकृत्यामनन्ति "तद्यथैव यज्ञस्यावदानमेवमेव तत्" इति, "शिरो वै यज्ञस्यैतयोरन्यतर आघारयोः" इति यज्ञसंशब्दनं भवति । एके तन्नेच्छन्ति । अयज्ञियत्वात् । औपचारिकाण्येतानि यज्ञसंशब्दनानि ॥ ४० ॥

---

काशादाज्यमवदाय कार्या इत्यर्थः । "उपस्तृणन्नभिघारयन्नाज्यस्य यजन्ध्रुवाया गृह्णाति" इति श्रुतौ आज्ययागसाधनत्वेन ध्रौवस्य बोधनात् इति ।

(१) पूर्वाघारपत्नीसंयाजादिषु तत्सार्थक्यमिति चेन्न । आहवनीयसम्बन्धेनैवानर्थक्यावगमात् । पूर्वाघारापवर्गाहुत्योस्तु यथायथं पाक्षिकत्वात् । अयागत्वाच्च । अत एव न ध्रौवाप्यायनेन सार्थक्यम् ।

( आघारौ प्राक्संस्थौ होतव्यौ )

(१)प्राञ्चावाघारौ ॥ ४१ ॥

होतव्यौ ॥ ४१ ॥

( वायव्यनैर्ऋतोपक्रमावाग्नेयैशानसंस्थौ केषांचित् )

(२)विदिशावेके ॥ ४२ ॥

जुह्वति ॥ ४२ ॥

( आहवनीये होमाः )

आहवनीये होमाः श्रुतिसमाख्यानाभ्याम् ॥ ४३ ॥

"यदाहवनीये जुह्वति" इति श्रुतिः । 'आ एत्यैतस्मिन् हूयते' इति आहवनीयसमाख्यानम ॥ ४३ ॥

( दर्शपूर्णमासादिषु जुह्वा होमः )

जुह्वाऽवचने ॥ ४४ ॥

अवचनेऽन्यस्य होमार्थस्य द्रव्यस्य जुह्वा होमः कर्त्तव्यः । कुत एतत् । समाख्यानात् । हूयते ऽनयेति जुहूः । एतच्च दर्शपूर्णमासप्रकरणे एव वेदितव्यं, तद्विध्यन्तग्राहकेषु च । तत्रैव जुहूर्दृष्टेति ॥४४॥

( अवचने सकृद्गृहीतेन होमः )

(३)सकृद्गृहीतार्थावाप्तेः ॥ ४५ ॥

सकृद्गृहीतेन होमः कर्त्तव्यः । सकृद्गृहीतेनैव हि होमार्थाभि-

---

(१) पूर्वाघार उत्तराघारश्चैतौ द्वावप्याघारौ प्राञ्चौ प्राक्संस्थौ होतव्यौ ऋजू सन्ततौ दीर्घौचेति सूत्रार्थः । 'ऋजुमाघारयति' 'सन्ततमाघारयति' 'दीर्घमाघारयति' 'प्राञ्चमाघारयति' इति श्रुतेः । सूत्रे प्राञ्चावित्युक्तिस्तु ऋज्वाद्युपलक्षिकेति भावः ।

(२) एके शाखिनः आघारौ विदिशौ जुह्वति, आहवनीयस्योत्तरश्रोणेरारभ्य दक्षिणांसपर्यन्तं पूर्वाघारम, दक्षिणश्रोणेरारभ्योत्तरांसपर्यन्तमुत्तराघारमिति । तथा च सूत्रान्तरम् "उत्तरपश्चार्धादग्नेरारभ्याविच्छिन्नं दक्षिणतो जुहोति" तथा "दक्षिणपश्चार्धादारभ्याविच्छिन्नमुत्तरतो जुहोति" इति ।

(३) सकृद्गृहीतेति लुप्तविभक्तिको निर्देशः ।

निर्वृत्तिरवासा भवतीति ॥ ४५ ॥

किञ्च—

अवषट्कारातिरेकाच्च ॥ ४६ ॥

अवषट्कारास्वाहुतिषु द्वितीयमेवावदानमतिरिक्तं ज्ञापयति । कथम् । "तद्वै चतुरवत्तं भवतीदं वा अनुवाक्याऽथ याज्याऽथ वषट्कारोऽथ सा देवता चतुर्थी यस्यै देवतायै हविर्भवति" इति प्रकृत्याह "अतिरिक्तः ह तदवदानं यत्पञ्चमम्" इति । तेनावषट्कारास्वाहुतिष्वनुवाक्याद्यभावात्(१)द्वितीयमेवावदानमतिरिक्तमिति ज्ञापितं भवति । तथा "यच्चतुरुन्नैषीर्द्विरहौषीरथ के ते द्वे आहुती" इति द्वयोरतिरिक्ततां दर्शयति ॥ ४६ ॥

इति कर्काचार्यकृतकातीयश्रौतसूत्रभाष्ये अष्टमी कण्डिका समाप्ता ।

( हविषश्चोदनायां व्रीहियवान्यतरोपादानम् )

व्रीहीन्यवान्वा हविषि ॥ १ ॥

हविषि चोदिते व्रीहीन्यवान्वा प्रतीयात् ॥ १ ॥

( देवतोद्देशेन गृहीतस्य द्विस्त्रिर्वाऽवदानम् )

तस्य द्विरवद्यति ॥ २ ॥

तस्य सकलस्यैव देवतोद्देशेन गृहीतस्य होमे प्राप्ते वचनाद्विरवद्यति ॥ २ ॥

त्रिर्जमदग्नीनाम् ॥ ३ ॥

जमदग्नीनां त्रिरवद्येत् । पञ्चावत्तं(२) जमदग्नीनामिति वचनात् ॥ ३ ॥

---

(१) उक्तानुवाक्यादिचतुष्टये एकस्या देवताया एव सद्भावादिति शेषः ।

(२) एवं च यत्र यत्रान्येषां चतुरवत्तमाज्यभागपत्नीसंयाजप्रधानयागादौ तत्र सर्वत्र जमदग्नीनां पञ्चावत्तमेव कर्त्तव्यम् । अग्निहोत्रहोमेऽपि तेषां पञ्चावत्तमेव पठ्यते मानवे "चतुः पञ्चकृत्वो वा" इति । आपस्तम्बोऽपि "त्रिर्जमदग्नीनाम्" इति सूत्रयामास । अत्र जमदग्निपदमुपलक्षणम, अन्येषामपि पञ्चावत्तं स्मर्यते । तथाहि—

( हविषः पश्चाद्भागात्तृतीयमवदानम् )

(१) पश्चात्तृतीयम् ॥ ४ ॥

अवदेयम् ॥ ४ ॥

सर्वेषां वोभयमविधानात् ॥ ५ ॥

सर्वेषां वोभयं भवतीति । चतुरवत्तं पञ्चावत्तं वा । कुत एतत् । अविधानाज्जमदग्नीनां पञ्चावत्तत्वस्य । माध्यन्दिनानां पठ्यते "तद्वै चतुरवत्तं भवति उतो पञ्चावत्तमेव भवति" इति । शाखान्तरे तु "पञ्चावत्तं जमदग्नीनाम्" इति । तेन जमदग्नीनां पञ्चावत्तमेव, इतरेषां चतुरवत्तं पञ्चावत्तं वा ॥ ५ ॥

( हविषो मध्यात्पूर्वार्धाच्चाङ्गुष्ठपर्वमात्रस्यावदानम् )

मध्यात्पूर्वार्द्धाच्चासम्भिन्दन्नङ्गुष्ठपर्वमात्रमवदानम् ॥ ६॥

हविषो मध्यात्पूर्वार्द्धाच्चासम्भिन्दन्नङ्गुष्ठपर्वमात्रमवदानं गृह्णीयात् । असम्भिन्दन्नवदानमर्यादां कुर्वन् । कुत एतत् । अवदानसम्भेदेन हि मर्यादाबाधः । मर्यादाबाधे च मध्यात्पूर्वार्द्धाच्चेत्यस्य बाधः ॥ ६ ॥

( दधिपयसोरपि अङ्गुष्ठपर्वमात्रमवदेयम् )

मात्रावद्दधिपयसोः ॥ ७ ॥

दधिपयसोरपि तन्मात्रमेवावदेयम् (२) ॥ ७ ॥

( अवदानात्प्राक् पश्चाच्चाज्येनोपस्तरणाभिघारणे )

आद्यन्तयोराज्यम् ॥ ८ ॥

कर्त्तव्यमिति शेषः । "स आज्यस्योपस्तीर्य द्विर्हविषोऽवदायाथो-

---

"जमदग्निर्वत्सविदार्ष्टिषेणास्तथैव च ।
पञ्चावत्तिन एतेऽन्ये सर्वे चतुरवत्तिनः" इति ॥

(१) तृतीयमवदानं हविषः पश्चाद्भागादवदेयम् । प्रथमद्वितीये मध्यात्पूर्वार्धादिति वक्ष्यते ।

(२) तयोर्हि द्रवत्वात्स्रुवेणावदानं सामर्थ्यात्; स्रुवपुष्करस्यैतावत्परिमाणत्वादिति भावः ।

परिष्टादाज्यस्याभिघारयति" इति ॥ ८ ॥

( स्विष्टकृते सकृदवदेयम् )

एकमत्यवायं स्विष्टकृतः ॥ ९ ॥

स्विष्टकृतस्त्ववदाने एकमवदानं प्रत्यवैति ॥ ९ ॥

( स्विष्टकृतेऽवत्तस्य द्विरभिघारणम् )

द्विश्चाभिघारणम् ॥ १० ॥

स्विष्टकृत्येव भवति (१) ॥ १० ॥

( स्विष्टकृद्भिन्नावदाने कृते हविषः प्रत्यभिघारणम् )

(२)अवदाय प्रत्यभिघारणं प्राक् स्विष्टकृतः ॥ ११ ॥

"तस्माद्यस्य कस्य च हविषोऽवद्यति पुनरेव तदभिघारयति स्विष्टकृत एव तत्पुनराप्याययति" इति ॥ ११ ॥

( एककपालस्य पुरोडाशस्य सर्वस्यैव होमः )

सर्वहुत एककपालः(३) ॥ १२ ॥

कर्त्तव्यः। द्यावापृथिवीयप्रकृतित्वात्। तत्प्रकृतित्वं च वक्ष्यत्युपरिष्टात् ॥ १२ ॥

( अनुब्रूहीतिप्रैषे चतुर्थ्यन्तं देवतापदं निर्देष्टव्यम् )

(४)अनुवाचनप्रैषो यथादैवतममुष्मा अनुब्रूहीति॥१३॥

---

(१) "सकृदवद्यत्यथोपरिष्टाद्द्विराज्यस्याभिघारयति" "अथास्य चरोः सकृदवद्यत्यथोपरिशिष्टाद्द्विराज्यस्याभिघारयति" इति श्रुतिभ्याम्।

(२) प्रधानार्थं हविषोऽवदानं कृत्वा हविषो यावद्भ्यः प्रदेशेभ्योऽवदानग्रहणं कृतं तत्राज्येन प्रत्यभिघारणं कर्त्तव्यम्, स्विष्टकृतः प्राक्, तस्मिन् कृते तु प्रत्यभिघारणं न कर्त्तव्यम्। तथा च श्रुतिः "तस्मात्" इत्यादि।

(३) "अथैतं सर्वमेव जुहोति न स्विष्टकृतेऽवद्यति" इति श्रुतेः।

(४) या देवता यस्मिन् यागे भवति तद्वाचकममुष्मै इति चतु-

चतुर्थ्यन्तेनानुवाचनं कर्त्तव्यम् ॥ १३ ॥

( मैत्रावरुणस्य प्रैषे च देवतापदं चतुर्थ्यन्तम् )

आश्राव्यप्रैषे च ॥ १४ ॥

चतुर्थ्यन्तेनैव प्रेषणम्, यत्र मैत्रावरुणस्य प्रैषः, यथा "इन्द्राग्निभ्यां छागस्य वपां मेदः प्रेष्य" इति ॥ १४ ॥

( मैत्रावरुणप्रैषभिन्ने प्रैषे द्वितीयान्तं देवतापदम् )

अमुं यजेति ॥ १५ ॥

यत्र मैत्रावरुणस्य प्रैषाभावस्तत्र "अमुं यज" इति द्वितीयान्तेन प्रैषः (१) ॥ १५ ॥

( प्रैषसम्बद्धेऽनुवाचने द्रव्यपदं षष्ठ्यन्तम् )

प्रैषानुवाचने षष्ठी 'वपायै धानासोमेभ्य' इति परिहाप्य ॥ १६ ॥

प्रैषसम्बद्धेऽनुवाचने द्रव्ये षष्ठी विभक्तिर्भवति । 'वपायै धानासोमेभ्य' इति परिहाप्य ॥ १६ ॥

( मन्त्रघटकस्य 'असौ' इत्यस्य स्थाने नामादेशः )

(२)असावित्यपनोदे ॥ १७ ॥

यत्र "असौ यजासौ यज" इति यथा पुनरभ्युन्नीतेषु तत्र देवताविभक्तिश्चापनोदे वर्त्तते। अथवा असावित्यपनोदे इति । यत्र मन्त्रेऽसाविति सर्वनामशब्दस्तस्यापनोदं कृत्वा यस्तत्राभिधेयस्तन्नामादेशः कार्यः(३) ॥ १७ ॥

---

र्थ्यन्तं प्रयुज्यानुब्रूहीति प्रैषः कर्तव्य इत्यर्थः, यथा "अग्नयेऽनुब्रूहि सोमायानुब्रूहि" इति ।

(१) तद्यथा "अग्निं यज सोमं यज" इति ।

(२) 'असौ' इति अपनोदे अपनये वर्तते । देवताविभक्तिस्तस्मात् प्रैषादपनीयते, न प्रयुज्यते इत्यर्थः ।

(३) यथा "सम्राडयमसौ" "बृहस्पतेष्ट्वा साम्राज्येनाभिषिञ्चाम्यसौ" "इमममुष्य पुत्रममुष्याः पुत्रम्" इत्यादि ।

( सवषट्कारहोम आहवनीयदक्षिणतस्तिष्ठतेशानाभिमुखेन कार्यः )

सवषट्कारासु तिष्ठन्दक्षिणत उदङ् प्राङ् वष-
ट्कृते ॥ १८ ॥

सवषट्कारास्वाहुतिषु दक्षिणतो वितानस्योदक् प्राग्व्यवस्थितो वषट्कृते जुहोति(१) ॥ १८ ॥

सह वा ॥ १९ ॥

सहवा वषट्कारेण जुहुयात्। वाशब्दो विकल्पार्थः। "तस्माद्दु सह वै वषट्कारेण जुहुयाद्वषट्कृते वा" इति ॥ १९ ॥

( अधस्तहविषो होमात्पूर्वं पश्चाच्चाग्नौ आज्यस्य क्षारणं न कर्तव्यम् )

(२) उभयत आज्यं हविषः ॥ २० ॥

क्षारयेत् ॥ २० ॥

सह वा ॥ २१ ॥

एवमेव हि श्रुतत्वात्(३) ॥ २१ ॥

इति श्रीकर्काचार्यकृतकातीयश्रौतसूत्रभाष्ये नवमी कण्डिका।

"अनुवाचनप्रैषो यथादेवतम्"इति प्रैषाः प्रक्रान्ताः। अतस्तद्विषयमेवैतच्चिन्त्यते-किम् "अग्नीदग्नीन्विहर" इत्येवमादयः कर्मचोदकाः,

---

(१) वषट्कारात्पूर्वं होमे निन्दा च श्रूयते "देवपात्रं वा एष यद्वषट्कारस्तद्यथा पात्रउद्धृत्य प्रयच्छेदेवं तदथ यत्पुरा वषट्काराज्जुहुयाद्यथाऽधो भूमौ निदिग्धं तदमुया स्यादेवं तत्" इति।

(२) होमकाले हविषः उभयत आज्यं होतव्यम्, पूर्वमल्पं हुत्वा ततो हविर्हूयते पुनश्चोपर्याज्यमित्यर्थः।

(३) "प्रदग्धाहुतिर्ह वा अन्योऽध्वर्युः"इति प्रकृत्य "अथ हैना एष सन्तर्पयति योऽयमाज्यं हुत्वाऽवदानानि जुहोत्यथ पुनरन्तत आज्येनाभिजुहोत्येष हैनाः सन्तर्पयति" इति, "तदुहोवाच याज्ञवल्क्यो यद्वा उपस्तीर्यावदायाभिघारयति तदेवैनाः सन्तर्पयति" इति च श्रुतेः।

उत सम्बोधनार्था मन्त्रा इति ?। ननु चोक्तमाचार्येण निगदानां मन्त्रत्वम् "ऋचो यजूँषि सामानि निगदा मन्त्राः" इति । सत्यमेवम् । मन्त्रवैलक्षण्यात्तदेवाक्षिप्यते । स एव च निर्णयो भविष्यति। किं वैलक्षण्यमिति चेत् । उच्यते । केचित्करणमन्त्रा येऽनुष्ठानकाले पदार्थान्स्मारयन्ति । केचिज्जपमन्त्रा अदृष्टार्थाः । अपरे क्रियमाणानुवादिनः क्रियमाणमर्थमनुवदन्ति, यथाऽग्निमन्थनीयादयः । न च तादृशा एते प्रैषाः। अपि च विधिविभक्तियुक्ता एते "अग्नीदग्नीन्विहर बर्हिस्तृणाहि" इति । तेनामन्त्रत्वाशङ्काविनिवृत्त्यर्थमिदमारभ्यते—

( अग्नीदग्नीन् विहरेत्यादिनां संबोधनार्थानां मन्त्रत्वम् )

वर्त्तमानापदेशाच्चोदनाशब्दाच्छ्रुत्यर्थाभावात्तथैवेति वचनान्निर्द्देशात्कर्मचोदकः ॥ १ ॥

अग्नीदग्नीन्विहरेत्येवमादिः कर्मचोदकः प्रतिपत्तव्यः । कुत एतत् । वर्त्तमानापदेशात् । वर्त्तमानमर्थमपदिशन्त्येवमादयोऽनुष्ठेयत्वेन । अग्निविहरणस्तरणक्रियाऽनुष्ठेयत्वेनोच्यते ।

किं च चोदनाशब्दात् । चोदनाशब्दो हि भवति "लिङ्लोटौ कर्मचोदकौ" । लोड्वचनानि च तानि श्रूयन्ते "अग्नीदग्नीन्विहर बर्हिस्तृणीहि" इत्येवमादीनि । अतः कर्मचोदकाः । यदि च विधिविभक्तियोगेऽपि कर्मचोदकत्वं नाश्रीयते, लोट्श्रवणमनर्थकमेव स्यात् ।

श्रुत्यर्थाभावाच्च । अपि च लोट्श्रवणादेवायमर्थो गम्यते यदुत कर्मचोदकत्वम् । यदि च विधिविभक्तियोगेऽपि कर्मचोदका न भवेयुः, श्रुतार्थहानिः स्यात् ।

किञ्च—तथैवेति वचनात् मन्त्रवैलक्षण्यमेषाम् । तथैववचनाः प्रैषाः पठ्यन्ते "ब्राह्मणं तर्पयितवै" इत्येवमादयः । इतिवचनाश्च मन्त्राः । यथा उरुप्रथा उरु प्रथस्वेति, प्रथयत्येवैनमेतदुरु ते यज्ञपतिः प्रथतामिति च । अतोऽपि मन्त्रवैलक्षण्यादमन्त्रत्वम् ।

निर्द्देशात् । अपि च निर्दिष्टा मन्त्राः "अहिर्बुध्न्य मन्त्रं मे पाहि यमृषयस्त्रैविदा विदुः ऋचो यजूंषि सामानि" इति । तन्मध्ये

चानाम्नानादमन्त्रत्वम् । अतः कर्मचोदकः ।

अपरे निर्देशादित्यन्यथा वर्णयन्ति–विधिविभक्तियोगाच्छक्नुव- न्ति कर्म निर्देष्टुमिति ॥ १ ॥

एवं प्राप्ते आह—

मन्त्रो वा समभिव्याहारात् ॥ २ ॥

वा-शब्दः पक्षव्यावृत्तौ । मन्त्रो वा एवञ्जातीयकः प्रतिपत्तव्यः । कुत एतत् । समभिव्याहारात् । य एभिरर्थोऽभिधीयते स समभि- व्याहृतो वाक्यान्तरेण "विहरत्यग्नीदग्नीन्" इत्येवमादिना । न च विहितस्य विधानमवकल्पते । अभिधानं तु सम्भवति । त- स्मान्मन्त्र एवंजातीयकः प्रतिपत्तव्यः ।

अथवा समभिव्याहारादित्यभिव्याहरणमेषां प्रयोगकाले चोद्यते "उत्तिष्ठन्नाहाग्नीदग्नीन्विहर" इति, "अथाह प्रोक्षणीरासादय" इति च । यदि कर्मचोदका एते स्युरभिव्याहरणम् एषां न चोद्येत । चोद्यते च, तस्मान्मन्त्रा इति । यत्पुनरुक्तं वर्त्तमानापदेशादिति, तत् मन्त्रत्वेऽपि न विरुध्यते । वर्त्तमानापदेशको हि मन्त्रो भवति ।

यदुच्यते–चोदनाशब्दाच्छ्रुत्यर्थाभावादिति । तत्रोच्यते । म- न्त्रत्वेऽप्येतन्न दुष्यति । न लोड्विभक्तेर्विधानमेवैकोऽर्थः । प्राप्त- कालतायामपि लोट् स्मर्यते । अग्नीदग्नीन्विहर, बर्हिस्तृणीहीति च अग्नीदभिधीयते विहरणस्तरणयोः प्राप्तः काल इति ।

यदपि मन्त्रवैलक्षण्यमुक्तं 'तवै चेति वचनात्' इति । तदप्यनैका- न्तिकम् । तवै-वचना अपि मन्त्रा दृश्यन्ते "कन्या इव वहतुमे- तवा उ" इति । मन्त्रश्चायम् । अनितिवचनाश्च मन्त्रा दृश्यन्ते "स जुहोति "एष स्य वाजी क्षिपणिं तुरण्यति" इत्येवमादयः । तस्मा- दवैलक्षण्यम् ।

यच्चोक्तं निर्देशादिति, निर्दिष्टा हि मन्त्रा ऋचो यजूंषि सामा- नीति । निगदानामनिर्देशादमन्त्रत्वमिति । अत्र ब्रूमः । यजुषां निर्दे- शात् निगदोऽपि निर्दिष्ट एवेत्यदोषः ।

अथवा वर्त्तमानापदेशादित्येवमादीनां व्याख्यान्तरं प्रस्तूयते । पूर्वत्रापरितोषात् । उक्तमेव हि निगदानां मन्त्रत्वमिति । विषयाव्या- प्तिश्च भवति । इदमामनन्ति "आग्नेयोऽष्टाकपालो भवति" "ऐन्द्रा-

ग्नो द्वादशकपालो भवति"इत्येवमादि । तत्रैतत्सन्दिह्यते । किमेते विधय उतार्थवादा आहोस्विन्मन्त्रा इति । तत्रैतदुच्यते नैते विधयो वर्त्तमानापदेशात् । यो हि वर्त्तमानमर्थमुपदिशति सोऽनुवादसरूपत्वान्न विधिः स्यात् । विधानं तर्हि कीदृशादवगम्यते । अत आह । चोदनाशब्दात् । लिङन्ताल्लोडन्तात्तव्यान्तात् । एते हि विधौ स्मर्यन्ते । न चाग्नेयोऽष्टाकपालो भवतीत्येवमादयो लिङन्ताः, नच लोडन्ताः, नापि तव्यान्ताः । अतो न विधयः । अर्थवादास्तर्हि भवन्त्वित्याशङ्किते आह । श्रुत्यर्थाभावात् । अर्थवादा अपि न भवन्त्येते । श्रुतस्य ह्यर्थस्यार्थवादो भवति स्तावकः । न चात्र श्रुतोऽर्थो विद्यते, य एभिः संस्तूयेत । तस्मान्नार्थवादाः । मन्त्रास्तर्हि भवन्तु । मन्त्रा अपि न भवन्त्येते । कुत एतत् । श्रुत्यर्थाभावादेव । श्रुतस्य ह्यर्थस्य मन्त्रः प्रयोगकालेऽभिधायको भवति । न चासावस्तीति । तचैवेति वचनात् । तचैवचना इतिवचनाच्च मन्त्रा ब्राह्मणे पठ्यन्ते । न चैते तल्लक्षणयुक्ताः । तस्मात्सर्वप्रकाराभावादानर्थक्ये प्राप्ते आह ।

निर्देशात्कर्मचोदकः । कर्मचोदक एवंजातीयकः प्रतिपत्तव्यः । शक्नोति ह्यसौ अर्थवादसंयोगात् पञ्चमलकारपरिकल्पनाद्वारेण विधानं कर्तुम् । ननु च वर्त्तमानापदेशकोऽयं भवति । स कथमिवानुवादसरूपत्वाद्विधिः स्यात् । यथा गच्छति पठतीत्येवमादयो न विधयः एवमेतेऽपि । अत्रोच्यते । आग्नेयोऽष्टाकपालो भवतीति नानुवादोऽयम् । न ह्यसौ विहितः क्वचिद्, येनानूद्येत । तस्मात् अष्टाकपालो भवतीति भावयितव्य इत्येवमवगम्यते । न चाभावितोऽष्टाकपालो भवतीति । तस्माद्भावयितव्य एव । अर्थवादपदसंयोगोऽप्युक्त एव "अग्निर्वै देवानां मुखम्"इत्येवमादि ।

यदि वर्त्तमानापदेशकस्यापि विधायकत्वमाश्रीयते, "गायत्रेण त्वाच्छन्दसा परिगृह्णामि"इत्येवमादीनामपि विधायकत्वमस्त्वित्येवं प्राप्ते आह ।

मन्त्रो वा समभिव्याहारात् । मन्त्रो वा एवंजातीयः स्यात् । कुतः । समभिव्याहारात् । य एवमादिभिरर्थो ऽभिधीयते स वाक्यान्तरेण विहित एवेति । तस्मान्मन्त्रा एवमादयः ॥ २ ॥

(प्रयोजनं पर्यालोच्य कर्मानुष्ठानात्प्रागेव द्रव्याणां समीपे स्थापनम्)

(१)अर्थप्रसंख्यया द्रव्योपकल्पनम् ॥ ३ ॥

कर्त्तव्यमिति शेषः ॥ ३ ॥

( कृष्णाजिनादीनि उपरिलोमानि प्राग्ग्रीवाणि स्तरणीयानि )

(२)चर्माण्युत्तरलोमानि प्राग्ग्रीवाणि ॥ ४ ॥

कर्त्तव्यानीति शेषः ॥ ४ ॥

( हविषां मध्ये पश्चादुक्तस्य पश्चाद्ग्रहणम्, उत्तरतः आसादनं च )

अवरोक्तमुत्तरं हविषि ॥ ५ ॥

हविषां यत्पश्चादभिहितं तद् आसादनादिषु उत्तरं देशतः कालतश्च प्रतिपत्तव्यम्(३) ॥ ५ ॥

(साज्यस्यैकस्य दक्षिणहस्तस्थस्य जुह्वादेर्वेदेनोपग्रहणम् )

एकद्रव्ये साज्ये वेदेनोपग्रहणम्(४) ॥ ६ ॥

साज्ये एकस्मिन्द्रव्ये वेदेन उपग्रहो भवति । एकद्रव्यग्रहणम-

---

( १ ) अर्थः प्रयोजनम् । तथाच प्रयोजनपरिगणनया शूर्पाग्निहोत्रहवण्यादिद्रव्याणां समीपे स्थापनं कर्त्तव्यमित्यर्थः । अर्थात् करिष्यमाणे कर्मणि उपयोक्ष्यमाणानि सर्वाणि द्रव्याणि गणयित्वा कर्मारम्भात् प्रागेवानीय समीपे स्थापनीयानि । अन्यथा कालविलम्बेन प्रधानकर्मबाधः स्यादिति तात्पर्यम् ।

( २ ) चर्माणि कृष्णाजिनाधिषवणशार्दूलचर्मादीनि उत्तरलोमानि प्राग्ग्रीवाणि च स्तरणीयानीत्यर्थः । "तदुत्तरतः पुच्छस्योत्तरलोम प्राचीनग्रीवमुपस्तृणाति" इति श्रुतेः ।

( ३ ) तथाच महापितृयज्ञे "स तत्र जुहूमासादयत्यथ पूर्वामुपभृतमथ ध्रुवामथ पुरोडाशमथ धाना अथ मन्थम्" इति । अत्र दिग्विपर्ययेण प्राच्येवोत्तरा । तेनैवमनूद्यते इति भावः ।

( ४ ) दक्षिणहस्तस्थस्य साज्यस्यैकद्रव्यस्य हस्तकम्पनादिनाऽऽज्यस्कन्दनवारणार्थं सव्यहस्तगृहीतवेदेनाधारकरणमुपग्रहणमुच्यते । यथा "दशापवित्रेणोपगृह्य" इति ।

नैकद्रव्यत्वमुदाहार्थम्(१) ॥ ६ ॥

( आज्यान्यसहितस्य तादृशस्य स्फ्येनोपग्रहणम् )

स्फ्येनान्यत्र ॥ ७ ॥

आज्यादन्यत्रान्येन द्रव्येण द्रव्यवत्त्येकस्मिन् स्फ्येनोपग्रहणम् ॥ ७ ॥

( जपोपस्थानादिषु कुशैरुपग्रहणम् )

(२)कुशैरसत्सु ॥ ८ ॥

असत्सु वेदवज्रद्वितीयद्रव्येषु कुशैरुपग्रहणम् । अपरेऽन्यथा वर्णयन्ति । असत्सु द्रव्येषु जपोपस्थानादिषु कुशैरुपग्रहणम् ॥ ८ ॥

( शब्दमकुर्वन्नुपभृति जुहूमादध्यात् )

(३)पाणिभ्यां जुहूं परिगृह्योपभृत्याधानमादान-कालेऽसꣳह्रादयन् ॥ ९ ॥

एवमेव श्रुतत्वात् । असꣳह्रादयन् शब्दमकुर्वन् ॥ ९ ॥

इदमामनन्ति "अभिजिता यजेत विश्वजिता यजेत" इत्यफलसंयुक्ताश्चोदनाः । तत्र चिन्त्यते । किमेषु फलमस्त्युत नास्तीति ? । यदा चास्ति तदा यत्किञ्चिदुत स्वर्ग इति । किं तावत्प्राप्तम् । फलाश्रवणान्नास्ति फलमित्येवं प्राप्ते उच्यते—

( विश्वजिदादीनां स्वर्गफलकत्वम् )

(४)वाच्यफलेषु स्वर्गः सामर्थ्यात् ॥ १० ॥

सामर्थ्याद्भवितव्यमत्र फलेन । एवमेताश्चोदनाः समर्था अर्थवत्यो भवन्ति । इतरथा सापेक्षाः सन्त्योऽनर्थिकाः स्युः । न च वेदे

---

( १ ) तेन जुहूपभृतोर्द्वयोर्ग्रहणे न वेदोपग्रहः ।

( २ ) तथाच स्मृतिः "सव्यः सोपग्रहः कार्यो दक्षिणः सपवित्रकः" इति ।

( ३ ) तदुक्तम् "इत्थमेव कुर्यादुभाभ्यामेव पाणिभ्यां जुहूं परिगृह्योपभृत्यधिनिदध्यात्" इति, तथा "ते असꣳशिञ्जयन्नाददीत" इति श्रुतिभ्याम् ।

( ४ ) अश्रुतफलेषु विश्वजिदादिषु स्वर्गः फलत्वेन कल्पनीयः । कुतः । सामर्थ्यादित्यर्थः ।

माम्नामान्नस्याध्यानर्थक्यमिष्यते। यच्च साकाङ्क्षं वाक्यं तत् अध्याहारेण वाऽनुषङ्गेण वा निराकाङ्क्षीकर्त्तव्यम् । एवं चार्थवद्भवति । तेनेह स्वर्गकामपदानुषङ्गः कार्यः "विश्वजिता यजेत स्वर्गकाम" इति । नैरुत्सुक्यात् । ननु च पशुकामादिपदानुषङ्गः कस्मान्न क्रियते । अत्रोच्यते । स्वर्गएव सामर्थ्यात् । यदेव पुरुषैरभिवाञ्छ्यते। तदेव सामर्थ्यादनुषज्यते, नान्यानि फलवाक्यानि ॥ १० ॥

( गुणात फलाधिक्यम् )

एककर्मणि गुणविशेषे फलविशेषः ॥ ११ ॥

एकस्मिन्कर्मणि गुणविशेषे फलविशेषेण(१) भवितव्यमाम्नानसामर्थ्यात् ॥ ११ ॥

( दानवाचनादिषु यजमानस्य कर्तृत्वम् )

दान—वाचना—न्वारम्भण—वर—वरण—वृत—प्रमाणेषु यजमानं प्रतीयात् ॥ १२ ॥

दानादीनि निगदव्याख्यातानि । तेषां कर्त्तारं यजमानं प्रतीयात्(२) ॥ १२ ॥

( खातादिषु असंभवे यजुर्मन्त्रेण क्रिया न भवति )

खात—लून—च्छिन्ना—वहत—पिष्ट—दुग्ध—दग्धेषु

---

( १ ) तद्यथा, अग्न्याधेयं पूर्णाहुत्यन्तमिष्ट्यन्तं च । तत्र पूर्णाहुत्यन्तपक्षादिष्ट्यन्तपक्षे फलभूयस्त्वम्, तत्रापि षड्दक्षिणापक्षाद् द्वादशदक्षिणापक्षे फलाधिक्यम्, ततोऽपि चतुर्विंशतिदक्षिणापक्षे । एवञ्चाङ्गाधिक्ये फलाधिक्यम्, इतरथा तद्विधानवैयर्थ्यप्रसङ्ग इति भावः ।

( २ ) दाने तावत् "अन्वाहार्यं ददाति" "तस्मादग्नीधे प्रथमाय दक्षिणां ददाति" इत्यादौ यजमानस्यैव दानकर्तृत्वम् । वाचने "आशोदेवास" इति वाचयति" "रेवति यजमाने" इति वाचयति" इत्यादौ तस्यैव वाचनप्रयोज्यवचनकर्तृत्वम् । एवमेव "आश्विनं गृह्णात्यन्वारब्धे वा" "वरं वृत्वा ददाति" इत्यादावपि यजमानस्यैव कर्तृता ज्ञेयेति भावः ।

यजुष्क्रिया ऽसम्भवात् ॥ १३ ॥

खाते यूपावटे, लूने बर्हिषि, छिन्ने यूपे, अवहतेषु व्रीहिषु, पिष्टेषु तण्डुलेषु, दुग्धे पयसि, दग्धे महावीरे । एषु यजुषा क्रिया न सम्भवति । कुत एतत् । द्वाराभावात् । क्रियाद्वारको हि मन्त्र इति । एतच्चासम्भवविषय एव द्रष्टव्यम्(१) ॥ १३ ॥

( रौद्रादिमन्त्रमुच्चार्य तत्कर्म च कृत्वा अप उपस्पृशेत् )

रौद्रं राक्षसमासुरमाभिचरणिकं मन्त्रमुक्त्वा पित्र्यमात्मानं चालभ्योपस्पृशेदप उपस्पृशेदपः ॥ १४ ॥

रौद्रादिमन्त्रमुक्त्वा च-शब्दात्कर्म च कृत्वा उपस्पृशेदप इति । दर्शयति चैवं "रुद्रियेणेव वा एतदचारिषुः शान्तिरापस्तदद्भिः शान्त्या शमयति" इति ॥ १४ ॥

त्रयीसारसमुद्धारसूत्रव्याख्यानमाहृतम् ।
यत्तन्मयाऽनुगृह्णन्तु साधुत्वेनेह साधवः ॥

इति श्रीमत्कर्काचार्यकृते कात्यायनश्रौतसूत्रभाष्ये
परिभाषाध्यायः प्रथमः समाप्तः ।

---

(१) याज्ञिकास्त्वेवमाहुः 'एषु लोकसिद्धेष्वपि गृहीतेष्वपि यजुष्क्रिया यजुर्युक्ता क्रिया यथाकथञ्चित् कर्तव्या । कुतः । सम्भवात् । सम्भवति हि यथाकथञ्चिद्यजुष्क्रिया । अथवा असम्भवात् । अन्यस्याः क्रियायाः कर्ममध्ये असम्भवात् । यदा च पशौ यूपाहरणार्थं सन्निकृष्टे अलाभात् देशान्तरं विप्रकृष्टं गम्यते तदा प्रधानकालविरोधो भवति । यदा चैकदीक्षापक्षः तदा महावीरोखादिकमेकेनान्हा निष्पादयितुं न शक्यते इति । तदुक्तं मण्डनमिश्रैः—

"छिन्नं लूनं च पिष्टं च सान्नाय्यं मृन्मयं तथा ।
लोकसिद्धं गृहीतं चेन्मन्त्रा जप्याः कदाचन ॥
छिन्नादिलोकसिद्धं चेदाहियेत क्रतुं प्रति ।
तत्तन्मन्त्रजपं प्राह भारद्वाजः कृताकृतम् ॥
छिन्ने चावहते पिष्टे दग्धे लूने च मृन्मये ।
खाते च लौकिके प्राप्ते जपो नास्त्येव वाजिनाम् ॥" इति ।

# अथ द्वितीयोऽध्यायः ।

इह स्वर्गापवर्गौ परः पुरुषार्थः । तौ चानेकशाखाप्रभेदभिन्नानियतवर्णानुपूर्व्या व्यवस्थिताऽक्रमसर्वगतविधिनिषेधरूपशब्दौघलमधिगम्यौ । न हि प्रत्यक्षादीनामसौ विषयः(१) । ननु च स्वर्गकामो यजेतेत्येवमादिना स्वर्गस्यास्तु तत्समधिगम्यता, अपवर्गे कथमिति । उच्यते । शुभाशुभकर्मफलोपभोगनिमित्तशरीरग्रहणाभावोऽपवर्गः । स च विहितकरणप्रतिषिद्धसेवनोपजातशुभाशुभोपभोगायावश्यं भाविनि शरीरग्रहणे दुर्लभ इति भवति विधिनिषेधसमधिगम्यता ऽपवर्गस्यापि ।

यदपि कैश्चिदुच्यते ज्ञानादपवर्ग इति । तदपि न । देहेन्द्रियमनोव्यतिरिक्तात्मसतत्त्वावबोधस्य मुक्तेश्च केन साध्यसाधनसम्बन्धो गृहीत इति पर्यालोचनीयम् । स्वर्गयागादिवत् आगमोऽपि नैवंविधोऽस्ति । यदपि "आत्मा वा अरे द्रष्टव्य" इत्यादि । तदप्यात्मनो दर्शनश्रवणादिपरमेव । मुक्तिस्तु पुनरपि शुभाशुभोपभोगक्षयनिमित्तैवेति । ज्ञानेऽपि सति विहितकरणात्प्रतिषिद्धसेवनाच्च मुक्तिप्रतिबन्धः । यदप्युच्यते न करोति न लिप्यते इति । ज्ञानप्रशंसैवासौ ।

नन्वेवं सत्यात्मसतत्त्वावबोधो न किञ्चिदुपकारं करोति । नेत्युच्यते । यदाऽवगतमेतत् 'अस्ति देहादिव्यतिरिक्त आत्मा' इति, तद्बन्धश्च शुभाशुभनिमित्तो, न बृहस्पतिमतानुसारिणामिव(२) 'भूतसङ्घातमात्रमेवेदम्' इति, तदा तद्बन्धहेतुपरिहारे प्रयतते इति

---

( १ ) प्रत्यक्षस्य विद्यमानोपलम्भनत्वेन भाविनि धर्मे प्रमाणभावाभावात् । तदप्रामाण्ये च तन्मूलकानां प्रमाणान्तराणामप्यविषयो धर्म इति भावः । भावनाबलजं योगिप्रत्यक्षं तत्र समर्थमिति तु मनोरथमात्रम् । भावनाया अनुभूतविषयत्वात् ।

( २ ) तदुक्तम् "अत्र चत्वारि भूतानि भूमिवार्यनलानिलाः । चतुर्भ्यः खलु भूतेभ्यश्चैतन्यमुपजायते" इति ।

भवति ज्ञानान्मुक्तिः। (१)अथापि शुद्धं ज्ञानमेव मुक्तेः साधनमिति विधिः स्यात्तथापि (२)विधिनिषेधमूलत्वापवर्गस्यापीति।

स च विधिनिषेधरूपः शब्दसमूहोऽनेकशाखान्तरावस्थानरूपतया स्वतश्च प्रतिवाक्यमनेकवाक्यार्थप्रतिभानिरुद्धावतारतया महोर्मिमालाकुलार्णव इव दुरवगाहः। तद्यथा—क्वचिदग्निहोत्रं जुहोतीत्यादौ धात्वर्थमात्रविधानम्। तत्राप्यग्निहोत्रशब्दे गुणविध्याशङ्का। तथा 'किं होमः स्वर्गाय उत स्वर्गो होमाय' इति। एवं सर्वत्र। क्वचित्सोमेन यजेतेतिवद्विशिष्टधात्वर्थविधानम्। अग्निहोत्रं जुहुयात्स्वर्गकाम इति फले विधिः। क्वचिच्च सौर्यादौ विशिष्टं फलं विधीयते। दध्ना जुहोतीत्यत्र गुणे विधेर्व्यापारपर्यवसानम्। क्वचिच्च प्राकाशावध्वर्यवे ददातीत्यादिवद्वारत्रयेणान्यसम्बन्धविषयो व्यापारः। तथा क्वचिन्मुख्यार्थवृत्तिना शब्दस्य, क्वचित्सहस्रसंवत्सरादिवत् गुणवृत्त्या शब्दवृत्तिः।

विध्यर्थवादसम्मोहश्च परस्परतो रूपव्यतिषङ्गात्। "शूर्पेण जुहोति तेन ह्यन्नं क्रियते" इति विधिसरूपोऽर्थवादः। "रात्रीः प्रतितिष्ठन्ति य एता उपयन्ति" इत्यर्थवादसरूपं रात्रीणां फले विधानमिति। दिङ्मात्रमिदं दुरवगाहत्वम्।

---

(१) "यथा पुष्करपलाशआपो न श्लिष्यन्तएवमेवंविदि पापं कर्म न लिप्यते" "तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयेतैवं हास्य सर्वे पाप्मानः प्रदूयन्ते" "भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः। क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे" इत्यादिश्रुतिस्मृतिभ्यस्तथैवावगमात्।

(२) सुखदुःखादिसमस्तवैशेषिकात्मगुणोच्छेदो मोक्षः। सुखदुःखोच्छेदश्च धर्माधर्मयोरुच्छेदात्। धर्माधर्मयोरुच्छेदश्चोत्पन्नानां धर्माधर्माणामुपभोगेन, नित्यनैमित्तिककर्मानुष्ठाननिमित्तानां धर्माणां तदननुष्ठानेनानुत्पादाद्विहिताकारणप्रतिषिद्धानुष्ठाननिमित्तानां चाधर्माणां विहितानुष्ठानेन प्रतिषिद्धाकरणेन च परिहारादसति शरीरारम्भे पूर्वशरीरनिपाते च अशरीरावस्थितिरिति भवति विहितप्रतिषिद्धकर्मज्ञापनद्वाराऽपवर्गमूलत्वं विधिनिषेधानामिति भावः।

यद्यपि च संशयविपर्ययरहितज्ञानोत्पत्तिशक्तियुक्तविधिवाक्यार्थाभिहितार्थप्ररोचनाद्वारेणार्थवादानां तदङ्गभाव उक्तो जैमिनिप्रभृतिभिः, मन्त्राणामपि अभिहितार्थप्रकाशनेन क्रियाङ्गता, नामधेयस्य च गुणफलोपबन्धेनेति सुविस्तृतमेवैतत्, तथा भेदादिलक्षणानुकथनेनानेकरूपवाक्यार्थमार्गोपदर्शनं कृतमेव, तथापि नेयताऽनेकशाखाव्यवस्थितवाक्यराशिप्रतिपादितार्थानुष्ठानं शक्यं कर्तुमित्याचार्यः कल्पसूत्रमारब्धवान् ।

तत्र चाधिकारादिसामान्यश्रुत्युपनिबन्धनं कृत्वा विशेषोपनिबन्धनं न्याय्यम् । इतरथा हि प्रतिविशेषं सामान्यानुकथने ग्रन्थगौरवं स्यात् । इत्यतः अधिकारादि "उपस्पृशेदपः" इत्येवमन्तमनुक्रम्य विशेषाननुक्रमते । तत्र च पूर्वं पौर्णमासमारभ्यते ।

यद्यपि फलवत्सु क्रमो नास्त्यनुष्ठानं प्रति, अनुविधाने तु दूरोत्सारित एव, तथापि क्रमवर्तिनी वागित्यवश्यम्भाविनि क्रमे श्रुत्यर्थानुसारेण पौर्णमासारम्भः प्रथमः ।

ननु च सामर्थ्यादाधानस्य प्राक्कालता, न ह्यकृताधानः शक्नोति पौर्णमासमनुष्ठातुमिति । श्रुतिक्रमाच्च "स वै सम्भारान्सम्भरति" इति । तथा स्मृत्यनुक्रमणम् "अग्न्याधेयमग्निहोत्रं दर्शपौर्णमासौ" इति । नैतदेवम् । "व्रतमुपैष्यन्" इति श्रुतिक्रमात्पूर्वं पौर्णमासम् ।

सामर्थ्याच्च । न हि पौर्णमासमनुक्त्वा साकल्येनाधानमनुविधातुं शक्यते । सन्ति हि तत्र दर्शपूर्णमासविधानग्राहिण्य इष्टयः । किं च मन्त्रक्रमात् "अग्ने व्रतपते" इति । दर्शस्तर्हि प्राप्नोति "इषे त्वा" इति । सत्यमेतत् । किं त्वसौ(१) पौर्णमासपूर्वकः । दाक्षायणे च साक्षादेव मन्त्रक्रमानुग्रहः । तस्मात्पौर्णमासारम्भ एव कारणभूयस्त्वमिति । तेन पूर्वं पौर्णमासमारब्धम् ।

( इष्टिपूर्वदिने इष्टिदिने एव वा यमनियमवान् भवेत् )

पूर्वां पौर्णमासीमुत्तरां वोपवसेत् ॥ १ ॥

तत्र कालविशेषवाचिनि पौर्णमासशब्दे तिथ्यभिप्राया स्त्रीलिङ्गान्तता । तद्विशेषणत्वाच्च पूर्वोत्तरशब्दयोः । सतस्यां च प्राप्तायाम्

(१)असौ दर्शः पौर्णमासपूर्वकः । तथैवानुष्ठानस्य विहितत्वात् ।

"उपान्वध्याङ्वसः" इति (१)उपपदविभक्तिर्द्वितीया। पूर्वां पौर्णमासीमुत्तरां वेति विकल्पे वा-शब्दः।

अयश्चोपवासशब्दः प्रसिद्धितोऽनशनाभिधायी। अनश्नन्नेव क्षुपोषित इत्युच्यते। ननु च "अपराह्णे व्रतोपायनीयमश्नीतः" इत्यनेन विरोधाद्विकल्पः स्यात्। न। भिन्नविषयत्वात्। तत्र ह्यर्थप्राप्तएवाशने सर्पिरादिगुणनियमः क्रियते,इहाशनप्रतिषेध इति। अशनविधाने हि तस्मिन्सति अविधेय एवार्थः स्यात्। प्राप्तार्थत्वात्। अदृष्टार्थता वाऽशनस्य कर्मोपकाराय प्रकल्प्या। न चासौ दृष्टे सति न्याय्या। तस्मादनेकविषयत्वादविकल्पः। यत्र पुनरेकक्रियाविषयौ विधिनिषेधौ तत्र षोडशिग्रहणवद्विकल्पः। अतिरात्रे षोडशिविषयो विधिः,तद्विषय एव निषेधः। गृह्यते चेन्न प्रतिषेधो, नेति चेन्न ग्रहणमिति। न चात्र ऋज्वादिवत्समुच्चयः सम्भवति(२)। विरोधात्। न चाग्नेयप्रयाजादिवदङ्गाङ्गिभावः। फलित्वाफलित्वानवगतेः। न च वार्त्रघ्न्यादिवद् व्यवस्था। तत्र हि लिङ्गप्रकरणानुमितवाक्यावगताङ्गभावयोर्वार्त्रघ्न्योर्वृधन्वत्योश्च व्यवस्थापरमेव वचनम् "वार्त्रघ्नी पौर्णमास्यामनूच्येते वृधन्वती अमावास्यायाम्" इति। न चात्रानुवादोऽप्राप्तत्वात्। बाधोऽपि चान्यतरस्यान्यत्र चरितार्थस्यान्यतरेणाचरितार्थेन निवृत्तिः। न च ग्रहणाग्रहणयोश्चरितार्थाचरितार्थत्वे कुशशरवत्सम्भवतः। तस्माद्यथोक्त एवेतरवाक्यापेक्षया विकल्पः षोडशिनीति।

अथोपवासशब्देनार्थप्राप्ताशननिषेधो, "व्रतोपायनीयमश्नीतः" इत्यनेनाशनविधानं स्यात्। नेत्युच्यते। अशनप्रतिषेधवैयर्थ्यात्, उत्तरसूत्रादप्यस्यार्थस्य सिद्धत्वात्। अनिषेधेऽपिहि गुणार्थमुत्तरं सूत्रमारब्धव्यमेव। न चात्र भिन्नविषयत्वेऽप्यविरोधः। सति ह्यशने तद्गुणविधानमुपपद्यत इति। तस्माद्विरोध एव।

कस्तर्ह्यत्र समाधिः।

उच्यते। अन्यतरस्यायथार्थता। तत्राप्यनियमः। अस्य पा-

---

(१)उपेतिपदप्रयोगनिमित्ता विभक्तिः कारकविभक्तिरेव, न पारिभाषिक्युपपदविभक्तिः।

(२)आधारे इति शेषः।

श्रावस्य वा विरोधोपजनकत्वादयथार्थत्वे प्राप्ते यस्यैवायथार्थताऽन्यत्रोपलब्धा, दृष्टप्रवृत्तित्वात्तस्यैवाश्रयितुं युज्यते नेतरस्य । स चायमुपवासशब्दो नियतद्रव्यकालपरिमाणे ऽभ्यशने उपलभ्यते । यथा "चान्द्रायणमुपवसेत्" इति । अतो यमनियमविषयतोपवासशब्दस्य ।

केचित्पौर्णमासीशब्दं लक्षणया कर्मविषयं मन्यन्ते, पौर्णमासीमुपवसेन्न प्रवसेदित्यर्थः । तदेतन्न । कर्मणः पूर्वोत्तरभावानुपपत्तेः । स्वयंहोमसूत्रादेव तत्सिद्धेः । तस्माद्यथोक्तैव व्याख्या 'पूर्वस्यां पौर्णमास्यामुत्तरस्यां वोपोष्य यमनियमवान्यजेत' इति ।

पूर्वामुत्तरामिति द्वित्वनिबन्धनम् । तत्र सन्दिह्यते—किमेका पौर्णमासी उत द्वे इति । एकेति ब्रूमः । एका ह्यागोपालाङ्गनादि प्रसिद्धा । संवत्सरं प्रकृत्य च दर्शयति 'द्वादश पौर्णमास्य' इति ।

द्वे अपि वा स्याताम् । शिष्टानुस्मरणात् "या पूर्वा पौर्णमासी साऽनुमतिर्योत्तरा सा राकेति विज्ञायते" इति । दर्शयति च "द्वे हि पौर्णमास्यौ यजते द्वे अमावास्ये" इति । तथा "एषा ह संवत्सरस्य प्रथमा रात्रिर्यत्फाल्गुनी पौर्णमासी योत्तरा, एषोत्तमा या पूर्वा" इति। सूत्रकारप्रस्थानाच्च "उत्तरस्यां फाल्गुन्याम्" इति । प्रसिद्धिलिङ्गे मुख्यविषये । द्वितीया गौणी । न ह्यनेकार्थता सति सादृश्यादौ युज्यते । असति तु सादृश्ये सम्बन्धे वाऽनेकार्थत्वमपि भवति अक्षादिशब्दवत् । सादृश्यं चेहास्तीति वक्ष्यामः ।

एवं द्वित्वोपपत्तावपि सन्देहः कतरा पूर्वा कतरोत्तरा' इति । मुख्यसन्निधानाच्चतुर्दशी पूर्वा पञ्चदश्युत्तरा । तत्रैतदुच्यते चतुर्दशी पूर्वा । तस्यां हि चन्द्रमसः पूरणमस्ति त्रयोदश्याद्यपेक्षया । आह च चन्द्रमसं प्रकृत्य "एतस्य ह्यनुपूरणं पौर्णमासीत्याचक्षते" इति । अपि च—

पूर्वोदिते कलाहीने चन्द्रे पूर्वां विचक्षणाः—

इति चतुर्दशीं पूर्वां ज्ञापयति । तथा—

यदा त्वस्तमियात् सूर्यः पूर्णश्चेन्दुरुपागमत् ।
युगपत्सोत्तरा राका तदा भवति पूर्णिमा ॥

इति पञ्चदशीमुत्तरां ज्ञापयति ।

पञ्चदशी वा पूर्वा प्रतिपदुत्तरेति । कुत एतत् । सादृश्याद्धि

पौर्णमासीशब्दस्तिथ्यन्तरे प्रवर्त्तते। तच्च सादृश्यं पौर्णमास्याः प्रतिपदि, न चतुर्दश्याम्। कथम्। मासस्य रणं पौर्णमासीशब्दस्य प्रवृत्तौ निमित्तम्। मासश्च मानं चन्द्रमाः। पुमन्त्रलिङ्गाच्च—

यत्वा देव प्रपिबन्ति तत आप्यायसे पुनः।

वायुः सोमस्य रक्षिता समानां मास आकृतिरिति।

तच्चैतच्चन्द्रमसः पूरणं प्रतिपदि पञ्चदश्यां च तुल्यम्। अन्त्यकलाव्यापारसामान्यात्। अन्त्या हि कलोभयत्र व्याप्रियते। इयांस्तु विशेषः।एकत्रोपैतीतरत्र चापैति। चतुर्दशकलत्वसामान्याच्च। प्रागन्त्यकलाव्यापाराच्चतुर्दशकलः पञ्चदश्यां,प्रतिपद्यपि तद्व्यापारोपरमे चतुर्दशकल एव। तदेतत्सादृश्ययुक्ता पञ्चदशीति प्रतिपच्छक्यते वक्तुं, न चतुर्दशी। सादृश्याभावात्। यच्चोक्तं त्रयोदश्याद्यपेक्षया तत्र पूरणमस्तीति। एवं चेन्न काचिदपौर्णमासी, सर्वत्र ह्यापेक्षिकं पूरणमिति। यदुक्तं 'पूर्वोदिते कलाहीने' इति, तदपि खर्विकाभिप्रायम्। दृश्यते चायमर्थोऽन्यपरे वाक्ये। "स वै संप्रत्येवोपवसेत् संप्रति वृत्रः हनानि संप्रति क्षिपन्तं भ्रातृव्यः हनानि" इति मुख्योपवासविषयम्। तथा "स वा उत्तरामेवोपवसेत्"इति प्रकृत्य पूर्वोपवासविषयं दोषमाह "समिव वा एष क्रमते यः सम्प्रत्युपवसति" इति। आदित्यरूपिणो यजमानस्यास्तमनकाले सम्पूर्णोदितेन वृत्ररूपिणा चन्द्रमसा सङ्क्रमणं भवति। तत्र चास्पष्टौ जयपराजयौ मत्वैतदुच्यते "अनद्धा वै सङ्क्रान्तयोर्यदीतरो वेतरमभिभवतीतरो वेतरम्" इति। अथ य उत्तरामुपवसति तस्य को गुणो भवति। "यथा पराङमावृत्तः सरिप्ँस्यादप्रत्यालभमानः सोऽन्यतो यात्येव स्यात्" इति। तत्र ह्यसम्पूर्ण आभिमुख्येनचाव्यवस्थितः पापरूपी चन्द्रमा यमनियमवता आदित्यरूपिणा यजमानेन सुखेन जेतुं शक्यत इति प्रतिपदमुत्तरां दर्शयति। तथा "एषा ह संवत्सरस्य प्रथमा रात्रिर्यत्फाल्गुनी पौर्णमासी योत्तरा, एषोत्तमा या पूर्वा" इति। पक्षादौ संवत्सरादिरिति प्रतिपत्प्रथमोच्यते। पक्षान्ते च तदन्त इति पौर्णमास्युत्तमा। न च पौर्णमास्यां पक्षादित्वं चतुर्दश्यां वा पक्षान्तता सम्भवति। तस्मादसदेतत्। सूत्रकारप्रस्थानाच्च "पक्षादौ यद्धविः" इति। यदा चतुर्दशी पूर्वा तदा पञ्चदश्यां यागः स्यात्, तत्र पक्षादौ हविः पाक्षिकं स्यात्।

नन्वेवं सत्युत्तरोपवासपक्षे द्वितीयायां यागः प्राप्नोति, तत्र पक्षादौ यद्यद्धविरिति पाक्षिकमेव । न । सूत्रारम्भसामर्थ्यात् "सद्यो वा प्रातः" इति ॥ १ ॥

( अन्वाधानं यजमानाध्वर्य्वन्यतरकर्तृकं देवतापरिग्रहफलकमग्नित्रये क्रियमाणमेकं कर्म )

अग्न्यन्वाधानमध्वर्युर्यजमानो वा ॥ २ ॥

ममाग्ने वर्चो विहवेष्वस्तु वयं त्वेन्धानास्तन्वं पुषेम ।
मह्यं नमन्तां प्रदिशश्चतस्रस्त्वयाऽध्यक्षेण पृतना जयेमेत्याहवनीये समिधमादधाति ॥ ३ ॥

अग्न्यन्वाधानमिति कर्मणो नामधेयम् । कर्तृनिर्देशात् । गुणविध्यसम्भवात् । द्रव्येच्चाप्रसिद्धेः ।

तत्राध्वर्युग्रहणं न कर्त्तव्यम् । "अध्वर्युः कर्मसु वेदयोगात्" इति प्राप्तत्वात् । अथ यजमानो वेत्येवमर्थमुच्येत । तन्न । इयताऽपि सिद्धत्वात् । यथाऽन्यत्र "पात्राणि सꣳसादयति यजमानो वा" तथा "आज्यमवेक्षते तेजोऽसीति यजमानो वा" इति । तस्मादध्वर्युरित्यवाच्यम् ।

अत्रोच्यते । यजमानकाण्डमित्यवान्तराख्या । असौ च महासमाख्यायाः बाधिका भवति । तेन 'यजमानो वा' इतीयत्युच्यमाने वा-शब्दोऽवधारणे न्यायमूलत्वेन माभूदिति शास्त्रमूलोऽयं विकल्प इत्यध्वर्युग्रहणम् ।

नन्वितरत्रापि शास्त्रमूल एव विकल्पः "आज्यमवेक्षते तेजोऽसीति यजमानो वा" इति । अत्राप्यध्वर्युग्रहणं तर्हि कर्तव्यमेवेति । सत्यमेवम् । प्रत्यक्षं हि तत्र वचनम् "तद्धैके यजमानमवख्यापयन्ति" इति, "तस्मादध्वर्युरेवावक्षेत" इति च । ननु चात्राप्याचार्यस्य प्रत्यक्षमेव वचनम् । स्मरन्ति हि, "पञ्चदशशाखोपनिबन्धनं कृतमाचार्येण" इति । तस्मान्नास्ति प्रत्यक्षकृतो विशेषः । उच्यते । शाखाद्वयमधिकृत्य तात्पर्येणानुप्रवृत्त आचार्यः । तत्र नित्यनैमित्तिककाम्यवैकल्पिकानि कार्त्स्न्येनोपनिबद्धानि । शाखाद्वयव्यतिरेकेण नैय-

मिकमात्रमेव । तेन शाखाद्वयविहितस्यैतरेणास्ति विशेषः । तद्विहितं प्रत्यक्षपक्षनिक्षिप्तमिव यथाकथञ्चिदपि ज्ञाप्यते । शाखान्तरीयं पुनः प्रयत्नतो ज्ञापनीयमित्यध्वर्युग्रहणम् ।

ननु कतिपयशाखोपसंहारे सति असर्वशाखाप्रत्ययत्वादनादरणीयमेतत् सूत्रकारवचनमिति । नैतदेवम् । एवं हि स्मरन्ति "या एव काश्चन नवदशशाखा उपनिबध्यन्ते तत्रैव(१)नैयमिकाङ्गप्रधानकर्म्मोपसंहारः सम्भाव्यते, किमुत पञ्चदशशाखोपनिबन्धने इति । तस्मादपरिचोदना ऽसर्वशाखाप्रत्ययत्वमिति । (२)अथ सर्वशाखाप्रत्ययकर्मोपसंहारेणैवाधिक्रियेत तथा सति अशक्यशब्दार्थोपदेशात्सर्वशाखानामानर्थक्यमेव स्यात् । स्मर्यते ह्येकशतमध्वर्युशाखानामिति । तथैकदेशाध्ययनेनाप्यधिकारं स्मरन्ति—

वेदानधीत्य वेदौ वा वेदं वापि यथाक्रमम् ।
अविप्लुतब्रह्मचर्यो गृहस्थाश्रममावसेत् ॥ इति ।

तथा च लिङ्गम् "यो वै ज्ञातोऽनूचानस्तमवकाशयेत्" इति । सर्वशाखाप्रत्ययत्वे ह्यनूचानो न कश्चित्स्यात् ।

अपरे अध्वर्युग्रहणं यजमानसम्बन्धार्थं व्यावर्णयन्ति । तत् किमर्थम् । व्यूहने "अध्वर्युर्वा इत्युक्ते यजमानो यथा स्यादिति । किं वा स्यात् । अध्वर्युणा विकल्पितत्वादाधिकृतमेव ऋत्विगन्तरं प्राप्नुयात् । अथ पुनर्यजमानसम्बन्धे ज्ञापिते यजमानः सिद्धो भवति । एतस्यामपि व्याख्यायाम् "अध्वर्युर्यजमानो वा यूपमनक्ति", तथा "अध्वर्युर्यजमानो वा सोमोपनहनं हरति" इत्यत्र दोषः । तस्माद्यथोक्तैव व्याख्या ।

यदृच्छा वा ऽऽचार्यस्य, क्वचित्कथञ्चिल्लिङ्गं ज्ञापयतीति ।

अथवाऽन्यैव व्याख्यान्तरम् । ऋग्वेदविहितमग्न्यन्वाधानं समाख्यया होतुः प्राप्नोति, तन्माभूदित्यध्वर्युग्रहणम् ।

स चायं "ममाग्ने" इति मन्त्रोऽङ्गभूतार्थप्रकाशकत्वादाहवनीयकार्योपन्नास्वप्सु ममाप इति यथार्थं विपरिणस्यते । न ह्यविपरिणतोऽङ्गभूतार्थप्रकाशने समर्थो भवति । सत्त्रे गणयज्ञेषु च यजमानाभिधायीनि पदानि यजमानकर्तृकेऽग्न्यन्वाधाने यथार्थं विपरिण-

(१)एवशब्दोऽप्यर्थे । तत्रापीत्यर्थः । (२)अथशब्दो यद्यर्थे ।

स्यन्ते 'अस्माकमग्नेऽस्मभ्यं नमन्तामिति चैवमादीनि । अध्वर्युकर्तृके त्वग्न्यन्वाधाने अन्यायनिगदत्वादनूह एव । न च वर्चो दिशां चावनतिरध्वर्युविषया । कर्मणः परार्थत्वात् । लिङ्गाच्च "यां वै काञ्च यज्ञे ऋत्विज आशिषमाशासते यजमानस्यैव सा" इति ।

असौ च समिद्बाहुप्रमाणा स्यात् । अधिकरणस्यैतावत्प्रमाणत्वात् । कुतः । परिधीनां वर्मसंश्रुतेः । वर्मणश्च शरीरप्रमाणत्वात् । आधेयं चाधिकरणप्रमाणमुचितम् । लिङ्गाच्च "यद् वा आत्मसम्मितमन्नं तदवति तन्न हिनस्ति, यद् भूयो हिनस्ति" इति ।

प्रादेशमात्री वा । शिष्टानुस्मरणात् ।

वेदः समित्पवित्रं च त्रयं प्रादेशसम्मितमिति ।

तस्य चाविरोधात् । क्वचिच्च दर्शनात् "प्रादेशमात्र्यो भवन्ति" इति । अधिकरणप्रमाणत्वमाधेयस्यानैकान्तिकम् । लिङ्गं विध्यर्थशेषः । तस्मात्प्रादेशमात्र्येव ॥ ३ ॥

## तूष्णीं द्वितीयाम् ॥ ४ ॥

द्वितीयाग्रहणेन प्राप्तो मन्त्रो निवर्त्यते तूष्णीमिति ॥ ४ ॥

## एवमितरयोरग्न्योः ॥ ५ ॥

समिधावादधातीति वाक्यशेषः । प्रथमं दक्षिणाग्नौ । सन्निधानात्, प्रदक्षिणक्रमयोगात्, उदक्संस्थतासम्पत्तेश्च । गार्हपत्ये वा । मुख्यक्रमानुग्रहात् । अग्न्यन्वाधानस्य हि कार्यं देवतापरिग्रहः । ताश्च पूर्वं गार्हपत्येऽभीज्यन्ते, ततो दक्षिणाग्नाविति । सन्निधानाद्यकारणम् । केचिदग्निग्रहणं प्रकृतत्वादवाच्यं मन्यमाना गार्हपत्यदक्षिणाग्न्योः क्रमार्थं मन्यन्ते ॥ ५ ॥

## महाव्याहृतिभिर्वा प्राक्सꣳस्थम् ॥ ६ ॥

भूर्भुवः स्वः इत्येता महाव्याहृतयः अध्येतृप्रसिद्धाः । 'भूर्भुवः स्वरित्येताभिश्च व्याहृतिभिः' इति लिङ्गात् । विभागानुपदेशात् समस्ताभिः । भेदेन क्वचिदुपदेशात् "प्रतिमहाव्याहृति" इति । न । वाक्यभेदात् । वाक्यसमुच्चयस्य चान्याय्यत्वात् । तस्मात्प्रत्यग्नि विभक्ताभिर्व्याहृतिभिः समिदाधानम् । सूत्रकारानुपदेशान्नेति चेत् । स्यात्परिभाषितत्वात् । "तेषामारम्भेऽर्थतो व्यवस्था तद्वचनत्वात्"

इति । तत्कथम् ? । अर्थवादात् । "भूरिति गार्हपत्यो, भुव इत्यन्वाहार्यपचनः, स्वरित्याहवनीय" इति । तथा "भूरिति वा अयं लोको, भुव इत्यन्तरिक्षलोकः, स्वरित्यसौ लोकः" इति । "अयं वै लोको गार्हपत्यो ऽन्तरिक्षलोकोऽन्वाहार्यपचनो ऽसौ लोक आहवनीय" इति च । समस्तोपदेशो लाघवार्थः । भेदोपदेशश्च होमविधानार्थः । ताश्चैताः शब्दत्वसामान्यान्मन्त्रस्य निवर्त्तिकाः ॥ ६ ॥

तूष्णीं वा यथापूर्वम् ॥ ७ ॥

समिदाधानमिति वाक्यशेषः । तत्र च युगपत्समिदाधानं, भेदे कारणाभावात् ।

केचित्तूष्णीं द्वितीयामिति द्वितीयाग्रहणमिहार्थं मन्यन्ते । तूष्णीं चेति लघीयसा न्यासेन सिद्धत्वात् यद् गुरुत्वं करोति तदिह भेदेनाधानं यथा स्यादिति । तदयुक्तम् । न हि सूत्रकारस्य प्रवृत्तिरीदृशी, यद् न्यासगौरवमर्थान्तराय भवत्यसति वचने । सति तु वचने प्रमाणवानयमर्थ इत्यतिरेकोऽपि गृह्यते । न च न्यासगौरवस्यान्यथाऽनुपपत्त्या शक्यं वचनमनुमातुम् 'द्वितीयां समिधमादधाति' इति । कदाचित्स्वशब्देनोच्यते कदाचिच्चशब्देनेति न्यायप्राप्तं युगपत्समिदाधानं दुर्निवारमिति । ये तु सूत्रगौरवमात्रेणैवार्थान्तरं परिकल्पयन्ति नमस्तेभ्यः ।

यथापूर्वमिति च न यथाऽध्यवसितं, सूत्रादेशवैलक्षण्यात् । पूर्ववदिति ह्येवं प्रकारेष्वर्थेष्वाचार्याः प्रायशः सूत्राणि प्रणयन्ति । तस्माद्यथापूर्वं यथोत्पन्ना अग्नयः इति ।

तदेतत् त्रिविकल्पकमग्न्यन्वाधानं दृष्टार्थमुत धर्ममात्रमिति ? । दृष्टार्थमिति ब्रूमः । दृष्टं हि कार्यमग्नौ काष्ठमाधीयमानं करोत्यग्नीन्धनं तद्धारणं च । न च तत् अनभिवाञ्छितम् । कार्यस्य विद्यमानत्वात् । "ते वा एते उल्मुके उदूहन्ति" इति च पूर्वाहितसमिद्द्वयविषयस्तच्छब्दो द्विवचनान्त एवमेवोपपद्यते । देवतापरिग्रहणार्थं वा । वचनसामर्थ्यात् । "कस्य देवा गृहानागच्छन्ति कस्य न, यः पूर्वेद्युर्मनाग्न इत्यग्नीन् गृह्णाति" इति अर्थवादरूपमपि कार्यनिर्देशाद्वचयमभ्युपगतमाचार्येण । येनाग्न्यन्वाधानप्रभृतीत्यनुक्रम्य दीक्षणीयादि प्रागुदवसानीयाया निवर्त्तयति । तत्राग्न्यन्वाधानकार्यं दी-

क्षणीयया कृतमित्यभिप्रायः। तत्र हि वचनमाग्नावैष्णवं प्रकृत्य "अग्निर्वै यज्ञस्यावरार्ध्यो विष्णुः परार्ध्यस्तत् सर्वाश्चैवैतद्देवताः परिगृह्य सर्वं च यज्ञं परिगृह्य दीक्षा" इति। दीक्षणीययाऽङ्गप्रधानदेवतापरिग्रहस्य निर्वर्त्तितत्वात् प्रायणीयादिष्वग्न्यन्वाधाननिवृत्तिरुच्यते। तच्च देवतापरिग्रहणार्थे अग्न्यन्वाधाने उपपद्यते, नाग्निधारणार्थे।

ननु चार्थवादस्वरूपमेव वचनम्। "आग्नावैष्णवमेकादशकपालं निर्वपेद्दीक्षिष्यमाण" इति प्रकृत्य "तत्सर्वाश्चैवैतद्देवताः परिगृह्य" इत्युक्तम्। निर्ज्ञातदीक्षाप्रयोजनाया दीक्षणीयाया देवतापरिग्रहफलश्रुतिरर्थवादो भवति। किं (१)पुनरभ्युपगतो देवतापरिग्रहोऽन्यत्र प्रयोजनत्वेन जैमिनिप्रभृतिभिरपि। एवं च सति वाचनिकं कार्यं देवतापरिग्रहः। तस्मिन्सति नोपलभ्यमानमपि प्रयोजनान्तरमवगन्तुं न्याय्यम्। यच्च लिङ्गमुक्तं "ते वा एते उल्मुके" इति, तत् अपूर्वप्रकृतेऽपि दृश्यते। तद्यथा "स यद्वा इतश्चेतश्च सम्भरति" इति अप्रकृतविषयस्तच्छब्दः।

(२)प्रयोजनम् अवादिष्वपि क्रियते।

किमिदमेकं कर्म, उत बहूनीति। बहूनीति ब्रूमः। अधिकरणभेदात्। आधेयभेदाच्च प्रत्यग्नि समिद्वृद्धयपर्यवसानात्।

एकं वा कार्यैकत्वात्। एकं हि कार्यमभिज्यमानदेवतापरिग्रहः। एकवचनान्तेन चैकेन शब्देनोपदेशो भवति, अग्न्यन्वाधानमिति। न चाधिकरणभेदः प्रत्यग्नि पर्यवसानं वा कर्मभेदे कारणं, परिधिपरिधानवत्। तस्मादेकमिति। (३)प्रयोजनमन्ते नैमित्तिकं भवतीति सम्प्रदायः।

---

(१)पुनः-शब्दस्त्वर्थे।

(२)अग्नीन्धनरूपदृष्टार्थत्वेऽन्वाधानस्य अवादिषु तदभावात् तन्न क्रियेत। देवतापरिग्रहार्थत्वे तु तस्य तत्रापि सत्त्वात्तत् क्रियते एवेत्यर्थः।

(३)त्रिष्वपि अग्निषु अन्वाधानान्ते नैमित्तिकस्य प्रवृत्तिरिति भावः।

केचित्तु गृहमेधीयादिषु (१)सर्वत्र कर्त्तव्यमिति प्रयोजनमाहुः । तत्पुनरालोचनीयम् । न ह्यपराग्निस्वकहोमाभीज्यमानदेवतापरिग्रहस्तत्रोपपद्यते । तस्मात्तत्राप्रवृत्तिः ।
अपरे त्वाहुः । अग्निपरिग्रहद्वारेण देवतापरिग्रहः । "ममाग्ने इत्यग्नीन् गृह्णाति" इति वचनात् । तेषां चाग्नीनां भेदः । प्रत्यग्नि चान्याश्चान्याश्च देवताः परिगृह्यन्ते । तेनापराग्निहोमेष्वसत्सु तद्देवतापरिग्रहो नास्तीति निवर्त्ततेऽग्न्यन्वाधानम् । न चात्र समुदितानामेककार्यता, तद्यथा त्रयो ग्रावाण इतरेतरसव्यपेक्षा उखां धारयन्ति । प्रत्यक्षं हि तत्र समुदितानामेककार्यत्वम्, इहत्वग्निद्वारेण भेदाध्यवसानमिति । नन्वेवं सति अपराग्निकयोः कार्यान्तरत्वं प्राप्नोति । अस्तु को दोषः? । कर्मभेदः स्यात्, तत्र यशोगोभिप्रभृतिकृतव्याख्योपरोधः स्यात् । उच्यते । न व्याख्योपरोधभयात्पदार्थस्यान्यथात्वमवसातुं शक्यम् । यथा हि प्रमाणैरर्थः प्रमीयते तथैव गृह्यत इति । अथवैकमेवाग्न्यन्वाधानं प्रत्यग्न्यभ्यस्यत इत्यदोषः । एवमाश्रीयमाणे प्रत्यग्न्यभ्यासं नैमित्तिकावसर इति ॥ ७ ॥

( कर्माङ्गं मांसमैथुनवर्जनम् )

## अहनि मा᳙ंसमैथुने वर्जयेत् ॥ ८ ॥

ननु चाहनि मैथुनस्य प्रतिषिद्धत्वादवाच्यत्वम् । कर्मोपलक्षणार्थमहर्ग्रहणमित्यदोषः । दृश्यते च कर्मणः कालव्यपदेशः "चतुर्होत्रा पौर्णमासीमभिमृशेत् पञ्चहोत्राऽमावास्याम्" इति । नियमस्य च कर्माङ्गता न्याय्या । अतदङ्गत्वे हि पुरुषमात्राभिसंबन्धात्फलपरिकल्पना स्यात् । ननु च "मांसमैथुने वर्जयेत्" इतीयत्यपि सूत्रे प्रकरणात्कर्माङ्गताऽवगतिरविरुद्धा व्यर्थमहर्ग्रहणमिति । सत्यमेवम् । आप्रयोगद्वयपरिसमाप्तेरयं धर्मो मा भूदिति प्रतिप्रयोगावसायित्वमङ्गानामितिन्यायसंसूचनार्थमहर्ग्रहणम् । एवं च सति

(१) सर्वेषु अग्निषु होमाभावेऽपीति शेषः ।

दाक्षायणे पुनरारम्भसामर्थ्यादाग्रयोगद्वयपरिसमाप्तेः "मांꣳसस्त्र्यनृतमूत्रकृतवासाꣳसि वर्जयेत्" इत्ययं धर्मः ॥ ८ ॥

( केशश्मश्रुवपनं वैकल्पिकं शिखावर्जम् )

## केशश्मश्रु वपते वाऽशिखम् ॥ ९ ॥

वाशब्दस्य सन्निधानाविशेषेऽपि सति वपतिनैव सम्बन्धः। शिखासम्बन्धे हि सति पक्षे सशिखं स्यात् । तत्र स्मृतिरुपरुध्यते "अशुचिर्वा एष यन्मुण्डस्तस्यैतदपिधानं यच्छिखा" इति । न चाहत्यवचनं सशिखस्य । तस्मात्स्मृत्यनुपरोध एव ज्यायानिति(१) ॥९॥

( मध्याह्नोत्तरं दम्पत्योर्घृतमिश्रमाषादिभिन्नान्नाशनं सति सामर्थ्ये )

## अपराह्णे(२) व्रतोपायनीयमश्नीतः सर्पिषा ऽसुहितौ ॥ १० ॥

अपराह्णग्रहणं अह्नोऽपरभागमात्रविषयम् । शब्दसामर्थ्यात् । न यथाऽन्यत्राह्नस्त्रिभागविषयता । तत्र हि "अपराह्णे ददाति" इति प्रकृत्य "पूर्वाह्णो वै देवानां मध्यन्दिनो मनुष्याणामपराह्णः पितृणाम्" इति वाक्यशेषाद्विशेषाध्यवसानम् । इह त्वपरभागमात्रवृत्तित्वम् । भोजनकालप्रत्यासत्तेश्च ।

व्रतोपायनीयमिति व्रतं भोजनमुच्यते । यथा ऽन्यत्र "तद्व्रतः स्यात्" "पयो व्रतम्" इति च । तद् येनोपेयते अमावादिना तद् व्रतोपायनीयम् ।

अश्नीत इति द्विवचनोपदेशात्पत्नी च । इतरथा हि याजमान

---

( १ ) केचिद्वाशब्दमशिखमित्यनेन सह योजयन्ति, अशिखं वा सशिखं वेति । तन्मते केशश्मश्रुवपनं नित्यमेव । सूत्रकारप्रस्थानादप्ययमर्थो ऽवसीयते । येनाधाने "पौर्णमासवद्वपनम्" इत्युक्त्वा; "ऋतुनक्षत्रसम्भारसामवपन" इत्यादिना वपनस्य विकल्पमाह । यदि पौर्णमासे वपनं विकल्पेन स्यात्तदा पौर्णमासीवदित्यनेनैवाधानेऽपि विकल्पस्य सिद्धत्वात्पुनर्विकल्पो न वक्तव्यः स्यात् । उक्तश्च । अत एव ज्ञायते पौर्णमासे वपनस्य विकल्पो नास्तीति याज्ञिकदेवाः ।

( २ ) व्रतं भोजनं येनान्नेनोपेयते क्रियते तद्व्रतोपायनीयम् उच्यते ।

एव नियमः स्यात् । यथा सौत्रामण्यां हुतोच्छिष्टभक्ष इति । सर्पिषेति नात्र यथाबलवत्सर्पिरेव साधनं, स्थितत्वसम्भवात् । अमाषममांसमिति च पर्युदासात् । तेन यथाप्राप्तं सर्पिरभिधीयते ।

तत्रापि किं नियमविधिरुत तैलादिपरिसंख्या ? । कश्चात्र विशेषः । यदि नियमः तैलमपि व्यञ्जनादिसंस्कारप्राप्त्या न निवर्त्स्यते । अथ परिसंख्या सर्पिषो न नियम इति । किमत्र युक्तम् । नियमविधिः । तत्र हि स्वार्थवृत्तिता शब्दस्य स्यात् । तैलादिव्युदासे परार्थता कल्प्येत । लक्षणा च स्यात् । तस्मान्नियमविधिरेव । नियमे च सत्यर्थात्तैलादिनिवृत्तिः ।

अस्तुहितौ अतृप्तावितिं । तदेतदशनं दृष्टार्थमुत धर्ममात्रमिति? । धर्ममात्रमिति ब्रूमः । कुतः । द्रव्यकालादिनियमात् । दृष्टार्थे हि यत्किञ्चित्स्यात् । तस्माद्धर्ममात्रमिति । दृष्टार्थं वा प्रसिद्धेस्तदर्थत्वात् । न ह्यदृष्टाय कश्चिद् भुङ्क्ते । यत्तूक्तं द्रव्यादिनियम इति । कामं नियमाददृष्टपरिकल्पना "प्राङ्मुखोऽन्नानि भुञ्जीत" इतिवत् । न तु गम्यमानतृप्त्यपह्नवद्वारेणादृष्टपरिकल्पनमिति । प्रयोजनं सति सामर्थ्ये ऽश्नीयात् ॥ १० ॥

( आहवनीयस्य पश्चात्प्राङ्मुखस्तिष्ठन्नग्निं पश्यन् व्रतमुपेयात )

**अन्तरेणापराग्नी गत्वाऽपरेणाहवनीयं प्राङ्तिष्ठन्नग्निमीक्षमाणोऽप उपस्पृश्य व्रतमुपैम्यग्ने व्रतपत ऽइदमहमिति वा ॥ ११ ॥**

अन्तरेणापराग्न्योरिति षष्ठ्यां प्राप्तायां तदपवादः "अन्तराऽन्तरेणयुक्ते" इत्युपपदविभक्तिर्द्वितीया । प्राङ्तिष्ठन्निति शक्यमवक्तुम् । अपरेण व्यवस्थितस्याग्नीक्षणविधानसामर्थ्यात् । अग्निमीक्षमाण इत्यपि न वाच्यम् । मन्त्रलिङ्गादेव प्राप्तः । उक्तं च प्रदेशान्तरे "आहवनीयमीक्षमाणस्तद्वचनत्वात्" इति । वक्तव्यं वोत्तरमन्त्रार्थत्वात् । तस्य च विलिङ्गत्वात् । प्राङ्मुखता च वाच्या । (१)प्रोषितस्यापि दिङ्नियमो यथा स्यादिति ।

---

(१)"विहाराभिमुखो याजमानं कुर्यात्" इति हि श्रूयते ।

अपामुपस्पर्शनमाचमनम् । लिङ्गात्-"प्राङ्निष्ठन्नप उपस्पृशति" इति प्रकृत्य "तेन पूतिरन्तरतो मेध्यो वा ऽआपो मेध्यो भूत्वा व्रतमुपायानि" इति । आलम्भनमात्रं वा । आचमनानुपदेशात् । तस्य नैमित्तिकत्वात् । शब्दसामर्थ्याच्च-"अप उपस्पृशति" इति । लिङ्गमर्थवादमात्रं दीक्षास्नानवत् । व्रतमुपैति नियममुपगच्छतीति ।

अग्ने व्रतपत इत्याहवनीयाग्निरुच्यते । न हि देवताऽग्नेरीक्षणं सम्भवति । तेन(१)दार्षद्वतावभृथे विपरिणामः । ननु च सामिष्टयजुरन्ते प्रकृतौ अवभृथविधानात्तत्र च व्रतस्य प्रासङ्गिकत्वादग्रहणमिति चेत् । न । अतद्धर्मत्वात् । न हि समिष्टयजुरन्तताऽवभृथस्य (२)धर्मः (किंतु सवनीयस्य) । तस्माच्च तदन्तएवावभृथः । तत्र च व्रतग्रहणेऽग्निशब्दो विपरिणस्यत इति न दुरुक्तम् ॥ ११ ॥

( कर्माङ्गं सत्यवदनम् )

सत्यमतऊर्ध्वं वदेत् ॥ १२ ॥

अत इत्यवाच्यम् । पाठादेव तत्सिद्धेः । स्यात्सम्बन्धज्ञापनार्थत्वात् । व्रतग्रहणोत्कर्षे सत्यं नियमो यथोत्कृष्येतेति । अपरे तु अतःशब्दं हेत्वर्थं मन्यन्ते ॥ १२ ॥

ननु चैकमुपनयनसमकालमेव सत्यवदनम्, (३)"उत्तरेषां चैतदविरोधि" इतीहापि प्राप्तम् । तथा परमाधानसमकालं 'न वा आहिताग्निनाऽनृतं वदितव्यम्' इति "अनृतातिथ्यपनोद" इति सूत्रितम् । इदमन्यत् "सत्यवाग्रत" इति । अस्य विषयोपदर्शनायाह—

---

( १ ) दृषद्वतीतीरे क्रियमाणस्य सत्रविशेषस्यावभृथे पुरोडाशदेवताया अग्निरूपायाः सत्त्वेऽपि आहुत्यधिष्ठानस्य जलस्यैव सत्त्वात्तेनैव रूपेण सम्बोधनमिति अग्निपदस्य विपरिणाम इत्यर्थः ।

(२)प्रकृताविति शेषः । एवंच दृषद्वतीतीरे क्रियमाणसत्राङ्गभूताया आग्नेय्या इष्टेः अन्ते नावभृथः किंतु पूर्वमेव । ततश्च तत्र व्रतग्रहणे अग्निशब्दस्थाने अप्शब्दः प्रयोज्य इत्यर्थः ।

( ३ ) 'उत्तरेषां गृहस्थादीनां त्रयाणामाश्रमिणां च अविरोधि एतत् ब्रह्मचार्युक्तम् आचरणीयम्' इत्यर्थिकया 'उत्तरेषां चैतदविरोधि" इति गौतमस्मृत्या गृहस्थस्यापि प्राप्तम् इत्यर्थः ।

कर्माङ्गमुत्तरे सत्यवदनम् ॥ १३ ॥

पूर्वं तु पुरुषाङ्गम् । यदिदमुत्तरदेशे तत्कर्माङ्गमिति । को विशेष इति चेत् । कर्माङ्गे प्रायश्चित्तसमुच्चयः । पुरुषार्थापचारे स्मार्त्तमेव । नन्विह द्वे पुरुषार्थे श्रौतं स्मार्त्तं च । तत्र श्रौतापचारे कृते प्रायश्चित्तसमुच्चय इह प्राप्नोत्येव, पुनरारम्भो व्यर्थ इति । सत्यमेवम् । कर्माङ्गे कर्मगतविशेषनिबन्धनं विशिष्टं प्रायश्चित्तं यथा स्यादिति । तच्चाग्वैदिके भूरिति याजुर्वैदिके भुव इति । हौतृकपदार्थानुष्ठानकाले सत्यवदनापचारे हौतृकं श्रौतम्, आध्वर्यवं च, स्मार्त्तं च । केचित्त्वाधानकालानृतवदनप्रतिषेधमनुवादं मन्यन्ते । तथा हि न वा आहिताग्निनाऽनृतं वादितव्यम् । न यद्न् जातु नाऽनृतं वदेदित्याह ॥ १३ ॥

( सायम् आरण्यवृक्षफलाद्यशनं वैकल्पिकम् )

वृक्षारण्यौषधीनामश्नीयाद्वा ॥ १४ ॥

इदमवसरप्राप्तं सायाशनमुच्यते । आरण्यवृक्षाणामारण्यौषधीनां च अश्नीयाद्वा न वेति विकल्पः । के चिदारण्यशब्दमोषधिविशेषणं मन्यन्ते । निर्देशसामर्थ्यात् । नह्यारण्यशब्दो वृक्षपदात्पूर्वः । अतो न तदुपसर्जनमिति । न वा अविशेषेण श्रवणात् । "स वा ऽआरण्यमेवाश्नीयात्" इति हि प्रकृत्य "या वाऽऽरण्या ऽओषधयो यद्वा वृक्ष्यम्" इत्याह । सूत्रस्य च तन्मूलत्वादतन्त्रो निर्देश इति । सामर्थ्यसिद्धत्वात् विकल्पोऽवाच्य इति चेत् । न । अवधारणार्थत्वात् । अवधार्यं हि वैकल्पिके कर्मणि प्रवृत्तिर्न्याय्येति । आरण्यगुणविधित्सया (१)चेदमुच्यते ॥ १४ ॥

( गार्हपत्याहवनीयान्यतरगृहेऽधआस्तरणे यजमानशयनम् )

आहवनीयगृहशाय्यधो गार्हपत्यस्य वा ॥ १५ ॥

विकल्पेन हि श्रवणमत्र । तत्रायमधःशब्दः किं खट्वादिविरोधकृदुतास्तरणस्यापीति ? । नास्तरणनिषेधकः । तत्रापि प्रयोगप्र-

(१) चः समुच्चये । तथाच अवधारणार्थत्वम् आरण्यगुणविधानार्थत्वं च वैकल्पिकाशनोक्तेरिति भावः ।

स्त्ययाभ्याम् "अधः सुता वयम्" इति। क्वचिच्च स्थण्डिलशायीत्यतो नास्तरणस्य निषेधः। "अधः शयीताधस्तादिव हि श्रेयस उपचारः" इति लिङ्गात् ॥ १५ ॥

( प्रतिपद्दिने एव अग्न्यन्वाधानादिकर्मापवर्गान्तम् )

सद्यो वा प्रातः ॥ १६ ॥

पूर्वामुत्तरां वोपवसेदिति हि पूर्वमुक्तम्। तत्र सद्यो वेतीयत्युच्यमाने तयोरेवान्यतरत्र यागः प्राप्नोति। उत्तरोपवासपक्षे च द्वितीयायाम्। तन्माभूदित्यतः प्रातर्ग्रहणम्। अथाक्रियमाणेऽपि प्रातर्ग्रहणे अङ्गानां प्रधानकालत्वस्य न्याय्यत्वात्पूर्वस्यामप्राप्तिरेव यागस्येति। उच्यते। एवं सति यथोत्तरस्यां साङ्गप्राप्तिरेवमुत्तरोपवासपक्षाऽवलम्बनद्वारेणोत्तरोत्तरस्यामपि (१) प्राप्नुयात्। तन्निरासार्थं प्रातर्ग्रहणाम्। अस्तु तथेति चेत्, न। पौर्णमास्यां यागविधानसामर्थ्यात्। एवम् उत्तरस्यामप्यप्राप्तिरिति चेत्। स्यादारम्भसामर्थ्यात् "पूर्वामुत्तरां वोपवसेत्" इति। उत्तरा हि पौर्णमासी प्रतिपदिति प्रतिपादितम्। तेन "सद्यो वा प्रातः" इति यदा प्रातस्तदा सद्य इति पौर्णमासी द्वितीया च निरस्ते भवतः। सूत्रारम्भसामर्थ्यादप्ययमर्थोऽवसीयते। "पक्षादौ यद्धविः" इति हविः पक्षादिना विशेष्यते, तच्चैवमुपपद्यते। अथेतरथा अनैकान्तिकत्वादविशेषणं स्यात्। तस्मादुत्तरस्यामेव याग इति साधूच्यते(२) ॥ १६ ॥

---

( १ ) द्वितीयायामित्यर्थः।

( २ ) याज्ञिकदेवभाष्ये त्वत्र सूत्रभेदो दृश्यते। तथा हि। "सद्यो वा"। पौर्णमासे यद् द्व्यहकर्त्तव्यमुक्तं तद् एकस्मिन्नेवाहन्यग्न्यन्वाधानादि कर्मापवर्गान्तं भवति। "प्रातः"। अस्मिन् पक्षे प्रातः प्रतिपद्दिन एव सर्वमग्न्यन्वाधानादि कर्मापवर्गान्तं कर्तव्यं, न पूर्वेद्युरग्न्यन्वाधानदिने। प्रतिपदः प्रधानकालत्वात्। अङ्गानां प्रधानकालत्वस्य न्याय्यत्वात। तत्र च व्रतोपायनीयाशनारण्याशनान्यतरागारशयनानि न भवन्ति, उक्तकालाभावात्। रागप्राप्तेष्वेवैतेषु द्रव्यादिनियममात्रविधानाच्च। न हि रागतस्तदानीमशनादीनि प्राप्नुव-

( प्रातः अग्निहोत्रानन्तरं ब्रह्मवरणम् )

अग्निहोत्रꣳ हुत्वा ब्रह्माणं (१)वृणीते ब्रह्मिष्ठं 'भूपते भुवनपते महतो भूतस्य पते ब्रह्माणं त्वा वृणीमहे' इति ॥ १७ ॥

प्रातरित्यनुवर्त्तमाने अग्निहोत्रं हुत्वेत्युक्ते तत्प्रतिपत्तिः मा भूत् सायमग्निहोत्रमिति । तत्कुतः । अहनि कर्मसाकल्याद्रात्रौ चाविधानात् । अग्निहोत्रग्रहणं च इहार्थाभावादमावास्याविषयम् । तत्र हि वचनम् "उदिते सवितरि पौर्णमासस्य तन्त्रं प्रक्रमियादनुदित आमावास्यस्य" इति । अतो ऽग्निहोत्रग्रहणमानन्तर्यार्थम् । ब्रह्मिष्ठमिति च पदार्थसतत्त्वोपजातावबोधेन । न हि परमात्माख्यब्रह्मसतत्त्वावबोधोऽत्रोपयुज्यते ॥ १७ ॥

( भूपते इत्यादिना सकलेन मन्त्रेण वृतः सन्
'अहं भूपतिः' इत्यादिमन्त्रं जपेत् )

वृतो जपत्यहं भूपतिरहं भुवनपतिरहं महतो भूतस्य पतिर्भूर्भुवः स्वर्देवसातिरेतं त्वा वृणते बृहस्पतिं ब्रह्माणं तदहं मनसे प्रब्रवीमि मनो गायत्र्यै गायत्री

---

न्ति । अन्यद्वपनादि सर्वं भवत्येव ।

व्यवस्थितविकल्पोऽयमिति केचित् । तथाच कात्यायनः—

"सन्धिश्चेत्सङ्गवादूर्ध्वं प्राक् पर्यावर्त्तनाद्रवेः ।
सा पौर्णमासी विज्ञेया सद्यस्कालविधौ तिथिः" इति ।

(१)वरणं चाचारादेवं कर्तव्यम् । वितानस्योत्तरतः प्राङ्मुखोपविष्टं ब्रह्माणमुदङ्मुखोपविष्टो यजमानः स्वयं सव्येन गृहीत्वा दक्षिणेन यवसहितेन ब्रह्मणो जान्वालभ्य वृणीते—अमुकगोत्र अमुकशर्मन् पौर्णमासेष्ट्या अहं यक्ष्ये तत्र त्वं ब्रह्मा भवेति, अत्र च भूपत इत्यादिमन्त्रः । एतच्च वरणमप्रवृत्तस्य प्रवर्तनम् । तेन पवमानेष्टिदीक्षणीयादौ न भवतीति ।

त्रिष्टुभे त्रिष्टुब् जगत्यै जगत्यनुष्टुभेऽनुष्टु-
प्प्रजापतये प्रजापतिर्विश्वेभ्यो देवेभ्यो बृह-
स्पतिर्देवानां ब्रह्माऽहं मनुष्याणाम्॥१८॥

वृतो जपति ब्रह्मा जपतीति यावदुक्तम्(१)। अथवा यदा वृतः समस्तेन मन्त्रेण भवति तदा जपति कर्तृभेदाद्यौगपद्यं मा भूदिति॥१८॥

(यजमानकर्तृकं ब्रह्मणः प्रार्थनम्)

वाचस्पते यज्ञं गोपायेत्याह॥१९॥

सामर्थ्याद्यजमानः। स हि वरणेनानत्या च यज्ञगोपायने नियोक्तुं समर्थो नान्यः। वाचस्पतित्वं च स्तोतुं ब्रह्मण्यध्यारोप्यते। वाचस्पते ब्रह्मन् यज्ञं गोपायेति। यदपि च काण्वानां "देवसावितरित्युक्त्वा वाचस्पते यज्ञं गोपायेत्याह" इति पठ्यते, तदपि न समानकर्तृकार्थम्। पूर्वकालतामात्रे हि क्त्वाशब्दः। समानकर्तृकतायामसामञ्जस्यं स्यात्। न हि ब्रह्मा आत्मानमेव वाचस्पते इति सम्बोधयति। अथाधिष्ठात्री देवतोच्यते, तत्रापि नियोगाभावाददृष्टार्थता स्यात्। तस्माद्यथोपवर्णित एवार्थः।

स चायं प्रैषो नियोगार्थत्वादसत्यपि वरणे प्रवर्त्तते। यथा ज्योतिष्टोमे दीक्षणीयादिष्वाधाने चेष्टिषु। कथमाधाने वरणाभाव इति चेत्। स्यात् प्रवृत्तिदर्शनात् "चत्वार ऋत्विजः प्राश्नति" इति। ब्रह्मौदनाभावे ऽस्तु वरणमिति चेन्न। तत्रापि दर्शनात् "अग्न्याधेये ब्रह्मा सामानि गायति" इति। तेन प्रतिपन्नब्रह्मत्वस्य वरणं क्रियमाणमप्राकृतप्रयोजनं स्यात्। वरणविशेषनियमार्थमस्तु प्रवृत्तिरितिचेत्, न। नियमस्य क्रियापुरःसरत्वात्। सत्यां हि क्रियायां नियमानुग्रहो, न नियमानुग्रहाय क्रियाप्रवृत्तिः। यो हि पण्डितं मन्यमान एवं कुर्यात्स "प्राङ्मुखोऽन्नानि भुञ्जीत" इतिभोजननियमानुग्रहाय तृप्तोऽपि

(१) ब्रह्मा जपति इत्येतावता यावद्वक्तव्यं तावत् वृतो जपति इत्यनेनोक्तम्।

सन् भुञ्जीतापि। यश्च ज्योतिष्टोमे ब्रह्मवरणनिषेधो न्यायमूलः स इहापि प्रवर्त्तते एव ॥ १९ ॥

(उत्तरतो वृतस्य ब्रह्मणो दक्षिणतः स्थापितासनगमनार्थं मार्गविकल्पः)

अपरेण वाऽऽहवनीयं दक्षिणाऽतिक्रामति ॥ २० ॥

"उत्तरत उपचारो यज्ञ" इति वरणमुत्तरतः । "दक्षिणतो ब्रह्मयजमानयोरासने" इति गमने विकल्पः । शास्त्रसामर्थ्यात् ॥ २० ॥

( ब्रह्मणा स्वासनस्येक्षणम् )

'अहे दैधिषव्योदतस्तिष्ठान्यस्य सदने सीद योऽस्मत्पाकतर' इति ब्रह्मसदनमीक्षते ॥ २१ ॥

तच्च कौशं स्यात् । तृणनिरसनोपदेशात्, प्रसिद्धेश्च । न वा नियमशासनाभावात् । तृणनिरसनं तु कुशास्तृतत्वादासनस्य । तत्कुतः । शिष्टानुस्मरणात् । प्रसिद्धिरविशिष्टा । तस्माद्यथाप्रसिद्धमवेधविरुद्धमासनमिति ॥ २१ ॥

( आसनात्तृणनिरसनम् )

ब्रह्मसदनात्तृणं निरस्यति(१)'निरस्तः पाप्मा सह तेन यं द्विष्म' इति ॥ २२ ॥

स चायमासनसंस्कारः । तेन पशुपुरोडाशे आपश्युपरिसमाप्तेः संस्कृतत्वादासनस्य पुनर्न प्रवर्त्तते ॥ २२ ॥

इति कर्काचार्यकृतकातीयश्रौतसूत्रभाष्ये द्वितीयाध्याये प्रथमा कण्डिका ॥ १ ॥

---

( १ ) नैर्ऋत्यां दिशि प्रक्षिपति । शाङ्खायने दर्शनात् । तत्र "समानं होत्रा तृणनिरसनम्" इत्युक्तम् । होतुश्च पठितम् "होतृषदनाच्छुष्कं तृणमुभयतः प्रतिच्छिद्य दक्षिणापरमवान्तरदेशं निरस्यति" इति । एवञ्च होत्रा साम्यसम्पादनाय तथैव कर्तव्यमिति भावः ।

( ब्रह्मासने उपवेशनम् )

'इदमहं बृहस्पतेः सदसि सीदामि प्रसूतो देवेन सवित्रा
तदग्नये प्रब्रवीमि तद्वायवे तत्पृथिव्या'
इति ब्रह्मसदन ऽआहवनीयमभिमुख(१)
ऽउपविशति ॥ १ ॥

"तदग्नये प्रब्रवीमि" इत्यग्निशब्दो देवतावचनः स्यात् । प्रकृतत्वात् । न वा वायुना समुच्चारणात् । तस्य चाप्रकृतत्वात् । तस्माद्देवतान्तरवचनः । प्रयोजनं सौर्यादावविपरिणामः । ब्रह्मसदनग्रहणं गुणार्थं (२)प्रकृतत्वादेव । को गुण इति चेत् । आहवनीयमभिमुख इति॥१॥

( ब्रह्मणे विशिष्टभागार्पणप्रभृत्यनुयाजप्रैषान्तं ब्रह्मणो वाग्यमः )

वाग्यत ऽआऽनुयाजप्रसवात् ॥ २ ॥

यतवाग्ब्रह्मा भवत्यनुयाजप्रसवं यावत् ॥ २ ॥

भागपरिहरणादि वा ॥ ३ ॥

सा चैषाऽवधारणा । "अथास्मै ब्रह्मभागं पर्याहरन्ति" इति प्रकृत्य "स वै वाचं यम एव स्याद् ब्रह्मन् प्रस्थास्यामीत्येतस्माद्वचसः" इति आम्नायते । पूर्वमविशेषादध्यवसितम् । पाठक्रमाद्विशेषाध्यवसानम् । लिङ्गाच्च "विवृहन्ति वा ऽएते यज्ञं क्षण्वन्ति ये मध्ये यज्ञस्य पाकयज्ञिययेडया चरन्ति" इति । हेतुत्वेन वाग्यमनस्येहाचरणं निर्दिशति । तस्माद्भागपरिहरणाद्येव । स चायं पदार्थधर्मः । यतवाक्के हि सति अप्रमादात्कृताकृतप्रत्यवेक्षणमाचरति ॥ ३ ॥

---

(१) छन्दोगसूत्रे तु "परिध्योर्वा सन्धिं स्रुचां वाऽग्राणि उत्करं वाऽभिमुख" इति पठितम् ।

(२) ब्रह्मसदनस्य प्रकृतत्वादेव तत्रोपवेशने सिद्धे ब्रह्मसदनग्रहणमाहवनीयाभिमुखत्वस्य ब्रह्मसदनसम्बन्धनियमार्थम् । तेन 'आहवनीयदेशं दक्षिणेनास्ते' इत्यादौ नाहवनीयाभिमुखत्वम् ।

( नैमित्तिके व्याहृतिहोमे पूर्वमुपस्थिते अपकृष्य ब्रह्मवरणम् )

## आवृता ऽवषट्कारासु ॥ ४ ॥

अवषट्कारास्वाहुतिषु ब्रह्माऽऽवृतोत्पाद्यते । ताश्चैता अग्निहोत्राहुतयोऽवषट्काराः । अस्ति हि तत्रैकर्त्विक्केऽपि सति प्रायश्चित्तार्थतया ब्रह्मणः प्राप्तिः । तेन निमित्ताद्व्याहृतिहोमे आपन्ने सति आवृता क्रियामात्रेण ब्रह्मोत्पाद्यत इति । क्रियया हि कारकमाक्षिप्यते । लिङ्गाच्च "अथ हैतामिन्द्र ऽऋषये प्रायश्चित्तिमुवाचाग्निहोत्रादग्रऽआमहत ऽउक्थात्" इति ।

न चैतदेवम् । एकर्त्विक्त्वात् । एवं हि श्रूयते "एकर्त्विजमग्निहोत्रम्" इति । अङ्गप्रधानपदार्थाभिनिर्वृत्तिरेकेनर्त्विजा कर्त्तव्येति । ननु नैमित्तिकार्थतया द्वितीयोऽपि भविष्यति । नेत्युच्यते । न हि नैमित्तिकस्य ब्रह्माक्षेपसामर्थ्यमस्ति । "भिन्ने जुहोति" इति होममात्र एव विधेर्व्यापारपर्यवसानम् । वाक्यान्तरपरिप्राप्त इति चेत्—"यदेव त्रय्यै विद्यायै शुक्रं तेन ब्रह्मत्वम्" इत्येवमादिना व्याहृतिहोमे ब्रह्मसम्बन्धविधानम्, तेन यत्र व्याहृतयस्तत्र ब्रह्मणा भवितव्यम् । नैतदेवम् । यदिह्येतदन्यत्राचरितार्थं स्यात्ततः कदाचित्स्यादपि । अस्ति ह्यस्य चरितार्थत्वं दर्शपूर्णमासादौ । तेनाग्निहोत्रे नान्यथानुपपत्त्या ब्रह्माक्षेप्तुं शक्यत इति । एकर्त्विक्त्वविरोधाच्च । न चात्र क्रिया ब्रह्माणमन्तरेण न सम्भवति । कर्मान्तरविधानात् । अस्ति ह्यग्न्यध्वर्य्वाख्यं कर्मान्तरम् । तेनापि न तदाक्षेपः । यच्चोक्तम् "अग्निहोत्रादग्रआमहत उक्थात्" इति । सोऽपि चतुर्होत्राद्धोमविषयोऽर्थवादः ।

अस्तु तर्हि दार्विहोमविषयताऽस्य सूत्रस्य । दार्विहोमाहुतयो ऽवषट्काराः । तासां हि पौर्णमासविध्यन्तग्राहित्वेनोचितो वषट्कारः, स्वाहाकाराम्नानात्पुनर्निवृत्तिः । तदभावे ऽन्वाख्यानमुपपद्यते । तदेतदनुपपन्नम् । तत्र हि प्राप्त एव ब्रह्मा, मन्त्ररहिता च क्रिया ब्रह्मवरणादिका तूष्णीमनर्थलुप्ता इति ।

पूर्णाहुतिविध्यन्तग्राहिहोमविषयता तर्ह्यस्तु अस्य सूत्रस्य । ता अपि ह्यवषट्कारा इति । एतदपि नोपपद्यते । अग्निहोत्रन्यायसालक्षण्यात् । अनुद्धृताभ्यस्तमयाहुतौ पौर्णाहुतिका धर्मा विहिताः । ते

आचार्येण पूर्णाहुत्यामुपसंहृत्यान्यत्रातिदिष्टाः। अतस्तत्रापि ब्रह्मणः प्राप्त्यभाव एव।

एवं चेदिहार्थमेव सूत्रमस्तु। इह हि प्राग्ब्रह्मवरणाद्व्याहृतिहोमनिमित्ते सति तदर्थं ब्रह्मवरणापकर्षो न्याय्यः। अङ्गप्रधानार्थत्वाद् ब्रह्मणः। तदर्थमिदं सूत्रम् "आवृताऽवषट्कारासु"। आवृता क्रियया। समन्त्रिका चासौ क्रिया न्यायतः प्राप्नोति। ननु चान्यत्राचार्येणायमावृच्छब्दो मन्त्ररहितक्रियाविषयः प्रयुक्तः "मृदा सहोखां करोत्यावृता" इति। सत्यमेवम्। मृदा सहोखां करोतीत्यत्रैव समन्त्रिका क्रिया प्राप्ता, तत्रावृच्छब्दो मन्त्रनिवृत्तिपर एव। तन्निवृत्तिश्च वाचनिकी "एतयैवावृताऽनुपहरन्यजुः" इति। अतो ब्रह्मवरणापकर्षार्थमेतत्। वाचस्पतिप्रैषस्तु स्वकालीन एव, व्याहृतीनामतदङ्गत्वात्। अतदङ्गता च प्रकरणव्यवच्छेदात्। शक्यन्ते चावषट्कारा व्याहृतयो वक्तुम्। उचितत्वाद्वषट्कारस्य। याज्याकार्यं हि तासामाम्नानमस्ति "यदि याज्यां पुरोनुवाक्यां वा न विन्देद् व्याहृतीरेव याज्यायाः पुरोनुवाक्यायाश्च स्थाने कुर्यात्" इति। तेनेह वषट्काराभावे अवषट्कारा व्याहृतय उच्यन्ते ॥ ४॥

(ब्रह्मवरणानन्तरं वा व्रतग्रहणम्)

## अत वा व्रतोपायनम् ॥ ५ ॥

शास्त्रस्य तुल्यत्वात् ॥ ५॥

(ब्रह्मणो वाग्यमलोपे वैष्णवमन्त्रजपः)

## व्याहृत्य वैष्णवं मन्त्रं जपेत् ॥ ६ ॥

'वाग्यत आऽनुयाजप्रसवात्' इति वाग्यमे सति यद्यनुव्याहरति तदा वैष्णवं मन्त्रं जपेत् ॥ ६॥

अधिकारमुपजीवन्नाह—

(अध्वर्योरपि हविर्ग्रहणकालिकवाग्यमलोपे वैष्णवमन्त्रजपः)

## अध्वर्युश्च ॥ ७ ॥

हविर्ग्रहणकाले वाग्यमने। तुल्यं हि शास्त्रमुभयोः "स यदि पुरा मानुषीं वाचं व्याहरेत्तत्रो वैष्णवीमृचं वा यजुर्वा जपेत्" इति।

यजमानस्य त्वनाम्नानादाध्वर्यवमेव ।

केचित्तु च-शब्दाद्यजमानस्य दीक्षाकालवाग्यमापचारे वैष्णवमिच्छन्ति । तत्रापि ह्याम्नायते "अथ यद्वाचंयमो व्याहरति" इति प्रकृत्य ।

स च मन्त्रः (१)प्राकरणिकः स्यात् । प्रकरणादेव सामान्यसम्बन्धावगते विशेषविषयत्वे सति वाक्यस्य लाघवम् । इतरथा ह्यप्रकृत उपादीयमाने सामान्यसम्बन्धो विशेषसम्बन्धश्चेति गौरवं स्यात् ॥ ७ ॥

( अपां प्रणयनायाध्वर्योरनुज्ञानम् )

प्रणय यज्ञं देवता वर्धय त्वं नाकस्य पृष्ठे यजमानो अस्तु । सप्तऋषीणाᳫँ सुकृतां यत्र लोकस्तत्रेमं यज्ञं यजमानं च धेह्योम् प्रणयेति प्रणीताः प्रसौति ॥ ८ ॥

प्रणययज्ञमित्यनेन मन्त्रेण प्रणीताः प्रणीयमाना अनुजानाति । ॐप्रणयेत्यस्य प्रसवार्थत्वात् ततः पुरस्ताज्जपः । प्रयोजनमुपांशुप्रयोगः । अत्र पुनर्लोण्मध्यमपुरुषैकवचनाविशेषेऽपि सति मृग्यो विशेषः(२) । अयं च मन्त्रोऽनेकयजमानके कर्मणि(३) यजमानाः सन्तु, यजमानांश्च धेहीति विपरिणम्यते । द्वित्वेऽपि यजमानौ स्तां, यजमानौ च धेहीति च ॥ ८ ॥

( ब्रह्मणा हविष इध्माबर्हिषोश्च प्रोक्षणायाध्वर्योरनुज्ञानम् )

एवमामन्त्रित ॐकारेण प्रोक्ष यज्ञमिति हविषीध्माबर्हिषोश्च ॥ ९ ॥

---

(१)"उरु विष्णो विक्रमस्व" इति ऋक् । (य० सं० अ० ५।३८)। "ध्रुवा ऽअसदन्नृतस्य योनौ ता विष्णो" इति यजुः । ( अ० २।६ )

(२)प्रथमम् "प्रणय" इति देवतारूपब्रह्मपरमिति तस्य सर्वत्राविशिष्टत्वात्तन्नोह्यते । द्वितीयं तु अध्वर्युपरमिति 'तदनुसारेणोह्यते इति विशेषोऽन्विष्टः ।

(३) अहीनैन्द्राग्नकुलायसत्रगणयागादौ ।

प्रोक्षणं प्रसौति । एवमामन्त्रित इत्यामन्त्रणविधानं 'ब्रह्मन् हविः प्रोक्षिष्यामि' इत्येवमादिलाभार्थम् । न हि तत्र प्रणीताप्रणयनवदाम्नातम् । एवमोङ्कारेणेति—ओङ्कारपूर्वकेण, अर्थस्वरूपेण वचसेति यावत् ॥ ९ ॥

( वेदिपरिग्रहानुज्ञानम् )

बृहस्पते परिगृहाण वेदिꣳ सुगा वो देवाः सदनानि सन्तु अस्यां बर्हिः प्रथताꣳ साध्वन्तराहिꣳस्रा पृथिवी देवी देव्यस्त्विति वेदिं परिगृह्णन्तम् ॥ १० ॥

प्रसौतीत्यनुवर्त्तते ॥ १० ॥

( सामिधेन्यनुवचनाय ब्रह्मणा होतुरनुज्ञानम् )

प्रजापतेऽनुब्रूहि यज्ञमिति सामिधेनीरनुवक्ष्यन्तम् ॥ ११ ॥

होतारं प्रसौति ॥ ११ ॥

(देवतावर्धयेत्यादिधेहीत्यन्तस्य प्रोक्षणाद्यनुज्ञाने ऊहपूर्वकमनुषङ्गः)

देवता वर्द्धय त्वमिति सर्वत्रानुषजति (१) ॥ १२ ॥

अनुषङ्गश्च लाघवार्थः । अत्र च प्रोक्षणपरिग्रहेषु अध्वर्युपरं वेदिपरं च वरुणप्रघासेषु वचनमूह्यते । यजमानपरं चानेकयजमानके ॥ १२ ॥

( ब्रह्मा सपात्रं प्राशित्रं प्रतिगृह्यासाद्य पुनरादाय प्राश्नीयात् )

'मित्रस्य त्वा चक्षुषा प्रतीक्ष' इति प्राशित्रं(२) प्रतीक्षते ॥ १३ ॥

देवस्य त्वेति प्रतिगृह्णाति ॥ १४ ॥

---

(१) पूर्वोक्तेषु प्रोक्ष यज्ञमित्यादिकेषु सर्वेष्वपि मन्त्रेषु 'देवता वर्धय त्वं नाकस्य पृष्ठे यजमानो अस्तु सप्तऋषीणाꣳ सुकृतां यत्र लोकस्तत्रेमं यज्ञं यजमानञ्च धेहि' इति मन्त्रमनुषजति ।

(२) प्राशित्रं ब्रह्मणो भागः, यवमात्रं पिप्पलमात्रं वा ।

(१)सपात्रम्। प्रसिद्धेः, सादनोपदेशात्, पुनरादानसामर्थ्याच्च ॥ १३ ॥ १४ ॥

(२)पृथिव्यास्त्वेति सादयत्यपोह्य बर्हीᳬषि॥ १५ ॥

पुनरादाय देवस्यत्वेत्यनामिकाङ्गुष्ठाभ्यामग्नेष्ट्वेति प्राश्नाति दन्तैरनुपस्पृशन्नत्र चेत् ॥ १६ ॥

पुनरादानं च (३)द्रव्यमात्रस्य, प्राशनार्थत्वात्। अतश्च आसादितेऽपि भविष्यति। अनामिकाङ्गुष्ठाभ्यामादायाग्नेष्ट्वेत्यनेन मन्त्रेण प्राश्नाति। चच्छब्दो विकल्पार्थः। अत्र चेत्प्राश्नाति पुनरादाय प्राश्नाति ॥ १५ ॥ १६ ॥

निदधाति वाऽᳬसदेशे ॥ १७ ॥

पूर्वमविशेषेणाभिहितं, विशेषप्रतिपिपादयिषयाऽत्र पुनर्वचनम् ॥ १७ ॥

( ब्रह्मा प्राशित्रपात्रं प्रक्षाल्य नाभिमालभेत )

प्रक्षाल्य पात्रं नाभिमालभते 'या अप्स्वन्तर्देवतास्ता इदᳬ शमयन्तु स्वाहा कृतं जठरमिन्द्रस्य गच्छ घसिना मे मा संपृक्था ऽऊर्द्ध्वं मे नाभेः सीदेन्द्रस्य त्वा जठरे सादयामीति' ॥ १८ ॥

प्रक्षालनंच कार्यसम्बन्धाविशेषाद् द्वयोरपि पात्रयोः। एकवचनं तु जात्यपेक्षम्। ननु चैकमेवैतत्पात्रं, प्रक्षाल्य पात्रमित्येकवचननिर्देशात्। तथा तूष्णीं प्राशित्रहरणमिति। द्वे वा स्याताम्। अन्ते

(१)पात्रसहितं प्राशित्रं प्रतीक्ष्य प्रतिगृह्णातीत्यर्थः।

(२)ब्रह्मा तत्प्रतिगृह्य वेदेर्दक्षिणांसदेशे स्तृतानि बर्हींषि अपसार्य प्राग्दण्डं सादयति। आश्वलायनादिसूत्रेषु तद्दर्शनात्।

(३)ननु प्राशित्राधारभूतपात्रस्य। तस्य प्राशनऽनावश्यकत्वादिति भावः।

प्रतिपत्तिदर्शनात् "कर्णयोः प्राशित्रहरणे" इति । इतरज्ञात्यपेक्षयेत्युक्तम् ॥ १८ ॥

( अनुयाजार्थं ब्रह्मणा 'एतं ते' इत्यनेनानुज्ञानम् )

'एतं त' इति समिदामन्त्रितः प्रसौति ॥ १९ ॥

समित्सम्बन्धादामन्त्रणं समिच्छब्देनोच्यते । अथवा समिच्छब्देन तादर्थ्यादनुयाजा उच्यन्ते । अनुयाजार्थमामन्त्रितः 'एतं त' इत्यनेन मन्त्रेणानुजानाति । यज्ञपतिशब्दश्च सत्रे विपरिणम्यते । यज्ञपतिसम्बद्धवचनसंस्कारपरिलोपः कस्य चिन्माभूदिति ॥ १९ ॥

(१)प्रतिष्ठेति ब्रूयाद्वा ॥ २० ॥

"स यदि कामयेत, ब्रूयात्प्रतिष्ठ" इति वचनात् । केचित्प्रतिष्ठेति क्रियापदात्पदान्तरमध्याहरन्ति । सामर्थ्यात् । तत्पुनर्युक्तमयुक्तं वेति विचारणीयम् । प्रतिष्ठतमिति च वरुणप्रघासेषु विपरिणामः ॥२०॥

( कर्मसमाप्तौ ब्रह्मकर्तृकः समिद्धोमः )

कर्मापवर्गे समिधमादधाति जुहोत्युपतिष्ठते वा 'नमः कृताय कर्मणे अकृताय कर्मणे नमः । अयाड् यज्ञं जातवेदा अन्तरः पूर्वो अस्मिन्निषद्य सन्वन् सनिं सुविमुञ्चा विमुञ्च धेह्यस्मभ्यं द्रविणं जातवेदः स्वाहेति, यथेतमेत्य ॥ २१ ॥

अपवर्गः समाप्तिः(२) । यथेतमेत्येति(३) परिभाषितत्वादवा-

( १ ) प्रपूर्वकस्तिष्ठतिरनुयाजार्थं गमने वर्तते । प्रतिष्ठ अनुयाजार्थं गच्छ इत्यर्थः ।

( २ ) ब्राह्मणतर्पणान्तम् । तस्मिन् इत्यर्थः ।

( ३ ) 'अतीत्य निष्क्रमणम्' इति पूर्वं परिभाषितत्वात् अत्र 'यथेतमेत्य' इति न वाच्यमिति भाष्याक्षरार्थः । 'यथेतमेत्य' इति सूत्राक्षरार्थस्तु यथा येन क्रमेण इतं गतम् आहवनीयस्य पूर्वेणापरेण वा

ष्यमिति चेत् "अतीत्य निष्क्रमणम्" इति । न । इदमर्थेनाऽप्राप्तेः । तत्रस्थस्यापि हि समिदाधानादि न विरुध्यते । स्वाहाकाराम्नानं च उपस्थान-समिदाधानार्थम् । होमे ह्यसमाम्नातोऽपि प्राप्नुयादेव "स्वाहाकारः सर्वत्र" इत्यनेन । स चायं पदार्थो यावदुक्तान्ताप-च्छिन्नादिषु निवर्त्तते ॥ २१ ॥

( वृतजपादि कर्मापवर्गसमिद्धोमान्तं ब्रह्मत्वमुक्तमिष्टिपश्वोर्ज्ञेयम् )

## एतद् ब्रह्मत्वमिष्टिपश्वोः ॥ २२ ॥

एतद्ब्रह्मत्वमधिकारादिहोक्तम् । तद् इष्टिपशुविषयम्प्रत्येतव्यम् । इष्टिग्रहणं प्रकृतत्वादकार्यम्, पशुग्रहणं च चोदकपरिप्रापितत्वात् । कर्त्तव्यं वा पशुग्रहणम् । ब्रह्मानुज्ञाते प्रोक्षणं यथा स्यादिति । न हि तत्र सान्नाय्यविकारत्वात् प्रोक्षणमस्ति । इष्टिग्रहणं तर्हि न कर्त्त-व्यम् । ननु कार्यं,(१)वाक्याद्धि पश्वर्थतैव ब्रह्मत्वस्य स्यात्, तन्मा-भूदितीष्टिग्रहणम् । ब्रह्मवरणाधिकारे तत्प्रसङ्गमुपजीवता यावद्ब्रह्म-त्वं तत्सर्वमभिहितम् ॥ २२ ॥

इति कर्काचार्यकृतकातीयश्रौतसूत्रभाष्ये
द्वितीयाध्याये द्वितीया कण्डिका ।

अतः प्रणयनाद्युच्यते-

( सोदकचमसस्य गार्हपत्योत्तरतः स्थापनमालम्भश्च )

## गार्हपत्यमुत्तरेणोदपात्रं निधायालभते 'भूतस्त्वा भूत करिष्यामीति' ॥ १ ॥

गार्हपत्यमित्युपपदविभक्तिः षष्ठ्यपवादो द्वितीया । उदपात्रम् उ-दकस्य पात्रम् । उदकस्योदादेशः ।

---

तथैव पुत्य आगत्य आहवनीये समिदाधानहोमोपस्थानाद्यन्यतमं करोति । समिदाधानपक्षापेक्षया होमपक्षे 'इदं जातवेदसे' इति स्वा-गमात्रमधिकमिति भावः ।

( १ ) 'एतद् ब्रह्मत्वं पशौ' इत्युच्यमाने इति शेषः ।

तद्याविशेषेऽपि सति चतुरश्रं स्यात् "चमसेनापः प्रणयति" इति । (१)स च चतुरस्रः । प्रसिद्धेः । लिङ्गाच्च : चमसं प्रकृत्य "चतुःस्रक्तिना चतस्रो विदिश" इत्याम्नायते । सूत्रकारप्रस्थानाच्च "चमसवत् स्रुवेण" इति ।

आलम्भ उदकस्य स्यात् । तत्संस्काराभिप्रवृत्तेः । पात्रस्य वा । तदुपदेशात् । तत्संस्कारश्च तत्सम्बन्धिद्वारेण । इडोपहवे होत्रन्वारम्भणवत् । प्रयोजनं प्रणीताकार्यापन्नयोर्दधिपयसोरविपरिणामः । उदकालम्भे हि "भूतस्त्वा भूत करिष्यामि" इति त्वा–शब्दस्ताद्विषयः स्यात् । तत्र द्रव्यद्वित्वे विपरिणम्येत ॥ १ ॥

( अप्प्रणयनार्थं ब्रह्मानुज्ञाप्रार्थनम् )

## (२) ब्रह्मन्नपः प्रणेष्यामि यजमान वाचं यच्छेत्याह ॥ २ ॥

ब्रह्मन्नपः प्रणेष्यामीति ब्रह्मानुज्ञाप्रार्थनम् । ब्रह्मेत्यृत्विग्विशेषः । स च यद्यपि वरणभरणनिमित्तस्तथापि तु ब्रह्मत्वकर्तर्युपचर्यते । प्रयोजनं तु सत्त्रे ऽविपरिणामः । कुण्डपायिनामयने च मैत्रावरुणं ब्रह्मत्वं कुर्वन्ति । यजमान वाचं यच्छेत्यनेकयजमानके यथार्थं विपरिणम्यते ।

स चायं वाग्यमः पदार्थधर्मत्वादसत्यपि प्रणयने प्रवर्तते । प्रैषश्च (३)तादर्थ्यात् ॥ २ ॥

---

( १ ) सः चमसः ।

(२)यदाच प्रणीतानां सर्वार्थत्वं संयवनार्थत्वं वा तदा यस्मिन् कर्मणि चरुश्रपणार्थं पयो घृतं वा विहितम्; यथा "वैश्वदेवश्चरुः पयसि चा" इति, "घृते चरुरादित्येभ्य" इति च, तत्र पयसो घृतस्य च प्रणयनं इध्मश्च मन्थाद्यर्थं कर्तव्यम्, तत्र ब्रह्मन् अपपयसी, अक्घृते, अब्दधिनी प्रणेष्यामीत्यूहः । पित्र्यायामपि प्रणयनात्पूर्वमेव निवान्यां दुग्ध्वा तद्दुग्धस्य प्रणयनं कर्तव्यम् ।

अत्र जैमिनेर्मते प्रणीताः संयवनार्था एव, कर्काचार्याणां मते सर्वार्था एव, इतरेषामदृष्टार्था एवेति तत्त्वम् ।

( ३ ) वाग्यमार्थत्वात् । यजमानरूपपदार्थधर्मस्य वाग्यमस्य,

( आहवनीयोत्तरतः सोदकचमसस्य मन्त्रेण स्थापनम् )

अनुज्ञात उत्तरेणाऽऽहवनीयं सम्प्रति निदधाति कस्त्वेति ॥ ३ ॥

सामर्थ्यपरिप्रापितत्वात् अनुज्ञात इत्यवाच्यम् । न वा । प्रैषप्रैषार्थयोरानन्तर्यव्युदासार्थत्वात् "यजमान वाचं यच्छ" इत्यनन्तरं(१) यथा स्यादिति । पाठादेव तत्प्राप्तिरिति चेत् । न । प्रैषसमनन्तरं तदर्थानुष्ठानं न्याय्यमिति । सम्प्रतिशब्दो ऽनन्तिकानतिदूरविषयः । "ता नातिहत्य सादयेन्नो ऽअनाप्ताः सादयेत्" इति वचनात् ।

निधाने मन्त्रः स्यात् । तदुपदेशात् "निदधाति कस्त्वा" इति । श्रुतिविरोधान्नेति चेत् "स प्रणयति कस्त्वा युनक्ति" इति । निधाने वा प्रणयनस्य तदर्थत्वात् । "तस्मात् सम्प्रत्येवोत्तरेणाहवनीयं प्रणयति" इत्युपसंहारात् । शाखान्तरं तु स्पष्टतरः पाठः "स निदधाति कस्त्वेति । त्वा-शब्दो द्रव्यपरत्वाद्द्रव्यबहुत्वे पयोदधिघृतादौ विपरिणस्यते । न वाऽन्यायनिगदत्वात् । "अपः प्रणयति" इति हि बहुवचनान्तोपदेशः, त्वाशब्दश्चैकवचनान्तः । तस्मादनूह इति ॥ ३ ॥

( अग्निप्रणीतयोर्मध्ये न कश्चिद्गच्छेत् )

नान्तरेण गच्छेयुः ॥ ४ ॥

(२)प्रकृताऽप्रकृतयोरुपदेशः । लिङ्गात् "नेन्मिथुनं चर्यमाणमन्तरेण सञ्चरान्" इति । प्रयोजनं सर्वत्र प्रायश्चित्तम् ॥ ४ ॥

( प्रणयनाश्रितपात्रविशेषात् फलविशेषः )

कांस्य-चमस-मार्त्तिकैरभिचारब्रह्मवर्चस-प्रतिष्ठाकामा यथासंख्यम् ॥ ५ ॥

कांस्यादीनि प्रणयनाश्रितानि मृदन्तानि अभिचारादीन्साध-

---

तदङ्गभूतप्रैषस्य च अन्याङ्गत्वासंभवादिति भावः ।

(१)अनुज्ञेति शेषः ।

(२)प्रकृतस्य अध्वर्योः अप्रकृतस्य तदन्यस्य सर्वस्य अग्निप्रणीतयोर्मध्ये गमननिषेधोपदेशः इत्यर्थः ।

यन्ति। न तदाश्रया क्रिया। शब्दस्य तत्परत्वात्कांस्यादीनां फलसम्बन्धः। एवं च सति विकारे एषामप्रवृत्तिः। पुरुषार्थत्वात्। वानस्पत्ये तु वारणे प्रवर्त्तमाने क्रत्वर्थस्य साधारणत्वात्तदाश्रयः कामो ब्रह्मवर्चसं प्रवर्त्तत एव।

ता एताः प्रणीता दृष्टार्था उत धर्ममात्रा इति?। धर्ममात्रा इति ब्रूमः। देशनियमात्पात्रनियमाच्च। तथा मन्त्रवत्तोपदेशात्। शिरःसंस्तवाच्च "शिरो ह वा एतद्यज्ञस्य यत्प्रणीता" इति। अनवखण्डनसामान्याच्छिरःसंस्तवः। स्कन्दनप्रतिषेधश्च धर्ममात्रे उपपद्यते। इतरथा ह्यवश्यम्भाविस्कन्दनमिति। अन्ते प्रतिपत्तिविधानाच्च "अथ प्रणीता दक्षिणतः परीत्य निनयति" इति। दृष्टार्थत्वे हि कदाचिदुपयुक्ता भवेयुः, तत्र प्रतिपत्तिविधानं पाक्षिकं स्यात्। अपाक्षिकं च श्रवणम्। तस्माद्धर्ममात्रा इति।

दृष्टार्था वा। द्रव्याणां क्रियाभिनिर्वृत्त्यर्थताप्रसिद्धेः। न हि कश्चिद्द्रव्यमदृष्टार्थं परिकल्पयति। सन्ति चात्रोदकसाध्याः क्रियाः। न च तत्सिद्ध्येऽन्यदुदकमुपदिश्यते। तेन दृष्टार्थेऽवगम्यमानेऽपि यो नामादृष्टं कल्पयति स दिङ्नियमवद्भोजनादप्यदृष्टं कल्पयेत्। लिङ्गाच्च "प्रणीताभिर्हवींषि संयौति" इति। यदुक्तं देशादिनियम इति, स नियमोऽदृष्टाय। शिरःसंस्तुतिः प्राग्भागसामान्यात्। स्कन्दनप्रतिषेधश्च सुतरां दृष्टार्थत्वे उपपद्यते, प्रतिपत्तिश्च शेषस्येति।

दृष्टार्थत्वेऽपि सन्देहः। किं संयवनार्था उत सर्वार्था इति?। तत्र केचित् "प्रणीताभिः संयौति" इतिवाक्यसामर्थ्यात् संयवनार्थतामाहुः। द्रव्यप्रक्लृप्तेः परार्थत्वात्तत्र चाविशेषात्सर्वार्थत्वादनुवादोऽयमित्यपरे। (१)किं चाग्नीषोमीये प्रतिषेधानुपपत्तेः। संयवनार्थत्वे हि तदभावादेव प्रणीता न स्युः, व्यर्थः प्रतिषेध इति। निरूढे च प्रतिप्रसवानुपपत्तेः। तत्रापि हि नैव संयवनमस्ति। सर्वार्थत्वे पुनः प्रतिषेधप्रतिप्रसवावुपपद्येते। सूत्रकारप्रस्थानाच्च "प्रणीता ह्युपसत्" इति(२)। तस्मात्सर्वार्था इति ॥ ५ ॥

---

(१) प्रणीताभिर्हवींषीति वाक्याद्विशेषयोगतः।
नैव सर्वार्थता युक्तेत्येवं प्राप्तेऽभिधीयते ॥ किञ्चेति।

(२)संयवनमात्रार्थत्वे तु प्रणीतानामुपसदि सोमयागान्तर्गताया-

( अग्नीनां दर्भैः परिस्तरणं, सर्वेषां पात्राणां द्वन्द्वशः स्थापनं च )

तृणैरग्नीन्परिस्तीर्य, पुरस्तात्प्रथमं, द्विशः पात्राणि सादयति ॥ ६ ॥

तृणशब्दो दर्भविषयः। "यज्ञिया उ वै दर्भा" इति लिङ्गात्। "दर्भैं स्तृणन्ति हारितैः सुवर्णैः" इति च। समाचाराच्च। आचरन्ति हि दर्भैः परिस्तरणम्। आचार्याभिप्रायाच्च। "बर्हिष स्तृणे तिरश्ची निदधाति" इत्युक्त्वा "अन्ये वा युक्तत्वात्" इत्यभिधाय "आहान्यत्रापि तृणार्थे" इति अन्यदुपादीयमानं बर्हिर्जातीयमेव प्रतीयते, न तृणान्तरजातीयम्।

पुरस्तात्प्रथममिति दिगभिप्रायम्। आहवनीयस्तु कार्यक्रमादेव प्राप्नोति। ततो गार्हपत्यदक्षिणाग्नी। तयोरपि पुरस्तादेव प्रथमम्। श्रुतेः। शेषं च स्मृतिवशात् प्रदक्षिणम् "आवृत्तिसामन्तेषु प्रदक्षिणम्" इति। इह च परिस्तीर्येति परिः सामन्तार्थः। स्मार्त्ते चैतस्मिन् सति क्रमे तदपचारे स्मार्त्तमेव प्रायश्चित्तम्।

तच्चैतत्परिस्तरणमाहुत्यङ्गं यज्ञसंयोगात्। "स हैष यज्ञ उवाच नग्नताया वै बिभेमि" इति प्रकृत्य "तस्मादेतदग्निमभितः परिस्तृणन्ति" इत्याह। यज्ञसम्बन्धादाहुतिर्यज्ञशब्देनोच्यते। अथ यज्ञसम्बन्धमात्रमेवोच्यते, तथा सत्यग्निव्यतिरेकेणान्यत्रापि(१) स्यात्। तत्र "तस्मादेतदग्निमभितः परिस्तृणन्ति" इत्यसमञ्जसं स्यात्। तस्मादाहुत्यङ्गमेतत्।

तत्रापि केचिदाहुत्यर्थत्वात्पदवर्त्मंहिरण्यादिषु वाक्यसंयोगात्परिस्तरणमिच्छन्ति। वाक्यं ह्येतत् "स हैष यज्ञ उवाच" इति। तच्च प्रकरणानुरोधेन न यज्ञविशेषे व्यवस्थापयितुं शक्यमिति। तदेतदसत्। वाक्यस्यैव यज्ञविशेषविषयत्वात् "स हैष यज्ञ उवाच" इति। 'एष' इत्ययं शब्दः प्रकृतयागविषयः। तस्माद्दर्शपूर्णमासाहुत्यङ्गमेव। तथा चाह "परिस्तीर्य तं पूर्ववत्पात्रासादन-

---

मिष्टौ संयवनाभावात् "प्रणीतादि" इत्यनेन तदुपदेशो व्यर्थः स्यादित्यर्थः।

(१)आप्स्वेभ्य उदकनिनयनेऽपि स्यात् इत्यर्थः।

म्" इति ।

द्विशः पात्राणि सह्सादयतीति । द्वंद्वं एकीकृत्य । सा चैषा द्वन्द्वता पात्रोद्देशेन विधानसामर्थ्यात्सर्वत्र प्रवर्त्तते । एवं हि समामनन्ति "द्वन्द्वं पात्राण्युदाहरति" इति । ननु शूर्पं चाग्निहोत्रहवणीं चेत्येवमादिसमाम्नानाद्दशगणस्यैव द्वन्द्वता । इतरथा हि पाठवैयर्थ्यप्रसङ्गः स्यात् । आह च "तद्दश दशाक्षरा वै विराड् विराड् वै यज्ञ" इति । नवोक्तहेतुत्वात् । उक्तं हि पात्रोद्देशेन द्वन्द्वताविधानमिति । पाठवैयर्थ्यप्रसङ्ग इति चेत्, न । विशिष्टद्वन्द्वपरिग्रहार्थत्वात् । अन्यथा हि विनियोगक्रमव्यवस्थितानां द्वन्द्वता स्यात् । तत्र स्फ्यस्य कपालैः सह द्वन्द्वता न स्यात् । अथ पुनः पाठे सति विशिष्टद्वन्द्वपरिग्रहः सिद्धो भवति । यत्पुनरुक्तं "तद्दश दशाक्षरा वै विराड् विराड् वै यज्ञ" इति, सोऽवयुत्यानुवादः । एवं च सति विकारे चर्विष्टयां स्फ्य एक एवासाद्यते । न हि तत्र द्वन्द्वोपजनकानि कपालानि सन्तीति । अथोपरितनेन द्वन्द्वता क्रियेत तत्र यथापाठं द्वन्द्वता न कस्याञ्चित्स्यात् । ननु वैपरीत्येऽपि (१)स्फ्यस्य द्वन्द्वताऽभावप्रसङ्गः । किं क्रियताम् 'बहूनामयथाऽर्थत्वं मा भूत्' इति । अर्थवदासादितानां तु द्वन्द्वगतविशेषानाम्नानात् यस्य कस्य चित्केन केन चिद् द्वन्द्वतत्त्वाविरुद्धम् । सूत्रकाराभिप्रायाच्च । द्विशः पात्राणीत्युक्त्वा "शूर्पाग्निहोत्रहवणि स्फ्यकपालम्" इत्येवमादि द्वन्द्वैकवद्भावमाह । तेन च सिद्धायां द्वन्द्वतायां द्विश इत्यवाच्यं स्यात् । उक्तं च । तस्मात्सर्वत्र द्वन्द्वतेति सिद्धम् ।

पात्रशब्दः (२)साधनवचनो न जातिवाद्विषयः । तथा हि सति स्फ्यकपालशम्याकृष्णाजिनादीनामपात्रता स्यात् । साधनं चेत्पात्रं कपालसमुदायस्य साधनत्वात्तथाभूतस्य द्वन्द्वता । प्रतिचिति साधनभाव इति चेत्, तथा च प्रतिचिति द्वन्द्वता । न । समाम्नानसामर्थ्यात् "स्फ्यं च कपालानि च" इति । उद्धरणपात्र्योर-

---

(१) एक एव स्फ्य आसाद्यते तदा स्फ्यस्य द्वन्द्वत्वाभावप्रसङ्ग इत्यर्थः ।

( २ )ऋत्विगादीनां तु न पात्रत्वप्रसङ्गः । तेषां साधनत्वेन अनिर्देशात् । "तयद्वैषामत्राशुद्धस्तक्षा वाऽन्यो वाऽमेध्यः कश्चित्पराहन्ति" इतिवाक्यशेषविरोधाच्च ।

पि कपालवदन्येन द्वन्द्वता । "अर्थप्रसंख्यया द्रव्योपकल्पनम्" इति परिभाषितत्वाद्वाच्यम् पात्रासादनमिति चेत् । स्यादेश-कालार्थत्वात् ॥ ६ ॥

( परिस्तरणादिकमध्वर्युकर्तृकं यजमानकर्तृकं वा )

यजमानो वा ॥ ७ ॥

विकल्पार्थोऽयमारम्भः ॥ ७ ॥

( पात्र्यादीनां विनियोगक्रमेणासादनम् )

शूर्पाग्निहोत्रहवणि स्फ्यकपालशम्याकृष्णाजिनमुलू-खलमुसलं दृषदुपलम् अर्थवच्च ॥ ८ ॥

"अर्थवच्च" इति यावत् आसादयतीति अनुवर्त्तते । शूर्पं प्रासि-द्धमेव स्यात् । लिङ्गाच्च "यदि नडानां यदि वेणूनां यदीषीका-णाम्" इति ।

एषां चाध्वर्युरेव कर्त्ता स्यात्समाख्यानात् । न वा करणस्या-चोदितत्वात् । अभ्यासलिङ्गाच्च । तस्मात्तद्भूतानामुपादानमिति । लिङ्गाच्च "तद्यदेवैषामत्राशुद्धस्तक्षा वाऽन्यो वाऽमेध्यः कश्चित्प-राहन्ति तदेवैषामेतदद्भिर्मेध्यं करोति" इति । (१)अर्थवच्चेति अर्थोऽस्यास्मिन्विद्यत इति अर्थवत्प्रयोजनवदित्यर्थः ।

---

(१)येषां येषां पात्राणामत्रोपयोगस्तेषां सर्वेषामुपयोगक्रमेणा-सादनमित्यर्थवच्चेत्यनेन बोध्यते । तथा च कात्यायनः—

"प्राञ्चं प्राञ्चमुदगग्नेरुदगग्रं समीपतः ।
तत्तथा सादयेद् द्रव्यं यद्यथा विनियुज्यते" ॥ इति ।

तानि चैवम्–शूर्पाग्निहोत्रहवणि, स्फ्यकपालानि, शम्या कृष्णाजिनम्,—उलूखलमुसलम्, दृषदुपलम्, पात्री पवित्रच्छेदना-नि, पवित्रे उपवेषः, आज्यस्थाल्युपसर्जनीपात्रम्, कुशमुष्टिरन्वा-हार्यपात्रम्, वेदितृणमार्ष्टिः, योक्त्रं स्रुवः, जुहूपभृत्, ध्रुवा सन्नहना-यच्छादनानि, परिधयो विधृत्यौ, आज्यं पुरोडाशपात्र्यौ, होतृषदनं शृतावदानम्, औपभं प्राशित्रहरणे, अन्वाहार्यतण्डुला अन्तर्धानकटः, पूर्णपात्रं पक्षे समिद्द्वयं च, इध्माबर्हिषोरुपकल्पनं पडवत्तं चेति ।

तच्च विनियोगक्रमेणासाद्यते । अथैतद्ग्रहणाद्यपि न परिध्युपवेषादिवत्साक्षाच्छ्रूयते अन्वाहार्योपसर्जनीपात्रादि तदप्यासादनीयम् । इन्धनाद्यपीति चेत् । न । अचोदितार्थत्वात् । चोदितं हि यदर्थात्प्राप्नोति तदासाद्यते । तथापि याज्ञिकैर्दण्डकः प्रणीतः "अग्नः पात्री वा पवित्रच्छेदनानि च" इत्येवमादि । तत्र चोपवेषसमनन्तरमाज्यस्थाल्युपसर्जनीपात्रं च । पेषणोपधानाज्यनिर्वपणानामेककालत्वात् । "पिंषन्ति पिष्टान्यश्मन्धत्ते कपालान्यथैक आज्यं निर्वपति" इति उपधानोत्तरकालमुपसर्जन्यधिश्रयणमिति ।

कुशमुष्टिरपि तर्हि ततः पूर्वं प्राप्नोति, एवं हि सूत्रितं "निरुप्याज्यं वेदं करोति" इति । (१)न समत्वात् । उपधानादुत्तरकालमुपसर्जन्यधिश्रयणमाज्यनिर्वपणाच्च वेदबन्धनम् । तुल्यकालतोभयोरपीति न नियमोऽवसीयते । उच्यते । कुशमुष्ट्युपसर्जनीपात्रयोर्यद्यप्येककालता, तत्कार्ययोस्तु गम्यते पौर्वापर्यम् । प्राक्कालीनं ह्युपसर्जनीकार्यं वेदकार्यात्, अतः पूर्वमुपसर्जनीपात्रं ततः कुशमुष्टिरिति ।

ततश्चान्वाहार्यपात्रम् । ननु चान्वाहार्यपात्रं प्राशित्रहरणोत्तरकालं प्राप्नोति । न । तण्डुलानामसाववसरः । तत्पात्रं तु कुशमुष्ट्यन्तर्धानतृणयोरन्तराले इति । पात्रस्याधिश्रयणार्थत्वात् । एवं सर्वत्र कार्यक्रमेणासादनमालोचनीयमिति ।

विकारेऽपि च प्राकृतकार्यापन्नस्य वैकृतस्यासादनादि प्रवर्ततएव । किं(२)पुनस्तत्रापि कार्यक्रम एव, न प्राकृतपात्रक-

---

(१) "निरुप्याज्यं वेदं करोति" इत्यनेनाज्यनिर्वापानन्तरं विहिते वेदकरणे विनियुज्यमानकुशमुष्टरासादनं यद्यपि पूर्वं प्राप्नोति तथापि आज्यनिर्वापसमकालोपधानानन्तरविहितोपसर्जन्यधिश्रयणविनियुक्तपात्रस्यासादनमपि तदेव प्राप्नोतीति तुल्यत्वात् आज्यस्थाल्यासादनानन्तरम् 'कुशमुष्टिरेवासादनीया' इति 'उपसर्जनीपात्रमेवासादनीयम्' इति वा नियमो न निश्चीयते इति अनिश्चयरूपो द्वितीयः पक्षः । उच्यते इत्यादिना तृतीयं सिद्धान्तपक्षमाह ।

(२) पुनस्त्वर्थे ।

मः। प्रकृतावपि हि कार्यक्रम एव कारणमासादने इति। तद्यथा निरूढे वपाश्रपण्यनन्तरं ब्राह्मणाद्रक्ष्यामिति।

यत्पुनर्विकृतावप्राकृतकार्यापन्नम्, यथा मन्थलचतुष्टयम्, यूपचतुष्टयं क्षुरचतुष्टयादि तत् प्रकल्प्यतएव, नासाद्यते, न प्रोक्ष्यते च। न हि तस्यासादनप्रोक्षणे विहिते। न च कार्यापत्तितः प्राप्तिः, तस्मादुपकल्पनमेव। चर्व्विषयां चरुपात्रस्य तर्हि कपालधर्माः सन्तु कार्यापत्तेरिति। स्यादेतदेवं यदि कार्यापत्तिः स्यात्। न त्विह तथा। इह हि न चरुपात्रगतेनोष्मणा चरुः पच्यते, कपालगतेनेव पुरोडाशः। कथं तर्हि ?। चरुपात्रगत ऊष्मा उदकमेव तापयति ततश्चरुसिद्धिरिति अकपालकार्यापत्तिरिति। ततश्चरुपात्रमप्युपकल्प्यते। यच्च प्रकृतावेव याज्ञिका इध्माबर्हिषोरुपकल्पनमाहुः, तदिह प्रोक्षणाभावात्। तदभावश्चोपरिष्टात्प्रोक्षणविधानात्। "इध्मं प्रोक्षति विस्र९ँस्य" इति॥ ८॥

( गार्हपत्यस्य पश्चादुत्तरतो वा पात्रासादनम् )

श्रपणस्य पश्चादुत्तरतो वा(१) ॥ ९ ॥

शास्त्रस्य तुल्यत्वात्॥ ९॥

( शूर्पाद्यादाय सम्यक् पदार्थानुष्ठानाय वाग्यमः कार्यः )

कर्म्मणे वामिति शूर्पाग्निहोत्रहवण्यादाय व्वाचं यच्छति ॥ १० ॥

साकाङ्क्षत्वात् 'आददे' इत्यध्याहारः। मन्त्रश्चाविशेषादुभयार्थः(२)। प्रयोजनमन्तरायेऽन्यतरेणापि प्रयुज्यते।

---

(१) श्रप्यन्ते अनेन हवींषि इति श्रपणो गार्हपत्यो वाऽऽहवनीयो वा। तस्य पश्चात् प्राक्संस्थानि उदग्राणि वा, तस्योत्तरतः उदक्संस्थानि प्रागग्राणि वा पात्राण्यासादयति। तदुक्तं कारिकायाम्-

उत्तरं चेदुदक्संस्थं प्राक्संस्थं पश्चिमे भवेत्। इति।

(२)शूर्पाग्निहोत्रहवणीद्वयार्थः। ततश्चोभयोरपि प्रयोजकत्वात् एकस्य पूर्वं विस्मरणे मध्येऽन्तरायेऽपि पुनस्तस्योपादानेऽपि मन्त्रः प्रयुज्यत एवेति।

शूर्पाग्निहोत्रहवण्यादानं निर्वापार्थम् । तत्संनिधावाम्नानात् । प्रयोजनं (१)पशावमन्त्रवदग्निहोत्रहवण्यादानं प्रोक्षण्यर्थतया । वाग्यमस्तु(२)पदार्थधर्म्मः । "यां वा अमूं हविर्ग्रहीष्यन्वाचं य॰ च्छत्यत्र वै तां विसृजते" इति कालोपलक्षणार्थत्वात् । प्रयोजनं ह॰ विर्ग्रहणाभावेऽपि पश्वादौ भविष्यति ॥ १० ॥

( शूर्पाग्निहोत्रहवण्योः प्रतपनं हविर्ग्रहणार्थम् ।

प्रतपनं प्रत्युष्टं निष्टप्तमिति वा ॥ ११ ॥

तत्संस्कारो हविर्ग्रहणार्थः । तेन तदभावे न भवति ॥ ११ ॥

( गार्हपत्यस्य पश्चात्स्थितं शकटमुपगच्छेत् )

गच्छत्युर्वन्तरिक्षमिति श्रपणस्य पश्चादनस्तिष्ठ॰ त्समङ्क्षि ॥ १२ ॥

श्रपणशब्दस्याविशेषेऽपि सति अत्र गार्हपत्यविषयो ग्राह्यः । एवं ह्याह "जघनेन गार्हपत्यं प्राचीपमनोऽवस्थितं भवति तस्य दक्षि॰ णं चक्रमारुह्यानसोऽधिनिर्वपति" इति । विकृत्यनुप्रवृत्तिदर्शनाच्च । "स जघनेन गार्हपत्यं प्राचीनावीती भूत्वा दक्षिणासीन एतं ष॰ ट्कपालं पुरोडाशं गृह्णाति" इति । सङ्गताङ्गं समङ्क्षि । सांयोगिका॰ नि चाङ्गान्यत्र गृह्यन्ते । न हि सानद्याविकव्यतिरेकेण अनो-व्यपदे॰ शोऽस्ति । अनडुत्प्राप्तिरपि तर्हि स्यात् । न । केवलं गमनार्थत्वा॰ त्तयोः । तस्य चात्राभावात् । तस्माद् युग-योक्त-वरत्रादिमात्रमेव॥१२॥

( दक्षिणोत्तरयोर्धुरोः क्रमेणाभिमर्शनम् )

धूरसीति धूरभिमर्शनम् ॥ १३ ॥

धूः-शब्दो युगशम्याऽन्तरालवचनः । स्थूलेः । एवं हि स्मर॰

---

( १ ) समन्त्राग्निहोत्रहवण्यादानस्य निर्वापप्रयोज्यतया पशौ च निर्वापाभावात्तन्निवृत्त्या प्रोक्षण्यर्थतया क्रियमाणमग्निहोत्रहव॰ ण्यादानममन्त्रवद्भवतीत्यर्थः ।

( २ ) हविर्ग्रहणस्थानीयस्य पदार्थान्तरस्यापि सम्यगनुष्ठेयत्वात् तदर्थमपि वाग्यमस्यावश्यकत्वादिति भावः ।

न्ति व्युत्पादयन्ति च "धूर्धूर्वतेर्वधकर्मण इयमपीतरा धूरेतस्मादेव विहन्ति वहं धारयेतवा" इति। वहस्य विहतिरनसो वा धारणं शम्यान्तरालानडुत्स्कन्धसम्बन्धाद्भवति। लिङ्गाच्च "तस्य वा एतस्यानसोऽग्निरेव धूरग्निर्हि वै धूरथ य एनद्वहन्त्यग्निदग्धमिवैषां वहं भवति" इति। अतोऽन्यत्रोपचारवृत्तिः, यथा ईषाग्रयोः।

धूर्संज्ञाच्चोभयोरभिमर्शनम्। तत्संस्काराच्च। दक्षिणामभिमृश्य तत उत्तराम्। उदक्संस्थतासम्पत्तेः। स्मर्यते हि सर्वत्रोदक्संस्थता। लिङ्गं च भवति "तथाप्युदग्भवति" इति "तथोदीची भवति" इति च।

केचित्त्वेकस्या एव धुरोऽभिमर्शनमिच्छन्ति। वाक्यशेषात्। "अग्निर्वा एष धुर्यस्तमेतदत्येष्यन्भवति हविर्ग्रहीष्यंस्तस्मा एवैतन्निह्नुते" इति। एकत्वादग्नेः सकृदेव निह्नव इति। तत्पुनरेतदर्थवादप्रायम्। अनोऽवयवसंस्कारश्चायं। तौ च संस्कार्यौ भिन्नौ। प्रतिसंस्कार्यं च संस्कारावृत्तिर्न्याय्येति भेदेनाभिमर्शनमिति सम्प्रदायः॥ १३॥

( अनःसंस्कारत्वादेकस्या एव ईषाया अभिमर्शनम् )

देवानामित्युपस्तम्भनस्य पश्चादीषाम् ॥ १४ ॥

अभिमृश्य जपतीति सूत्रशेषः। "अथ जघनेन कस्तम्भीमीषामभिमृश्य जपति" इति श्रुतत्वात्। स चायमनःसंस्कारत्वान्न प्रतीपमावर्त्तते। तत्संस्कारश्च मन्त्रलिङ्ग-वाक्यशेषाभ्याम्। "देवानामसि वह्नितमम्" इत्येवमादिना ऽनोऽभिधीयते, नेषेति। "अन एवैतदुपस्तौत्युपस्तुताद्रातमनसो हविर्गृह्णानि" इति वाक्यशेषः।

अयं च मन्त्रश्चोदितार्थाभिधायी पितृयज्ञे विपरिणस्यते। पितृणामसि वह्नितमं, पितृहूतममिति च।

देवशब्दस्य प्रकृतदेवबहुवचनत्वात् वचनं चात्रासमवेतम्। द्वयोर्हि देवतयोर्बहुवचनं श्रूयते। तेन विकारे एकदैवत्ये वचनस्याविपरिणाम इति केचित्।

तदेतदनुपपन्नमिव। वचनस्याप्यत्र समवायात्। बहवो ह्यत्र देवता अग्निरग्नीषोमौ चेति। ननु अग्नीषोमयोः समुदितयोः देवतात्वादेकत्वम्। नैतदेवम्। समुदितयोरपि देवतात्वे देवशब्द-

स्य प्रत्येकवृत्तित्वम् "अग्निर्देवः सोमो देव" इति प्रसिद्धम् । मन्त्रलिङ्गाच्च "देवोऽग्निः, देवः सोम" इति च । न चात्रावयवभूतोऽग्निः सोमो वा नास्ति । किं तु पृथक्त्वेन देवतात्वाभावः । पृथक्तद्धितानुत्पत्तेः । समुदायाच्च तद्धितप्रत्ययदर्शनात् । समुदितयोरपि देवतात्वे ऽग्नेः सोमस्य चास्त्येव समवायः । एवं च सति "अग्नीषोमाभ्याम्" इतिद्विवचनोपपत्तिः । "अग्नीषोमयोरुज्जितिम्" इति च । यच्चोक्तम् "अपिष्टो वा देवताऽन्यत्वात्" इति, युक्तं तत् अग्निसद्वितीयस्य पूष्णो देवतात्वाद्भवति पूष्णोऽन्यत्वम् । समवायस्तु पूष्णो न निवार्यते ।

अथ देवतैव देवशब्देनोच्यते । तथा सति प्रातिपदिकार्थस्याप्यनन्यत्वात् पितृयज्ञे देवशब्दस्याप्यविपरिणामः । पितरोऽपि हि चोदितत्वाद् देवताशब्देनाभिधातुं शक्यन्ते । देवताविषयो देवशब्द इति अविपरिणामः ।

अथ तत्र पितृशब्देन चोदना "पितृभ्यः सोमवद्भ्यः पितृभ्यो बर्हिषद्भ्य" इति । न च पितरो देवशब्देनाभिधातुं शक्यन्त इति विपरिणस्यते देवशब्दः । नैतदेवम् । देवताविषये हि देवशब्दे पितृणामपि चोदितत्वाद्देवतात्वाद्देवशब्दप्रयोगो ऽविरुद्ध एव । अथ शब्दान्तराभिहितेषु देवशब्दो न प्रवर्त्तत इति । तथा सत्यग्न्यादिष्वपि देवशब्दप्रयोगो दुर्लभः । तत्रापि हि शब्दान्तरत्वमाग्नेयो ऽग्नीषोमीय इति । इयांस्तु विशेषः—इह तद्धितस्तत्र चतुर्थी । न च चोदिते एव देवशब्दः, अन्यत्रापि प्रयोगादित्युक्तम् ।

अथ देवशब्दो योगादग्न्यादिषु प्रवर्त्तते दानादेव इति । तथापि पितृयज्ञे अनूह एव । पितरोऽपि हि तत्साध्यक्रियाभिनिर्वृत्तिद्वारेण फलदानाद्देवा इति ।

(१)तदेतदप्यसत् । प्रत्यस्तमितावयवार्थवृत्तितया देवशब्दस्यार्थप्रतीतिसामर्थ्यात् । न च दानाद्देवत्वं सर्वत्रेष्यते । न हि सर्पन्त्यपि गोधा सर्पशब्देनाभिधातुं शक्यते । प्रत्ययस्य विशिष्ट-

---

(१) 'अथ देवतैव देवशब्देनोच्यते, इत्यादिना' 'अथ देवशब्दो योगादग्न्यादिषु प्रवर्तते' इत्यादिना च उत्थापितं पितृयज्ञे देवशब्दाऽविपरिणामपक्षं निरस्यति* तदेतदप्यसदिति ।

जातिविषयत्वाद् भुजङ्ग एव सर्पशब्देनाभिधीयते । तेनेहापि प्रत्ययस्य विशिष्टार्थवृत्तित्वाद्देव एव देवः(१)।

तेषां च बहुत्वात्समवेतं वचनम् । ननु चैवमपि देवद्वित्वम्, अग्नेरुभयत्रैकत्वात् । नैतदेवम् । एको हि केवलोऽग्निरपरः सोमसद्वितीय इति बहुत्वम् । ननु चैवमपि देवानामिति षष्ठीबहुवचनमनुपपन्नम् । न हि तदनः पृथगग्निना सोमेन च सम्बध्यते । इतरेतरसव्यपेक्षयोर्देवतात्वात् । यथा च देवानां देवतात्वं तथा तदर्थहविर्द्वारेणानो देवानामित्युच्यते । सत्यमेतदेवम् । मन्त्रे देवशब्दस्य बहुवचनान्तत्वात्तेषां च साक्षादनःसम्बन्धाभावात्तदुपलक्षितसमुदायद्वारेणानः सम्बध्यते इत्यदोषः । ततश्च विकारे एकदेवत्यद्विदेवत्ययोः "देवस्यासि, देवयोरसि" इति च युक्तरूपतरं(१) वचनम् ।

लिङ्गमपि चात्र समवेतम् । विशिष्टलिङ्गत्वादग्न्यादीनाम् । ततश्चादितीष्ट्यां "देव्या असि" इति प्रयोगः । न च देवशब्दो देवताशब्दवदविष्टलिङ्गः । यतोऽदितीष्ट्यामप्यविकृतः प्रयुज्येत । "देवीं वाचमजनयन्त देवा" इति दर्शनात् । तथा "देव्यनुमते देव्यदिते देवीराप" इति ।

केचित्तु लिङ्गवचनयोरसमवायं मन्यमाना अविपरिणाममिच्छन्ति, तत्पुनर्विचारणीयम् ।

यज्ञपतिशब्दश्चानेकयजमानके विपरिणम्यते । चोदितार्थाभिधानात् ॥ १४ ॥

( शकटसंबन्धिदक्षिणचक्रारोहणम् )

## विष्णुस्त्वेत्यारोहणम् ॥ १५ ॥

विष्णुस्त्वेत्यनेन मन्त्रेणानसो दक्षिणं चक्रमारोहति । एवं हि श्रूयते "स जघनेन गार्हपत्यं प्राक्तीषमनोऽवस्थितं भवति तस्य दक्षिणं चक्रमारुह्यानसोऽधिनिर्वपति" इति ॥ १५ ॥

---

( १ ) पितृषु 'देवा' इतिप्रतीत्यभावान्न पितरो देवा इति भावः ।

( २ ) पात्नीपक्षे तु विकृतौ न कस्यापि विपरिणामः । वह्नितममित्यादिषु लिङ्गाविपरिणामवत् । "अनन्तरायसु तर्हि यजूँषि जपेत्" इत्यनेन तदा जपविधानात् । तस्य चादृष्टार्थत्वादित्यन्यत्र स्पष्टम् ।

( हविषः प्रेक्षणम् )

प्रेक्षत उरुव्वातायेति हविष्यान् ॥ १६ ॥

व्रीहीन्यवान्वा । तच्चैतद्धविःप्रेक्षणं नानाबीजेष्टयां तत्संस्कारात्प्रतिबीजमावर्त्तते।मन्त्रश्च (आवर्तते)क्रियाशेषत्वात् । साकाङ्क्षत्वाच्च "उरुव्वाताय" इत्यस्य भवेत्यध्याहारः। ननु चअथ "प्रेक्षते" इति प्रेक्षणस्य चोदितत्वात् श्रौतक्रियापदाध्याहार एव न्याय्यः । सत्यमेवं, यत्र तेनैकवाक्यतोपजायते । इह पुनः उरुव्वातायेति विस्तीर्णता हविषः प्राणाय वाताय प्रार्थ्यते । न चासौ प्रेक्षे इति क्रियापदेन शक्यतेऽभिधातुम् । तस्माद्यथोक्त एव भवेत्यध्याहारः ॥ १६ ॥

( हविर्व्यतिरिक्तलोष्टादिनिरासः )

अपहतमिति निरस्यत्यन्यत ॥ १७ ॥

हविर्द्रव्यव्यतिरेकेण यदन्यल्लोष्टादि तद् अपहतमित्यनेन मन्त्रेण निरस्यति । रक्षोऽभिधायकत्वाच्च मन्त्रस्योदकोपस्पर्शनं भवति । प्रतपनमन्त्रे चैवम् । नानाबीजेषु च शक्यत्वाद्युगपद्द्रव्यनिरसनं भवति ॥ १७ ॥

( लोष्टादेरभावे हविषोऽभिमर्शनम् )

अविद्यमाने ऽभिमृशेत् ॥ १८ ॥

अभिमर्शनेऽप्ययमेव मन्त्रः । "अथापास्यत्यपहत? रक्ष इति यद्यत्र किञ्चिदापन्नं भवति, यद्यु नाभ्येव मृशेत्" इति श्रुतत्वात् । नानाबीजेषु च भेदेनाभिमर्शनसंस्कारः । ततश्च मन्त्रावृत्तिः ॥ १८ ॥

( हविष आलम्भः )

यच्छन्तामित्यालभते ॥ १९ ॥

( आलभेत ) हविर्द्रव्यं, प्रकृतत्वात् ।

पञ्चभिरङ्गुलीभिरभिमर्शनं स्यात् । मन्त्रलिङ्ग-वाक्यशेषाभ्याम् । यच्छन्ताम्पञ्चेति निबघ्नन्तु पञ्चेत्येतदुक्तं भवति । तथा "पञ्च वा इमा अङ्गुलयः पाङ्क्तो वै यज्ञस्तद्यज्ञमेवैतदत्र दधाति" इति ।

नवोपदेशाभावात् । मन्त्राणां त्वाविधायकत्वात् । यच्छन्तां

पञ्चेति च ग्रहणापेक्षया । बहुषु च भेदेनालम्भः, संस्कारात् ॥ १९ ॥

( आग्नेययागार्थं चतुरो मुष्टीन् निर्वपेत् )

देवस्यत्वेति गृह्णात्याग्नेयं चतुरो१ मुष्टीन् ॥२०॥

ग्रहणे मन्त्रः स्यात् । तदुपदेशात् "स गृह्णाति देवस्यत्वा" इति । प्रक्षेपे वा । गृह्णातेस्तदर्थत्वात् । तत्कुतः । वचनात् "अग्निहोत्रहवण्यां चतुरो मुष्टीन्निर्वपति" इति ।

मुष्टीन्यजमानो गृह्णीयात् । परिमाणस्य याजमानत्वात् । न वा पदार्थप्राधान्यात् । तस्य चाध्वर्युकर्तृकत्वात् । तत् कुतः । समाख्यानात् । यजमानपरिमाणमन्यविषयम् । यथा "पञ्चारत्निं परिवासयेत्" इति ॥ २० ॥

( अग्नीषोमीययागार्थं च चतुर्मुष्टिनिर्वापः )

एवमग्नीषोमीयम् ॥ २१ ॥

ननु चोत्तरसूत्रादेव तत्प्राप्तेरवाच्यमेतदिति । न हि तदैन्द्राग्नविषयम् । (२)यथादेवतमन्यदिति एतद्विषयताऽप्यस्यास्त्विति चेत् । ततश्चावाच्यमेवमग्नीषोमीयमिति । न । समाम्नायोपप्रदर्शनार्थत्वात् । यथादेवतमन्यदिति हि प्राप्तौ समाम्नायो न प्रदर्शितः स्यात् । तत्र पूर्वस्मिन् मन्त्रे "अग्नीषोमाभ्यां जुष्टं गृह्णामि" इति शेषभावमियात् । विलिङ्गत्वादप्रवृत्तिरिति चेत् । स्यात् सूत्रारम्भसामर्थ्यात् "पूर्वादिना परान्त" इति । तस्माद् वाच्यम् "एवमग्नीषोमीयम्" इति ॥ २१ ॥

( ऐन्द्राग्नादौ च तथा निर्वापः )

यथादेवतमन्यत ॥ २२ ॥

ऐन्द्राग्नार्थोऽयमारम्भः । ननु चैवं यथादेवतमिति नोपपद्यते ।

---

( १ ) मुष्टित्रयं मन्त्रेण, चतुर्थं तूष्णीम् । एवमेव सर्वेषु सूत्रेषु । ग्रहणानन्तरं चाग्निहोत्रहवण्याः शूर्पे हविः पृथक् पृथक् प्रक्षेपणीयम् । एवं शूर्पादानस्यापि दृष्टार्थता भवति । अग्निहोत्रहवण्यां च रिक्तायां हविरन्तरं ग्रहीष्यते, आपन्न तत्र करिष्यन्ते इति तत्त्वम् ।

( २ ) "यथादेवतमन्यत्" इत्यस्य अग्नीषोमीयविषयताऽप्यस्तु इत्यर्थः ।

वीप्सायां ह्ययमव्ययीभावः 'या या देवता यथादेवतम्' इति। वीप्सा च बहुविषया। न चात्र देवताबहुत्वम्। अतोऽनुपपन्नमेतदिति। अथ विकृत्यर्थमुच्येत, तत्रापि चोदकेनैव प्राप्तत्वादवाच्यता। प्रकृत्यर्थत्वे च शब्ददोष इत्युक्तम्। उच्यते। प्रकृतावेव देवताबहुत्वमस्ति। "तद्धैके चरू निर्वपन्ति पौर्णमास्याᳫं सरस्वते ऽमावास्यायाᳫं सरस्वत्यै" इति ऐन्द्राग्नेन सह देवताबहुत्वम्। अथायमविधिः स्यात्तदाऽभ्युदितेष्टिविषयं भविष्यति। अस्ति हि तत्र व्रताशक्तौ ग्रहणे देवताबहुत्वमिति। नन्वभ्युदितेष्टिरपि विकृतिरूपा, ततश्च विकृत्यन्तरवदेव तद्विषयताऽपि स्यात्। सत्यमेवम्। तदेवेदं कर्म विकृतरूपमित्यदोषः॥ २२॥

( हविष्यशेषाभिमर्शनं शेषसंस्कारार्थम् )

## भूतायत्वेति शेषाभिमर्शनम्॥ २३॥

साकाङ्क्षत्वान्मन्त्रस्य परिशेषयामीत्यध्याहारः। (१)न ह्यत्राभिमर्शनक्रियायदसैकवाक्यतामुपैति 'किम्' इति। भूताय प्रभवाया-विच्छेदाय नाशाय नादानाय कृपणतया परिशेषयामीति एकवाक्यता। न ह्यस्याविच्छेदायाभिमर्शनम्। परिशेषणं त्वविच्छेदाय भवति। तस्माद्यथोक्त एव वाक्यशेषः। स चायं शेषसम्बन्धेऽपि सति हविष एव संस्कारः। प्रयोजनवत्त्वात्। न च शेषेण संस्कृतेनास्ति प्रयोजनम्। अतः स्रङ्मालापनयनवच्छेषसंस्कारः प्रतिपत्तव्यः। तद्यथा स्रङ्माला देवदत्तीयेति कृत्वा शुचौ देशे व्यवस्थाप्यते। अपगतदेवदत्तसम्बन्धाया अपि मालायाः संस्कारो देवदत्तस्यैवानिष्टपरिहारार्थो, न मालायाः, एवमिहापीति। प्रयोजनं शेषसंस्काराभिसम्बन्धार्थतया सशेषं ग्रहणं कर्त्तव्यमिति॥ २३॥

( प्राचीक्षणं श्रमापनोदार्थम् )

## स्वरिति प्राङीक्षते॥ २४॥

तदेतद् उच्छ्वासनिरोधोपजातश्रमापनोदायेक्षणम्। "परिस्रुतमिव

(१) 'भूताय अविच्छेदाय यज्ञस्य त्वा त्वाम्' इत्यत्र किमित्याकाङ्क्षायाम् अभिमर्शनस्य यज्ञाविच्छेदसाधनत्वाभावेनान्वयायोग्यत्वात्परिशेषणस्य च तत्साधनत्वेन तद्योग्यत्वात्तस्यैवाध्याहार इत्यर्थः।

वा एतदनो भवति तदस्यैतच्चक्षुः पाप्मगृहीतमिव भवति यज्ञो वै स्वरहर्देवाः सूर्यस्तत्स्वरेवैतदतोऽभिविपश्यति" इति लिङ्गात्। प्रयोजनं निर्वापाभावे न भवति ॥ २४ ॥

( हविर्गृहीत्वा शकटादवरोहणम् )

दृ्ꣳहन्तामित्यवरोहति ॥ २५ ॥

अनसः ॥ २५ ॥

( गार्हपत्यस्योत्तरतो गत्वा पश्चिमे हविर्द्रव्यस्थापनम् )

गच्छत्युर्वन्तरिक्षमिति (१)

श्रपणस्य पश्चात्सादयति पृथिव्यास्त्वेति ॥ २६ ॥

यो यदा श्रपणः । अग्निशब्दश्चात्र(२)श्रपणाग्निविषयः । न देवतावचनः । सन्निधानात् । प्रयोजनं विकृतावविपरिणामः ॥ २६ ॥

( पात्रीतो वा निर्वापः )

पात्र्यां वा स्फ्योपहितायाम् ॥ २७ ॥

(३) एतत् अनःसम्बन्धि प्रतिपत्तव्यम् । "उतो पात्र्यै गृह्णन्ति" इति हि समामनन्ति ॥ २७ ॥ (४)तदा-

( पात्रीपूर्वार्धमभिमृश्य धूरभिमर्शनादिमन्त्राणां जपः )

धूरीषारोहणानि पात्रीबिले जपति ॥ २८ ॥

धूरीषारोहणादिशब्दैस्तन्मन्त्रा लक्ष्यन्ते । जपतिशब्दोपादानात् । विलिङ्गा अपि वचनसामर्थ्यात् विनियुज्यन्ते । "अनन्त-

---

(१) उत्तरदेशं प्रति ।

(२) अत एव वरुणप्रघासेषु पूर्वेद्युर्मेषमिथुनकरम्भपात्रार्थं गृहीतानां यवानां दक्षिणाग्नेः पश्चात् सादनम् । पित्र्यायां च दिग्विपर्ययाद् गार्हपत्यदक्षिणाग्न्योरुत्तरतो हविषामासादनम् । त्र्यम्बकेषु गार्हपत्यस्य दक्षिणत इति विवेकः ।

(३) अनःसम्बन्धि एतत् निर्वापादि सर्वं कर्म स्फ्याश्रिताया पात्र्यां वा प्रतिपत्तव्यमित्यर्थः ।

(४) पात्रीतो ग्रहणपक्षे इत्यर्थः ।

रायमु तर्हि यजूंषि जपेत्" इति (१) ॥ २८ ॥

( शकटादवरोहणस्थानीयमुत्थानम् )

इडांहन्तामित्युत्थानम् ॥ २९ ॥

अस्मिन्पक्षे ॥ २९ ॥

( पवित्रयोः छेदनेन संपादनम् )

कुशौ समाग्रप्रशीर्णाग्रावनन्तर्गर्भौ कुशैश्छिनत्ति पवित्रे स्थ इति ॥ ३० ॥

अप्रशीर्णाग्रावग्रवन्तौ, अनन्तर्गर्भौ ययोरन्तर्मध्ये गर्भौ न स्तः, तौ कुशैश्छिनत्ति "पवित्रे स्थ" इत्यनेन मन्त्रेण ॥ ३० ॥

त्रीन् वा ॥ ३१ ॥

छिनत्तीत्यनुवर्त्तते । तत्र मन्त्रो न स्यात् द्विवचनान्तत्वात् । पवित्रद्वयपक्षे च कृतार्थत्वात् । स्याद्वाऽर्थाभिधानसामर्थ्यात् । प्रा-

---

(१) इदमत्रानुसन्धेयम् । एषां मन्त्राणां त एवार्था भवन्ति येऽनसि । कथम् । धूस्तावद् धूर्वतेर्वधकर्मण इति साऽपि ( पात्री ) किंचिदागच्छद्विहन्ति । तत्राप्यग्निरस्ति सर्वगतत्वात् । हविर्ग्रहीष्यन्नध्वर्युस्तामतिक्रामति, तस्या अपि निन्हुते धूरसीत्यादिना । अनोवच्च पात्र्यपि हविष्यान् धारयतीति वन्हितममित्यादिशब्दैरुच्यते । विष्णुश्चाध्वर्य्वात्मकः तत्र पादेन क्रमते अत्र तु हस्तेनेति विशेषः । तस्मात् सिद्धप्रयोगाणां पात्र्यामपि त एवार्था इति हरिस्वामी ।

यदि तु पात्र्यां गृह्णीयात्तदा धूरीषायभावेन तदननुष्ठानकृतं व्यवधानमन्तरायमन्तरेण तत्प्रकाशकयजूंषि जपेदिति माधवाचार्याः ।

पात्रीतः पश्चाद्देशे उत्तरस्मिन्वोपविश्य प्राङ्मुखो ग्रहणं कुर्यात्, पित्र्यायां दक्षिणासीनः, त्र्यम्बकेषूदङ्ङासीनः । आसनाय स्थानासम्भवे पात्रीमपरेणैव गत्वा दक्षिणतः प्राङुपविष्टेनैव ग्रहणं कार्यम् । पात्रीगार्हपत्ययोरन्तराले गमनस्यासिद्धत्वात् । अनस्यपि प्राङ्मुखोपविष्टेनैव ग्रहणं कर्तव्यमिति दिक् ।

तिपदिकार्थस्य विद्यमानत्वात् । द्विवचनस्यासमवायान्नेति चेत् । मा भूत्समवायः । गुणो हि संख्या, प्रातिपदिकार्थः प्रधानभूतः । न च गुणानभिधाने न प्रधानमभिधास्यतीति शक्यते उत्स्रष्टुम् । तस्मान्नित्यपक्षेऽपि मन्त्रः प्रवर्त्तत एव ॥ ३१ ॥

( अग्निहोत्रहवण्यामपः कृत्वा पवित्राभ्यामुत्पवनम् )

हविर्ग्रहण्यामपः कृत्वा ताभ्यामुत्पुनाति सवितुर्व इति ॥ ३२ ॥

हविर्ग्रहणीति न हविर्ग्रहणविवक्षया । किं तर्हि । "अग्निहोत्रहवण्यां चतुरो मुष्टीन्निर्वपति" इत्याम्नानात् । अतस्तद्विवक्षेयम् । प्रयोजनं ग्रहणाभावेऽपि तत्रापः क्रियेरन् । ताभ्यामुत्पुनाति "सवितुर्व" इत्यनेन मन्त्रेण ॥ ३२ ॥

( प्रोक्षणीषु पवित्रनिधानम् )

ता स्थानं तयोः ॥ ३३ ॥

ताः आपः तयोः पवित्रयोः स्थानं वचनसामर्थ्यात् । "पवित्रे निधाय प्रणीतासु" इति चाम्नानात् ॥ ३३ ॥

( प्रोक्षणीपात्रं सव्ये कृत्वा दक्षिणेनापामूर्ध्वं चालनम् )

सव्ये कृत्वा दक्षिणेनोदिङ्गयति देवीराप इति ॥ ३४ ॥

उदिङ्गयति ऊर्ध्वं गमयति । दक्षिणग्रहणं शक्यमवक्तुं, समाचारात्प्राप्तेः । कर्त्तव्यं वा, सव्ये स्थितानामेव प्रोक्षणीनामुदिङ्गनं यथा स्यादिति । यज्ञपतिशब्दश्चानेकयजमानके यथार्थं विपरिणस्यते(१) ॥ ३४ ॥

( पात्रस्थानामपां तदेकदेशेन प्रणीतेन वा प्रोक्षणम् )

प्रोक्षितास्थेति तासां प्रोक्षणम् ॥ ३५ ॥

ताभ्य एवाद्भ्य एकदेशेनेति सम्प्रदायः।

---

(१) स च 'यज्ञपती सुधातू' 'यज्ञपती देवयुवौ' 'यज्ञपतीन् सुधातून्' 'यज्ञपतीन् देवयुवः' इत्येवं यथायथमूहनीयः।

नेत्यपरे । स्वात्मनि क्रियाविरोधात् । न हि प्रोक्षणे कर्मता करणता च तासां सम्भवतीति । अन्याश्च नोपदिश्यन्ते । तस्मान्मन्त्रोच्चारणमेव । "तदेताभ्यो निन्हुते" इति च लिङ्गात् ।

(१) अत्र पुनस्तासां प्रोक्षणमित्यसमञ्जसं स्यात् । हविश्चेति प्रोक्षणक्रियानुकर्षणार्थ-चशब्दानुपपत्तिश्च । तस्मात्सम्प्रदाय एव ज्यायान् । अथ ताभिरेव प्रोक्षणं (२)विरुध्यते ततः प्राणीतेन भविष्यति । निन्हवश्चार्थवादप्रायः ॥ ३५ ॥

( प्रोक्षणीभिराग्नेयादिहविःप्रोक्षणम् )

हविश्चाग्नये त्वाऽग्नीषोमाभ्यां त्वेति ॥ ३६ ॥

अत्र क्रियापदाभावात् अधस्तनसूत्रोपात्तं प्रोक्षणक्रियापदं चशब्देनानुकृष्यते । तच्च यथाश्रुतमेकवाक्यतामनुपपद्यमानं सत्प्रोक्षतीति विपरिणतरूपमनुकृष्यते ॥ ३६ ॥

यथादेवतमन्यत् ॥ ३७ ॥

कृतव्याख्यानम् ॥ ३७ ॥

( प्रतिपात्रं मन्त्रावृत्त्या पृथक्पृथक्प्रोक्षणम् )

पात्राणि दैव्यायेति ॥ ३८ ॥

प्रोक्षतीत्यनुवर्त्तते । "शुन्धध्वम्" इतिबहुवचनसामर्थ्यात् कूटीकृत्य प्रोक्षणमित्येके । तन्न । प्रोक्षणस्य पात्रोद्देशेन विधानात् । समुदायस्य चाचोदितत्वात् । प्रतिसंस्कार्यं च संस्कारावृत्तिर्न्याय्या । तस्मात्प्रतिपात्रमेव । बहुवचनं तु पूजार्थम्(३) । "एता उत्या उषसः केतुमक्रत" इतिवत् । देवशब्दस्य स्थाने पितृयज्ञे प्रधानार्थेषु पात्रेषु शूर्पकपालकृष्णाजिनोलूखलमुसलादिषु पितृशब्दप्रयोगः । यानि त्वङ्गप्रधानार्थानि प्रनाडिकयाऽपि तेषु देवपितृशब्दप्रयोगः । यत्तु

---

(१) अत्र अस्मिन् पक्षे मन्त्रोच्चारणमात्रे तासां प्रोक्षणमिति प्रोक्षणविधानमसमञ्जसं स्यादित्यर्थः ।

(२) स्वाध्यायोऽध्येतव्य" इति श्रुतेः बोध्यत्वबोधकत्वे इव पात्रस्थानामपां प्रोक्षणकर्मत्वकरणत्वे उपपद्येयातामिति पितृभूतिः ।

(३) परेतु यथा व्रीहिप्रोक्षणे जातेः प्रोक्षणं न व्यक्तेरेवं पात्रप्रोक्षणेऽपि, तथाच जात्याख्यायां बहुवचनमप्युपपन्नमित्याहुः ।

तत्रापि देवकर्मार्थे तत्र दैव्यायेत्येव । पात्रप्रोक्षणे च विनियोगक्रमः । क्रमान्तराभावात् ॥ ३८ ॥

( प्रणीताहवनीयान्तराले प्रोक्षणीनां निधानम् )

असञ्चरे प्रोक्षणीर्निधाय ॥ ३९ ॥

स चासञ्चरः प्रणीताहवनीयान्तरालम् । "ता नान्तरेण सञ्चरेयुः" इत्युक्तत्वात् । यद्यपि चाहवनीयगार्हपत्यान्तराले हविष्पात्रस्वाम्यृत्विजाम् अन्तरागमनप्रतिषेधे सति असञ्चरव्यपदेशो भवति तथापि प्रकरणसमधीत एव परिगृह्यते "ता नान्तरेण गच्छेयुः" इति । इतरस्य च सर्वविषयत्वात् ।

प्रोक्षणीशब्दश्च यौगिको, न जातिनिमित्तः संस्कारनिमित्तो वा । "प्रोक्षणीभिरुद्वेजिताः स्मः" इत्यसंस्कृतेऽपि शब्दप्रयोगात् । प्रशब्दश्च प्रकर्षे, करणे च प्रत्ययः । प्रोक्ष्यते आभिरिति प्रोक्षण्यः । चिन्तायाः प्रयोजनम् "आज्यप्रोक्षणीरुद्यम्य" इत्यत्रासंस्कृता आदीयन्ते ॥ ३९ ॥

इति श्रीकर्काचार्यकृते कातीयश्रौतसूत्रभाष्ये
द्वितीयाध्याये तृतीया कण्डिका ।

( कृष्णस्य मृगविशेषस्याजिनमादद्यात् )

शर्मासीति कृष्णाजिनादानम् ॥ १ ॥

शर्मासीत्यनेन मन्त्रेण कृष्णाजिनादानम् । कृष्णाजिनमिति षष्ठीतत्पुरुषः, कृष्णस्य अजिनं कृष्णाजिनम् । न कर्मधारयः, कृष्णं च तदजिनं चेति । कुत एतत् । लिङ्गात् "स कृष्णो भूत्वा चचार तस्य देवा अनुविद्य त्वचमेवावच्छायाजह्रुः" इति । कृष्ण इति मृगोऽभिधीयते । प्रयोजनं मार्गं यथा स्यादिति ।

तदेतदादानमवघातार्थम् । तदभावे चाभावः ॥ १ ॥

( कृष्णाजिनं पात्राण्यतिक्रम्य नीत्वा सकृदवधूनयेत् )

अपेत्य पात्रेभ्योऽवधूनोत्यवधूतमिति ॥ २ ॥

यद्यपि चापगमनक्रियाऽध्वर्युविषया (१)तथापि सामर्थ्यात् कृष्णाजिनापनयनं प्रत्येतव्यम् । तस्य ह्यपनयनमत्र श्रूयते । "अतिनत्येव पात्राण्यवधूनोति यद्ध्यस्यामेध्यमभूत्तद्ध्यस्यैतदवधूनोति" इति ।

तच्चैतदवधूननमदृष्टार्थत्वात्सकृत्क्रियते । रक्षोऽभिधायकत्वाच्च मन्त्रस्योदकालम्भो भवति ॥ २ ॥

( उपरिलोमप्रत्यग्ग्रीवकृष्णाजिनास्तरणम् )

## (२)प्रत्यग्ग्रीवमास्तृणात्यदित्यास्त्वगिति ॥ ३ ॥

चर्मणां प्राग्ग्रीवतोक्ता, तदपवादः प्रत्यग्ग्रीवमिति ॥ ३ ॥

( वामपाणिस्पृष्टे कृष्णाजिने उलूखलनिधानम् )

## सव्याशून्ये निदधात्युलूखलमद्रिरसि, ग्रावासीति वा ॥ ४ ॥

सव्येन पाणिना अशून्ये कृष्णाजिने उलूखलं स्थापयति—अद्रिरसीत्यनेन मन्त्रेण, ग्रावासीति वा ॥ ४ ॥

## प्रतित्वेत्युभयोः ॥ ५ ॥

(३) शेषः । अत्राद्रिग्रावशब्दावुलूखलं स्तोतुं प्रयुज्येते । नहीदमश्ममयमुलूखलम् । वानस्पत्य इति विरोधात् । पृथुबुध्न इति च मन्त्रवर्णात् । सामर्थ्याच्च "अभिनिहितमेव सव्येन पाणिना भवति

---

(१) हरिस्वामिमतेनेदम् । ते हि "अतिनत्य पात्राणि" इत्यस्य अतिनत्य अतिक्रम्य पात्राण्यतीत्य ' नहि पात्राणि मेध्यानि सन्ति पुनरमेध्यानि कर्तुं युक्तम्, इत्यभिप्रायेणाध्वर्युः पात्राण्यतिक्रम्य कृष्णाजिनं सकृदवधूनोतीति व्याचख्युरिति ।

(२) प्रतीच्यां ग्रीवा यस्य तत् प्रत्यग्ग्रीवम् । "कृष्णाजिनमवधूनोत्यूर्ध्वग्रीवमुदङ्ङावृत्यावधूतमित्यर्थैतत्पुरस्तात्प्रतीचीनग्रीवमुत्तरलोमोपस्तृणाति" इत्यादिना तैत्तिरीयेऽप्युक्तमेतत् ।

(३) "अद्रिरसि वानस्पत्य" इत्यस्य, "ग्रावासि पृथुबुध्न" इत्यस्य चेत्युभयोर्मन्त्रयोः "प्रतित्वादित्यास्त्वग्वेत्तु" इति शेषः कर्तव्यः इत्यर्थः ।

अथ दक्षिणेनोलूखलमाहरति" इति । न ह्यश्ममयमुलूखलं दक्षिणेनै-केनाहर्तुं शक्यते । तस्मादुपचारवृत्त्याऽद्रिग्रावशब्दौ । ये तु मन्त्रा-भिधानसामर्थ्यमात्रेणैवाश्ममयतां नियमयन्ति तएव प्रष्टव्याः । किं च मुसलेऽपि ग्रावशब्दप्रयोगात् "बृहद्ग्रावासि" इति । असंशयं च तद् वानस्पत्यम् ।

अत्र केचिन्नखनिर्भिन्नतरौ वानस्पत्यपदस्य स्थाने 'मानुष' इति विपरिणाममिच्छन्ति । तत्पुनर्नातियुक्तमिव । न ह्युलूखल-कार्यापत्तावपि नखानां कृष्णाजिने स्थापनमस्ति । यतो न ते उलू-खलवत्कृष्णाजिने ऽवस्थितास्तण्डुलनिर्वृत्तिं कुर्वन्ति ॥ ५ ॥

( उलूखले हविर्द्रव्यप्रक्षेपः )

## हविरावपत्यग्नेस्तनूरिति ॥ ६ ॥

अग्नेस्तनूरित्यनेन मन्त्रेणोलूखले हविर्द्रव्यमावपति । अग्निश-ब्दश्च न देवतावचनो, लिङ्गात् "यज्ञो हि तेनाग्नेस्तनूः" इति । यज्ञसाधने (१)यज्ञशब्दस्तस्य चाग्निसम्बन्धादग्नेस्तनूरित्युच्यते । तस्मात् ज्वलनविषयोऽग्निशब्दः । अग्नीषोमयोश्चानभिधानात् । प्रयोजनमवभृथे 'अपां तनूः' इति विपरिणामः । तत्रापि सवनीयैः स-हानुष्ठानात् असति प्रयोजने दार्षद्वनावभृथविषयताऽस्य । पितृ-यज्ञे च "देववीतये" इत्यस्य स्थाने "पितृवीतये" इति प्रयोगश्चोदिता-र्थाभिधानात् ॥ ६ ॥

( उलूखले हविषः प्रक्षेपोत्तरकाले हविष्कृदाह्वानकाले वाऽध्वर्युयजमानयोर्वाग्विसर्गः )

## वाचं विसृजते ॥ ७ ॥

एवं हि श्रूयते "यां वा अमूꣳहविर्ग्रहीष्यन्वाचं यच्छत्यत्र वै तां विसृजते" इति ॥ ७ ॥

## यजमानश्च ॥ ८ ॥

"वाचं विसृजते" इत्यनुवर्त्तते ॥ ८ ॥

---

(१) "यज्ञो हि" इतिलिङ्गघटको यज्ञशब्दो यज्ञसाधने हविषि वर्त-ते । तस्य हविषः अग्निसंबन्धात् तत् अग्नेस्तनूरित्युच्यते इत्यर्थः ।

हविष्कृता वा ॥ ९ ॥

हविष्कृदाह्वानकाले वा वाग्विसर्गः । तत्रापि हि श्रूयते "वाग्वै हविष्कृद्वाचमेवैतद्विसृजते" इति । नन्वर्थवादस्वरूपत्वान्नायं विसर्गकालः । सत्यमेवम् । पूर्वत्रापि ह्यर्थवादस्वरूपतैव । किं तूभयत्राश्रितं विधित्वमाचार्येण वाक्यान्तराद्वा कुतश्चिद्वा ॥ ९ ॥

( नानाबीजेषु अन्त्यहविरावापानन्तरं वाग्विसर्गः )

नानाबीजेष्वन्त्ये सामर्थ्यात् ॥ १० ॥

नानाबीजेष्वर्थात् किमन्त्ये वाग्विसर्जनमुताद्ये? । यथा देवसूहविःषु । तत्र हविरावपनस्य यतवाक्त्वं धर्मः, शूर्प्पादानादेर्व्याभाषणम् । एकैकं च हविस्तुषविप्रमोकान्तं कर्त्तव्यम् । पदार्थस्यैतावत्त्वात् । तत्र यद्याद्ये वाग्विसर्गः, शूर्पादानादेर्व्याभाषणधर्मानुग्रहः । अथान्त्ये, हविरावपनस्य यतवाक्त्वधर्मानुग्रहः । तत्र नियमानियमयोर्नियमसामर्थ्यादन्त्ये एव वाग्विसर्गः । न हि शूर्प्पादानादेर्व्याभाषणधर्मनियमः । इतरत्र यतवाक्त्वनियम इति ॥ १० ॥

( मुसलमादाय हविष्येषु अवदधाति )

बृहद्ग्रावेति मुसलमादत्ते ॥ ११ ॥

स ऽइदमित्यवदधाति ॥ १२ ॥

'हविष्येषु मुसलम्' इति वाक्यशेषः ॥

स चायं मन्त्रः "स इदम्" इति चोदितार्थाभिधायकत्वात् पितृयज्ञे विपरिणम्यते । वचनलिङ्गयोस्तु (१)कृतं व्याख्यानम् ॥११॥१२॥

( अवघातं कुर्वताऽध्वर्युणा पत्न्या अग्नीधो वाऽऽह्वानम् )

हविष्कृदेहीति त्रिराह्वयति ॥ १३ ॥

हविष्कृदेहीत्यनेन मन्त्रेण त्रिः संशब्दयति हविःसंस्कर्त्रीं पत्नीमग्नीध्रं वा ॥ १३ ॥

---

( १ ) देवानामित्युपस्तम्भनस्य पश्चादीषाम् ( ५९ ) इत्यत्रेति शेषः ।

( आह्वानानन्तरं पत्न्याऽग्नीध्रा वाऽवघातः )

अतः पत्न्यवहन्त्यन्यो वा ॥ १४ ॥

अत इत्यवाच्यम् । पाठक्रमादेव तत्सिद्धेः । वाच्यं वा । प्रवृत्तावघातस्याह्वानप्रज्ञापनार्थत्वात् । तत्कुतः । वचनसामर्थ्यात् "हविष्कृदेहीति त्रिरवघ्नन्नाह्वयति" इति । अन्यशब्देन च न ऋत्विग्व्यतिरिक्तोऽन्य उच्यते । अन्यस्याप्रकृतत्वात् । ऋत्विजां च परिक्रीतत्वात् । सूत्रकारप्रस्थानाच्च "ऋत्विजां वैको ऽप्रक्लृप्तत्वात्" इति । तेनाध्वर्युव्यतिरिक्तोऽन्यः परिगृह्यते । स चाग्नीत्, सन्निकर्षात् । समाख्यानुग्रहाच्च । ब्रह्मापीति चेत् । न । तस्य वेदत्रयविहितकर्मसम्बन्धात् समाख्यानुग्रहाभावात् । भवति चाग्नीध्रोऽध्वर्युसमाख्यानम् । "आश्विनमध्वर्यवो भक्षयन्ति" इति प्रकृत्याम्नायते "अथ आश्विनं भक्षयन्ति अध्वर्युः प्रतिप्रस्थाताऽऽग्नीध्र" इति । तस्मादन्यशब्देनाग्नीदभिधीयते ॥ १४ ॥

( अध्वर्यौ हविष्कृदाह्वानं कुर्वति अग्नीद् दृषदुपले समाहन्यात् )

आह्वयत्याहन्त्यन्यो दृषदुपले कुक्कुटोऽसीति त्रिः शम्यया, द्विर्दृषदꣳ सकृदुपलाम् ॥ १५ ॥

हविष्कृदाह्वानं कुर्वत्यध्वर्यावन्यो दृषदुपले आहन्ति शम्यया करणभूतया, द्विर्दृषदꣳ सकृदुपलाम्, कुक्कुटोसीत्यनेन मन्त्रेण ।

अन्य इति कुतः । वचनात् "स यत्रैष हविष्कृतमुद्वादयति तदेको दृषदुपले समाहन्ति" इति । एष इति सर्वनामशब्देनाध्वर्योः परामर्शात् "तदेको दृषदुपले समाहन्ति" इत्येकशब्दोऽग्नीद्विषयः । ततश्च वचनादग्नीध आहनने कर्तृत्वम् । न विरोधादुपधानवत् । तत्र ह्यगृहीतकर्तृविशेषकं वचनं "स वै कपालान्येवान्यतर उपदधाति दृषदुपले अन्यतर" इति । इह पुनर्गृहीतः कर्तृविशेषः "अथ हविष्कृतमुद्वादयति" इति समाख्ययाध्वर्युः, "स यत्रैष हविष्कृतमुद्वादयति तदेको दृषदुपले समाहन्ति" इति । तस्मान्न विरोधादग्नीदिति । प्रयोजनमव्यापृतेऽप्यध्वर्यावग्नीदेवाहन्ति इति । ननु च द्विर्दृषदं सकृदुपलामित्युक्तत्वात् त्रिरित्यवाच्यम् । स्यादेतदेवं यदि

त्रिशब्दो हन्तिना सम्बध्येत । अयं तु मन्त्रेणाभिसम्बध्यते "त्रिः कुक्कुटोऽसि" इति । द्विर्यदि सकृन्मन्त्रप्रयोगे प्राप्ते एकद्रव्ये कर्मावृत्ताविति, मन्त्राभ्यासार्थोऽयमारम्भः। हन्त्यभिसम्बन्धे पुनः त्रिशब्दस्यानुवादकत्वं स्यात्। स चायमदृष्टोपकारकः पदार्थ इति वक्ष्यत्युत्तरत्र। तथा च सति यावदुक्तं निवर्त्तते ॥ १५ ॥

( अग्नीच्छूर्पमादाय तस्मिन् हविरुद्वपेत् )

वर्षवृद्धमसीति शूर्पमादत्ते ॥ १६ ॥

अवहन्ता। अभिप्रवृत्तत्वात् ॥ १६ ॥

प्रति त्वेति हविरुद्वपति ॥ १७ ॥

स एव ॥ १७ ॥

( अग्नीत् निष्पूय तण्डुलान् कणांश्च पृथक्करोति )

परापूतमिति निष्पुनाति ॥ १८ ॥

( अध्वर्युर्विविक्तीकरणानन्तरं तुषान्निरस्येत् )

अपहतमिति तुषान्निरस्यति ॥ १९ ॥

अध्वर्युः। अनवघातशेषत्वात्। न चैषा प्रसिद्धिर्यदवहन्ता तुषान्निरस्यतीति। प्रतिपत्तिश्चैषा। तदभावेऽभावः ॥ १८ ॥ १९ ॥

वायुर्व इति विविनक्ति ॥ २० ॥

पृथक् करोति-तण्डुलान् कणांश्च वितुषीकरणाय। तच्चैतद्विविक्तीकरणं तुषनिरसनात्पूर्वं प्रतिपत्तव्यम्। सामर्थ्यात्। अशेषेनिरसनं ह्येवं सति भवति। उक्तं च "विरोधेऽर्थस्तत्परत्वात्" इति। सूत्रक्रमश्च यथाश्रुतीत्यदोषः।

स चायमवघातः कृष्णाजिनादानादितुषविप्रमोकान्तः। तत्र नानाबीजेष्ट्यां हविरावपन-मुसलयोजन-हविरुद्वपन-निष्पवन-विवेकीकरणानि भेदेन मन्त्रवन्ति। हविष्परत्वान्मन्त्रस्य। शेषं तन्त्रेण ॥ २० ॥

( पात्र्यां हविष्यान् क्षिप्त्वा मन्त्रं पठन्ननामिकया स्पृशेत् )

देवोव इति पात्र्यामोप्याभिमन्त्रयते ॥ २१ ॥

हविष्यान् । नानाबीजेष्ट्यां च सन्निपातात्तन्त्रेणाभिमन्त्रणम्(१) ॥ २१ ॥

( त्रिः फलीकरणम् )

त्रिः फलीकरोति देवेभ्यः शुन्धध्वं देवेभ्यः शुन्धध्वमित्येके ॥ २२ ॥

फलीकरणं कणविमोकः । तच्च कर्त्तव्यं "देवेभ्यः शुन्धध्वम्" इत्यनेन मन्त्रेण । वीप्सा प्रतिफलीकरणं मन्त्रावृत्तिपरा । न हि प्रतिप्रहारं मन्त्रावृत्तिर्युज्यते । पितृयज्ञे च "पितृभ्यः शुन्धध्वम्" इति विपरिणामः ॥ २२ ॥

( फलीकृत्य फलीकृत्य कणनिधानम् )

फलीकृत्य कणान्निदधाति ॥ २३ ॥

फलीकृत्येत्यवाच्यम् । पाठक्रमादेव तत्सिद्धेः । स्यात् । प्रतिफलीकरणं कणनिधानं यथा स्यादिति ॥ २३ ॥

( अध्वर्य्वग्नीध्रोर्युगपत्पेषणोपधानानुष्ठानम् )

पेषणोपधाने युगपत् ॥ २४ ॥

"स वै कपालान्येवान्यतर उपदधाति दृषदुपले अन्यतर" इति हि प्रकृत्य समामनन्ति "तद्वा एतदुभयं सह क्रियते" इति । तत्र पेषणमन्तरङ्गत्वादध्वर्युः करोति । बहिरङ्गत्वाच्चोपधानमग्नीदेव वर्त्तयति(२) ॥ २४ ॥

तत्र श्रुतिपाठानुसारेण पूर्वमुपधानमुच्यते—

---

(१)परे तु नानाबीजेष्ट्यां भेदेन मन्त्रपाठमिच्छन्ति। कालभेदात्।

(२) अध्वर्योः पेषणकार्ये व्यापृतत्वात् । ततश्च यत्र विरोधो न, यथा वरुणप्रघासेषु अध्वर्योर्मेषकरणे प्रतिप्रस्थातुश्च करम्भपात्रमेषीकरणे, तत्रोभयोर्यथास्वं स्वयमेव कर्परोपधानं, नाग्नीधः ।

( उपवेषाख्यं काष्ठमादाय तेन गार्हपत्याङ्गारान् प्राच्यां प्रेरयेत् )

धृष्टिरसीत्युपवेषमादायापाग्न इत्यङ्गारान्प्राचः करोति ॥ २५ ॥

उपवेषोऽङ्गारापोहनसमर्थं काष्ठम् । तद् "धृष्टिरसि" इत्यादाय "अपाग्ने" इत्यनेन मन्त्रेण प्राचोऽङ्गारानुदूहति ।

तच्चैतदङ्गारापोहनं देशरेचनार्थम् । रिक्ते हि देशे कपालानि यथोपधीयेरन्निति । एवं च सति चर्विष्टयामपोहनाभावः । धानाभर्जनस्य च देशरेचनकृतोपकाराभावात्(१) । अङ्गारेषु ह्यधिश्रयणम्(२)उभयोरपि प्रसिद्धम् ।

केचिदनेन मन्त्रेणाग्निनिरसनमेव कुर्वन्ति । मन्त्रलिङ्गात् "अपाग्ने ऽअग्निमामादं जहि निष्क्रव्यादꣳ सेध" इति । अपजह्यग्निमामादं निःषेध च क्रव्यादमिति । वाक्यशेषाच्च "एतावेवैतदुभावतोऽपहन्ति" इति । तदेतदनुपपन्नम् । अविधानात् । विध्यन्तरशेषत्वाच्च । अस्तिह्यत्र विध्यन्तरम् "तेन प्राचोऽङ्गारानुदूहति" इति । मन्त्राणाञ्चाविधायकत्वमुक्तम् । अत उदूहनमात्रमेव । अपिचाग्न्युत्सर्गे दोषो दृश्यते "वीरहा वा ऽएष भवति योऽग्नीनुत्सृजति" इति ॥ २५ ॥

( गार्हपत्यखरस्य दक्षिणभागेऽङ्गारं निधाय कपालेनावच्छादयेत् )

आदेवयजमित्यङ्गारमाहृत्य कपालेनावच्छादयति ध्रुवमसीति ॥ २६ ॥

यद्यपि चाङ्गारे द्वितीया कपाले च तृतीया तथाप्यङ्गारस्य निष्प्रयोजनत्वात्कपालस्य च प्रयोजनवत्त्वात् कपालार्थतैवाङ्गारस्य । कपालधर्मोऽपि च सन्"तं मध्यमेन कपालेनाभ्युपदधाति"इति मध्यमसंयोगात्तद्धर्म एवायं न कपालमात्रधर्मः । न च भर्जने प्रवर्त्तते । अङ्गारेषु हि तस्याधिश्रयणम् ।

---

( १ ) न तत्रापि अङ्गारापोहनम् इति शेषः ।

( २ ) उभयोः धानानां चरोश्चेत्यर्थः ।

आपितृयज्ञं वहेति च पितृयज्ञे विपरिणामः । ननु चायमसमवेतवचनः । न ह्यत्र देवा इज्यन्त इति । तेन देवयाट्त्वं यथाकथञ्चित् । अत्रोच्यते । देवेज्यार्थहविःश्रपणद्वारेण देवयाट्त्वमस्यापि भवति । यथा च देवयाट्त्वं तथा मन्त्रोऽनुवदति । तस्मात्समवेतवचनः ॥ २६ ॥

अमुष्येति द्विषच्छब्दे ऽभिचरन् ॥ २७ ॥

अमुष्य त्वधायेति अभिचरन्नामादिशति द्विषच्छब्दमपनीय । स चायं द्विषच्छब्दो न स्वरूपतो गृह्यते । किं तर्हि । द्विषच्छब्दाच्छब्दान्तरमपि । एवं च सतीह भ्रातृव्यशब्दे व्यादेशः सिद्धो भवति ॥ २७ ॥

किमिहैव द्विषच्छब्देऽभिचरतो नामादेशः । नेत्युच्यते—

अन्यत्रापि ॥ २८ ॥

अतोऽन्यत्रापि अभिचरतो द्विषच्छब्दे नामादेशः कर्त्तव्यः । यथा "द्विषतो वधोसि" "भ्रातृव्यमववाधे" इत्येवमादि ॥ २८ ॥

( वामाङ्गुलिस्पृष्टे कपालेऽङ्गारनिधानम् )

सव्याङ्गुल्याऽशून्येऽङ्गारं निदधात्यग्ने ब्रह्मेति ॥ २९ ॥

"अभिनिहितमेव सव्यस्य पाणेरङ्गुल्या भवति" इति श्रूयते । स चायं कपालसंस्कारत्वात्प्रतिकपालमावर्त्तते । गुणविभक्तिनिर्दिष्टमपि चात्र प्रयोजनवत्त्वात्कपालमेव संस्कार्यम् । अगारे गावो वास्यन्ताम्, प्रावारे कुसुमानीतिवत् । भर्जनेऽपि चोपरिष्टादङ्गारः प्रवर्त्तते एव । अदृष्टार्थत्वात् । चरोस्त्वकपालकार्यापत्तेर्न तद्धर्मप्रवृत्तिः ॥ २९ ॥

( मध्यकपालात्पश्चाद् द्वितीयकपालोपधानं तत्राङ्गारनिधानं च )

धरुणमिति पश्चात् ॥ ३० ॥

कपालमुपदधातीति वाक्यशेषः ॥ ३० ॥

( मध्यकपालात्पूर्वस्यां दक्षिणस्यां च क्रमेण तृतीयचतुर्थयोः कपालयोरुपधानम् । )

(१) पुरस्ताद्धर्त्रमिति ॥ ३१ ॥

(२) विश्वाभ्य इति दक्षिणतः ॥ ३२ ॥

प्रथमं कपालमङ्गीकृत्येतरत्र दिङ्नियम उच्यते ॥ ३१ ॥ ३२ ॥

( मध्यकपालस्य दक्षिणत उत्तरतश्च प्रदक्षिणक्रमेणोपदध्यात् )

समं विभज्य द्वे दक्षिणत एवमुत्तरतश्चितस्थेति ॥ ३३ ॥

समं विभज्य चितस्थेत्यनेन मन्त्रेण द्वे दक्षिणत एवमुत्तरत उपदधाति प्रदक्षिणक्रमयोगेन । स्मार्त्तं चैतत्प्रादक्षिण्यं, न श्रौतम् । ततश्च तदपचारे स्मार्त्तमेव प्रायश्चित्तं भवति । समं विभज्येत्यवाच्यम् । द्वे दक्षिणत एवमुत्तरत इति स्वशब्दाभिधानात् । स्यादग्नीषोमीयार्थत्वात् । तत्र हि समविभागानुक्तौ "अधिकं दक्षिणतः" इति न विभागाधिक्यं स्यात् । तत्र को दोषः । संख्याधिक्यमप्याशङ्क्यत । अथ पुनः समविभागे उक्ते यदाधिकं विभागस्य तस्य दक्षिणत उपधानं सिद्धं भवति ॥ ३३ ॥

तूष्णीं वा ॥ ३४ ॥

न चितस्थेति ॥ ३४ ॥

( अग्नीषोमीये एकादशानां कपालानामुपधानमेवमेव )

एवमेकादशाग्नीषोमीयस्य ॥ ३५ ॥

कपालान्युपदधातीति शेषः (३) ॥ ३५ ॥

---

( १ ) 'धर्त्रमसि दिवम्' इत्यनेन मन्त्रेण पुरस्तात् पूर्वस्यां दिशि कपालमुपदधाति ।

( २ ) 'विश्वाभ्यस्त्वाशाभ्य' इत्यनेन दक्षिणतः दक्षिणभागे कपालं स्थापयति ।

( ३ ) इदमत्राकूतम् । एतानि सर्वाणि कपालानि निरन्तराणि संश्लिष्टानि समानि चोपधेयानि यथाऽन्तरा भूमिर्न दृश्यते । अत्र

अधिकं दक्षिणतः ॥ ३६ ॥

विभागाधिकं यत्तद्दक्षिणत उपधेयं क्रमेणैव । न सर्वोपाधानादुत्तरं, स्मृत्यनुग्रहात् ॥ ३६ ॥

( उपहितानां कपालानामङ्गारैस्तापनम् )

भृगूणामित्यङ्गारैरभ्यूहति ॥ ३७ ॥

कपालानीति शेषः । स चायं मन्त्र एककपाले विपरिणम्यते-

---

मध्यमपङ्क्तिकपालानि द्व्यङ्गुलानि समचतुरस्राणि । एवं च षडङ्गुलदीर्घा मध्यमा पङ्क्तिः । दक्षिणोत्तरपङ्क्ती तु किञ्चित्ततो न्यूने । पुरोडाशस्य कूर्माकारोक्त्या वृत्ताकारत्वप्रसिद्धेर्यावत्कपालं प्रथनविधेश्च तदर्थकपालचितेरपि अर्थात् वृत्ताकारताया गम्यमानत्वात् । ऐन्द्राग्ने चतुर्थोपधानानन्तरं समविभागेन चत्वारि दक्षिणतश्चत्वार्येवोत्तरतः । अत्र कपालचितिक्षेत्रं मध्यमाश्वशफप्रमाणम् । षडङ्गुलं वृत्तं कृत्वा ततः प्रागपच्छेदेन समं त्रेधा विभज्य मध्यमभागस्य तिर्यगपच्छेदेन त्रेधा विभागः कार्यः, दक्षिणोत्तरभागयोस्तु खण्डचन्द्राकारयोः पुरोडाशकपालसङ्ख्यानुरोधेन तिर्यग्विभागः । तत्र षट्कपाले दक्षिणो भागो द्वेधा उत्तरे त्वेकमेव कपालं खण्डचन्द्राकारमुत्तरभागप्रमाणम् । सप्तकपाले दक्षिणो भागस्त्रेधा, उत्तर एकधा । अष्टाकपाले दक्षिणो भागस्त्रेधा उत्तरो द्वेधा । नवकपाले दक्षिणश्चतुर्धा उत्तरो द्वेधा । दशकपाले दक्षिणश्चतुर्धा मध्यमोत्तरौ त्रेधा । एकादशकपाले दक्षिणः पञ्चधा इतरौ त्रेधा । द्वादशकपाले दक्षिणः पञ्चधा मध्ये त्रेधा उत्तरश्चतुर्धा । त्रयोदशकपाले दक्षिणः षड्धा उत्तरश्चतुर्धा, मध्यमः सर्वत्र त्रेधैव । एकं कपालं चेत्तत् पाणिसंमितम् । द्विकपाले वृत्तस्य तिर्यगपच्छेदेन द्वेधा विभागः । त्रिकपाले वृत्तस्य तिर्यक्समं त्रेधा विभागः । चतुष्कपाले वृत्तसमं प्राक्समपच्छिद्योत्तरभागस्य त्रेधा विभागः दक्षिणत एकम् । पञ्चकपालेऽपि वृत्तं प्राक् द्वेधा अपच्छिद्योत्तरभागस्य त्रेधा विभागः दक्षिणस्य द्वेधा । कपालानि तु घर्षणाद्युपायेन तथा करणीयानि यथा कपालचितिक्षेत्रं वृत्तं सम्पूर्यत इति याज्ञिकादिभाष्येषु ।

तपसा तप्यस्वेति । वचनस्य समवायात् । द्विकपाले च तप्येथा-मिति । अभ्यूहनं च कपालावतापनार्थम् । तेषु कपालेषु यथा पुरोडाशः पच्येत । एवं च सति कपालविध्यन्तग्राहिणोऽपि धाना-भर्जनस्य नाङ्गारैरभ्यूहनं भवति । प्रसिद्ध्यभावात् । अधस्ताद्धि तस्य सन्तापनं प्रसिद्धमिति ॥ ३७ ॥

इति श्रीकर्काचार्यकृतकातीयश्रौतसूत्रभाष्ये
द्वितीयाध्याये चतुर्थी कण्डिका ।

( पिष्टसंयवनार्थानामपां गार्हपत्येऽधिश्रयणम् )

## उपसर्जनीरधिश्रयति ॥ १ ॥

उपसर्जनीशब्देन संयवनार्था आप उच्यन्ते । तदधिश्रयणं च ताभिः पिष्टानां मार्दवं यथा स्यादिति । एवं च सति पुरोडाश-पाकार्था एवैताः । ततश्च यत्र श्रपणं तत्रोपसर्जन्यधिश्रयणमपि कार्यम् । पितृयज्ञे च दक्षिणाग्नौ श्रपणविधानात् मन्थक्षीरोपसर्ज-न्यधिश्रयणमपि तत्रैवेति सम्प्रदायः । तत्र पुनरधिश्रयणकृत उ-पकारो मन्थेऽन्वेषितव्यः । न ह्युपसर्जनीगतेनोष्मणा सक्तूनां पाक उपजन्यते, पिष्टानामिव पुरोडाशे । तस्मादनधिश्रयणमेव न्याय्यतरमिवाभाति । करम्भपात्रेषु चैवम् । ननु चोपधानसमन-न्तरं युगपदुपक्रमाभिधानात्पेषणमाभिधेयम् । इतरथा हि प्रकृत-परित्यागोऽप्रकृतोपादानं चायुक्तं स्यात् । तेनोपसर्जन्यधिश्रयण-विधानस्यायमनवसर इति । उच्यते । उपधानवत्पेषणेन सह यौ-गपद्यं यथा स्यादित्येवमर्थमिहाभिधानम् । तथा च विरोधादग्नीध एव कर्तृत्वमत्रापि । यत्र तु विरोधो नास्ति यथा चर्विष्ट्यां तत्रा-ध्वर्योरेवोपसर्जन्यधिश्रयणे कर्तृत्वम् ।

अपरे तूपधानसमनन्तरमुपसर्जन्यधिश्रयणाभिधानस्य प्रयो-जनान्तरं व्यावर्णयन्ति । यत्रोपधानं तदधिश्रयणमपि तत्रैवा-धिकाराद्यथा स्यादिति । एवं चोपसर्जन्यानयनकाल एव तासा-मधिश्रयणम् ॥ १ ॥

( पेषणार्थमपि कृष्णाजिनादानादि कार्यम् )

कृष्णाजिनमादत्ते पूर्ववत्प्रतिकृष्णाजिनम् ॥ २ ॥

कृष्णाजिनस्य यत्पूर्वं धर्मजातमुपदिष्टम् आदानादि सव्या-शून्यकरणान्तं तदिहातिदिश्यते । तुल्यश्रुतित्वात् । तच्चैतत्पेषणा-र्थत्वादपेषणे न स्यात् ॥ २ ॥

( कृष्णाजिने शिलानिधानम् )

तस्मिन्दृषदं धिषणासीति ॥ ३ ॥

तस्मिन्कृष्णाजिने दृषदमुपधाति "धिषणासि" इत्यनेन मन्त्रेण॥३॥

( शिलायाः पश्चादधस्तादुदगग्रां शम्यां प्रेरयेत् )

पश्चाच्छम्यामुपोहत्युदीचीं दिव इति ॥ ४ ॥

उपरिष्टात् । वाक्यशेषात् "हनू एव दृषदुपले जिह्वैव शम्या" इति। जिह्वासंस्तुतिरन्तरालवृत्तिसामान्येन । न वा विरोधात् । विरुध्यते ह्युपरि शम्ययोपहितया पेषणम्। किञ्चान्यत् अधस्तादुपहिता दृषदः प्राक्प्रवणतामुपजनयति निश्चलीकरोति । अतो दृष्टार्थत्वादध-स्तादुपधानम् । लिङ्गाच्च "स ये जघनेन शम्यां पिष्यमाणाना-मवशीयन्ते पिष्टानि वा तण्डुला वा" इति । अधस्तादुपहिताया एतद्भवति नोपरि । जिह्वासंस्तुतिरुपधानक्रमापेक्षया ॥ ४ ॥

( शिलायां शिलापुत्रकस्य निधानम् )

दृषद्युपलां धिषणासीति ॥ ५ ॥

पेषणार्थत्वादुपलाया दृषद्येवोपधानं प्राप्नोति । तेन शम्याया न दृषद्युपधानमित्यभिहितन्यायसंसूचनार्थं दृषद्ग्रहणम् ॥ ५ ॥

( शिलायां तण्डुलावापपूर्वकं तेषां पेषणम् )

धान्यमसीति तण्डुलानोप्य पिनष्टि प्राणाय त्वेति प्रतिमन्त्रम् ॥ ६ ॥

धान्यशब्दः सत्वकेषु व्रीह्यादिषु रूढः । यद्यपि च धिनोतेर्धा-न्यमित्यवयवार्थो गम्यते तथापि प्रत्ययस्य विशिष्टार्थविषयत्वात्

गोशब्दवद्रूढिशब्दत्वम । एवं च सति लक्षणया तद्विकारप्रकाशनं शब्दस्य । यवगुलिका अपि तद्विकार एवेति मन्त्रः प्रयुज्यत एव ।

श्यामाकानामयने च "तरसमयाः पुरोडाशा भवन्ति" इत्यत्र "तरसमसि" इति मन्त्रो विपरिणस्यते। धान्यशब्दस्य जातिनिमित्तत्वात्। ननु च प्रकृतौ प्रकृतिद्रव्यशब्देन धान्यविकारद्रव्याभिधानादत्रापि तरसप्रकृतिद्रव्यशब्देन "मृगोऽसि" इत्यभिधानं कर्त्तव्यम्। एवं हि तत्र वचनं "स१५स्थिते स१५स्थितेऽहनि गृहपतिर्मृगयां याति स तत्र यान् मृगान् हन्ति तेन तरसमयाः सवनीयाः पुरोडाशा भवन्ति" इति । तरसस्य मृगः प्रकृतिद्रव्यम् । नैतदेवम्। प्रकृतौ ह्याम्नानसामर्थ्यात् धान्यशब्देन लक्षणया तण्डुलाभिधानम । इह पुनः स्वायत्ते प्रयोगे न अवाचकशब्दप्रयोगो युज्यते । तस्मात्तरसमसीत्येव प्रयोगः । पिनष्मीति चाध्याहारः । साकाङ्क्षत्वात् ॥ ६ ॥

( शिलायां पिष्टानि कृष्णाजिने प्रक्षिप्य ईक्षेत )

## दीर्घामिति कृष्णाजिने प्रोहति ॥ ७ ॥

प्रक्षिपति पिष्टानि । प्रोहणं च पिष्टस्य सतः ।
नानाबीजेषु चैकैकं प्रोहणान्तं कर्त्तव्यं, प्रसिद्धेः ॥ ७ ॥

## चक्षुषे त्वेतीक्षते ॥ ८ ॥

'पिष्टानि' 'ईक्षे' इति चाध्याहारः(१) । साकाङ्क्षत्वात् । ईक्षणं च द्रव्यसंस्कारत्वात्तण्डुलानामपि चर्विष्टयां प्रवर्त्तते(२)॥ ८ ॥

( पिष्यमाणेषु तण्डुलेषु ब्रह्माऽऽज्यस्थाल्यामाज्यं निर्वपेत् )

## पिष्यमाणेषु निर्वपत्यन्यो महीनामित्याज्यम् ॥ ९ ॥

"पिंषन्ति पिष्टान्यभीन्धते कपालान्यथैक आज्यं निर्वपति" इति तुल्यकालश्रवणात् । अत्रान्यशब्देन कश्चिद्यजमानोऽभिधातुमिष्यते । अध्वर्य्वग्नीध्रौ हि पेषणोपधानयोर्व्यापृताविति । तथा च सूत्र-

---

(१) "चक्षुषे त्वेति ईक्षते" इति सूत्रे 'पिष्टानि' इत्यध्याहारः, "चक्षुषे त्वा" इति मन्त्रे 'ईक्षे' इत्यध्याहार इत्यर्थः ।

(२) वाजप्रसवीयजुहोतौ चयने, वाजपेये च सर्वौषधीनामिति देवादिभाष्येष्वधिकम् ।

कारप्रस्थानम् "निरुप्याज्यं वेदोऽसीति यजमानो वेदं करोति" इति। तदेतदयुक्तमिवाभाति। यत्कारणम्—यत्किञ्चिदिह कर्त्तव्यं तत्सर्वमृत्विग्भिः, परिक्रीतत्वादृत्विजाम्। अतोऽन्यशब्देन ब्रह्माऽभिधीयते। अन्य इत्यध्वर्युसन्निकर्षादृत्विगेव ग्रहीतुं न्याय्यो, न यजमानः। सूत्रकारप्रस्थानाच्च "वचनविरोधाभ्यामन्य" इति। यत्पुनरुक्तं निरुप्याज्यं वेदं करोतीति, तत्रापि न समानकर्तृकत्वार्थः क्त्वाप्रत्ययादेशः। न ह्यत्राज्यनिर्वापविधानम्, अन्यत्र विहितत्वात्। तेनानिर्ज्ञातकालस्य वेदबन्धस्य कालं लक्षयितुं क्त्वाप्रत्ययविकारो ल्यप् प्रयुक्तः। यथाऽन्यत्र "निरुप्याज्यं प्रातर्दोहमन्यास्मिन्" इति। तस्माद् (१)ब्रह्मैवाज्यं निर्वपेत्। निर्वापश्च पात्रान्तरे(२)प्रक्षेपणम्॥९॥

( सपवित्रायां पात्र्यां संयवनार्थं पिष्टावापः )

पात्र्याᳬ सपवित्रायां पिष्टान्यावपति देवस्यत्वेति॥ १०॥

पात्र्यामावपनं संयवनार्थम्। ततश्च चर्विष्टयां तण्डुलानां पात्र्यामनावपनम्। संयवनाभावात्। सपवित्रता चादृष्टोपकारिणीति चरावपि भवति॥ १०॥

( अध्वर्युः गार्हपत्यस्य पश्चादुपविशेत् )

(३)श्रपणस्य पश्चादुपविशत्यन्तर्वेदि वा॥ ११॥

अन्तर्वेदिग्रहणाच्छ्रपणोऽत्र गार्हपत्योऽभिप्रेतः॥ ११॥

( आग्नीध्रस्तप्ता अपः संयवनार्थमानयेत् )

उपसर्जनीरानयत्यन्यः॥ १२॥

उपसर्जन्यन्यशब्दौ व्याख्यातार्थौ॥ १२॥

---

(१) यत्तु "न वै ब्रह्मा प्रचरति, न स्तुते न शᳬसति" इति, तत् अन्यस्य कर्तृत्वसम्भवे इति भावः।

(२) पात्रान्तरमाज्यस्थाली। तस्या लक्षणमुक्तं छन्दोगपरिशिष्टे—
"आज्यस्थाली च कर्तव्या तैजसद्रव्यसम्भवा।
महीमयी वा कर्तव्या सर्वास्वाज्याहुतीषु च" इति॥

(३) सपवित्रां पात्रीमादायेत उत्थाय गार्हपत्यस्य पश्चादुपविशति, अथवा वेद्याः करिष्यमाणाया अन्तर्देशे उपविशतीत्यर्थः।

( अध्वर्युरानीता अपो मन्त्रेण गृहीत्वा पिष्टेषु मिश्रयेत् )

पवित्राभ्यां प्रतिगृह्णाति समाप इति ॥ १३ ॥

ता आनीयमानाः पवित्राभ्यां प्रतिगृह्णाति "समाप" इत्यनेन मन्त्रेण। तथा चानीयन्ते यथा मन्त्रान्ते ग्रहणं भवति। स चायमपामभिधायकत्वात्तत्कार्यापन्ने पयसि दधनि घृते च विपरिणस्यते। उपसर्जन्यानयनं च चरावप्यकार्यलोपात् प्रवर्त्तत एव ॥ १३ ॥

( पिण्डद्वयं समं संपाद्य "इदमग्नेः" इदमग्नीषोमयोः" इत्यालभते )

(१)समं विभज्यासंहरिष्यन्नालभत इदमग्नेरिदमग्नीषोमयोरिति ॥ १४ ॥

समविभागो दृष्टार्थः। "तत्सहावघ्नन्ति तत्सह पिंषन्ति तत्पुनर्नाना करोति" इति दृष्टार्थावगमात्। ततश्चैकस्मिन्न प्रवर्त्तते। केचिदाग्नेयालम्भात् दृष्टार्थाभिनिर्वृत्तेः अग्नीषोमीयालम्भनमदृष्टार्थमिति मन्यमाना विकृतावग्नीषोमीयविकारे एककेऽप्याग्नावैष्णवादौ आलम्भमिच्छन्ति। तत्पुनरयुक्तम्। दृष्टार्थत्वात्तस्य। विभागपूर्वको ह्यालम्भः। एवं ह्युक्तम् "तत्पुनर्नाना करोति" इति। तस्मादेकके ऽनालम्भः। "समं विभज्यालभते" इतीयताऽपि सिद्धे यत् असंहरिष्यन्निति सूत्रयति तद्यस्य यस्य यदा ऽसंहारस्तस्य तस्य तदाऽऽलम्भो यथा स्यादिति। यथा चरूणां फलीकरणान्तं पौष्णस्यावेक्षणान्ते इति ॥ १४ ॥

यथादेवतमन्यत् ॥ १५ ॥

कृतव्याख्यानम् ॥ १५ ॥

( ब्रह्माऽऽज्यमधिश्रयेत )

इषे त्वेत्याज्यमधिश्रयत्यन्यः ॥ १६ ॥

अन्यश्चात्र ब्रह्माऽभिधीयते। पुरोडाशयोर्ह्यध्वर्य्वग्नीधौ व्यापृतौ। ऋत्विक्कर्तृकत्वं च कर्मणः परिक्रयाम्नानादित्युक्तम्। याज-

---

( १ ) द्वौ पिण्डौ कृत्वा पुनर्मिश्रणमकरिष्यन् क्रमेणैतौ पिण्डावालभत इत्यर्थः।

मानं च परिभाषितमेव, "प्रधानः स्वामी फलयोगात्" इत्येवमादि। विरोधाच्च प्राप्ते एत्र ब्रह्मणि यदन्यग्रहणं करोति तदविरोधेऽप्युपसदादौ ब्रह्मैव यथा स्यादित्येवमर्थमिति सम्प्रदायः।

अपरे त्वन्य इति न्यायसूत्रमाहुः। विरोधादेवान्यप्राप्तेः। एवं ह्याह "तद्वा एतदुभयः सह क्रियते" इति प्रकृत्य 'अर्द्धो ह वा एष आत्मनो यज्ञस्य यदाज्यमर्द्धो यदिह हविर्भवति स यश्चासावर्द्धो य उ चायमर्द्धस्ता उभावग्निं गमयाव' इति। एवं चाविरोधेऽध्वर्योरेवाधिश्रयणं स्यात्॥ १६॥

( पत्न्यां रजस्वलायाम् आहवनीयश्रापिण आहवनीये आज्याधिश्रयणम् )

## अपत्नीकस्याहवनीये तच्छ्रापिणः॥ १७॥

अपत्नीक इति नाविद्यमानया पत्न्या। अधिकाराभावात्। तस्माद्विद्यमानाऽपि पत्न्यपत्नीवत् यदा रजस्वला तदैतद्भवति। तथा चाह "अत्येऽहनि यस्य पत्न्यनालम्भुका स्यात्तामपरुध्य यजेत" इति। आहवनीयश्रापिणोऽपत्नीकस्याहवनीये एवाज्याधिश्रयणम्। एवं ह्युक्तमाहवनीयश्रापिणं प्रकृत्य "यस्यो पत्नी न भवत्यग्न एव तस्याहवनीयेऽधिश्रयति" इति। इतरस्य तु गार्हपत्ये एव(१)॥ १७॥

( अध्वर्य्वग्नीध्रौ युगपत् आग्नेयाग्नीषोमीयपुरोडाशौ अधिश्रयेताम् )

## घर्मोऽसीति पुरोडाशौ युगपत्॥ १८॥

---

(१) केचित् अपत्नीको मृतपत्नीक इत्याहुः। तस्याप्येकाकिन एवाधानं श्रूयते आश्वलायनब्राह्मणे। पत्न्यां मृतायामग्निभिर्दग्धायां पुनर्विवाहासम्भवे आत्मार्थमग्न्याधानमाहापस्तम्बो दर्शपौर्णमासाग्रयणार्थं शेषाणि कर्माणि न भवन्तीति। तथा त्रिकाण्डे मण्डनः—

"तस्मान्नैकदेशेन दग्धव्या पूर्वमारिणी। [ नर्यो गार्हपत्यः ]
पत्नी ज्येष्ठतरा वापि यज्ञपार्श्वे निरूपितम्" इति॥

कर्मप्रदीपे कात्यायनः—

"मृतायामपि भार्यायां वैदिकाग्नीन्न हि त्यजेत्।
उपाधिनापि तत् कर्म यावज्जीवं समापयेत्" इति॥

आज्यस्य पुरोडाशयोश्च युगपदधिश्रयणम् । "तद्वा एतदुभयꣳ सह क्रियते" इति श्रुतम् । तत्र चाध्वर्युमुख्यत्वादाग्नेयमधिश्रयति । अग्नीषोमीयमग्नीत् ॥ १८ ॥

( आग्नेयाग्नीषोमीयपुरोडाशयोरध्वर्य्वग्नीद्भ्यां प्रथनम् )

उरुप्रथा इति प्रथयति यावत्कपालमनतिपृथुम् ॥ १९ ॥

यावत्कपालमित्युक्ते ऽतिपृथुत्वस्याभावात् निषेधवैयर्थ्यमनतिपृथुमिति । उच्यते । कपालपरिमाणसिद्धौ यावत्कपालमिति प्रथनपरिमाणोपपत्तिः स्यात् । न तु कपालपरिमाणं सिद्धम् । अतस्तत्परिमाणावधारणायानतिपृथुग्रहणम् । तत्कथम् । श्रुतिसंयोगात् । "तं न सत्रा पृथुं कुर्यात्" इति प्रकृत्य "अश्वशफमात्रं कुर्यादित्युहैक आहुः" इति । अनेकयजमानके च यथार्थं मन्त्रविपरिणामः । चरौ च कार्याभावात्प्रथनाभावः । यश्च येनाधिश्रितः स तस्य प्रथनाभिमर्शने करोति । इतरथा हि तत्कपालसंयोगाच्छोषणे सति प्रथनमनुपपन्नम् ॥ १९ ॥

( तयोरेव अद्भिरभिमर्शनम् )

(१)अग्निष्ट इत्यद्भिरभिमृशति सकृत्त्रिर्वा ॥ २० ॥

चरौ न स्यात्कार्यलोपात् ॥ २० ॥

( पुरोडाशमाज्यं च परितो ज्वलदङ्गारभ्रमणम् )

पर्यग्निकरोत्यन्तरितꣳ रक्षोऽन्तरिता अरातय इति सहाज्यम् ॥ २१ ॥

पुरोडाशाज्यसंयोगात्पर्यग्निकरणस्यौपदेशिकत्वाच्च प्रकृतौ धर्माणां साम्नाय्ये ऽप्रवृत्तिः । एवं च तद्विकारे पशौ पर्यग्निकरणविधानमुपपन्नं भवति । (२)प्राक् पर्यग्निकरणात्पिष्टलेपापनयन-पात्र्यङ्गु-

(१) तं पृथुं कृतं पुरोडाशं सोदकेन हस्तेन सर्वतः स्पृशति । प्रथने क्रियमाणे यत्र यत्र विदीर्णं भवति तदद्भिः सन्दधाति, सकृन्मन्त्रेण द्विस्तूष्णीम् । "पिष्टलेपेनाविक्षारयंस्त्रिः परिमार्ष्टि" इति मानवे । "अद्भिः श्लक्ष्णीकरोत्यनतिक्षारयन्" इत्यापस्तम्बः ।

(२) अन्यथाऽग्निसंयोगात् कालविलम्बाच्च शोषणे सति प्रतिपत्तिकाले क्षालनमतिदुष्करं स्यात् ।

लिप्रक्षालने अर्थात्कर्तव्ये । न हि तयोरुत्पत्तिश्चोदिता । प्रतिपत्ति-मात्रविधानं त्वस्ति(१)। सामर्थ्यादपि च क्रमोऽवसातुं शक्यते ॥२१॥

( पुरोडाशोपरि अग्निं दद्यात् )

(२)देवस्त्वेति श्रपणम् ॥ २२ ॥

ददातीति वाक्यशेषः । सामर्थ्याच्चरोरधस्तात्(३) ॥ २२ ॥

[ शृताशृतज्ञानार्थमालभेत पुरोडाशौ ]

माभेरित्यालभते ॥ २३ ॥

तच्चैतच्छृताशृतसंवित्यर्थम् । "तमभिमृशति शृतं वेदानि" इति श्रूयते । प्रयोजनं धानानामभावोऽभिमर्शनस्य । दर्शनात्पाकसंवित्तेः । मन्त्रो दर्शने एवास्त्विति चेत् । न । आलम्भेऽपि सामर्थ्यपरिप्रापितत्वात् । अतस्तदकार्यापत्तिः । चरौ च स्यादकार्यलोपादालम्भः ॥ २३ ॥

[ शृतौ पुरोडाशौ भस्मनाऽऽच्छादयेत् ]

अतमेरुरिति शृतावभिवासयति भस्मना वेदेनोपवेषेण वा ॥ २४ ॥

अशृतयोः श्रपणप्रदानार्थं शृतग्रहणम् । इतरथा ह्यवाच्यं स्यादिति । भस्मनाऽभिवासयति आच्छादयति । वेदेनोपवेषेण वा करणभूतेन । विरोधाच्चरावप्रवृत्तिरभिवासनस्य । अनेकयजमानके मन्त्रस्य विपरिणामः ॥ २४ ॥

[ पात्र्यङ्गुलिप्रक्षालनजलमाप्त्येभ्यो निनयेत् ]

पात्र्यङ्गुलिप्रक्षालनमाप्त्येभ्यो निनयत्यभितप्य प्रत्यगसँस्यन्दमानं त्रिताय त्वेतिप्रतिमन्त्रम् ॥ २५ ॥

---

(१) "पात्र्यङ्गुलिप्रक्षालनमाप्त्येभ्यो निनयति, पिष्टलेपाञ्जुहोति" इत्याभ्याम् ।

(२) "देवस्त्वेत्युल्मुकेनाभितापयति दर्भैस्त्वचं ग्राहयति" इति मनुः ।

(३) उपलक्षणमिदं धानानामपि ।

आज्यग्रहणं यागदेवताज्ञापनार्थम्। इतरथा हि देवतोद्देशाभावे प्रतिपत्तिमात्रमेव स्यात्। अथ पुनराज्यग्रहणे तदुद्देशेन परित्यागः कार्यः। तथा च नाशदोषादौ द्रव्यमात्रमुत्पादयितव्यमिति याज्ञिकाः।

अपरे तु द्रव्यप्रधानत्वात्तस्य च नाशे दैवरक्ताः किंशुका इति नोत्पत्तिमिच्छन्ति। अभितप्येति पात्रीस्थमेवोल्कया तापयित्वा। प्रत्यगिति प्रत्यग्वचनान्न प्रागुदग्वा। असंस्यन्दमानमिति समुपसंगनिर्देशादसङ्गच्छत्। न स्यन्दनमात्रप्रतिषेधः। त्रितायत्वेत्येभिर्मन्त्रैः प्रतिमन्त्रम्। निनयामीति वाक्यशेषः॥ २५॥

[ अन्वाहार्यमोदनं दक्षिणाग्नावधिश्रयेत् ]

## अन्वाहार्यं दक्षिणाग्नावधिश्रयति ॥ २६ ॥

अन्वाहार्यो दक्षिणार्थ ओदनः। "ततो देवा एतां दर्शपूर्णमासयोर्दक्षिणामकल्पयन्यदन्वाहार्यम्" इति श्रूयते। "दक्षिणाग्नावन्वाहार्यं पचति" इति विधानात्तत्राधिश्रयणम्। स च भोक्तृतृप्तिव्यवच्छिन्नपरिमाणः स्यात्। परिमाणान्तरानभिधानात्। अन्नस्य च भुज्यर्थत्वात्। भुजेश्च तृप्तिप्रवृत्तिसंयोगात्। अनवधृतपरिमाणत्वान्नेति चेत्। स्यादौचित्यात्। उचिता हि पुरुषाणां प्रसृतित्रयेण तृप्तिरिति।

स च लौकिके उदके पच्यते। सामर्थ्यगृहीतत्वात्तस्य। न चेह प्राणीतमुपदिश्यते। परिक्रयार्थत्वाच्चास्य पुरुषार्थरूपता। तस्मान्न प्राणीतोदकसाध्य इति सम्प्रदायः।

अपरे व्याचक्षते। सामर्थ्यपरिगृहीतमपि यदेव सर्वार्थत्वेन प्रकल्पितं तदेव ग्रहीतुं न्याय्यम्। न च सर्वार्थत्वे कश्चिद्विशेष आश्रयितुं शक्यते वेदमध्ये प्रति। प्राणीतं च सर्वार्थमित्युक्तम्। पुरुषार्थरूपत्वेऽपि सति क्रत्वभिनिर्वृत्त्यर्थपुरुषानतिक्रमेण कर्मसम्बन्धो ऽस्त्येवेत्यदोषः। अथ निर्दिष्टकार्यार्थतैव प्रणीतानां नार्थगृहीतार्थता, तद्यथा "हविर्ग्रहण्यामपः कृत्वा" इति, "अप उपस्पृश्य" इति च। तथासति अप्राप्तिः स्यात्पाण्योरवनेजने प्राशित्रहरणप्रक्षालने च। अथ कर्मसम्बद्धपात्रसंस्कारः स इत्युच्यते, तत्सम्बन्धाविशेषादध्वर्युपाण्योरपि संस्कारः शक्यो वक्तुम्। केवलं तु तत्र कृत-

प्रयोजनता पात्रस्य, पाण्योरवनेजनं तु करिष्यमाणप्रयोजनम् । न चैयता विशेषः शक्योऽवसातुम् । तस्मात्पाण्योरवनेजन-पात्रप्रक्षालनयोः प्राणीतमेवोदकम् । सम्प्रदाये तु पात्रप्रक्षालने एव प्राणीतमुदकमिच्छन्ति, न पाण्योरवनेजने । तत्पुनर्विचार्यमाणं नातिसमञ्जसमिव । उभयत्र हि क्रियाक्षिप्तमुदकं न स्वशब्दाभिहितम् । तस्मादुभयत्र प्राणीतमुदकमिति । अन्वाहार्ये तु द्रव्याक्षिप्तमित्यक्रियाक्षेपाद्यदि विशेष उपलभ्यते ततोऽस्तु लौकिकमिति ॥ २६ ॥

अत्र वा व्रतोपायनम् ॥ २७ ॥

तुल्यश्रुतित्वात् तुल्यसूत्रारम्भसामर्थ्यात् ॥ २७ ॥

इति श्रीकर्काचार्यकृतकातीयश्रौतसूत्रभाष्ये
द्वितीयाध्याये पञ्चमी कण्डिका ।

( वेदिखननप्रकारः )

अपरेणाहवनीयं वेदिं खनति त्र्यङ्गुलखातां व्याममात्रीं पश्चात् त्र्यरत्निं प्राचीमपरिमितां वा प्राक्प्रवणामुदक्प्रवणां वा मध्यसङ्गृहीतामग्निमभितोऽंसौ ॥ १ ॥

आहवनीयमपरेणेति कुतः । वाक्यशेषात् "सोऽयं विष्णुर्ग्लानश्छन्दोभिरभितः परिगृहीतोऽग्निः पुरस्तान्नापक्रमणमास" इति । वेदिरिति संस्कारनामधेयम् । तेषु हि सत्सु शब्दप्रयोगादाहवनीयवत् । प्रयोजनं सोमे धर्मप्रवृत्तिरिति । खनतिः करोत्यर्थः । अवश्यमेवात्राख्यातपदप्रयोगेण भवितव्यम् । तत्र किं सामान्यरूपः करोतिः प्रयुज्यतामुत विशेषरूपः खनत्यादिरिति । तत्र विशेषरूपे खनत्यादौ प्रयुज्यमाने सामान्यरूपाख्यातपदप्रयोगमन्तरेणापि कार्यसिद्धेः तत्प्रयोग एव ज्यायानिति खनतीति सूत्रितम् । मानपरिसमूहनादीनामन्यतमस्योच्चारणमस्त्विति चेत्, तेऽपि हि वेद्यर्थाः खनत्यादिवत् । न । अप्रकाशरूपत्वात् । प्रकाशरूपो हि खनतिः वेदिस्वरूपं प्रकाशयति, न तथेतरे मानादयः । तस्मात्खनतिशब्दः

प्रयुक्तः। तथाच वक्ष्यति "अत्र वेदिकरणं यथोक्तम्" इति, खनतिशब्दार्थं करोतिनाऽनुवदति।

खननाधिकारादाह त्र्यङ्गुलखाताम्। त्र्यङ्गुलपरिमाणं खातमस्या इति। व्याममात्रीं पश्चात्, परिमाणतः। "व्याममात्री पश्चात्स्यादित्याहुः" इति वचनात्। त्र्यरत्निं प्राचीम्। अरत्नित्रयपरिमाणा प्राची भवति।

"अपरिमितां वा" इत्ययमपरिमितशब्दो यद्यपि पूर्वप्रमाणापेक्षया बहुतरे रूढितो वर्त्तते तथापि नञ्समास एवात्र ग्रहीतव्यः। किं कारणम्। एवं हि श्रूयते "नात्र मात्राऽस्ति यावतीमेव स्वयं मनसा मन्येत तावतीं कुर्यात्" इति। तेन न परिमिता अपरिमितेति। तथा चाग्नौ "अपरिमितेष्टको वा" इति। तत्राप्यपरिमाणमेव शाब्दम्। "ते ऽपरिमिता एव परिश्रित उपदध्युरपरिमिता यजुष्मतीरपरिमिता लोकंपृणा" इति। कुत एतदितिचेत्। लिङ्गात्। "न वै मे सर्वाणि रूपाण्युपधत्तातिवैव रेचयथ न वाऽभ्यापयथ" इति अनवाप्तिरपरिमाणपक्षे उपपद्यते। इतरथा ह्यतिरेक एव स्यात्। पुनश्चामृतत्वप्राप्तये इष्टकापरिमाणमाह "षष्टिं च त्रीणि च शतानि परिश्रित उपधत्ते" इत्येवमादि। तच्च तदपरिमाणवचने अपरिमितशब्दे उपपद्यते नान्यथा। तेनैतौ द्वावेव यज्ञशास्त्रेऽपरिमितशब्दावपरिमाणवाचिनौ। शेषा रूढिवशेन बहुवाचका इति। यथा "द्वादशदीक्षा अपरिमिता वा", यथा च यूपे "अपरिमितो वा" इत्येवमादि। तथा च परिशिष्टकार आह "अपरिमितं प्रमाणाद् भूय" इति। प्रत्यस्तमितावयवार्थवृत्तितया अपरिमितशब्दः श्रुत्यैव बहुनि वर्त्तते।

अपरिमितपक्षेऽपि च मानं वर्त्तते एव। न ह्यपरिच्छिन्ने देशे खननादि शक्यं कर्तुमिति।

प्राक्प्रवणामुदग्वेति। समो हि दर्शपूर्णमासयोर्देशो विहितः "समे दर्शपूर्णमासाभ्यां यजेत" इति। तत्र वेदेः प्राक्प्रवणतादिनियमो वाचनिकः। "सा वै प्राक्प्रवणा स्यात्" इति प्रकृत्याह "अथोदक्प्रवणा" इति। "मध्ये संह्वारिता" इति वचनान्मध्ये सङ्गृहीताम्। अग्निमभितोंऽसौ, भवतः। तावपि च वेदिशब्दवाच्यावतः खन्येते तावपि। इतरथा "आहवनीयमपरेण वेदिं खनति" इत्यपरत एव खननम्। तथा च

सूत्रकारः "अपोह्य बर्हीँषि निदधात्युत्तरदेशे" इत्यंसयोः स्तरणं दर्शयति ॥ १ ॥

[ वेदिखननस्य प्रकारान्तरम् ]

आमूलोच्छेदनादोषधीनाम् ॥ २ ॥

वेति सामर्थ्याद् द्रष्टव्यम् । न हि त्र्यङ्गुलखातमूलोच्छेदनयोः समुच्चयः सम्भवति । त्र्यङ्गुलस्य ह्यनतिरिक्तमन्यूनं च खातं त्र्यङ्गुलखातमित्युच्यते ।

अस्मिंश्च पक्षे—

ओषधीनां मूलान्युच्छेत्तवै ॥ ३ ॥

इति प्रैषः । तच्चाग्नीदाहेति वक्ष्यामः ।

केचित्पूर्वसूत्रमाकारान्तमेव(१)कुर्वन्ति । "सुपां सुलुक्पूर्वसवर्णाच्छेयाडाड्यायाजाल" इति औकारस्याकार आदेशः । छन्दोवद्भावेन सूत्राणाम् । तत्रोत्तरं सूत्रं, वा मूलोच्छेदनादोषधीनामिति । स्वशब्दाभिहित एव विकल्पः । न हि तदानीं सान्धिकोऽयमावादेशविकारः । स चायं प्रैषस्तादर्थ्यात्खननकाल एव दातव्यः ।

केचिदाहुः—मूलोच्छेदनान्तता सारस्वतादिविषया । न हि दर्शपूर्णमासयोर्वेद्यां मूलानि सन्ति, कुतस्तदुच्छेदनमिति ।

अपरे तु मूलोच्छेदनस्य खननपरिमाणविषयत्वादिहापि मन्यन्ते । एवं ह्याह "तस्मात् त्र्यङ्गुला वेदिः स्यात्" इति । पुनश्च "तदु तथा न कुर्यादोषधीनां वै स मूलान्युदाम्लोचत्तस्मादोषधीनामेव मूलान्युच्छेत्तवै ब्रूयात्" इति । ओषधिमूलोचितखननपरिमाणं खेयमित्येतदुक्तं भवति । ततश्च सर्वत्र सम्भवात् सर्वविषयता । एवं च प्रकरणमनुगृहीतं भवति ॥ ३ ॥

[ पशुकामस्य पुरीषान्तराहरणम् ]

आहार्यपुरीषां पशुकामस्य ॥ ४ ॥

वेदिपुरीषमपनीयान्यत्पुरीषमाहर्त्तव्यम् । तच्चैतदनुमार्जनात्पू-

(१) "अभितोँऽसावामूलोच्छेदनादोषधीनाम्" इति संहितापाठे अभितोँऽसा, इति आकारान्तं पदं छित्त्वा वा मूलादोषधीनाम् इति उत्तरसूत्रं पठन्ति ।

र्थं सामर्थ्यात्कर्त्तव्यम्। पुरुषार्थत्वाच्च विकृतावप्रवृत्तिः ॥ ४ ॥

[ अग्नीदग्निं परिसमुह्य वेदेः पूर्वविवृतीये उत्करं कुर्यात् ]

वेदिं परिसमुह्य त्रिवृतीयेऽग्नीदुत्तरत उत्करं करोति॥ ५॥

परिसमूहनोत्करकरणयोरग्नीधः कर्तृत्वं व्यपदेशसामर्थ्यात्। वितृतीयं च सामर्थ्यात् वेदेर्ग्राह्यम्। तच्च पूर्ववितृतीयम्। परिशिष्टकारवचनात् "विपर्यस्योत्तरांस उत्कर" इति। आचार्याभिप्रायाच्च "चात्वालोत्करावन्तरेण सञ्चर" इति। सन्निहितो हि चात्वालस्योत्करः पूर्ववितृतीये भवति ॥ ५ ॥

[वामस्थितं सतृणं स्फ्यं दक्षिणेनालभ्य इन्द्रस्येत्यादि अग्नीज्जपेत्]

देवस्यत्वेति स्फ्यमादाय सतृणꣳ सव्ये कृत्वा दक्षिणेनालभ्य जपतीन्द्रस्य बाहुरिति ॥ ६ ॥

आदानं सतृणस्य स्फ्यस्यैव तृणस्य सहत्वमात्रम्। सतृणमित्युपदिष्टत्वात्। प्रयोजनमन्तरायं तूष्णीमेव तृणादानम्।

"आददेऽध्वरकृतं देवेभ्य" इति अङ्गप्रधानदेवताविषयो देवशब्दः। तदर्थं हि वज्रस्यादानम्। वेदिनिष्पत्त्यर्थत्वात्। वेदेश्चाङ्गप्रधानदेवतासम्बन्धो हविर्धारणार्थतया शक्यते तादर्थ्यं वदितुम्। तत्तश्च पितृयज्ञे देवपितृभ्य इति विपरिणामः।

दक्षिणेनालभ्येत्यवाच्यं, सामर्थ्यसिद्धत्वात्। न हि सव्ये कृतस्यान्यथाऽऽलम्भः सम्भवति। न। सव्यपाणिस्थस्यैवालम्भो यथा स्यादिति। अक्रियमाणे हि दक्षिणेनालभ्येत्येतस्मिन् मुक्त्वाऽऽप्यालम्भः प्राप्नोति, तन्माभूदिति दक्षिणग्रहणम्।

तच्चैतद्वज्रादानं जपश्च स्तम्बयजुर्हरणार्थत्वात्तदभावे न भवति। तादर्थ्यं च तत्सन्निधावाम्नानात्। तत्र चार्थस्य विद्यमानत्वात्। सतृणमिति चोपदेशात्। तृणस्य हि निःसन्दिग्धं स्तम्बयजुर्हरणार्थत्वम्। स्फ्यस्यापि तद्वत्तदर्थतैव ॥ ६ ॥

[ स्तम्बयजुर्हरणात्प्राक् वज्रेण पृथिवीमात्मानं च न स्पृशेत् ]

नोपस्पृशेत्पृथिव्यात्मानौ तेन स्तम्बयजुर्हरिष्यन् ॥ ७ ॥

प्राक् स्तम्बयजुर्हरणाद्वज्रेण पृथिव्यात्मानौ नोपसंस्प्रष्टव्यौ।

एवं हि श्रूयते यज्ञं प्रकृत्य "तेन स॒ꣳशितेन नात्मानमुपस्पृशति न पृथिवीम्" इति।

केचित्त्वेतदनुपस्पर्शनमाकर्मपरिसमाप्तेरिच्छन्ति। अविशेषाम्नानसामर्थ्यात्। स्तम्बयजुर्हरिष्यन्निति चोत्तरसूत्रे ऽवयवं योजयन्ति। स्तम्बयजुर्हरिष्यन्वेद्यां तृणं निदधातीत्येवम्। तत्पुनर्नोपपद्यते। न ह्युत्तरसूत्रेण सम्बध्यमानः स्तम्बयजुर्हरिष्यन्नित्यवयवोऽर्थवान्भवति। स्तम्बयजुर्हरणं हि प्रहरणादिपुरीषनिवपनान्तम्। तत्र पाठादेव वेद्यां तृणं निदधातीयताऽपि सूत्रेणार्थः सिध्यति, नार्थोऽनेनावयवेन। पूर्वसूत्रेचार्थवत्त्वं तस्यावयवस्य। "नोपस्पृशेत्पृथिव्यात्मानौ तेन", 'कियन्तं कालम्' इत्यपेक्षिते स्तम्बयजुर्हरिष्यन्निति कालसमर्पणेनार्थवत्ताऽवयवस्य। अपि च वज्रादानस्य स्तम्बयजुर्हरणार्थतेत्युक्तम्। जपस्यापि तत्संस्कारेण तादर्थ्यमेव। तत्र वाक्यशेषः "स॑ꣳश्यत्येवैनमेतद्यजुर्जपति" इति। स॑ꣳश्यति–शो तनूकरणे तीक्ष्णीकरोतीत्येतदुक्तं भवति। पुनश्चाह "तेन स॒ꣳशितेन नात्मानमुपस्पृशति न पृथिवीम्" इति। तीक्ष्णीकरणस्य स्तम्बयजुर्हरणार्थत्वादनुपस्पर्शनमपि तावदेवेति गम्यते। तस्माद्यथोपवर्णितमेवास्माभिः सूत्रम् "नोपस्पृशेत्पृथिव्यात्मानौ तेन स्तम्बयजुर्हरिष्यन्" इति ॥ ७ ॥

( वेद्यामुदगग्रं तृणं निदध्यात् )

वेद्यां तृणं निदधात्युदक्पृथिव्यै वर्मासीति ॥ ८ ॥

भाविन्या वृत्त्या वेदिः। न ह्यद्यापि संस्क्रियते भूप्रदेशः। तृणं प्रकृतत्वाद्यदात्तं तन्निधेयम्। उदगिति च प्राक्त्वनिवृत्त्यर्थम्। स्मृत्या हि प्रागग्रतोदगग्रता वा प्राप्नोति। तन्निवृत्तौ च श्रौतीयमुदगग्रतेति गम्यते। ततश्च तदपचारे श्रौतमेव प्रायश्चित्तं भवति ॥ ८ ॥

( निहिते तृणे प्रहरेत् वज्रेण)

पृथिवि देवयजनीति तृणेऽन्तर्हिते प्रहरति ॥ ९ ॥

तच्च वज्रेण, तदर्थत्वात्तदादानस्य। देवयजनीति चास्य स्थाने पितृयज्ञे देवपितृयजनीति प्रयोगः। अङ्गप्रधानार्थत्वाद्वेदेरित्युक्तम्। पृथिविशब्देन च वेदिरत्राभिधीयते। तत्संस्काराभिप्रवृ-

त्तेः । प्रहरणं च वेद्यां न तृणे । अन्तर्हिते इति सूत्रितत्वात् । इतरथा हि तृणे प्रहरतीत्येवमवक्ष्यत् । अथ पुनरन्तर्द्धानवचनात्तादर्थ्यमेव तृणस्य, न प्रहरणाधिकरणता । तृणे एव प्रहरणमिति सम्प्रदायः ॥ ९ ॥

( वज्रोद्धृतपुरीषादानम् )

व्रजं गच्छेति पुरीषमादत्ते ॥ १० ॥

वज्रेणोद्धृतं यत्पुरीषं तद् व्रजं गच्छेत्यनेन मन्त्रेणादत्ते ॥ १० ॥

( वेदिं प्रेक्ष्य आत्तं पुरीषमुत्करे प्रक्षिपेत् )

वर्षतु त इति वेदिं प्रेक्षते ॥ ११ ॥

बधानेत्युत्करे करोति ॥ १२ ॥

"प्रहृत्य निदधाति बधान देवसवितः" इति हि श्रूयते ॥ १२ ॥

प्रहरणशेषो वाऽविशेषोपदेशात् ॥ १३ ॥

प्रह्रियते ऽनेनेति प्रहरणमन्त्रः प्रहरणशब्देनाभिधीयते । तस्य शेष एकदेशः प्रहरणशेषः । कुत एतत् । अविशेषोपदेशात् । प्रहरणं हि प्रकृत्य अविशेषेणोपदिश्यते "स प्रहरति पृथिविदेवयजन्योषध्यास्ते मूलं मा हिꣳसिषमित्येवमादि तमतो मा मौक्" इति यावत् ।

यद्येवं खण्डशोऽध्यवसानं कथम् । मन्त्रलिङ्गादिति केचित् ।

एवं चेत्प्रहरणशेषतैव प्राप्नोति । न हि विधायका मन्त्रा इति । लिङ्गमपि च कयाचिद् वृत्त्या प्रहरणशेषभावमुपयास्यति ।

श्रुतितः खण्डशो विधानमित्यपरे । तथा च सति श्रुतिद्वयसामर्थ्याद्विकल्पो भवति । एवं च सति प्रहरणशेषो वाऽविशेषोपदेशाद्, प्रतिकर्म वा खण्डशः प्रयोक्तव्यो विशेषोपदेशादिति ।

एवमपि सति अन्येऽन्यथा वर्णयन्ति । माध्यंदिनपाठे ऽविशेषोपदेशः । शाखान्तरे तु विशेषेणोपदिश्यते । तेनाविशेषस्य विशेषे प्रवृत्तिरविरुद्धा । न तु विशेषस्याविशेषे इति । तेन विशेषोपदेशाद्व्यवश एव प्रयोग इत्यवधारणा प्राप्नोति । सम्प्रदाये तु विकल्पमेवेच्छन्ति । प्रहरणशेषपक्षश्चेत्तूष्णीं पुरीषादानवेदिप्रेक्षणपुरीषाहरणानि ॥ १३ ॥

( प्रहरणादि उत्करपुरीषप्रक्षेपान्तं द्वितीयवारं कर्तव्यम् )

अपाररुमिति द्वितीयं प्रहरणादि ॥ १४ ॥

अपाररुमित्यनेन मन्त्रेण प्रहरणादि द्वितीयं कर्मोत्करकरणान्तं प्रतिपत्तव्यम् । "अररुर्ह वै नामासुररक्षसमास" इति रक्षोऽभिधायकत्वाद्राक्षसो मन्त्रः । ततश्चोदकोपस्पर्शनमत्र भवति । देवपितृयजनाद्ध्यालमिति च प्रयोगः पितृयज्ञे । देवयजनं हि वेदिरत्राभिप्रेता । असौ च पितृयज्ञे देवपितृयजनं भवति ॥ १४ ॥

( अग्नीत् उत्करं हस्तद्वयेनाभिन्यस्येत् )

अभिन्यस्यत्यग्नीदुत्करमररो दिवमिति ॥ १५ ॥

अभिन्यासश्च हस्तद्वयेन भवति नैकेन पाणिना । कुत एतत् । लिङ्गात् । "अभिनिहित एव सव्येन पाणिना भवत्यथ दक्षिणेन जुहूं प्रतिगृह्णाति" इति "प्रस्तरं स्तृत्वा तमभिनिदधाति" इति प्रकृत्यैवमामनन्ति । "अभिनिहित एव सव्येन पाणिना" इति पूर्वाभिनिहिते ह्येवकारकरणं समर्थं भवति । इहापि चाभिनिधानमेव चोदितं "तमग्नीदभिनिदधाति" इति ॥ १५ ॥

( प्रहरणादि पूर्वोक्तं तृतीयवारं कार्यम् )

द्रप्सस्त इति तृतीयम् ॥ १६ ॥

प्रहरणादीति वर्त्तते ॥ १६ ॥

( सतृणं पुरीषं चतुर्थवारं तूष्णीमुत्करे प्रक्षिपेत् )

तूष्णीं चतुर्थं सतृणम् ॥ १७ ॥

सह तृणेन पुरीषमुत्करे करोति ॥ १७ ॥

( वेदेर्दक्षिणतः पश्चादुत्तरतश्चाध्वर्युः स्फ्येन परिग्रहं कुर्यात् )

पूर्वं परिग्रहं परिगृह्णाति दक्षिणतः पश्चादुत्तरतश्च स्फ्येन गायत्रेणेति प्रतिमन्त्रम् ॥ १८ ॥

पूर्वशब्दः सम्बन्धिशब्दः, पूर्वं नद्याः कूलमिति यथा । परिग्रहणं परिग्रहः । यद्येवं परिगृह्णातीति नोपपद्यते । तस्मात्परिग्रहं क-

रोतीत्येतदुक्तं भवति। दक्षिणतः पश्चादुत्तरश्च स्फ्येन करणभूतेन- गायत्रेणेत्येवमादिभिर्मन्त्रैः प्रतिमन्त्रम्॥ १८॥

(अध्वर्युः वेद्यां त्रिरुल्लिख्य "हर त्रिः" इति प्रैषमन्त्रं पठेत्)

## वेद्यां त्रिरुल्लिख्याह हर त्रिरिति॥ १९॥

अयं च मन्त्रः किमियत्तापेक्षया उत त्रित्वविवक्षया। किञ्चातः। यदीयत्तापेक्षया, वरुणप्रघासेषु "हर षट्कृत्व" इति प्रयोगो वेदिद्वि- त्वात्। प्रतिवेदि हि तिस्रस्तिस्रो लेखाः। अथ त्रित्वविवक्षया, तत- स्त्रिशब्दोऽभ्यसितव्यः। न ह्यनभ्यस्ते प्रतिवेदि त्रित्वविशिष्टं हर- णमभिहितं भवति। तत्र केचिदाहुरियत्ताविवक्षा। प्रकृतौ हि लेखा- त्रित्वात् त्रित्वसंख्याविशिष्टं हरणमभिहितम्। विकृतावपि षड् लेखा इति षट्संख्याविशिष्टं हरणमभिधेयमिति। अन्ये त्वाहुस्त्रिशब्दस्य श्रु- त्यैव त्रित्वरूपविषयता। लक्षणयेयत्तापरता स्यात्। श्रुतिलक्षणा- विषये च श्रुतिर्ज्यायसीति साभ्यासस्त्रिशब्दः प्रयोक्तव्यः॥ १९॥

( यथोल्लिखिताभ्यो लेखाभ्य उद्धृत्याग्नील्लेखाः संमृशेत्)

## (१) हृत्वाऽग्नील्लेखाः संमृशति॥ २०॥

हरणसंमर्शने अग्नीत्कर्तृके। क्त्वाशब्दसामर्थ्यात्॥ २०॥

## पितृयज्ञाग्निचित्ययोर्वा तत्र दर्शनात्॥ २१॥

ते चैते पितृयज्ञाग्निचित्ययोः प्रतिपत्तव्ये। कुत एतत्। तत्र दर्शनात्। तत्र ह्येते दृश्येते। पितृयज्ञे तावत् "लिखति हरति यज्ञार्थं भवति" इति। अग्निचित्येऽपि च "लिखित्वाऽऽह हर त्रिरिति हरति त्रिराग्नीध्र" इति। दर्शनमत्र विधानमभिप्रेतम्।

वा इह भवति। कुत एतत्। तत्र दर्शनादेव। तत्र हि दर्शनं न विधानम्, अन्यपरत्वाद्वचनस्य। किंपरतेति चेत्। पितृयज्ञे तावत् "लि- खति हरति" इति प्रकृत्य "स यज्ञोपवीती भूत्वाऽऽज्यानि गृह्णाति" इति। पित्र्यत्वादत्र स्मृत्युदितं प्राचीनावीतमुचितमतो यज्ञोपवीतविधा- नपरं वचनम्। अग्निचित्येऽपि च प्रायणीयहविष्कृदन्ते सौमिक्या

---

(१) एवं प्रेषितोऽग्नीत्ताभ्यो लेखाभ्यः पांसून् त्रिर्हृत्वा उत्करे प्रक्षिप्य लेखाः सम्मर्शनेन समीकरोतीत्यर्थः।

वेदेः स्फ्यादिसम्मर्शनान्तस्यावसरविधानार्थं वचनम् । वेदिशब्दस्य संस्कारनिमित्तत्वात् तद्धर्मपरिप्राप्तौ सत्यामवसरो विधीयते । एवं हि तत्र वचनं प्रायणीयं प्रकृत्य, "तस्य हविष्कृता वाचं विसृजते, वाचं विसृज्य स्तम्बयजुर्हरति, स्तम्बयजुर्हृत्वा पूर्वेण परिग्रहेण परिगृह्य लिखित्वाऽऽह हर त्रिरिति, हरति त्रिराग्नीध्र" इति । अतो विकृत्यनुप्रवृत्तिदर्शनात्प्रकृतावुपदेशोऽनुमीयते । किंच स्तम्बयजुर्हरणादिभिः सहोच्चारणात् । तस्मादिह भवति लेखाकरणादि ॥ २१ ॥

( प्रकारद्वयेनोपदिष्टं वेदिखननमधुना कर्तव्यम् )

(१)अत्र वेदिकरणं यथोक्तम् ॥ २२ ॥

खननमिहावसरे प्रतिपत्तव्यम् । आमूलोच्छेदनात्, त्र्यङ्गुलं वा ॥ २२ ॥

( पूर्ववत् वेदिपरिग्रहं पुनः कुर्यात् )

(२)उत्तरं परिग्रहं परिगृह्णाति सुक्ष्मास्योनोर्जस्वतीति प्रतिमन्त्रं पूर्ववत् ॥ २३ ॥

प्रतिमन्त्रमितीयताऽपि सिद्धे यत्प्रतीकोच्चारणं करोति, तद्वाक्यावसानप्रज्ञप्तये । इतरथा हि "सुक्ष्मा चासि शिवा च" इत्यत्रापि पर्यवसानं स्यात् । अतः प्रतीकोच्चारणम् । पूर्ववदिति स्फ्येन दक्षिणतः पश्चादुत्तरतश्चेत्येवमर्थम् ॥ २३ ॥

( वज्रेण वेदिं समीकुर्यात् )

पुरा क्रूरस्येत्यनुमार्ष्टि(३) ॥ २४ ॥

अनुमार्जनं समीकरणमत्राभिप्रेतम् । पुरीषाहरणपक्षे चास्मिन्न-

---

( १ ) याज्ञिकदेवमते 'वेदिकरणं यथोक्तम्' इत्येव सूत्ररूपम्, 'अत्र' पदं त्वनुवर्तत इति । अत्र मूलं मृग्यम् ।

( २ ) अत्रापि 'ब्रह्मन्नुत्तरं परिग्रहं परिग्रहीष्यामि' इति ब्रह्माणमामन्त्र्य 'ओ३म् परिगृहाण' इति तेनाऽनुज्ञातः परिगृह्णाति ।

(३)'तां प्रतिमार्ष्टि' इति श्रुतेः । प्रतिशब्दः पूर्वक्रियाविनिमयद्योतकः । 'पूर्वं खननेन विषमां कृताम् इदानीं समीकरोति' इति श्रुतेरर्थः ।

वसरे वेदिपुरीषमपनीय अन्यदानीय अनुमार्जनं कर्तव्यम् । साम-र्थ्यात् । यच्चोक्तं 'प्राक्प्रवणामुदक्प्रवणां' इति, तदपि अस्मिन्नवसरे कार्यम् । करणान्तरानुपदेशाच्च; वज्रेणैवानुमार्जनम् । प्रकृत-त्वात् ॥ २४ ॥

( वेदेरुपरि प्रोक्षणीर्धारयेत् )

अध्यधिवेदि प्रोक्षणीर्धारयति ॥ २५ ॥

अध्यधिशब्दः सामीप्ये उपरिभावे च । वेदिमिति द्वितीयोप-पदविभक्तिः । प्रोक्षणीशब्दो यौगिकोऽपि प्रोक्षणीविशेषविषयः । विशिष्टशब्दोपादानसामर्थ्यात् ॥ २५ ॥

( धार्यमाणासु प्रोक्षणीषु अग्नीत् वज्रमुद्यच्छन् प्रोक्षणीरासाद-येत्यादीन्सर्वान् प्रैषान् युगपत्पठेत् )

अन्योऽथ स्फ्यमुद्यम्याह प्रोक्षणीरासादयेध्मं बर्हिरुप-सादय स्रुचः संमृड्ढि पत्नीꣳसन्नह्याज्येनो-देहीति यदीच्छेत ॥ २६ ॥

अन्यशब्देनाग्नीदभिधीयते इत्युक्तम् । अथशब्दप्रयोगोऽनर्थकः, पाठानुपूर्व्यादपि तत्प्राप्तेः । उच्यते । प्रोक्षणीधारणस्य वज्रोद्यमन-स्य चैककालता यथा स्यादिति । आनन्तर्यार्थत्वादथशब्दस्य नैककालार्थतेति चेत् । स्यात्पाठादपि तत्प्राप्तेः । व्यर्थोऽथशब्दप्रयो-गो माभूदिति एककालार्थता कल्प्यते । एवं ह्याह "स वा उपर्यु-पर्येव प्रोक्षणीषु धार्यमाणास्वथ स्फ्यमुद्यच्छति" इति । ननु च सप्त-म्याऽप्ययमर्थो लभ्यते । 'अध्यधिवेदि प्रोक्षणीर्धारयत्यध्वर्युरन्यः स्फ्यमुद्यम्याह' इति सिद्धत्यैवैककालता । एवं चेदन्यार्थोऽयमथश-ब्दः । कोऽन्योऽर्थः । प्रोक्षण्यासादनादयो बहवः प्रैषाः । तत्र च न्या-यतः प्रैषस्यमनन्तरमेव तदर्थानुष्ठानं प्राप्नोति, तन्माभूदिति अथ-शब्दप्रयोगः । सति ह्यथशब्दे धार्यमाणासु प्रोक्षणीषु सर्वे प्रैषाः प्राप्नुवन्ति नान्यथा ।

इध्मबर्हिःशब्दौ वरुणप्रघासेषु न विपरिणम्येते । यत इन्धना-दिध्मः । एवं चैकस्मिन्नपि काष्ठे प्रयोग उपलभ्यते "इध्मस्य वा

शकलमपच्छिद्य' इति । बर्हिःशब्दे तु जात्यपेक्षयैकवचनम् । दृश्यते चैकस्मिन्नपि तृणे बर्हिःशब्दप्रयोगः "बर्हिरेवास्मा एतत् स्तृणात्यस्कन्नं हविरसत्" इति । इह समुदाये एकवचनान्तो जात्यपेक्षः । ततश्चाविपरिणामः, तृणसमुदायान्तरेऽपि सैव जातिरिति ।

स्रुक्शब्दे बहुवचनस्य समवायाद् गृहमेधीयोपसदादौ यथार्थं विपरिणामः ।

पत्नीशब्दस्य त्वनेकपत्नीकेऽप्यनूहः, एकवचनान्तस्य समाम्नानात् । आज्येनोदेहीति आज्येन गृहीतेनोद्गच्छेत्येतदुक्तं भवति । प्रैषार्थकर्तृगतमपि वचनं समवायाद्यथार्थं विपरिणम्यते । यथा वरुणप्रघासेषु "प्रोक्षणीरासादयतम्" इत्येवमादि । यदीच्छेत्ततः प्रैषो भवति । "स यदि कामयेत ब्रूयादेतद्यद्यु कामयेतापि नाद्रियेत" इति ॥ २६ ॥

प्रैषप्रैषार्थयोरध्वर्युकर्तृकत्वे विरोधादन्यः प्रैषेऽन्यश्च प्रैषार्थे इति प्राप्त इदमाह—

( प्रैषार्थकर्तृत्वमग्नीध इति पूर्वपक्षः )

यथाप्रेषितमन्यः पराधिकारात् ॥ २७ ॥

यथाप्रेषितमन्यः करोति । प्रैषवचनसामर्थ्यादेवान्यस्मिन्प्राप्तेऽन्यशब्दोऽग्नीद्विषयः । यथाऽन्यत्र "आहन्त्यन्य" इति । अन्यः करोत्यग्नीत्करोतीति यावत् । कुत एतत् । पराधिकारात् । सामर्थ्यादेव च परप्राप्तौ परशब्दो जघन्यविषयः । परं हि जघन्यं, निकृष्टमधिकृत्य प्रैषः प्रवर्तत इति । अपि च निकृष्टेनोत्कृष्टस्य प्रेषणं विरुध्यते । न ह्येवमाचरन्ति । यदि चाध्वर्युः प्रेषयिताऽग्नीच्च प्रैषार्थं करोति ततोऽध्वर्युणा किञ्चित्कृतं किञ्चित्कारितं च भवति । तथा च सति समाख्याऽनुगृह्यते । प्रैषार्थस्य पुनरध्वर्युकर्तृकत्वे कृतमेव, न कारितं स्यात् । तत्र नातीव समाख्यानुग्रहः स्यात् । तस्मादध्वर्युः प्रैषेऽग्नीच्च प्रैषार्थे इति ॥ २७ ॥

एवं प्राप्त उच्यते—

( प्रैषार्थकर्तृत्वमध्वर्योरन्तरङ्गत्वादिति सिद्धान्तः )

स्वयं वा ऽविरोधात् ॥ २८ ॥

स्वयं वा अध्वर्युः प्रैषार्थं करोति। सामर्थ्यादग्नीत्प्रेषयति। कुत एतत्। प्रैषार्थस्य प्राधान्यात्। कुत एतदिति चेत्। प्रैषस्य तदर्थत्वात्। अन्तरङ्गं प्रैषार्थो, बहिरङ्गं प्रैषः। प्रैषार्थेन व्यवहितत्वात्। ततश्च यदन्तरङ्गं प्रधानं च तदध्वर्युः करोति। बहिरङ्गं गुणभूतं चाग्नीदिति न्याय्यम्। ननु च विरुध्यते एतदित्युक्तम्। न हि निकृष्ट उत्कृष्टं प्रेषयितुमलमिति। अत आह। अविरोधात्। स्यादयं विरोधो, यद्ययं प्रैषः स्यात्। अध्येषणा त्वेषा। अग्नीदध्वर्युमधीच्छति यथैतच्चैतच्च कुर्यादिति। प्रेषणाध्येषणयोः को विशेष इति चेत्। निकृष्टविषयं प्रेषणम्, उत्कृष्टविषयमध्येषणमिति। यथा लोके माणवकः प्रेष्यते, काष्ठान्याहरेति। स्वामिनं च प्रत्यध्येषणा, स्नायतां भुज्यतामिति। वेदेऽपि च "एभिरग्ने सरथं याह्यर्वाङ्नानारथं वा विभवो ह्यश्वा" इति अग्नीधाऽग्निरधीष्यते। ततश्च न विरोधः॥२८॥

किञ्च—

संप्रैषावचनाच्च ॥ २९ ॥

न च सम्प्रैषवचनमस्ति। यथाऽन्यत्र "अग्नीदग्नीन्विहर" इति। अथवा सम्प्रैषावचनादिति नैतत्सम्प्रैषवचनं किं तर्ह्यध्येषणमेतदिति। अथ यदुक्तमध्वर्योः प्रैषे सति किञ्चित् कृतम् अध्वर्योः किञ्चित्कारितं, तथा सति समाख्यानुग्रह इति। उच्यते। एवं हि प्रैषदानक्रियामेव प्रति साक्षादध्वर्योः कर्तृत्वं, न प्रैषार्थे। साक्षात्कर्त्रन्तरस्य विद्यमानत्वात्। ननु चोक्तं स्वतन्त्रः कर्तेति प्रकम्य तत्प्रयोजको हेतुश्च कर्ता चेति प्रयोजकस्यापि कर्तृत्वम्। नैतदेवम्। अन्यकर्तृकत्वात्प्रैषार्थस्येत्युक्तम्। कथं तर्हि प्रयोजकस्य कर्तृत्वम्। नैव साक्षात्कर्तृत्वम्। प्रैषे व्यापारात् क्रियायां चान्यस्य दृष्टत्वात्। तेन कर्तृत्वनिबन्धनकार्यार्थं कर्तृत्वमतिदिश्यते। आह च—

प्रेषणे यदि कर्तृत्वं तदर्थे नोपपद्यते।
तत्र चान्यस्य दृष्टत्वात् कर्तृत्वमुपचर्यते॥

कर्तृनिर्देशकार्ये च कर्तृकरणयोस्तृतीयेत्येवमादि। यथा अपिति सार्वधातुके ङित्वातिदेशो ङिन्निबन्धनकार्यार्थः। न च तस्य साक्षात् ङित्वं ङकारस्येतोऽभावात्। एवमिहाप्यकर्तरि कर्तृत्वातिदेशः। तेन समाख्यानुग्रहो नातीवोपपद्यते इति।

प्रयोजकस्य कर्तृत्वं स्याच्चेत्किमातिदिश्यते ।
अथातिदेशः कार्यार्थस्तदेव स्यात्प्रयोजनम् ॥

एवं च सति नातीव समाख्यानुग्रह उपपद्यते । तस्मादध्वर्युः प्रैषार्थे अग्नीध्र प्रैषे इति । तथा च लिङ्गम् प्रैषवचनं हि प्रकृत्याम्नायते "स यदि कामयेत ब्रूयादेतद्यद्यु कामयेतापि नाद्रियेत स्वयमु ह्येवैतद् वेदेद्‌मतः कार्य" इति अध्वर्युं प्रैषार्थस्य कर्तारं दर्शयति। सुचकारानुप्रवृत्तेश्चायमेवार्थोऽवसीयते । "हर त्रिः" इति प्रैषवचने हि सति "हुत्वाऽग्नील्लेखाः सम्मृशति" इत्याह । तच्चैवमुपपद्यते, यथाऽस्माभिर्न्यायोऽभिहितः । यदा चाध्वर्युः प्रैषदानेऽधिक्रियते तत्राग्नीध्रः प्रैषार्थः स्यात् । तथा च सति "हुत्वाऽग्नील्लेखाः संमृशति" इत्यवाच्यं स्यात् । आह च—

प्रैषणे यदि कर्तृत्वं तदर्थे नोपपद्यते ।
तत्र चान्यस्य दृष्टत्वात्कर्तृत्वमुपचर्यते ॥
प्रयोजकस्य कर्तृत्वं ननु किं प्रत्यसंशयम् ।
उक्तेरपि च कर्मत्वं उच्यमानतयैव हि ॥
तस्या अपि च कर्तृत्वमुच्यमानप्रबोधनात् ।
उच्यमानस्य कर्मत्वं कर्तृत्वं चार्थसाधनात् ॥
एवं ह्यनेककर्तृत्वकर्मत्वव्यवधानतः ।
प्रयोजकस्य कर्तृत्वमुच्यमानं न शोभते ॥
प्रयोजकोक्तिस्तस्यैव व्यापारः स्फुट एव हि ।
न तेन व्यवधानं तु पाक एधोदकादिवत् ॥
यद्यर्थः सम्भवत्येव हेतुवाक्यं विनापि हि ।
तेन पूर्वापरीभावो हेतुवाक्यस्य नेष्यते ॥
अङित्वेऽपि हि ङित्वस्य यथादेशः कृतोऽपिति ।
प्रयोजकस्य कर्तृत्वमेवमेवातिदिश्यते ॥
ङिन्निबन्धनकार्यार्थं ङित्वं ह्यङिति भाष्यते ।
कर्तृकार्यातिदेशार्थमकर्तृत्वमुच्यते ॥
गुणवृद्धिनिषेधार्थं ङित्वं ह्यङिति कथ्यते ।
अकर्तर्यपि कर्तृत्वं तृतीयाद्यर्थमुच्यते ॥
औपचारिककर्तृत्वं न सर्वत्राभ्युपेयते ।
गोरालम्भविधाने हि वाहीको नैव गृह्यते ॥

कर्तृशब्दस्य वाच्यश्चेत्प्रयोज्यो हेतुरेव च ।
एवमप्येकशब्दस्य प्राप्ताऽनेकार्थवाचिता ॥
सत्यां गतौ च सा नेष्टा गत्यभावेऽक्षशब्दवत् ।
सादृश्यादिविमुक्तेऽर्थे युज्यतेऽनेकवाचिता ॥
लोकेऽपि कारयन्नेव कर्त्तेति व्यपदिश्यते ।
कुर्वाणमेव कर्त्तारमाहुर्नैव प्रयोजकम् ॥
कर्तृशब्दः प्रयोज्ये हि कर्तृत्वादेव वर्त्तते ।
प्रयोजके च सम्बन्धादकर्त्तर्युपचर्यते ॥
शब्दस्यार्थेन सम्बन्धो वाच्यवाचकयोर्द्वयोः ।
अपि शक्तौ प्रकल्प्येते प्रत्ययो नान्यथा भवेत् ॥
तेन यत्रार्थसादृश्यं सम्बन्धो वा कश्चिद्भवेत् ।
एवं प्रयोजकेऽध्वर्यौ कर्तृत्वानुपपत्तितः ।
प्रैषार्थस्यान्यकर्तृत्वात्समाख्यानुग्रहः कथम् ॥
प्रैषप्रैषार्थयोर्यैन कर्त्रैकत्वं विरुध्यते ।
अतः कर्त्रन्तरापत्तिः सामर्थ्यादुपजायते ॥
प्रैषार्थस्यान्तरङ्गत्वात्प्रधानत्वाच्च कर्तृताम् ।
अध्वर्योरध्यवस्यामः कातीयवचनाद् वयम् ॥
प्रैषस्य बहिरङ्गत्वाद् गुणत्वेनैव युज्यते ।
अग्नीध एव कर्तृत्वं विपरीतमतोऽन्यथा ॥
लोकस्य भ्रान्तिनाशाय महान्तं यत्नमास्थितैः ।
कृतेयं न्यायमास्थाय हेतुकर्तृनिराक्रिया ॥ २९ ॥

( वेद्यां बर्हिस्तरणात्प्राग् वेदिं न स्पृशेत् )

## प्राक्स्तरणाद्वेदिं नावमृशेत् ॥ ३० ॥

वेदिं प्रकृत्य ह्येवमामनन्ति "तेनानवमर्शं यजध्वं तथा श्रेयाꣳसो भविष्यथ" इति ॥ ३० ॥

( प्रधानयागानुष्ठानात्पूर्वं शृतहवींषि न स्पृशेत् )

## शृतानि च हवीꣳष्याप्रचरणात् ॥ ३१ ॥

नावमृशेदिति वर्त्तते । प्रचरणं च प्रधानविषयम्, न स्विष्टकृदादिविषयम् । अतदर्थत्वाद्धविषः ॥ ३१ ॥

( काष्ठेन हस्तेन वा पुरोडाशमवद्यति )

अङ्गुष्ठाङ्गुलिभ्यां माँ्ँसस्ँहिताभ्यामवद्यन्त्येके(१) ॥ ३२ ॥

मांससंहिते मांससंलग्ने। ताभ्यामेके ऽवद्यन्ति। एके काष्ठेन। एवं ह्याम्नानम् "काष्ठेनावद्यति" इति। तथा "स्रुवेणावद्यति स्वधितिनाऽवद्यति हस्तेनावद्यति" इति। तत्र सामर्थ्यात् स्रुवस्य द्रवद्रव्यविषयता, स्वधितेश्च मांसविषयता, हस्तकाष्ठयोस्तु पुरोडाशविषयत्वम्। तथा च सूत्रकारः "शृतावदानं पात्री च" इति। आह च—

सामर्थ्यात्स्वधितिर्मांसे द्रवेषु स्यात् स्रुवस्तथा।
हस्तकाष्ठं पुरोडाशमवदातुं प्रकल्पिते ॥ ३२ ॥

( स्तरणकाले तृणकाष्ठादेर्वेदितो निरसनम् )

आपन्नँ्ँ स्तृणन् निरस्येत् ॥ ३३ ॥

यद्वेद्यां तृणकाष्ठाद्यापन्नं तत्स्तरणकाले निरसितव्यम् ॥ ३३ ॥

( स्फ्यमुदञ्चं प्रहरेत् )

(२)छिपतो वध इति स्फ्यमुदञ्चं प्रहरति ॥ ३४ ॥

तदेतददृष्टार्थम्। दृष्टस्यासम्भवात्। प्रधानोपकारकं च प्रयाजादिवत्। ततश्च यावदुक्तं निवर्त्तते ॥ ३४ ॥

( पाणी प्रक्षाल्य प्रणीतानामपरतः स्फ्यनिधानम् )

(३)अवनिज्य पाणी अपरेण प्रणीताः स्फ्यं निदधाति ॥ ३५ ॥

पाण्योरवनेजनं दृष्टार्थम्। वेदिखननेन हि धूलीधवलावपलौ क्रियेते। प्रयोजनं तदभावे न भवति। ताववनिज्य प्रणीतानामपरतः स्फ्यं निदधाति ॥ ३५ ॥

---

(१) अवमर्शनानिषेधात् तत्प्रतिप्रसवार्थोऽयम्।

(२) प्रैषार्थमुद्यतं वज्रं प्रैषान्ते उदगग्रमुत्करे क्षिपतीत्यर्थः।

(३) हस्तावुत्करेऽद्भिः प्रक्षाल्य प्रणीतानां समीपे एव स्फ्यमासादयत्यध्वर्युरित्यर्थः।

( प्रणीताहवनीयान्तरालेनाहृत्य प्रणीतातः पश्चात्पूर्वमिध्मं निधाय बर्हिर्निदध्यात् )

इध्माबर्हिश्च ॥ ३६ ॥

समासोक्तयोः क्रमापरिज्ञाने सत्याह—

पूर्वमिध्मम् ॥ ३७ ॥

निदधातीति वर्त्तते ॥ ३७ ॥

प्रणीतादक्षिणेन वाऽऽहृत्य ॥ ३८ ॥

(१)इध्मं निदधाति ॥ ३८ ॥

( स्रुवस्य स्रुचां प्राशित्रहरणादीनां च प्रतपनपूर्वकं वेदाग्रैः संमार्जनं कृत्वा अग्नीधे समर्पणम् )

(२)स्रुवं प्रतप्य पूर्ववद्वेदाग्रैरन्तरतः प्राक्संमार्ष्ट्यनिशित इति, विपर्यस्य बहिर्मूलैः प्राङुत्क्रम्य ॥ ३९ ॥

स्रुवं प्रतप्य पूर्ववदिति "प्रत्युष्टं" "निष्टप्तम्" इति वा । तुल्यश्रुतित्वात् । वेदाग्रैः करणभूतैः । अन्तरत इति मुखतः । प्रागिति बुध्नादारभ्य आऽग्रात्संमार्ष्टि । अनिशित इत्यनेन मन्त्रेण । विपर्यस्य बहिर्मूलैः । विपर्यासात् प्रत्यगिति लभ्यते । बहिर्बाह्यतः । वेदाग्रमूलैः प्राङुत्क्रम्येति(३) । प्राक्कृत्वा । "प्राङिवैवोत्क्रम्य" इति वचनात् । उत्क्रमणं च स-

---

( १ ) प्रणीतानामाहवनीयस्यचान्तरालेन प्रदक्षिणमिध्माबर्हिराहृत्य निदधातीत्यर्थः ।

(२) अग्नीत् स्रुवं प्रतप्य अप उपस्पृश्य ततोऽग्निदेशात् प्राङुत्क्रम्य प्राच्यां गत्वा वेदाग्रैः अग्रे प्रतिपत्तिविधानाद्वेदात् पृथग्भूतैः अन्तरतो मुखप्रदेशे स्रुवं प्राक् सम्मार्ष्टि । वेदाग्रमूलादारभ्याग्रपर्यन्तमुपरिप्रदेशे प्राञ्चं सम्मार्ष्टि मार्जनेन तत्संलग्नं रजः पातयतीत्यर्थ इति देवः ।

(३) प्राङुत्क्रम्येत्यत्र वेदाग्रैरित्यस्य मूलैरित्यस्य च संबन्धः । तथाच वेदाग्रमुखतः संमार्जनं, वेदमूलैर्बाह्यतः संमार्जनं च प्राङ्

स्मार्गमात्रे न प्रतपने। "तस्मादु तथैव सम्मृज्याद्यथाग्निं नाभि-व्युक्षेत्प्राङ्विवैवोत्क्रम्य" इति वचनात्। बहिरपि मन्त्रः प्रवर्त्तते। देश-भेदात्। तथा च सूत्रकारः देशभेदे मन्त्रावृत्तिं ज्ञापयति अग्नि-सम्मार्गे "तूष्णीमुपरि" इति ॥ ३९ ॥

(१)प्रतप्य प्रतप्य प्रयच्छति ॥ ४० ॥

वीप्सा स्रुगादिविषया। ततश्च स्रुगादीनामपि उत्तरं प्रतपनं प्रवर्त्तते। पूर्वं तु स्रुवस्यैव, विशेषविधानात् ॥ ४० ॥

अनिशितेति स्रुचः ॥ (२) ॥ ४१ ॥

सम्मार्ष्टीत्यनुवर्त्तते ॥ ४१ ॥

तूष्णीं प्राशित्रहरणं शृतावदानं पात्रीं च ॥ ४२ ॥

ननु चावाच्यं तूष्णीमिति। सम्मार्गमन्त्रानुपदेशात्। स्यात्प्रत-पनमन्त्रव्युदासार्थत्वात्। तत्प्राप्तिश्च क्रियानिर्देशात्। तच्छेषत्वा-च्च मन्त्रस्य। पात्रीमात्रोपदेशसामर्थ्यात् प्रयोजनवत्त्वाविशेषाच्च उ-द्धरणपात्र्योरिडापात्र्या(३)श्च सम्मार्गः। स च विनियोगक्रमेण।

---

गत्वा करोतीति भावः।

(१) यस्य यस्य स्रुवादेः सम्मार्गो विहितो विधास्यते च त-स्य तस्य सम्मार्गानन्तरं तत्तत्प्रतप्य प्रतप्याध्वर्यवे प्रयच्छति। अ-त्रायं क्रमः पूर्वं स्रुवस्य प्रतपनम्, उदकस्पर्शः, ततः प्राङ्गत्वा यथो-क्तः सम्मार्गः, पुनः प्रत्यागत्य प्रतपनम्, तत उदकोपस्पर्शनमथ समर्पणमिति। अग्रेषपक्षे अध्वर्योः प्रतपनपक्षेचार्थादग्नीधे समर्पण-मिति देवः।

(२) जुहूपभृद्ध्रुवाः।

(३) यदुक्तमविशेषादुद्धरणपात्र्योरिडापात्र्याश्च तूष्णीं विनियो-गक्रमेण प्रतपनादीनातिकर्केण, तदयुक्तम्। 'पात्रीम्' इत्येकवचनप्र-योगेण पात्रीगतद्वित्वस्याप्रामाणिकत्वात्। आसादनोपस्तारादौ ए-कस्या एव पर्याप्तत्वात्। शाखान्तरेषु तथैव श्रवणात्। इडापात्र्या-स्तु न कुत्रापि सूत्रे सम्मार्गप्रतपने विहिते स्तः, अतस्तस्याः स-म्मार्गानर्हत्वमेवेति देवयाज्ञिकः।

क्रमान्तरे प्रमाणाभावात् ॥ ४२ ॥

( संमार्जनानां वेदाग्राणामुत्करे प्रासनम् )

(१)सम्मार्जनान्यपास्यति ॥ ४३ ॥

अपक्षिपत्युत्करे । प्रदेशान्तराविधानात् । लिङ्गाच्च "उत्करो वा अतिरिक्तस्य प्रतिष्ठा" इति ॥ ४३ ॥

(२)आहवनीये प्रासनमेके ॥ ४४ ॥

"तद्धैके स्रुवसंमार्जनान्यग्नावभ्यादधाति" इति वचनात् ॥ ४४ ॥

इति श्रीकर्काचार्यकृतकातीयश्रौतसूत्रभाष्ये

द्वितीयाध्याये षष्ठी कण्डिका ।

( त्रिवृता मुञ्जयोक्त्रेण पत्नीसन्नहनम् )

पत्नीᳫं सन्नह्यति प्रत्यग्दक्षिणत उपविष्टां गार्हपत्यस्य मुञ्जयोक्त्रेण त्रिवृता, परिहरत्यधी-वासोऽदित्यै रास्नेति ॥ १ ॥

पत्नीशब्देन यज्ञस्य स्वामिन्यभिधीयते । कुत एतत् । स्मृतेः । स्मरन्ति हि वैयाकरणाः "पत्युर्नो यज्ञसंयोगे" इति । तत्रैव पत्नीतिरूपं भवति, नान्यत्र । यच्च रजकस्य पत्नी कृषकस्य पत्नीति, उपचारमात्रं तत् । चिन्तायाः प्रयोजनम् । सन्नहनक्रियाकर्त्रभिसम्बन्धान्नाध्वर्युपत्नी गृह्यते । सन्नहनं च सम्पूर्वस्य नहेः सन्नहनं बन्धनमित्यर्थः । प्रत्यग्दक्षिणत इत्यवान्तरदेश उच्यते । स कस्य । गार्हपत्यस्य । कुत एतत् । श्रुतेः । "सा वै न पश्चात्प्राची यज्ञमन्वासीत" इति हि प्रकृत्य "तस्मादु दक्षिणत इवैवान्वासीत" इत्याह । उपविष्टामिति च भूतकालप्रत्ययनिर्देशान्नेदानीमुपवेशनम् । पूर्वमेवोपविष्टां सन्नह्यति । तस्या अपि च कर्मसन्निधिव्यवस्थानं न्याय्यम् ।

---

(१) सम्मार्गोत्तरं सम्मार्जनसाधनानि वेदाग्राणि उत्करे क्षिपतीत्यर्थः ।

(२) 'आहवनीये वा' इति देवः । अत्रार्थे "सम्मार्जनान्यद्भिः संस्पृश्याग्नौ प्रहरति यस्मिन् प्रतपत्युत्करे वा" इत्यापस्तम्बोक्तिः प्रमाणम् ।

यजमानवत् स्वामित्वाविशेषात् । क्वचिच्च दर्शयति "पत्नी च पूर्वं-वत्पत्नी च यथादेशम्" इति । मुञ्जयोक्त्रेण त्रिवृता-मुञ्जमयेन त्रिगुणेन योक्त्रेण सन्नह्यति । तच्च परिहरत्यधीवासः "अदित्यै रास्ना" इत्यनेन मन्त्रेण । अधीवास इति बहिर्वासः । "स वा ऽअभिवासः सन्नह्यत्यो-षधयो वै वासो वरुण्या रज्जुस्तदोषधीरेवैतदन्तर्दधाति" इति ॥ १ ॥

[ दक्षिणं पाशमुत्तरे प्रतिमुच्य उत्तरमुत्तरत आनीयोद्गूहेत् न ग्रन्थिं कुर्यात् ]

## दक्षिणं पाशमुत्तरे प्रतिमुच्योर्ध्वमुद्गूहति विष्णोर्वैष्ण इति ॥ २ ॥

उत्तरस्य शङ्कुस्थानीयता । प्रतिमोकश्च "उपानहौ प्रतिमुञ्चते" इति न्यायेन प्रवयण[प्रवाण]मुच्यते । ऊर्ध्वमुद्गूहति "विष्णोर्वैष्ण" इत्यनेन मन्त्रेण । तच्चैतत्पत्नीसन्नहनं तत्संस्कारात्प्रतिपत्ति कर्त्तव्यम् । यच्चोच्यते सन्नहनं प्रकृत्य "अथ मेध्येनैवोत्तरार्द्धेना-ज्यमवेक्षते" इति तत्श्चाज्यावेक्षणार्थताऽवगम्यते, तदप्यर्थवाद-प्रायम् । न हि सन्नहनस्याज्यावेक्षणार्थत्वे प्रमाणमस्ति ॥ २ ॥

## न ग्रन्थिं करोति ॥ ३ ॥

"स वै न ग्रन्थिं कुर्यात्" इति वचनात् ॥ ३ ॥

( आज्यमुद्वास्याध्वर्युणाऽध्येषिता पत्नी मन्त्रेणाज्यमवेक्षते )

## ऊर्जेत्वेत्याज्यमुद्वास्य पत्नीमवेक्षयत्य-दब्धेनेति ॥ ४ ॥

ऊर्जेत्वेत्यनेन मन्त्रेणाज्यमुद्वास्य पत्नीमवेक्षयत्यवेक्षणं कारय-ति । ततश्चाध्येषणा 'पत्न्याज्यमवेक्षस्व' इति। न ह्यन्यथा अवेक्षयितुं शक्यते । अदब्धेनेत्यवेक्षते । यद्यपि चोक्तम् "अवेक्षयत्यदब्धेन" इति तथापि "त्वाऽवपश्यामि" इत्युत्तमपुरुषयोगादवेक्षणे एव मन्त्रो नाध्ये-षणे(१) इति । तच्चैतदनेकपत्नीके परार्थत्वादेकैव करोति । पत्न्यभा-वेऽपि च पितृयज्ञे(२) द्रव्यसंस्कारानपायादध्वर्युरवेक्षते ॥ ४ ॥

---

(१) "साऽवेक्षतेऽदब्धेन" इति श्रुतेरिति भावः ।

(२) एवं रजस्वलायां प्रसूतायां प्रोषितायां वाऽध्वर्युरेवावेक्षते ।

( वेद्यामासादिताभ्यः प्रोक्षणीभ्यः पश्चादाज्यासादनम् )

(१)वेद्यां करोत्यपरं प्रोक्षणीभ्यः ॥ ५ ॥

निगदव्याख्यातम् ॥ ५ ॥

( आहवनीयश्रापिण आहवनीये आज्याधिश्रयणम् )

आहवनीये वा कृत्वा तच्छ्रापिणः ॥ ६ ॥

आहवनीये वा(२) कृत्वा वेद्यां करोति। तच्च नैवमेव विकल्प्यते। किं तर्हि व्यवस्थितविभाषेयम्। आहवनीयश्रापिण आहवनीये वा कृत्वा। एवं ह्यामनन्ति "अथाज्यमादाय प्राङुदाद्रवति, तदाहवनीयेऽधिश्रयति यस्याहवनीये हवीꣳषि श्रपयन्ति, सर्वो मे यज्ञ आहवनीये शृतोऽसत्" इति ॥ ६ ॥

( आज्यस्य प्रोक्षणीनां चोत्पवनम् )

सवितुस्त्वेत्याज्यमुत्पुनाति प्रोक्षणीश्च पूर्ववत् ॥ ७ ॥

चशब्दादाज्यं च पूर्ववदेव। न ह्यन्यथाऽऽज्योत्पवने पवित्रे प्राप्येते ताभ्यामाज्यमुत्पुनातीति। प्रोक्षणीनां पुनः संस्कारः कार्यार्थः। प्रयोजनमिध्माबर्हिषोः प्रोक्षणाभावे न भवति ॥ ७ ॥

( अध्वर्योर्यजमानस्य वा आज्यावेक्षणम् )

आज्यमवेक्षते तेजोऽसीति यजमानो वा ॥ ८ ॥

प्रकृतत्वादध्वर्युः ॥ ८ ॥

( जुह्वां स्रुवेण चतुर्वारमाज्यग्रहणम् )

स्रुवेणाज्यग्रहणं चतुर्जुह्वां धामनामेति सकृन्मन्त्रः ॥ ९ ॥

स्रुवेणाज्यग्रहणमिति कुत एतत्। "चतुर्जुह्वां गृह्णाति" इति श्रूयते। चतुःसंख्याविशिष्टं च ग्रहणं कथमन्यथोपपद्यते, यदि स्रुवेण न गृह्येत।

तत्राप्याज्यस्य नियमः। यदाज्यग्रहणं तत् स्रुवेण। न स्रुवनियमो, नाप्युभयनियमः। तथा हि सति दधनि पयसि च

---

(१) अध्वर्युस्तदाज्यं नीत्वा आसादितानां प्रोक्षणीनां पश्चाद्वेद्यां करोतीत्यर्थः।

(२) 'अधिश्रयणम्' इति शेषः।

स्रुवस्याप्रवृत्तिः स्यात्। तत्र को दोषः। "स्रुवेणावद्यति" इत्येतदुपरुध्येत। अथ पुनराज्यनियमे सति स्रुवस्यावदानसाधनत्वेन सामर्थ्याद् दध्यादौ प्रवृत्तिरनिवारिता भवति।

जुह्वां चतुर्गृहीतं धामनामेत्यनेन मन्त्रेण। सकृन्मन्त्रवचनम्। पारिभाषिकसूत्रात्त्रिः कृत्वो मन्त्रप्राप्तो इह विकल्पेन सकृत्त्वमुच्यते। ननु च परिभाषायामपि नैव त्रिर्मन्त्रवचनमभिहितम्। तत्र हि न्यायतः प्रतिग्रहणं मन्त्रप्राप्तौ इदमुक्तं "वचनादाज्ये मुष्टौ चोत्तमे" इति। सत्यमेवम्। अपि तु त्रिरेव मन्त्रोऽभिहितः स्यात्। वचनोपन्यासात्। एवं हि वचनं "त्रिस्त्रिरेव यजुषा गृह्णीयात्" इति। तेन त्रिस्त्वप्राप्तौ "तदनु सकृत्सकृदेव" इति इह सकृत्त्वमुच्यते। ननु "वचनादाज्ये" इति इयदेव सूत्रम्। "मुष्टौ चोत्तमे" इत्युत्तमशब्दस्य मुष्टिना सम्बन्धः। आज्यस्याप्युत्तमसम्बन्धे सति उपभृति सप्तकृत्वो मन्त्रः प्राप्नोति। तथा च न वेदवाक्यं व्यवस्थितम्। तेन "वचनादाज्ये" इति पारिभाषिकेणैव वाक्यद्वयोपनिबन्धनं सिद्धम्। न वाच्यमिह "सकृन्मन्त्र" इति। सत्यमेतदेवम्। वाक्यद्वयप्रतिपत्त्यर्थस्तु पुनरारम्भः। इतरथा ह्येकवाक्यताऽप्याशङ्क्येत सकृन्मन्त्रवचनविधिप्रशंसार्थतया त्रिशब्दस्य, तन्माभूदित्यतः सकृन्मन्त्रवचनमुच्यते ॥ ९ ॥

(उपभृत्यष्टकृत्वः आज्यद्रव्यकानुयाजसहिते कर्मणि स्रुवेणाज्यग्रहणम्)

अष्टावुपभृत्यल्पीयोऽनुयाजाश्चेत् ॥ १० ॥

अष्टगृहीतमुपभृति ग्रहीतव्यं जौहवादल्पतरम्, यद्यनुयाजाः सन्ति। इहानुयाजानामवैकल्पिकत्वाद्विकृत्यर्थश्चेच्छब्दः ॥ १० ॥

चतुरन्यत्र प्रतिविभागात् ॥ ११ ॥

अनुयाजवत्कर्मणोऽन्यत्र अन्यद्रव्यानुयाजके च कर्मणि चतुर्गृहीतमुपभृति ग्राह्यम्। कुत एतत्। प्रतिविभागात्। प्रतिविभागेन ह्युपयोग औपभृतस्य दृश्यते प्रयाजेषु चानुयाजेषु च। तेनोभयार्थतौपभृतस्याध्यवसीयते। ततश्चानुयाजाभावे प्रयाजार्थमेव चतुर्गृहीतं भवतीत्ययमभिप्रायः ॥ ११ ॥

किञ्च—

पश्चात्तिध्यादर्शनाच्च ॥ १२ ॥

पशौ तावदन्यद्द्रव्यकेष्वनुयाजेषूपभृति चतुर्गृहीतं दर्शयति "अथोत्पूयाज्यं चतुर्गृहीतं जुह्वां चोपभृति च गृह्णाति पञ्चगृहीतं पृषदाज्यम्" इति । तथा अननुयाजके कर्मण्यातिथ्यायाम् "अथोत्पूयाज्यं सर्वाण्येव चतुर्गृहीतान्याज्यानि गृह्णाति न ह्यत्रानुयाजा भवन्ति" इति तत्रानुयाजार्थेन द्रव्येण नार्थ इति प्रयाजार्थमेव चतुर्गृहीतं दर्शयति ॥ १२ ॥

## न कृत्स्नोपदेशात् ॥ १३ ॥

नैतदेवम् । कृत्स्नं ह्येनदष्टगृहीतमनुयाजार्थत्वेनोपदिश्यते "अथ यदष्टौकृत्व उपभृति गृह्णाति छन्दोभ्यस्तद् गृह्णाति अनुयाजेभ्यो हि तद् गृह्णाति छन्दांसि ह्यनुयाजा" इति । एवं चानुयाजार्थस्यैव वचनात्प्रयाजेषु विनियोगः, यथा प्रयाजार्थस्योत्तरावारे ॥ १३ ॥

यदुक्तं पश्वातिथ्ययोर्दर्शनादिति, न तद्दर्शनं, किं तर्हि वचनं तत्—

( पश्वातिथ्ययोर्वचनादुपभृति चतुराज्यग्रहणम् )

## पश्वातिथ्ययोर्वचनात् ॥ १४ ॥

यदा सकलस्यानुयाजार्थता तदाऽनुयाजाभावे उपभृत्यग्रहणे प्राप्ते वचनाच्चतुर्गृहीतं विधीयते । प्राप्तिपूर्वकं हि दर्शनं भवति । न चेह प्राप्तिरस्तीत्यतो वचनमिदमिति ।

अत्र वदामः । स्यादेतदेवं, यदि कृत्स्नमनुयाजार्थत्वेनोपदिश्येत । न तूपदिश्यते । एवं हि शाखिनां वचनम् "यदष्टौकृत्व उपभृति गृह्णाति प्रयाजानुयाजेभ्यस्तद् गृह्णाति" इत्युभयार्थतया विधानम् । यत्पुनरुक्तम् "अनुयाजेभ्यो हि तद् गृह्णाति" इति, तदनेनोभयार्थविधानादनुवादः । ननु स एव विधिरयमनुवादः कस्मान्न भवति । न तेन सकलस्यानुयाजार्थत्वे प्रयाजार्थताऽनुवदितुं शक्या । उभयार्थविधाने पुनर्यथाप्राप्तोऽनुयाजांशोऽनूद्यत इत्यदोषः । कृत्स्नोपदेशे हि स्यादेतदेवम् । नायं कृत्स्नोपदेशः । पश्वातिथ्ययोश्च वचनं स्यात्, यद्युभयार्थता न स्यात् । उक्तेन न्यायेनोभयार्थत्वे प्राप्तिपूर्वकत्वाद्दर्शनमेव तदिति । किं च वचने सत्येतस्मिन् "न ह्यत्रानुयाजा भवन्ति" इति हेतुरसमर्थः स्यात् । तस्मादपि दर्शनमेवेति । आह च । उभयार्थविधानं चोदितस्यानुवादता । युज्यते ह्यनुयाजानां स्वार्थांशस्यावलम्बनम् ॥ अथानुयाजसं-

यतो विधिरभ्युपगम्यते । प्रयाजार्थाशविध्वंशो नास्तीत्यननुवादता ॥ १४ ॥

( ध्रुवायां च चतुराज्यग्रहणम् )

ध्रुवायां च जुहूवत् ॥ १५ ॥

चशब्दादुपभृति च। किं सिद्धं भवति। सकृत् त्रिर्वा मन्त्रवचनम्। तत्र वचनपरिप्राप्तं "त्रिस्त्रिरेव यजुषा गृह्णीयात्" इति विधाय पुनराह "तदनु सकृत्सकृदेव" इति ॥ १५ ॥

( इध्मवेदिबर्हिषां प्रोक्षणम् )

इध्मं प्रोक्षति विस्रंस्य, वेदिं च, बर्हिः प्रतिगृह्य वेद्यां कृत्वा पुरस्ताद्ग्रन्थि कृष्णोऽसीति प्रतिमन्त्रम् ॥ १६ ॥

इध्मादि प्रोक्षति "कृष्णोऽसि" इत्येवमादिभिर्मन्त्रैः प्रतिमन्त्रम्। कथं पुनः। इध्मं विस्रंस्य प्रोक्षति, बर्हिश्च प्रतिगृह्य वेद्यां कृत्वा पुरस्ताद्ग्रन्थि। प्रतिग्रहणं च समर्पणपूर्वकं, प्रत्युपसर्गप्रयोगसामर्थ्यात्। तथा च वचनम् "अथास्मै बर्हिः प्रयच्छन्ति" इति।

इध्मस्याग्न्यर्थस्य प्रोक्षणम्, मन्त्रलिङ्गवाक्यशेषाभ्याम्। "अग्नये त्वा जुष्टं प्रोक्षामि" इति मन्त्रवर्णः। इध्मं प्रकृत्य चाह "तन्मेध्यमेवैतदग्नये करोति" इति। प्रयोजनं तादर्थ्यात्तदभावे न प्रोक्षणम्। यथाऽवभृथेष्ट्यां परिधिष्वस्तु च परिधिसंस्कारार्थस्येध्मकाष्ठस्य।

वेदेरपि चानेन कारणेन स्तरणाभावे न प्रोक्षणम्। यथा गृहमेधीये। तत्रापि हि मन्त्रलिङ्गम् "वर्हिषे त्वा जुष्टां प्रोक्षामि" इति। "तन्मेध्यामेवैनद् बर्हिषे करोति" इति वाक्यशेषः। उपसत्सु तु स्तृताया अप्येकवृत्स्तरणमस्त्येवेति प्रोक्षणं प्रवर्त्तत एव।

बर्हिर्मन्त्रः "स्रुग्भ्यस्त्वा" इति समवेतवचनत्वात् स्रुग्द्वित्वैकत्वयोर्विपरिणम्यते। स्रुगभावे च ज्योतिष्टोमेऽनूबन्ध्यापक्षे स्रुक्शब्दस्याप्रयोगः ॥ १६ ॥

( प्रोक्षणीशेषेण बर्हिर्मूलोपसेचनम् )

शेषं मूलेषूपसिञ्चत्यदित्यै व्युन्दनमिति ॥ १७ ॥

अत्र शेषस्य द्वितीयान्तनिर्देशात्, मूलानां च सप्तम्या गुण-विभक्त्या निर्दिष्टत्वात् शेषार्थतेति केचित् । नेत्यपरे । वेदवाक्ये हि शेषस्य मूलार्थतैव गम्यते । एवं ह्याह "अथ याः प्रोक्षण्यः परिशिष्यन्ते ताभिरोषधीनां मूलान्युपनिनयति" इति । तत्संस्कार इव दृश्यते "ता इमा आर्द्रमूला ओषधय" इति । किं च प्रयो-जनवद्द्रव्यसंस्कारावगतेरिति । प्रयोजनवद् बर्हिर्द्रव्यं तदनेन संस्क्रि-यते इति । सूत्रं च यथावेदवाक्यं नेयम् । यश्च "अथ याः प्रोक्षण्यः परिशिष्यन्ते" इति शेषस्य व्यपदेशः सोऽपि सामस्त्यार्थः । प्रयोजनं नाशदोषादौ [लौकिकोदकेन] मूलोपनिनयनं कर्त्तव्यमेव ॥ १७ ॥

( पवित्रे प्रणीतासु निधाय बर्हिषः पुरस्तात्प्रस्तरग्रहणम् )

पवित्रे निधाय प्रणीतासु बर्हिर्विस्र्ँस्य पुरस्तात्प्रस्तरग्रहणं विष्णोरिति ॥ १८ ॥

प्रणीतासु निधानं वाचनिकम् । बर्हिर्विमुच्य पूर्वस्मात्प्रदेशात् त्रिमुष्टिप्रस्तरग्रहणं "विष्णोः" इत्यनेन मन्त्रेण । स चायमपच्छेदे म-न्त्रः । "पुरस्ताद् गृह्णाति" इति वचनात् । ततश्च यत्रापच्छेदो नास्ति, यथा पितृयज्ञे, परिच्छिन्न एव गृहीतोऽसौ इति, तत्र मन्त्रो निवर्त्तते ॥ १८ ॥

[ वेद्यां बर्हिषा त्रिवृत् स्तरणम् ]

ब्रह्मणे प्रदाय, सन्नहनं विस्र्ँस्य दक्षिणस्यां वेदिश्रोणौ निधायान्यैरवच्छाद्य वेदिँ स्तृणा-त्यूर्णम्रदसमिति त्रिवृत् ॥ १९ ॥

ब्रह्मणे प्रदाय प्रस्तरं, बर्हिःसन्नहनं विस्र्ँस्य विमुच्य दक्षि-णस्यां वेदिश्रोणौ स्थापयित्वा अन्यैस्तृणैरवच्छाद्य वेदिं त्रिवृच्छा-दयति "ऊर्णम्रदसम्" इत्यनेन मन्त्रेण । त्रिवृदिति त्रिधातु । मन्त्र-स्य चादितार्थाभिधायकत्वात्पितृयज्ञे विपरिणामो बर्हिषः ॥ १९ ॥

[१]उपपत्त्या वा बहुलम् ॥ २० ॥

स्तृणाति ॥ २० ॥

[ मूलानि अधस्तात् कृत्वा पश्चादपवर्गं स्तृणाति ]

अधरमूलम् ॥ २१ ॥

स्तृणाति । [२]अधस्तात् मूलानि करोति ॥ २१ ॥

पश्चादपवर्गम् ॥ २२ ॥

[३]पश्चाच्चापवर्गः समाप्तिर्भवति, न प्रागुदग्वा ।

ब्रह्मणे प्रदानं दृष्टार्थम्, व्यापृतहस्तः स्तरणं कथं नाम कुर्यादिति । तेन पितृयज्ञे न भवति ।

गृहमेधीयेऽपि च केचित्स्तरणाभावान्न प्रदानमिच्छन्ति । नेत्यपरे । अस्ति हि तत्र व्यापारः सन्नहनविस्रंसननिधानाच्छादनानि । प्रकृतौ हि तानि प्रत्तप्रस्तरेणाध्वर्युणाऽनुष्ठितानि, इहापि तद्वत्क्रियेरन्निति॥२२॥

[ प्रागपवर्गं निष्कृष्यनिष्कृष्य स्तरणम् ]

[४]प्रवृहं वा ॥ २३ ॥

वृह निष्कर्षे, निष्कृष्य निष्कृष्य । "अथो ऽअपि प्रवर्हं स्तृणी-

---

[ १ ] न त्रिवृत्, अपितु यावतीभिरावृत्तिभिर्भवति वेदेः स्तरणं तावतीभिः निबिडं घनं यथा स्यात्तथा कर्तव्यमित्यर्थः ।

[ २ ] पूर्वस्तृतस्य बर्हिषो मूलानि पश्चात्स्तीर्यमाणबर्हिषोऽग्रैः प्रच्छादनीयानीत्यर्थः ।

[ ३ ] वेदेः पूर्वभागादारभ्येति शेषः । एकं मुष्टिं वेदेः पूर्वभागे स्तीर्त्वा द्वितीयं मुष्टिं वेदेर्मध्यभागे पूर्वस्तृतबर्हिषो मूलान्यग्रैश्छादयन् स्तृणाति, ततस्तृतीयं मुष्टिं वेदेः पश्चिमप्रान्ते पूर्ववत् द्वितीयमुष्टिस्तरणेन सम्बद्धं स्तृणीयात् । अयमेकः प्रकारः ।

[ ४ ] एवं च प्रागपवर्गमेव कृतं भवति । वेदेः पश्चिमपार्श्वे स्तीर्त्वा तस्याग्राणि यष्ट्यादिनोत्पाट्य तेषामधस्तादन्यस्य बर्हिषो यथा मूलानि भवन्ति तथा स्तृणीयात् । प्रवृहमिति णमुल् । सौत्रो गुणाभावः । तेन आभीक्ष्ण्यार्थलाभः । श्रुतौ तु 'प्रवर्हम्' इति गुणघटित एव णमुलन्तः प्रयोगो दृश्यते ।

यात्" इति वचनात् । अस्मिंश्च पक्षे मन्त्रावृत्तिं नेच्छन्ति । स्तरणक्रियासातत्यात् । इतरत्र प्रतिमुष्टि क्रियाविच्छेदान्मन्त्रावृत्तिरिष्यते । स्तरणद्रव्यान्यत्वात् । यद्यपि च स्तीर्यमाणैकवेदिद्रव्यविषया स्तरणक्रिया, मन्त्रोऽपि तत्परः, अथापि स्तरणद्रव्यान्यत्वमात्रमङ्गीकृत्य सूत्रकृता मन्त्रावृत्तिरभिहिता "न ग्रहणलवनस्तरणाज्यग्रहणेषु" इति ॥ २३ ॥

[ आहवनीयकल्पनात्पूर्वं हविषामुद्वासनम् ]

## अत्रोद्वासनमाहवनीयश्रापिणः ॥ २४ ॥

विरोधात् । आहवनीयकल्पने हि हवींषि दह्येरन् । यद्येवं, कपालोद्वासनमपि कर्त्तव्यम् ॥ २४ ॥

[ आहवनीयस्य समित्प्रक्षेपेण समर्थीकरणम् ]

## इध्मात्समिधमादायाहवनीयं कल्पयत्युपर्युपरि प्रस्तरं धारयन् ॥ २५ ॥

उपर्युपरीति सामीप्ये । प्रस्तरं धारयन्त्समिधाऽऽहवनीयं समर्थं करोति[१] । तच्चैतत्समर्थीकरणममन्त्रेव, दृष्टार्थत्वात् । न तत्कार्यापन्नानामपां, परिश्रितां वा ॥ २५ ॥

[ अनुयाजार्थमुल्मुकयोराहवनीयान्निष्कासनम् ]

## उल्मुके उदूहत्यनुयाजाश्चेत् ॥ २६ ॥

अनुयाजार्थमुल्मुकोदूहनम् । तत्संस्पर्शनेन ह्यग्नेरनुयाजार्थस्यायातयामतोपजन्यते । तत्संस्कारप्रयोजनत्वाच्चोल्मुकयोराहवनीयानुगमने ततो नानयनं, गार्हपत्यादेव प्रणीयते इति । तयोश्च पुनरनुसंस्पर्शनविस्मरणेऽनुयाजनिर्वृत्त्युत्तरकालं नाहवनीये तत्संस्पर्शनं, तदर्थसंस्कारकत्वात् । ननु चोत्तरपदार्थार्थाग्निसंस्कारार्थताऽपीष्यते । तथा ह्याह "ते पुनरनुसंस्पर्शयन्ति" इति प्रकृत्य "अयातयाम्नि यदत ऊर्ध्वमसंस्थितं यज्ञस्य तत्तनवामहै" इति । न ।

---

[ १ ] समिदाघातेन क्लृप्तमिन्धनेध्मादि ज्वलनसमर्थं करोति । लोकेऽपि काष्ठादिना पूर्वमग्निमाहत्य पश्चात् सन्धुक्षणं क्रियते, एवमत्रापीति भावः ।

केवलानुयाजार्थत्वात् । तत् कुतः । वचनात् "ते वा ऽएते ऽउल्मुके ऽउद्गृह्णन्त्यनुयाजेभ्य" इति । इतरदर्थवादप्रायम् । तथाच सूत्रकारः "अनुयाजाश्चेन्" इति ।

तच्चैतद्यागाभिनिर्वृत्त्यर्थद्रव्यादृष्टसंस्कारत्वादुदकेऽपि भवति ॥२६॥

इति श्रीकर्काचार्यकृतकातीयश्रौतसूत्रभाष्ये द्वितीयाध्याये सप्तमी कण्डिका ।

[ आहवनीयस्य पश्चिमे दक्षिणे उत्तरे च क्रमेण परिधिनिधानम् ]

परिधीन्परिदधात्यार्द्रानेकवृक्षीयान्बाहुमात्रान्पालाशवैकङ्कतकार्ष्मर्यबैल्वान्पूर्वालाभेपूर्वालाभ ऽउत्तरान् खादिरौदुम्बरान्वा मध्यमदक्षिणोत्तरान् गन्धर्व इति प्रतिमन्त्रम् ॥ १ ॥

परिधीयन्त इति परिधयः । संज्ञा चैषा यौगिकी । न हि लोके परिधिशब्दः प्रत्यस्तमितावयवार्थवृत्तितया गवादिशब्दवत्क्वचिद्रूढः । न च यूपादिवत् संस्कारनिमित्तता शक्याऽवसातुम् । संस्काराणामविधानात् । गम्यते चात्रावयवार्थः सर्वतो धानात्परिधय इति । यूपे त्ववयवार्थो नावगम्यते । तत्संस्काराश्च विहिताश्छेदनादयः । तेन तन्निमित्तताऽवगम्यते यूपशब्दस्य । ननु चैवं सति परिधानात्परिधय इति चत्वारः प्राप्नुवन्ति । न । उपदेशसामर्थ्यान्मध्यमदक्षिणोत्तरानिति । यत्र तु नैवंविधं वचनं, न च चोदकानुवृत्तिस्तत्र चत्वार एव भवन्ति । यथा पितृमेधे "वारणान्परिधीन्परिधाय" इति । प्रवर्ग्येऽपीति चेत् । न । मध्यमश्रवणात् "हुत्वा मध्यमे परिधावुपश्रयति" इति । त्रयाणां च मध्यमो भवति । पैतुदारवेषु चतुःसंख्याऽस्त्विति चेत् । न । सूत्रारम्भसामर्थ्यात् "पूर्ववत्" इति । परिधानयोगनिमित्तत्वे च परिधिशब्दस्य पितृमेधादौ न धर्मप्राप्तिः । न ह्यत्र धर्मोपलक्षणार्थः परिधिशब्दो ऽग्निहो-

त्रादिशब्दवत् [१]। संज्ञा तर्ह्यनर्थिका । न । संव्यवहारार्थत्वात् "परिधिपरिधानं शाकलाभ्याधाय मत्या" इति ।

एकवृक्षीयानिति । उत्तरसूत्रादेवैकजातीयत्वे प्राप्ते एकवृक्षव्यक्त्यर्थमेवैकवृक्षीयग्रहणम् । अपरे तु वचनाभावान्नैवमिच्छन्ति । नह्येकत्वावच्छिन्नवृक्षव्यक्तिपरं वचनमस्ति । अस्ति च जातिपरं वचनं "ते वै पलाशाः स्युः" इति । ननु पालाशादिग्रहणादेवैतत्सिद्धम् । सत्यमेवम् । अभावे उत्तरानित्युक्तत्वादेकस्य द्वयोर्वा अभावे उत्तरजातिर्मा भूदित्येकवृक्षीयग्रहणम् ।

बाहुमात्रान् बाहुप्रमाणान् । पालाशादीनां पूर्वस्य पूर्वस्यालाभे उत्तरोत्तरस्य ग्रहणम् ।

स चायं प्रतिनिधिः स्यात्पूतीकादिवत् । न वाऽनर्थप्राप्तत्वात् । न ह्यर्थेन परिधिमात्रं प्राप्नोति । येन जातिर्नियम्येत । तस्माद्विधानमेवेदम् । पूतिकेषु तु द्रव्यापचारे सामर्थ्यात्सुसदृशद्रव्यप्राप्तौ ईषत्सदृशपूतीकनियम उपपद्यते । प्रयोजनं पूर्वाभावेऽपि न प्रायश्चित्तमिति ।

खादिरौदुम्बरान् वा । ते चामी खादिरौदुम्बराः अभावे विधानाभावात्पालाशैः सह विकल्प्यन्ते । अपरे तु बैल्वैः सह विकल्पमिच्छन्ति । एवं ह्याम्नायते "ते वै पालाशाः स्युः" इति प्रकृत्य "यदि पालाशान्न विन्देदथो अपि वैकङ्कताः स्युर्यदि वैकङ्कतान्न विन्देदथो अपि काष्मर्यमयाः स्युर्यदि काष्मर्यमयान् न विन्देदथो अपि बैल्वाः स्युरथो खादिरा अथो औदुम्बरा" इति । तेन काष्मर्यमयाभावे बैल्वखादिरौदुम्बरा विकल्प्यन्ते । आह च—

अभावे च पलाशस्य विकङ्कतविधिर्यतः ।
तेन बिल्वविकल्पार्हौ खादिरौदुम्बराविति ॥

मध्यमदक्षिणोत्तरानिति त्रित्वार्थं क्रमार्थं च । गन्धर्व इत्येभिर्मन्त्रैः प्रतिमन्त्रं परिदधाति ।

त्वाशब्दस्याग्निपरत्वादवभृथे विपरिणाममिच्छन्ति । अग्नि-

---

[१] व्यतिरेके दृष्टान्तः । यथा अग्निहोत्रशब्दो धर्मोपलक्षणार्थो, न तथा परिधिशब्दः । तेन अत्रोपात्ता उपस्पर्शनादयो धर्माः पितृमेधादौ न प्राप्यन्ते ।

परता च तत्संस्काराभिप्रवृत्तेः । "सूर्यस्त्वा पुरस्तात्पातु" इति च व्यक्तमग्निपरत्वम्, अतोऽस्यापि तत्परतैवेति । तदेतन्नातीव सुविचार्यालोचितमिव । परिधिपरत्वात्त्वाशब्दस्य । तत्कथम् । एकवाक्यत्वात् । परिधिर्ह्यत्राभिधीयते "गन्धर्वस्त्वा विश्वावसुः परिदधातु" इति । "यजमानस्य परिधिरसि" इति च स्पष्टैव परिधिपरता । तस्मादवभृथेऽप्यनूह एव । यत्पुनरुक्तं "सूर्यस्त्वा पुरस्तात्पातु" इति अग्निपरतेति । यदि तस्याग्निपरताऽस्य किमायातम् । अतोऽयमनुपन्यासः ।

"इन्द्रस्य बाहुरसि दक्षिण" इत्यौपचारिकमेतत्, न दक्षिणदिक्संस्थितत्वाद्दक्षिण इति । कुतः । लिङ्गात् "एष वै वीर्यवत्तमो य इन्द्रस्य बाहुर्दक्षिण" इति । तेन पितृयज्ञे न विपरिणामः ।

"मित्रावरुणौ त्वोत्तरतः परिधत्ताम्" इति युक्तरूपोऽत्र विपरिणामः । उत्तरशब्दस्य समवेतवचनत्वात् ॥ १ ॥

प्रथमं परिधिꣳ समिधोपस्पृश्य व्वीतिहोत्रमित्यादधाति ॥ २ ॥

प्रथमग्रहणं द्वितीयतृतीयव्युदासार्थम् । उपस्पर्शनं च तत्संस्कारः । द्वितीयानिर्देशात् । वाक्यशेषाच्च "तेनैतानग्ने समिन्धे" इति । प्रयोजनमवभृथेऽपि क्रियते ।

अग्नौ तु समिदाधानं दृष्टार्थम् । ततश्चावभृथे न भवति ॥ २ ॥

अनुपस्पृश्य द्वितीयाꣳ समिदसीति ॥ ३ ॥

द्वितीयाग्रहणादुपस्पर्शनमपि प्राप्तं निषिध्यते ॥ ३ ॥

[ आहवनीयमीक्षमाणः सूर्यस्त्वेति जपेत् ]

सूर्यस्त्वेति जपत्याहवनीयमीक्षमाणस्तद्वचनत्वात् ॥ ४ ॥

त्वाशब्दोऽग्निपरत्वादवभृथे विपरिणम्यते । पुरस्ताच्छब्दश्च दिक्परत्वात्पितृयज्ञे "सूर्यस्त्वा दक्षिणतः पातु" इति ।

सम्प्रदाये त्वस्याविपरिणाममिच्छन्ति । तेषामयमभिप्रायः- पुरस्ताच्छब्दोऽग्रवचनो, न दिग्वाचीति ।

तच्चैतत्परिधिपरिधानाद्यवेक्षणान्तमेकं कर्म । कार्यैकत्वात् । एकं हि कार्यमग्निसंस्कारः । तत्कुतः । वाक्यशेषात् "वज्राद्वै वषट्काराद् बिभेमि" इति प्रकृत्य "तद्वर्मैवैतदग्नये नह्यति" इति । तथा "गुप्त्यै

वा ऽभितः परिधयो भवन्त्यथैतत्सूर्यमेव पुरस्ताद्गोप्तारं करोति" इति । एककर्मत्वे च नैमित्तिकमन्ते भवति[१] । अग्निसंस्कारत्वादग्निकार्यापवर्गात्स्वप्नु परिधिष्वु च भवति । ननु च वषट्कारभीतिनिमित्तं परिधानमिति । तेनावषट्कारे जुहोतौ न प्रवर्त्तत इति । नैतदेवम् । न हि कश्चिद्वषट्काराद्बिभेति । न च तद्भयं परिधिभिरपनीयते । तेनाग्निसंस्कारविध्यर्थवादमात्रमेतत् । स चादृष्टोऽग्निसंस्कारो, दृष्टस्यासम्भवात् ॥ ४ ॥

[ उदगग्रयोर्विधृत्योर्वेद्यां निधानम् ]

[२]आवृत्य वेदिं बर्हिस्तृणे तिरश्ची निदधाति सवितुरिति।५।

"अथ स्तीर्णां वेदिमुपावर्त्तते स द्वे तृणे ऽआदाय तिरश्ची निदधाति" इति हि श्रूयते । तिरश्ची इत्युदगग्रे । अत एव प्रागग्रं वेदेस्तरणम् । आवृत्य वेदिमित्यवाच्यम् । सामर्थ्यादेव तत्प्राप्तेः । [वाच्यं] स्याद्वैयधिकरणार्थत्वात् । अन्यथा हि न ज्ञायते क्वैते तृणे निधीयेते इति ॥ ५ ॥

[ अप्रकृतयोस्तृणयोर्निधानम् ]

अन्ये वाऽयुक्तत्वात् ॥ ६ ॥

अन्ये वा तृणे उपादेये, न वेदिसम्बन्धिनी । कुत एतत् । अयुक्तत्वादन्येषाम् । इतरेषां च बर्हिस्तृणानां वेदिस्तरणे विनियुक्तत्वात् । न च विनियुक्तं वचनमन्तरेणार्थान्तरे विनियोगमर्हति । "वे-

---

[१] नैमित्तिकं प्रायश्चित्तं मध्ये उपस्थितं परिधिपरिधानाद्याहवनीयेक्षणान्ते भवति । न तु तन्मध्ये । तस्यैककर्मत्वात् । कर्ममध्ये कर्मान्तरानुष्ठानायोगात् ।

[२] अध्वर्युर्वेदिं प्रत्यावृत्य आहवनीयसमीपाद्वेदिं प्रत्यागत्य स्तृतस्यैव बर्हिषो द्वे तृणे आदाय मध्ये स्तृतस्य बर्हिष उपरि आहवनीयस्य पश्चात् प्रदेशे तिरश्ची उदगग्रे स्थापयति । आपस्तम्बः 'समावनन्तर्गर्भौ दर्भौ विधृती कुरुतः' इति । तथा 'अन्तर्वेद्युदगग्रे निधाय' इति । काठके च 'पुरस्तात्प्रस्तरादनन्तर्गर्भौ विधृती आदाय वेद्यामुदञ्चौ निधाय' इति । अत एव तिरश्ची इति सूत्रितमिति देवभाष्ये ।

दितृणे अध्वर्युरादत्ते" इति यथा । ननु अत्रापि वचनमस्ति "तस्या द्वे तृणे ऽआदाय"इति । न । पञ्चम्यभावात् । पञ्चम्या ह्ययमर्थो लभ्यते । षष्ठ्याऽपि ह्ययमर्थो लभ्येत इति चेत् । सत्यं, लभ्यते विभक्तिव्यत्ययेन । अस्तु व्यत्यय इति चेत् । न । न्यायविरोधात् । षष्ठ्यर्थस्यासम्भव इति चेत् । सप्तम्यर्थे षष्ठी भविष्यति । एवं चावश्यं भाविनि व्यत्यये न न्यायविरुद्धो विनियुक्तस्य विनियोग आश्रितो भविष्यति । तस्मादप्रकृते तृणे आदाय वेद्यां निदधातीति सूत्रार्थः ॥ ६ ॥

तथाचोत्तरसूत्रम्—

अन्यत्रापि तृणार्थे ॥ ७ ॥

अतोऽन्यत्रापि तृणार्थे ऽन्यान्येव तृणानि ग्रहीतव्यानि । यथा "उपावीरसीति तृणमादाय"इति । कुत एतत् । अयुक्तत्वादेव । युक्तग्रहणं ह्यादरं करोति "अथ स्तीर्णाग्रे वेदेर्द्वे तृणे ऽअध्वर्युरादत्ते" इति । ननु"विशये लौकिकम्" इत्यनेनैव सिद्धत्वादवाच्यमेतत् । नैतदेवम् । तद्धि सर्वार्थनिराकरणविषयम् । सर्वार्थतया ह्यग्निद्रव्ये प्राप्ते "अग्निमुपसमाधाय स्तुवन्ति"इत्यत्र,"उल्मुकमेवादायोपपरेयात"इत्यत्र च लौकिकमुपादेयम् इत्येवमर्थम् । ननु चैवमग्नीनां सर्वार्थताविरोधः । न । निर्दिष्ट[होमादि]सर्वकार्यार्थत्वाददोषः । इदं तु असर्वार्थत्वात्कार्यविशेषद्रव्यनिराकरणविषयम्[१] ॥ ७ ॥

[ यूपाञ्जनं स्थालीस्थाज्यान्येनाज्येन कार्यम् ]

यूपाञ्जने च सर्पिः ॥ ८ ॥

अन्यदेव ग्राह्यम् । प्रकरणे ह्यसंयुक्तविधानात्स्थाल्यस्य सर्वार्थता, तेन पशावपि सर्वार्थमेवैतदाज्यमिति यूपाञ्जनमाशङ्क्यते । यद्येवं किमिति न भवति । प्राकृतकार्यविशेषसम्बन्धादित्यदोषः । कार्यविशेषसम्बन्धाविशेषादस्य "विशये लौकिकम्"इत्यनेन तर्हि पुनरुक्तता । न । तद् वाक्यावगतकार्यविशेषसम्बन्धविषयम् । इदं तु प्रकरणावगतकार्यविशेषसम्बन्धविषयमित्यदोषः ।

[१] वेदिस्तरणरूपकार्यविशेषार्थबर्हिर्द्रव्यस्य सर्वार्थत्वनिराकरणविषयमित्यर्थः ।

"अन्यत्रापि तृणार्थे" इत्यस्यापरा व्याख्या। "अन्ये वाऽयुक्तत्वात्" इत्यनेनैवोपाकरणतृणादिष्वप्यन्वत्वसिद्धाववाच्यमेतदित्यतो ऽन्यथा व्याख्यायते[१]। अन्यत्रापि तृणार्थे बर्हिस्तृणसदृशेभ्योऽन्यानि तृणानि भवन्ति। तत्सादृश्यं च संस्कारैर्भवति। तेभ्योऽन्यान्यसंस्कृतानीत्यर्थः। कुत एतत्। बर्हिःशब्दस्य जातिनिमित्तत्वात्। संस्कारनिमित्तताऽप्याशङ्क्यत एवेति चेत्, संस्कृतेषु बर्हिस्तृणेषु बर्हिःशब्दं प्रयुञ्जते याज्ञिकाः। न। असंस्कृतेष्वपि शब्दप्रयोगात्, 'बर्हिरादाय गावो गता' इति। सादृश्यात्स प्रयोग इति चेत्। न। इतरेतराश्रयप्रसङ्गात्। यदि संस्कारनिमित्तस्तदा सादृश्याज्जातौ प्रयोगः। तत्र कथं बर्हिःशब्देन जातिनिमित्तेनैवोद्दिश्य संस्कारविधानमुपपद्यते बर्हिरासादयति, बर्हिः प्रोक्षतीति च। जातिनिमित्तत्वे पुनरेष दोषो न भवति। तस्माज्जातिनिमित्तः। एवं चेद् "बर्हिषा यूपावटं स्तृणाति" इत्येवमादौ संस्काराणामप्राप्तिः। अत इदमुक्तम् "अन्यत्रापि तृणार्थे" इति।

"यूपाञ्जने च सर्पिः" इत्येतदपि केचिदेवं व्याचक्षते। तदयुक्तम्। उक्तो ह्ययमर्थो "घृतमाज्ये लिङ्गात्" इति। तस्माद्यथोक्तैव व्याख्या ॥ ८ ॥

(पुरोडाश—पयस्या—धानानां संस्कृतानां लौकिकानां वोपादानम्)

## पुरोडाश—पयस्या—धानासु चेच्छन् ॥ ९ ॥

"पुरोडाशमात्रामैन्द्रवायवे प्राशयति, पयस्यां मैत्रावरुणे, आश्विने धाना" इति। अत्रेच्छया लौकिकानि गृह्यन्ते, इच्छया प्राकरणिकानि। तुल्यशास्त्रत्वाद्विकल्पः। अपरे तु न्यायत एव विकल्पमिच्छन्ति। सवनीययागशेषस्य "हविःशेषभक्ष" इत्यनेन यजमानाशने विनियोगः। अत्र च पुरुषार्थत्वादभक्षणेऽप्यदोषः। ननु चैवं सति प्राकृतं चतुर्धाकरणं कस्मान्न भवति। न। अन्यत्र विनियोगशासना-

---

[१] "कौशं बर्हिः" इत्यत्र बर्हिःशब्दस्य जातिनिमित्तत्वे साधिते ऽपि अग्निहोत्रशब्दस्येव धर्मलक्षणार्थत्वं प्राप्तं बर्हिःशब्दस्यात्र निराक्रियते इत्यपौनरुक्त्यम्।

त्। अत इदमुक्तं "पुरोडाशपयस्याधानात्तु चेच्छन्" इति(१)॥९॥

( विधृत्योरुपरि प्रस्तरस्तरणम् )

तयोः प्रस्तरꣳ स्तृणात्यूर्णम्म्रदसमिति ॥ १० ॥

तयोर्विधृत्योरुपरि प्रस्तरं स्तृणाति "ऊर्णम्म्रदसम्" इत्यनेन मन्त्रेण। अङ्गप्रधानार्थजुहूधारणार्थत्वात् पितृयज्ञे 'देवपितृभ्य' इति विपरिणम्यते मन्त्रः। चोदितार्थाभिधानात् ॥ १० ॥

( प्रस्तरं पाणिद्वयेनाभिन्यस्येत् )

अभिनिदधात्यात्वाव्वसत्र इति ॥ ११ ॥

अभिनिधानं पाणिद्वयेन क्रियेत, प्रसिद्धिलिङ्गाभ्यामित्युक्तमुत्कराभिन्यासे ॥ ११ ॥

(प्रस्तरं सव्येन स्पृशन्नेव तस्मिन् जुहूं प्रतिगृह्य निदध्यात् )

सव्याशून्ये जुहूं प्रतिगृह्य निदधाति घृताचीति ॥ १२ ॥

"अभिनिहित एव सव्येन पाणिना भवत्यथ दक्षिणेन जुहूं प्रतिगृह्णाति" इति श्रूयते। प्रतिग्रहणं च समर्पणपूर्वकं, प्रत्युपसर्गप्रयोगसामर्थ्यात्। बर्हिषि च श्रुतौ समर्पणं विहितम् "अथास्मै बर्हिः प्रयच्छन्ति" इति। सूत्रितं च "बर्हिः प्रतिगृह्य" इति।

घृताच्यसीति मन्त्रश्चोदितार्थाभिधानाद्विकृतौ विपरिणम्यते। यथा गृहमेधीयादावनाज्यस्रुगासादने "घृताच्यसि" इति पदद्वयं

---

( १ ) पितृभूत्याचार्यास्त्वेवं व्याचक्षते—च—शब्दस्तु—शब्दस्यार्थे। पुरोडाशपयस्याधानात्तु तु योऽप्राकृतान्युपादध्यात् स इच्छयैवोपादधीत, न तु शास्त्रतः। अप्राप्तार्थ एवायम्, यत् प्रकृतादन्यस्योपादानम्। कुतः। पुरोडाशादिषु द्वितीयादर्शनात् पुरोडाशादीनामेवायं प्रतिपत्तिरूपः संस्कारो, न ग्रहाणाम्। प्रतिपत्तिश्च विद्यमानानां क्वचिदुपयुक्तानां भवति, न प्रतिपत्त्यर्थमुत्पाद्यन्ते। अपि चावयवश्रवणान्येतानि। विद्यमानानां चावयवा गृह्यन्ते, नावयवार्थमुत्पाद्यन्ते। तस्मात् द्विदेवत्यपात्रेषु प्रतिपादितशेषं यजमानेन भक्षयितव्यम् इति।

अत्रार्थे जैमिनीयम् "अपनयस्त्वेकदेशस्य विद्यमानसंयोगात्" इति तार्तीयिकाष्टमपादस्थत्रयस्त्रिंशसूत्रमपि गमकम्।

निवर्त्तते । घृतमञ्चितम् [ निहितम् ] अस्यामिति घृताची ।

अपरे त्वाहुः—घृतमच्यतेऽनयेति घृताची । तदेतदयुक्तमिव । उपभृति ध्रुवायां चासम्भवात् । न हि ताभ्यां घृतमच्यते [ हूयते] । चिन्तायाः प्रयोजनं करणपक्षे न विपरिणामः (१) ।

प्रियेण धाम्नेत्यस्याप्यप्रयोगमिच्छन्ति केचित् । धाम—शब्दस्याज्यविषयत्वात् । "एतद्वै देवानां प्रियतमं धाम यदाज्यम्" इति हि श्रूयते । 'या त्वं घृताच्यसि जुहूश्च नाम्ना सेदं प्रियं सद आसीद प्रियेण धाम्नाऽऽज्येनोपेता सती' इति वाक्यार्थः । तदेतदनुपपन्नम् । न हि धामशब्द आज्याविषयः । "धामानि त्रयाणि भवन्ति स्थानानि नामानि जन्मानि" इति ह्यभियुक्तोपदेशः । तस्मात्प्रियेण धाम्ना ( नाम्ना ) अभिहिता सतीदं प्रियं सद आसीदेति । यत्तु धामशब्द आज्ये दृश्यते, स कथं चिदुपचारवृत्त्या प्रतिपत्तव्यः ॥ १२ ॥

( जुह्वपेक्षया नीचामुपभृतं ततो नीचां ध्रुवां स्थापयेत् )

## एवमितरे ऽउत्तराभ्यां प्रतिमन्त्रं बर्हिष्युपभृतं ध्रुवां चावकृष्टे अनुपूर्वम् ॥ १३ ॥

एवम्[प्रतिगृह्य]इतरे उत्तराभ्यां प्रतिमन्त्रं बर्हिष्यासादयति । के इतरे इत्यत आह । उपभृतं ध्रुवाञ्च अनुपूर्वमवकृष्टे (अपकृष्टे) । मन्त्रान्तरविधानाद् "बर्हिषि" इति च प्रस्तरनिरासार्थत्वात् एवं-शब्दः प्रतिग्रहणविषयः, समर्पणपूर्वकं ग्रहणं यथा स्यादिति ।

नन्वितरे इत्युक्तत्वादुपभृतं ध्रुवां चेत्यवाच्यम् । वाच्यं वा स्रुगासादनप्रतिपत्त्यर्थत्वात् । इतरथा ह्याधेयस्याज्यस्यासादनं प्रतीयेत, न गुणत्वादधिकरणस्य । अथ पुनरुपभृद्ध्रुवाग्रहणे क्रियमाणे स्रुगासादनमेतदिति ज्ञापितं भवति । तत्कथमिति चेत् । वचनात् "घृताच्यसि जुहूर्नाम्नेति जुहूम्, उपभृन्नाम्नेत्युपभृतं, ध्रुवा नाम्नेति च ध्रुवाम्" ( इति ) । लिङ्गाच्च "जुहूर्नाम्ना" इत्येवमादेः । प्रयोजनमाज्याभावेऽप्यासादनमिति ।

---

(१) प्रकृतौ उपभृद्ध्रुवयोश्चोदितार्थाभिधानाभावाद्विकृतौ गृहमेधीयादौ विपरिणामो न प्राप्नोति । सिद्धान्ते तु स भवतीति भावः ।

अपरे तूपभृद्ध्रुवाग्रहणस्य फलं व्याचक्षते पृषदाज्यपात्रस्यासादनव्युदासार्थम्। तत्पुनराचार्येणाभिहितमेव "औपभृतासादनम्" इत्युक्त्वा "प्रियेण धाम्नेति वा ऽविशेषोपदेशात्" इति (का० श्रौ० अ० ५। कं० ४। सू० २८-२९)।

पृषदाज्यपात्रस्य वाऽवकष्टत्वव्युदासार्थमुपभृद्ध्रुवाग्रहणम्। तत्कथम्। अनुपभृद्विकारत्वात्। उपभृतो ह्युपधारणं कार्यम्। न च तत् पृषदाज्यपात्रेण क्रियते। अत एवार्थगृहीतत्वात्तस्य आसादनादि (आसादनं प्रोक्षणं च) न भवति ॥ १३ ॥

[ पात्र्यां स्थानद्वये घृतेनोपस्तीर्य पुरोडाशौ घृतेनाभिघार्योद्गुद्वास्योपस्तीर्णे निधाय घृतेनानक्ति ]

(१) पुरोडाशावभिघार्योद्वास्योपस्तीर्णे निधायानक्ति "यस्ते प्राणः पशुषु प्रविष्टो देवानां विष्ठामनु यो वितस्थे। आत्मन्वान् सोम घृतवान् हि भूत्वाऽग्निं गच्छ स्वर्यजमानाय विन्दे"ति ॥ १४ ॥

उपस्तीर्ण इति पूर्वतरं द्रष्टव्यम्। तद्भूतोपदेशात्। उद्वास्योपस्तरणमशक्यं कर्तुम्। अभिघारणं हविर्मात्रस्य स्यात्। तत्सम्बन्धेनोपदेशात् "यद्वै हविरभ्यक्तं यदभिघारितं तज्जुष्टं तन्मेध्यम्" इति। सूत्रकारस्तु पुरोडाशैर्लक्षयति ॥ १४ ॥

यथादेवतमन्यत् ॥ १५ ॥

इति उक्तार्थम् ॥ १५ ॥

---

(१) अयमत्र क्रमः-प्रथमं वेदेन पुरोडाशविभस्मीकरणम्, ततः पात्र्याः स्थापनम्, पुरोडाशयोरभिघारः, पात्र्याः स्थानद्वये उपस्तारः, अथवा प्रथमं पात्र्यामुपस्तारस्ततः पुरोडाशयोरभिघारः, उदगुद्वासनम्, वेदेन पुनर्विरजस्करणम्, स्थापनम्, पात्र्या उपरि प्राणदानमिति देवभाष्ये।

( कपालानां प्रत्येकं समन्त्रकममन्त्रकं वा घृतेनेषदञ्जनम् )

प्रत्यनक्ति कपालानि "यानि घर्मे कपालान्युपचिन्वन्ति वेधसः पूष्णस्तान्यपिव्रतऽइन्द्रवायू विमुञ्चतामि"ति ॥ १६ ॥

कपालोद्देशेन विधानसामर्थ्यात्प्रतिकपालमञ्जनम् । युगपच्चाशक्यत्वात् । एवं सति "यानि कपालानि" इति बहुवचनमञ्जनक्रियाव्यवच्छिन्नसमुदायापेक्षम् , पात्रप्रोक्षणमन्त्रवत्पूजार्थं वा॥१६॥

तूष्णीं वा ॥ १७ ॥

कपालाञ्जनम् ॥ १७ ॥

( प्रथममुद्वासयामि द्वितीयं० तृतीयम्० इत्येवं सर्वेषां कपालानामुद्वासनम् )

संख्ययोद्वासयति ॥ १८ ॥

'संख्याशब्देन करणभूतेनोद्वासयति' इत्येतदुक्तं भवति। तत्रैतद्विचार्यते–किमेकमेकमिति प्रयोगः सर्वत्र, उत एकं द्वे त्रीणीति, उत प्रथमं द्वितीयं तृतीयमिति । एकमुद्वासयामीति प्रतिकपालं प्रयोगः । एकमिति हि संख्याशब्दः । स च प्राथम्यादविरोधाच्च सर्वत्र प्रयुज्यत इति । तदेतदयुक्तम् । न ह्येकशब्दः सर्वत्र प्रयुज्यमानः समर्थो भवति । एवं चेत् 'एकं द्वे त्रीणि' इति प्रयोगः, तथा सति यथावत्संख्यासंख्येयसम्बन्धात्सामञ्जस्योपपत्तिः । एतदपि नोपपद्यते । न हि द्वितीये कपाले द्वित्वविशिष्टमुद्वासनं, तथा तृतीये चतुर्थे च । अतः पूरणप्रत्ययान्ता संख्या परिगृह्यते, प्रथमं द्वितीयं तृतीयमित्येवमादि । एवं संख्ययोद्वासनं कृतं भवति, यथावत्संख्यासंख्येयसम्बन्धश्च । तथा च कपालनाशे संवृत्ते प्रायश्चित्तवचनमुपपद्यते । ननु च प्रथमशब्दस्य द्वितीयापेक्षत्वाद्विकृतावेककपाले ऽप्रयोगः । उच्यते । न विकृतिवशेन प्रकृतौ पदार्थावधारणमुपपद्यते। प्रकृतिवशेन हि विकृतावधारणं युक्तरूपम् । अतो यत्किञ्चिदेतदिति ॥ १८ ॥

[ हवींषि मुख्यक्रमेण वेद्यां निधायालभेत ]

प्रियेण धाम्नेति हवीᳬंषि वेद्यां कृत्वा ध्रुवाऽ अस-
दन्निति सर्वाण्यालभते ॥ १९ ॥

बहुवचनं स्थाल्यपेक्षया। सर्वशब्दश्च जौहवाद्यपेक्षः। मुख्यक्रमेण चासादनालम्भने। क्रमान्तराभावात्। यजमानशब्दश्च बहुयजमानके विपरिणम्यते ॥ १९ ॥

[ अध्वर्युरात्मसंस्कारार्थमात्मानमालभेत ]

पाहि मामित्यात्मानम् ॥ २० ॥

आलभते इति वर्त्तते। स चायमात्मसंस्कारः करिष्यमाणप्रयोजनः।

(१)ततश्चाश्वमेधेऽविरोधात्प्रतिप्रस्थात्रा सवनीयाज्यासादनालम्भने कृतेऽध्वर्युरश्वहोमाभिप्रवृत्त एवात्मानं संस्पृशतीति ॥ २० ॥

अत्र वा व्रतोपायनमत्र वा व्रतोपायनम् ॥ २१ ॥

तुल्यशास्त्रत्वात् ॥ २१ ॥

इत्यष्टमी कण्डिका।

इति श्रीकर्कोपाध्यायकृतौ कात्यायनसूत्रविवरणे
द्वितीयोऽध्यायः।

---

(१)ततः पशौ सुत्यायां च पुनः पुनर्हविरासादने कृते न भवति; प्रथमत एव सकृत् कृतेनात्मनः कर्मसमाप्तिपर्यन्तं संस्कृतत्वादिति देवभाष्ये।

# अथ तृतीयोऽध्यायः ।

( वेद्या उत्तरश्रोणेरुत्तरतो होतृषदनं कुशास्तीर्णं संस्थाप्य समिधमादाय सामिधेन्यनुवचनार्थं होतारं प्रेषयेत् )

**(१)होतृषदनं कृत्वाऽपरेण वेदिँ श्रोणिं वोत्तरेणेध्मात्समिधमादायाग्नये समिध्यमानायानुब्रूहीत्याह ॥ १ ॥**

होता यस्मिन्त्सीदति तद्धोतृषदनम् । समाचाराद्वेद्यविद्धं स्यात् ।

तच्च कुशोत्तरीयम् । उपरिष्टात्तृणनिरसनोपदेशसामर्थ्यात् ।

कृत्वेति । करोतिरयमभूतप्रादुर्भाववचनः । शब्दसामर्थ्यात् । दृश्यते च कर्ममध्येऽप्युत्पत्तिर्यूपादीनाम् । स्थापनार्थो वा । "अपरेण वेदिम्"इति प्रदेशानर्देशात् । किं च कृत चोदितत्वात् । प्रक्लृप्तद्रव्यस्य च कर्मण्यभिवृत्तिसामर्थ्यात् । क्रियासातत्याविच्छेदाच्च । यूपादीनां त्वाहत्यैवोत्पत्तिश्चोद्यते । तस्माद्वैषम्यमनेन । यत्तु करोतिरभूतप्रादुर्भावे इति । तदनैकान्तिकम् । अन्यत्रापि दृष्टत्वात् । पादौ करोतीति संस्कारे । गोमयानि करोतीति संहारे । घटमत्र कुर्विति स्थापने । तस्मात्स्थापनार्थ एव ।

'अपरेण वेदिम्'इति लिङ्गादध्यवसानम् । "एष वां लोक इत्युदङुङ्जति" इति प्रकृत्याह "अन्तरा वा ऽएतदाहवनीयं च गार्हपत्यं चास्ते" इति ।

'श्रोणिं वोत्तरेण'इति तु शास्त्रात् । यद्येवं, श्रोणिमुत्तरेणैवेत्यव-

---

( १ ) अध्वर्युर्वेदिमपरेण वेदेः पश्चाद् गार्हपत्याहवनीययोरन्तराले होतुरुपवेशनार्थं वारणादिवृक्षजं शुष्ककुशैरास्तीर्णमासनं स्थापयित्वा ततः 'एहि होतः'इति होतारमामन्त्र्य तस्मिन्नागते सति इध्मादेकां समिधं हस्ते गृहीत्वा "अग्नये समिध्यमानायानुब्रूहि"इत्येवं होतारं प्रति ब्रवीतीति सूत्रार्थः ।

धारणा । ननु लिङ्गविरोधः । न । उद्गमनाविधिशेषत्वात् । "एष वा लोक ऽइत्युदङ्ङेजति" इत्यभिधाय संस्तौति "अन्तरा वाऽपत्दाहवनीयं च गार्हपत्यं चास्ते" इति । स चोपचारवृत्त्या अन्तराशब्दः अन्तरेणान्तरेति ।

इध्मात्समिधं गृहीत्वा "अग्नये समिध्यमानाय" इत्यमुं मन्त्रमाह । स चायमग्निशब्दो जात्यपेक्षः । जातेः पदार्थत्वात् । ततश्च वरुणप्रघासेष्वनूहः । दृश्यते च "आसाद्य हवी ँ ष्यग्निं मन्थति" इति प्रकृत्य "अध्वर्युरेवाहाग्नये समिध्यमानायानुब्रूहि" इत्यूहाभावः । तथा "प्रतिपराणीयोदेति प्रतिप्रस्थाता, सम्मृजन्त्यग्नीऽ सम्मृष्टेऽ ग्नौ" इति । तथा च 'अध्वर्युरेवाह ब्रह्मन्प्रस्थास्यामि समिधमाधायाग्निमग्नीत्सम्मृड्ढि' इत्येकवचनान्तोऽग्निशब्दः । एवं च सति आज्येऽपि तुल्यत्वादविपरिणाम एव "आज्येनोदेहि" इत्येवमादौ । ननु च "अग्निभ्यां प्रह्रियमाणाभ्यामनुब्रूहि" इति द्विवचनमपि दृश्यते । नच जातिपरे नोपपद्यत इति । नैष दोषः । वचनं हि तद् व्यक्तिपरम् । व्यक्तौ हि जातिशब्दमन्तरेण प्रत्यायनानुपपत्तिरिति ॥ १ ॥

## होतरिति चैके ॥ २ ॥

होतरित्येवं चैक आहुः । तच्चैतद्धोतृपदमनुब्रूहीत्यस्मात्प्राग्वक्तव्यम् । "तदुहैक ऽआहुरग्नये समिध्यमानाय होतरनुब्रूहि" इति वचनात् ॥ २ ॥

( स्विष्टकृतः प्राक् ऋचां निगदानां च प्रथमस्वरेण पाठः )

## प्रथमस्थानेन प्राक् स्विष्टकृतः (१) ॥ ३ ॥

स्थानशब्दः सवनाभिप्रायः ॥ ३ ॥

( स्विष्टकृतः प्रभृति इडान्तं तेषां मध्यमेन पाठः )

## मध्यमेनडायाः ॥ ४ ॥

स्विष्टकृत्प्रभृतीडान्तं मध्यमेन सवनेन(२) ॥ ४ ॥

---

( १ ) सर्वे ऋग्मन्त्रा निगदमन्त्राश्च स्विष्टकृतः प्राक् उपांश्वपेक्षया किञ्चिदुच्चैर्भवता स्वरेण प्रयोक्तव्या इति ।

( २ ) प्रयोज्यमित्यध्याहारः ।

(इडात उत्तरं तेषामुत्तमेन प्रयोगः)

(१)शेषमुत्तमेन ॥ ५ ॥

स चायं सवनधर्म उच्चैर्धर्मकाणाम्, न यजुषाम्। यस्य ह्युच्चैर्धर्मस्तस्य तद्गतो विशेषो वक्तुं युज्यते इति ॥ ५ ॥

(यजमानः "संतन्वन्निव" इति मन्त्रं पठेत्)

"सन्तन्वन्निव मेऽनुब्रूही"त्याह यजमानः ॥ ६ ॥

स चायं होतृसम्बोधनार्थत्वात् प्रोषितेन न प्रयोक्तव्यः। इहैव होतृसम्बोधनमन्यः करोति। तदुक्तं "गुणेषु प्रतिनिधिः परार्थत्वात्" इति। सत्रेषु चैक एवानुवदति। न ह्यत्रात्माभिवादिपदसम्बन्धेऽन्यात्मनः किं चित्प्रार्थ्यते, यदनुच्चारणे यजमानानां संस्कारपरिलोप आशङ्क्येत। तस्मादेक एवाहेति ॥ ६ ॥

(पादाभ्यामङ्गुष्ठाभ्यां भ्रातृव्यावबाधनं क्रत्वर्थम्)

अङ्गुष्ठाभ्यां चावबाधते पादाभ्यां वेदमहममुमवबाध ऽइति द्वेष्यम ॥ ७ ॥

अङ्गुष्ठाभ्यां चावबाधते। अवबाधनमाक्रमणम्। चशब्दाद्यजमानः। "इदमहममुमवबाधे" इत्यनेन मन्त्रेण द्वेष्यम्। एवं च अमुमित्यस्य स्थाने द्वेष्यस्य नामादेशः। स च क्रत्वर्थो, न पुरुषार्थः। भ्रातृव्यमित्युपदेशसामर्थ्यात्। यदि हि पुरुषार्थत्वं स्यात्त द्वेष्यस्याभावे भ्रातृव्यावबाधनमुपदिश्येत। उपदिश्यते च। तस्मात्क्रतूपकारार्थं द्वेष्यस्यावबाधनमिति निरवद्यम्।

पादाभ्यां वेति इयमवधारणा। माध्यन्दिनीयायां ह्यविशेषपाठः "तस्मादेतास्वनूच्यमानासु यं द्विष्यात्तमङ्गुष्ठाभ्यामवबाधेत" इति। काण्वीयायां तु विशेषपाठः "पादाभ्यामङ्गुष्ठाभ्याम्" इति। इष्यते च सामान्यस्य विशेषविषयता। अतो न विकल्पः, पादाभ्यामेवेत्यवधार्यत इति। "इदमहम्" इति च सत्यप्यात्माभिवादिपद-

(१) इडात आरभ्य कर्मापवर्गान्तं सर्वे ऋग्मन्त्रा निगदमन्त्राश्च उत्तमेन सवनेन प्रयोज्याः।

प्रयोगे पुरुषार्थरूपताऽभावात्सत्रेष्वविपरिणामः। अतएवैकः कुर्यादिति ॥ ७ ॥

( द्वेष्याभावे भ्रातृव्यपदप्रयोगेणाववाधनम् )

अभावे द्विषन्तं भ्रातृव्यमिति वा ॥ ८ ॥

द्वेष्यस्याभावे "द्विषन्तमववाधे" "भ्रातृव्यम्" (अववाधे) इति वा प्रयोगः। अत्र च क्रत्वर्थेऽप्यववाधने "अमुष्येति द्विषच्छब्देऽभिचरन्नन्यत्रापि" इत्यभिधानाद्यद्यभिचरन्नामादिशति तत उदकोपस्पर्शनं भवति। ननु च द्वेष्यद्विषतोर्नामादेशोऽवश्यम्भावी, तत्र को विशेष उच्यते। बुद्धिस्थ इति ब्रूमः। यदाऽभिचारबुद्ध्या नामादेशस्तदैवोदकस्पर्शनम्, न क्रत्वर्थरूपतायामिति।

अन्ये त्वत्र नैवाभिचारमिच्छन्ति। न ह्यत्र वचनमस्ति, यथा वज्राभिमर्शनजपे "द्विषतो वध इति यदि नाभिचरेत्" इत्युक्त्वा "यद्यु अभिचरेत् अमुष्य वध इति ब्रूयात्" इति। एवं स्फ्योदकप्रहरणेऽपि वचनम्। तथा स्तम्बयजुर्हरणे "यद्यु अभिचरेदमुमतो मा मौगिति ब्रूयात्" इति। वचनपूर्वकं च तत्सूत्रम् "अमुष्येति द्विषच्छब्देऽभिचरन्नन्यत्रापि" इति। न चेह वचनम्। अतोऽभिचाराभावान्नात्र उदकोपस्पर्शनम् ॥ ८ ॥

( सामिधेनीसंख्यां ज्ञात्वा तत्संख्यापूरणप्रत्ययान्तं पञ्चदशेनेत्यादिकमववाधनमन्त्रे प्रयोज्यम् )

यावत्सामिधेनि व्वेदेदमहं तावतिथेन व्वज्रेणेति ॥ ९ ॥

प्रयोगार्थमिदमारभ्यते—यावत्यः सामिधेन्योऽस्मिन्कर्मणीति वेद विजानीयात् "इदमहं तावतिथेन वज्रेण" इति(१)। ननु चात्र पञ्चदशैव सामिधेन्यः। तत्र यावत्सामिधेनि वेदेत्यवाच्यम्। सत्यमेवमेव हि ता अभिविधीयन्ते, अथ चैकविंशतिसंख्याप्रवृत्तिज्ञापनार्थम्। एकविंशतिसामिधेनीरपि दर्शपूर्णमासयोरनुब्रूयादिति। "इदमहममुमववाधे" इत्यत्राभिहित एव 'इदमहम्' इति शब्दे पुनरिहोच्चारणं "तावतिथेन वज्रेण" इत्यस्यावसरविधानार्थम्। 'तावतिथ' इति च पूरणप्रत्ययान्तः, तावतां पूरणस्तावतिथ इति। पञ्चदशानां

[ १ ] द्विषन्तमववाधे इति शेषः।

पूरणः पञ्चदश इति । यद्येवं पिड्यायां सामिधेनीत्रित्वे तीयप्रत्ययान्तत्वात् त्रिशब्दस्य तृतीयेनेति प्रयोगः । उपसत्सु च "नान्तादसंख्यादेर्मट्" इति मट्प्रत्ययान्तत्वान्नवशब्दस्य नवमेनेति प्रयोगः (१) ॥ ९ ॥

( सामिधेन्यन्ते होत्रा क्रियमाणप्रतिप्रणवप्रयोगकाले ऽध्वर्युरिध्माधानं कुर्यात् )

## प्रतिप्रणवमाधानम् ॥ १० ॥

सामिधेन्यनुवचनं कुर्वतो होतुः प्रणवे प्रणवे इध्माधानं कुर्यात् । स चायं कालार्थः संयोगः । उभयोरप्यग्न्यर्थत्वात् । इध्मो ह्यग्नीन्धनार्थः, सामिधेन्योऽपीध्यमानानुवादिन्यः । न च वचनमन्तरेण गुणयोर्गुणगुणितेष्यते । यत्तु "सामिधेनी याज्या इध्म एवाहुतिः" इति, स्तुतिमात्रं तत् कालार्थेऽप्युपपद्यते । प्रयोजनं मानुवादपचारादनुक्तायां सामिधेन्यां प्रक्षिप्ते इध्मकाष्ठे सामिधेन्यनूच्यतएवेति । उभयं चैतदिन्धनाभावे ऽवभृथादौ निवर्त्तते ॥ १० ॥

( "समिद्धो ऽअग्नऽआहुत" इत्येतत्सामिधेन्यनुवचनात्पूर्वम् अनुयाजघटितेष्टौ एकवर्जमिध्मजातमग्नावभ्यादध्यात् )

## समिद्ध ऽइति प्रागतः सर्वमिध्ममेकवर्जमनुयाजाश्चेत् ॥ ११ ॥

समिद्ध इत्यतः प्रतीकात् प्राक् यः प्रणवस्तत्र सर्वमिध्ममभ्यादधाति । एकमिध्मकाष्ठं वर्जयित्वा, यद्यनुयाजाः सन्ति । तच्चैतदिह अवैकल्पिकत्वादनुयाजानां विकृतिविषयम् ।

समिद्ध इत्यतःशब्दोपादानसामर्थ्यात् केचित्सामिधेनीविवृद्धावागन्तूनामन्त्यायां सर्वेध्मप्रक्षेपमिच्छन्ति । तत्पुनरनुपपन्नम् । प्रकृतौ हि "समिध्यमानो ऽअध्वर" इत्यस्याः प्रणवे सर्वेध्मप्रक्षेपः कृतो, विकृतावपि चोदकानुग्रहात्तत्रैव कार्यः । किं च यत्र बह्वचो धा-

---

[ १ ] तथा च 'इदमहं तृतीयेन, इदमहं नवमेन, इदमहं चतुर्विंशेन, इदमहमेकविंशेन' इत्येवं पिड्यायामुपसत्स्विष्टकापशौ प्राजापत्यपशौ च यथासंख्यं प्रयोगः ।

ध्या भवन्ति तत्रानुपपत्तिः । काष्ठानाम् "अष्टादशेध्मम्" इत्युक्तपरिमाणत्वात् । अथ विवृद्धिरुपगम्यते, सा हि निष्प्रमाणिका स्यात् । न हि सामिधेनीनामिध्मस्य च परस्परतोऽङ्गाङ्गिभावः । तस्मात् "समिद्ध इति प्रागत" इत्यत्र श्रुतिरनुकृता । एवं हि श्रवणं "समिद्धो ऽअग्न ऽआहुतेत्यतः प्राचीनः सर्वमिध्ममभ्यादध्यात्" इति॥११॥

( सामिधेन्यनुवचनान्ते वेदेन आहवनीयस्य त्रिरुपवाजनमदृष्टार्थं, स्रुवेण पूर्वाघारः, अग्निसंमार्जनप्रैषश्च )

अनुवचनान्ते वेदेनाहवनीयं त्रिरुपवाज्य स्रुवेण पूर्वमाघारमाघार्याहाग्निमग्नीत्सम्मृड्ढीति ॥ १२॥

अनुवचनान्तः सामिधेन्यन्त उच्यते । "त्रिरेव प्रथमां त्रिरुत्तमामनवानधन्नुब्रूयात् " इति हि प्रकृत्य आह "एतदनुवचनम्" इति । अपरं तु कल्पकारान्तराभिप्रायात् "सुयजा च यज" इत्येतदनुवचनं मन्यन्ते । तदभिप्रायः—"अग्ने महाँ असि ब्राह्मण भारत" इत्यादि इध्यमानाद्यनुवादितया सामिधेन्यनुवचनैकदेशभूतमिति ।

तदन्ते वेदेनाहवनीयस्य त्रिरुपवाजनं कृत्वा स्रुवेण पूर्वमाघारमाघारयति ।

तदेतदुपवाजनं प्रसिद्धितादर्थ्याद् दृष्टार्थम् । उचितं ह्यग्नौ काष्ठान्याधायेन्धनायोपवाजनमिति । धर्ममात्रं वा । द्रव्यविशेषनियमाद्वेदेनेति, संख्यानियमाच्च त्रिरिति । न च वेदद्रव्येण त्रित्वविशिष्टे उपवाजने दृष्टार्थाभिनिर्वृत्तिः । तस्माद्धर्ममात्रम् । प्रयोजनमबादावपि ( जलादावपि )क्रियते ।

स्रुवग्रहणं जुह्वा निवृत्त्यर्थम् । होमे हि जुहूः परिभाषितेति । आघारमिति संज्ञानिर्देशः । आघार्य इति च ऋज्वादिगुणपरिग्रहार्थम् । अत्र च प्रजापतिर्देवता । अनिरुक्तत्वात् । सूत्रकारप्रस्थानाच्च "पूर्वो देवतासामान्यात्" इति ।

स्वाहाकारः स्यात्, परिभाषितत्वात् "स्वाहाकारः सर्वत्र" इति । न वा प्रतिषिद्धत्वात् । "न स्वाहा" इति वचनात् "अनिरुक्तं हि मन" इति । परिभाषाऽन्यविषया ।

"अग्निमग्नीत्सम्मृड्ढि" इत्ययं मन्त्रश्चोदितार्थाभिधायी विकृतौ

विपरिणस्यते।

पदार्थत्वाच्च पूर्वाधारो यावदुक्ते निवर्त्तते।
उपवाजनं तु द्रव्यसंस्कारात्प्रवर्त्तते एव ॥ १२ ॥

( इध्मसंनहनैर्दर्भैः परिक्रम्यपरिक्रम्य परिधिमनुलक्ष्याग्निं दक्षिणक्रमेण त्रिस्त्रिरग्नीत्संमार्ष्टि )

इध्मसन्नहनैरनुपरिधि सम्मार्ष्ट्यग्ने व्वाजजिदिति त्रिस्त्रिः परिक्रामम् ॥ १३ ॥

इध्मसंनहनैः करणभूतैरनुपरिध्याग्नीं त्रिस्त्रिः परिक्रम्य परिक्रम्य संमार्ष्टि "अग्ने व्वाजजित्" इत्यनेन मन्त्रेण।

स चायं होमसाधनभूताहवनीयद्रव्यसंस्कारत्वात्सम्मार्गो यावदुक्तेऽपि प्रवर्त्तते।

मन्त्रस्तु चोदितार्थाभिधायित्वादवभृथेष्ट्यां विपरिणस्यते।

अत्र केचित् अग्निद्रव्याभिधायकत्वात्सकृन्मन्त्रवचनमिच्छन्ति। देशभेदान्नेत्यपरे। परिध्युपलक्षिता हि भिन्ना देशाः। तथा च लिङ्गम् "अथोपरिष्टात्तूष्णीं त्रिः" इति। प्रतिदिशं हि मन्त्रप्राप्तौ "तूष्णीम्" इति वचनमर्थवद्भवति। प्रतिदिशं तु सकृत्सकृन्मन्त्रवचनमिष्यते। तदुक्तम् "एकद्रव्ये कर्मावृत्तौ" इति ॥ १३ ॥

[ मध्ये तूष्णीं संमार्गः ]

तूष्णीमुपरि ॥ १४ ॥

णमुलवचनानुवृत्तिसामर्थ्यात्परिक्रम्येत्यत्रापि भवति।

"अनुपरिधि" इत्युपदेशसामर्थ्यात् यथोपाहितमिति केचित्।

नेत्यपरे। न ह्ययं परिधिसंस्कारो येनाभिप्रवृत्त्या तत्क्रम आश्रीयते। अग्निसंस्कारस्त्वयम्। तेन प्रदक्षिणोपचारोदक्संस्थतासम्पादनाय प्रथमं दक्षिणतः सम्मार्गः ॥ १४ ॥

[ आहवनीयस्य पश्चिमतः देवेभ्यः पुटाञ्जलिं करोति, दक्षिणतः पितृभ्य उत्तानं सव्येनैव ]

अपरमाहवनीयादञ्जलिं करोति नमो देवेभ्यः,

स्वधा पितृभ्य ऽइति दक्षिणत ऽउत्तानम् ॥ १५ ॥

आहवनीयस्यापरतो "नमो देवेभ्य" इत्यनेन मन्त्रेणाञ्जलिं करोति। नमस्कारार्थत्वाच्च पुटाञ्जलिं करोति। "स्वधा पितृभ्य" इत्यनेन दक्षिणत उत्तानमञ्जलिं करोति।

तदेतदञ्जलिकरणमुत्तराघारार्थम्। "स स्रुचोत्तरमाघारमाघारयिष्यन्पूर्वेण स्रुचावञ्जलिं निदधाति" इति वचनात्। प्रयोजनं तदभावे ऽभावः ॥ १५ ॥

[ जुहूपभृतावादाय जुहूमुत्तरां कृत्वा होमार्थं यागस्थानं गच्छेत् )

अप ऽउपस्पृश्य सुयमे म ऽइति जुहूपभृतावादायोत्तरां जुहूं कृत्वा दक्षिणाऽतिक्रामत्यङ्घ्रिणा विष्णविति ॥ १६ ॥

अपामुपस्पर्शनं "पित्र्यं मन्त्रमुक्त्वा" इति परिभाषितत्वादवाच्यम्। अतः प्राचीनावीतित्वादिव्युदासार्थम्।

"सुयमे मे" इत्यनेन मन्त्रेण जुहूपभृतावादत्ते। किं तूत्तरां जुहूं कृत्वा पूर्वतरम्। नन्वेतदवाच्यम्। "पाणिभ्यां जुहूं परिगृह्योपभृत्याधानमादानकाले" इत्युक्तत्वात्। उच्यते। तत् सर्वविषयम्, एतत् उत्तराघारार्थमित्यदोषः। सर्वार्थतयैवात्रापि प्राप्तेरवाच्यतेत्येवं चेत्। मन्त्रवदादानस्योत्तराघारार्थतां ज्ञापयति। इतरथा हि जुहूपभृतोरादानोद्देशेन विधानसामर्थ्यात्तदादानमात्रे प्रवृत्तिराशङ्क्येत। अथ पुनः "उत्तरां जुहूं कृत्वा" इतिसूत्रारम्भे सति सर्वार्थस्रुगादानादन्यदेतदिति ज्ञापितं भवति। ननु च पारिभाषिकस्य सर्वार्थता कथमवगम्यते। उच्यते। वाक्यस्याविशेषविषयत्वात् "इत्थमेव कुर्यादुभाभ्यामेव पाणिभ्यां जुहूं परिगृह्योपभृत्यधिनिदध्यात्" इति। इदं तूत्तराघारावान्तरप्रकरणात्तदर्थमिति निरवद्यम्।

दक्षिणाऽतिक्रामति "अङ्घ्रिणा विष्णो" इत्यनेन मन्त्रेण। यजतिस्थानं प्रति गमने मन्त्रः। अयमपि चोत्तराघारार्थगमनविषय एव, अवान्तरप्रकरणादेव ॥ १६ ॥

[ सर्वहोमार्थं परिधिपश्चिमतो गच्छेत् ]

(१)परिधीनपरेण सञ्चरो होष्यतः ॥ १७ ॥

इदं सर्वार्थम्। होष्यत इति सम्बन्धात् ॥ १७ ॥

[ यागदेशं गच्छन् सव्येन पादेनातिक्रामेत्, प्रत्यागच्छन् दक्षिणेन पादेनातिक्रामेत् ]

सव्येनेतो दक्षिणेनामुतः ॥ १८ ॥

गच्छतीत्यध्याहारः। इतो गच्छन् यजतिस्थानं सव्येन गच्छति, अमुत आगच्छन् दक्षिणेनेति। न च सव्यदक्षिणयोरितरेतरानिरपेक्षयोर्गमनसामर्थ्यमस्ति। तेन प्रवृत्त्युपलक्षणार्थं वचनम्।

एतदपि सर्वार्थमेव। अविशेषविधानसामर्थ्यात् "अथातोऽतिक्रमणस्य" इति हि प्रकृत्य "य ऽआश्रावयिष्यन्सव्येनातिक्रामति दक्षिणेनाश्राव्य" इति। ननु चैवं सति आश्रावणविशिष्टे एवातिक्रमणे सव्येतरपादनियमो भवति, न सर्वत्र। ततश्चोत्तराघारे न भवति। अत्रोच्यते। अतिक्रमणं हि प्रकृत्य सव्येतरपादनियमाभिधानम्। तस्मिंश्चाश्रावणेन विशेष्यमाणे विशिष्टानुवादलक्षणो वाक्यभेदः प्रसज्यते। अतः सर्वार्थंतत्युक्तम्। अत एव च सूत्रकारेणेहोपनिबद्धम्। आह च—

आश्रावणविशिष्टे तु नियमो यद्ययं भवेत्।
विशिष्टस्यानुवादत्वाद्वाक्यभेदः प्रसज्यते ॥तस्मात्सर्वार्थतैव॥१८॥

[ अवस्थायैवोत्तराघारं जुहुयात् ]

वसुमतीमित्यवस्थाय ॥ १९ ॥

इत ऽइन्द्र ऽइति जुहोत्युत्तराघारम् ॥ १ ॥

अवस्थानवचनमुपवेशननिषेधार्थम्। जुहोतित्वादृध्युपवेशनं प्राप्नोति। अतो वचनात्तिष्ठतिक्रियोच्यते। "तिष्ठंस्तमाघारयति यं

[ १ ] परिधीनां पश्चात्स्रुचां पूर्वेण होमं करिष्यतोऽध्वर्योर्गमनागमनमार्गः सञ्चरः।

घावऽआघारयति" इति हि श्रूयते । अत एव च दर्विहोमेष्वपि तिष्ठतैवोत्तराघार आघार्यते ॥ १९ ॥

इति तृतीये प्रथमा कण्डिका ॥

मन्त्रवर्णाच्चेन्द्रो देवता । ततश्च दर्विहोमेष्विन्द्राय स्वाहेति होमः। दक्षिणतश्च होमोऽस्य । "दक्षिणतस्तिष्ठन्नाघारयति" इति वचनात् । पूर्वाघारे तु जुहोतिस्थानादेवोत्तरत आघारणं सिद्धम् । आघारौ प्रकृत्य "स वृद्धुमयत ऽआघारयति" इति हि श्रूयते ।

स चायं पदार्थत्वाद्यावदुक्ते निवर्त्तते ।

प्रयाजार्थद्रव्येण वचनसामर्थ्यात्क्रियते—"चतुर्गृहीतं वा ऽएतदभूत्तस्याघारमाघार्य त्रिरितः प्राचीनं प्रयाजान्यजति" इति । प्रयाजार्थता चास्य वाचनिकी । "स यच्चतुर्जुह्वां गृह्णाति प्रयाजेभ्यो हि तत् गृह्णाति" इति । एवं च प्रयाजार्थद्रव्याभावे ऽवश्यकर्त्तव्यत्वादाघारस्य स्थाल्यादेवैकगृहीतेन निर्वर्त्यते, यथा दर्विहोमेषु ॥१॥

[ उत्तराघारमाघार्य स्रुचौ परस्परमसंस्पर्शयन् यागस्थानादेत्य ध्रुवां जुह्वास्थितेनाज्येन समनक्ति ]

आघार्यास ँ स्पर्शयन् स्रुचावेत्य जुह्वा ध्रुवा ँ समनक्ति संज्योतिषेति ॥ २ ॥

"जुहोत्युत्तराघारम्" इति क्रियानिर्देशादवाच्यम् "आघार्य" इति । उच्यते । ऋज्वाद्यर्थोऽयमारम्भः । श्रूयते हि "ऋजुमाघारयति (तथा) सन्ततं दीर्घं प्राञ्चम्" इति ।

असंस्पर्शयन्नसंलागयन् स्रुचौ, एत्य यजतिस्थानात् जुह्वा ध्रुवां समनक्ति "संज्योतिषा" इत्यनेन मन्त्रेण । गच्छतामित्यध्याहारः । यद्यपि जुह्वा श्रूयते तथाप्यञ्जनक्रियोपदेशसामर्थ्याज्जौहवपरतैव व्याख्या । ननु चैवं सति 'जौहवेनानक्ति' इति सूत्रमारब्धव्यम् । नेत्याह । तथा च सति स्रुवस्य करणता स्यात् । अथ पुनर्जुह्वेत्युक्ते तस्या एव करणतेति साधूक्तम् ।

स चायं ध्रुवासंस्कारोऽप्युत्तराघारे सति प्रवर्त्तते । एवं ह्याह— "शिरो वै यज्ञस्योत्तर ऽआघार ऽआत्मा वै ध्रुवा तदात्मन्येवैतद्यज्ञस्य शिरः प्रतिदधाति" इति ॥ २ ॥

( इध्मसंनहनान्यादायाध्वर्युराश्रावयेत् )

निधायेध्मसन्नहनान्यादायोश्रावयेत्याह ॥ ३ ॥

निधाय स्रुचौ, इध्मसन्नहनानि गृहीत्वा "ओश्रावय" इत्येवमाह । स्रुङ्निधानं च वाचानिकम् । इतरथा हि युक्तयोराप्रयोजनाभिनिर्वृत्तेरविमोकः स्यात् । एवं च सति स्फिदष्टकुदन्तेऽपि निधानोपदेश उपपद्यते "निधाय स्रुचमभ्युक्ष्य प्राशित्रमवद्यति" इति ॥ ३ ॥

( अग्नीत् प्रत्याश्रावयेत् )

अस्तु श्रौषडित्यग्नीत् ॥ ४ ॥

"अस्तु श्रौषट्" इत्येवं पुनरग्नीदाह ॥ ४ ॥

( वेदिबर्हिरादाय वा, इध्मशकलमपच्छिद्यादाय वाऽऽश्रावयेत् )

वेदिबर्हिरिध्मशकलमपच्छिद्यैके ॥ ५ ॥

आश्रावणं कुर्वन्ति । एवं ह्यत्र वचनम्—"तद्धैके वेदेः स्तीर्णायै बर्हिरभिपद्याश्रावयन्तीध्मस्य वा शकलमपच्छिद्याभिपद्याश्रावयन्ति" इति । एवं च इध्मशकलस्यापच्छेदो, बर्हिषस्त्वभिपत्तिमात्रमेव ॥ ५ ॥

( सर्वत्राश्रावणमध्वर्युः, प्रत्याश्रावणमग्नीत्कुर्यात् )

एवं सर्वत्राश्रुतप्रत्याश्रुतेषु ॥ ६ ॥

उपग्रहद्रव्याणि ( इध्मसंनहनादीनि ) इति केचित् । तदयुक्तम् । न ह्याश्रावणमात्रे विधानमेषामिति । होतृवरणे तु विधानमेषाम् "इदं वै किञ्चिद्यज्ञस्येदं यज्ञमभिपद्याथ होतारं प्रवृणे" इति ।

तस्मात् एवं सर्वत्र आश्रावणे ऽध्वर्युः प्रत्याश्रावणे चाग्नीदिति । तथा च लिङ्गम् "आश्रावयत्यध्वर्युस्तदग्नीध्र यज्ञ ऽउपावर्त्तते, सोऽग्नीध्रापव्याहरेदाप्रत्याश्रावणात्, प्रत्याश्रावयत्यग्नीत्तत्पुनरध्वर्युं यज्ञ ऽउपावर्त्तते" इति अध्वर्य्वग्नीधोराश्रुतप्रत्याश्रुते दर्शयति ॥ ६ ॥

( गृहीतेध्मसंनहन एवाध्वर्युराश्रावणप्रत्याश्रावणोत्तरं होतृसंस्काराय प्रवृणीते "अग्निर्देव" इत्यादिना )

अथ प्रवृणीतेऽग्निर्देवो दैव्यो होता देवान्यक्षद्विद्वांश्चिकित्वान्मनुष्वद्भरतवत् ॥ ७ ॥

अथेत्यवाच्यं, पाठादेव तदर्थप्राप्तेः । तेन वरणे यजमानस्य प्राप्तत्वादध्वर्य्वर्थोऽयमथशब्द इति केचित् । तदेतदनुपपन्नम् । आनत्यर्थे हि वरणे यजमानः परिभाषितो नादृष्टसंस्कारार्थे । न चैतदानत्यर्थम् । प्रवृत्तत्वाद्धोतुः । अतो यजमानस्याप्रवृत्तिरेव ।

अथशब्दप्रयोगस्तर्हि किमर्थः । इध्मसन्नहनादि गृहीत्वाऽऽश्रावणं कृतम्, तच्च तावन्मात्रे एव माभूत्, अत उपग्रहद्रव्यस्योत्तरत्रानुकर्षणार्थोऽथशब्दः । "अथ प्रवृणीते"–'गृहीतेनैवेध्मसन्नहनादिना प्रवृणीते' इत्येतदुक्तं भवति । तदर्थमेव ह्युपग्रहद्रव्यं श्रूयते "इदं वै किञ्चिद्यज्ञस्येदं यज्ञमभिपद्याथ होतारं प्रवृणे" इति ।

अथ वा आश्रुतप्रत्याश्रुतयोः प्रवरणार्थत्वज्ञापनायाथशब्दः । "स वै प्रवरायाश्रावयति" इति हि श्रूयते ।

"अग्निर्देवो दैव्य" इति देवताग्नेरभिधानं स्यात्, प्रकृतत्वात् ।

न वा सविशेषणत्वात् । होतृपदोपसंहितो ह्ययमग्निशब्दः । तेन स्विष्टकृदग्न्यभिधायकः स्यात् । दृश्यते हि तत्र होतृपदोपसंनहनम् आवाहने प्रयाजाज्यभागप्रधानदेवतासङ्कीर्तनोत्तरकालम् "अग्निं होत्रायावह" इति तदग्निं होत्राया वोढवाऽआह" इति । तथा स्विष्टकृति "यक्षदग्नेर्होतुः प्रिया धामानि" इति प्रकृत्याह–"तदस्माऽएतां देवा ऽआहुतिं कल्पयित्वाऽथैनं नैतद् भूयः समशमयन्" इति । स्विष्टकृदग्नेर्ह्याहुतिः परिकल्पिता । अतो होतृपदोपसंहितः स्विष्टकृदग्निः । तथा सूक्तवाके "अग्निर्होत्रेणेदं हविरजुषतावीवृधत" इति ।

तदेतन्नोपपद्यते । स्विष्टकृदग्नेरप्रकृतत्वात् । न हि स्विष्टकृन्मन्त्रोऽयम् । किं च होतृसंस्काराभिप्रवृत्तेः । तेनाग्निर्देवो दैव्यो होता स होतर्यध्यारोप्यते तदभिष्टवाय । एवं प्रकृतवस्त्वभिधायकत्वं मन्त्रस्याभ्युपगतं भवति । इतरथा ह्यप्रकृतवस्त्वन्तरार्थना प्रकृतवस्त्वभिधायकत्वैकवाक्यत्वे(संभवति)सत्ययुक्ताऽऽपद्यते । किं च एकवाक्यताऽनुपपत्तेः । न ह्यग्न्यनभिधायकत्वे एकवाक्यतोपपद्यते । "देवान्यक्षद्विद्वांश्चिकित्वान्" इति हि प्रकृत्य "भरतवत्" इत्याह । भरतश्चाग्निरभिधीयते "एष हि देवेभ्यो हव्यं भरति" इति । न चाग्निवदग्नेर्यष्टृत्वं सम्भवति । होतुस्तु सम्भवत्यग्निवद्यष्टृत्वम् । तेनाग्न्यभिधायकत्वे भरतवदितिदृष्टान्तानुपपत्तिः । किं च ब्रह्मण्वदिति च नोपपद्यते उक्तेनैव न्यायेन । ब्रह्म ह्यग्निरित्याह । एवं सति सर्वपदानां सामञ्ज-

स्येनैकवाक्यता। तस्माच्च स्विष्टकृदग्न्यभिधानार्थमिदमुच्चारणमिति।

चिन्तायाः प्रयोजनं—प्रधानदेवताऽभिधायकत्वे आग्नेयविकारे सौर्यादौ विपरिणामः, स्विष्टकृदग्न्यभिधायकत्वेऽवभृथेष्ट्याम्, अस्मदभिप्राये त्वविकृत एव सर्वत्र प्रयुज्यते ॥ ७ ॥

( यजमानार्षेयाणि वृणीतेऽध्वर्युः )

अमुवदमुवदिति यजमानार्षेयाण्याह परस्तादर्वाञ्चि त्रीणि ॥ ८ ॥

अमुवदिति आर्षेयोच्चारणम् । त्रीणीति कुतः । "त्रीन् वृणीते" इति वचनात् । इदं हि पितैवाग्रेऽथ पुत्रोऽथ पौत्र इति च लिङ्गात् । यजमानग्रहणं च ऋत्विगार्षेयव्युदासार्थम् ॥ ८ ॥

यावन्तो वा मन्त्रकृतः ॥ ९ ॥

वाशब्दः पक्षान्तरपरिग्रहे । यावन्तो मन्त्रकृतस्तावतो नियमेनैव प्रवृणीते, न त्रीणीति । तत्कथम् । "आर्षेयं प्रवृणीते" इत्येषोऽत्र विधिः । "एकं वृणीते द्वौ वृणीते त्रीन् वृणीते" इत्यनुवादः । तथा "न चतुरो वृणीते न पञ्चाति वृणीते" इति । आर्षेयाणि ह्येकत्वद्वित्वत्रित्वपञ्चत्वपरिच्छिन्नानि प्रावरिकायां पठ्यन्ते । तेन "आर्षेयं वृणीते" इतीयतैव यावन्ति यस्य प्राप्नुवन्ति तावन्त्येव व्रियन्ते । त्रित्वविधानं तु केवलमेकत्वद्वित्वयोरिवावयुत्यवादसम्भवमात्रादेवाभ्युपेयते(१) ।

मन्त्रकृतो मन्त्रदृश उच्यन्ते । न हि मन्त्राणां करणं भवति । अनित्यत्वप्रसङ्गात् । तेन दर्शनार्थः कृञिति अध्यवसीयते । दृश्यते चानेकार्थता धातूनाम् । "गन्धनावक्षेपणसेवनसाहसिक्यप्रतियत्नप्रकथनोपयोगेषु कृञः" इति आत्मनेपदप्रतिपादने गन्धनादीनर्थान् कृञो दर्शयति ॥ ९ ॥

---

(१) अत्र "ऊर्ध्वज्ञुमासीनः होतारं वृणीते मनुष्वद्भरतवदमुवदिति यथार्षेयो यजमानस्त्रीण्यथ ऽऋषि मन्त्रकृतो वृणीते ऽपि वा एकं द्वौ त्रीन् पञ्च न पञ्चातिवृणीते" इत्यापस्तम्बवचनमप्यनुकूलम् ।

( राज्ञः स्वार्षेयेण पुरोहितार्षेयेण वा वरणम् )

(१)पुरोहितार्षेयेण वा ॥ १० ॥

तच्चैतद्राजविषयम् । पुरोहितोपपत्तेः । तथाचोत्तरसूत्रम् ॥१०॥

[ अभिषेकक्रियारहितस्य क्षत्रियस्य, वैश्यस्य च नित्यं पुरोहितार्षेयेण वरणम् ]

क्षत्रियवैश्ययोश्च नित्यम् ॥ ११ ॥

क्षत्रियोऽभिषेकक्रियारहितोऽभिप्रेतः, अधस्तनसूत्रारम्भवैयर्थ्यप्रसङ्गात् । अनयोर्नित्यं पुरोहितार्षेयोच्चारणं, राज्ञस्तु विकल्पः ॥ ११ ॥

( सर्वेषां ब्राह्मणादीनां मनुवदिति वा प्रवरणम् )

मनुवदिति वा सर्वेषाम् ॥ १२ ॥

ब्राह्मणादीनां मनुवदिति प्रवरणम् । तच्च सकृदेव । अभ्यासे कारणाभावात्(२) । यच्चोक्तम् "इदं हि पितैवाग्रेऽथ पुत्रोथ पौत्र" इति, तत् प्रदर्शनार्थम् ॥ १२ ॥

[ यजमानार्षेयप्रवरणान्ते "ब्रह्मण्वत्" इत्यादिकं होतृनामग्रहणान्तं मन्त्रं ब्रूयात् ]

(३)ब्रह्मण्वदा च वक्षद् ब्राह्मणा ऽअस्य यज्ञस्य प्रावितारोऽसौ मानुष इति होतृनामग्रहणम् ॥ १३ ॥

ब्रह्मण्वदित्यारभ्य होतृनामग्रहणान्तो मन्त्रः ॥ १३ ॥

---

( १ ) राज्ञो यजमानस्य पुरोहितार्षेयाणि स्वकीयानि वा वृणीते इत्यर्थः ।

( २ ) आपस्तम्बः 'पुरोहितस्य प्रवरेण राजा वृणीते' इति, 'अपि वा नार्षेयं वृणीते मनुवदित्येव ब्रूयात्' इति च । मनुः 'यद्यब्राह्मणो यजेत पुरोहितस्य प्रवरेण प्रवृणीयात्' इति ।

( ३ ) आर्षेयोच्चारणादनन्तरं ब्रह्मण्वदित्यादिकं मन्त्रशेषं ब्रूयात् । तदन्ते "असौ मानुष"इत्यत्रासावित्यस्य पदस्य स्थाने अमुकशर्मेति होतुर्नामग्रहणं कुर्यात् ।

[ उपांशु वा होतुर्नाम गृह्णीयात् ]

उपाꣳशु वा ॥ १४ ॥

होतृनामग्रहणं भवति। एवमपि हि श्रूयते । तच्चैतद्धोतृवरणमदृष्टसंस्कारः। तथा च यावदुक्तेऽपि प्रवर्त्तते ॥ १४ ॥

[ होत्रा संमृष्टौ अध्वर्य्वग्नीधौ उपविशतः ]

सम्मृष्टा ऽउपविशतः ॥ १५ ॥

"अथाध्वर्युं चाग्नीधं च संमृशति" इति सम्मर्शनविधानात् तावेवोपविशतः, सन्निधानात् ॥ १५ ॥

[ अग्निर्होतेति स्रुगादापनमन्त्रस्य अवान्तरप्रकरणरूपसन्निधेः प्रयाजाङ्गत्वम् ]

अग्निर्होतेति स्रुगादापनं प्रयाजेषु सन्निधेः ॥ १६ ॥

स्रुगादापनविधानसामर्थ्यात् (१)सर्वत्र परिप्राप्ताविदमुच्यते-"सन्निधेः" इति। सन्निधानात्प्रयाजार्थंस्रुगादापनविषयतैवास्य वाक्यस्य। एवं च सति पशावेकादशप्रयाजोत्कर्षे पुनरुच्चारणम् ॥१६॥

( "घृतवतीम्" इति मन्त्रे होत्रा पठिते अध्वर्युः स्रुचावादायातिक्रम्याश्राव्य "समिधो यज" इति प्रेष्य होत्रा वषट्कृते समिद्धतमे जुहुयात् )

घृतवतीमित्युक्ते स्रुचावादायातिक्रम्याश्राव्याह समिधो यजेति पञ्च प्रयाजान्समिद्धतमे ॥ १७ ॥

घृतवतीमित्यस्मिन्सकले मन्त्रवाक्ये उक्ते स्रुचौ गृहीत्वाऽतिक्रम्याश्रावयति। ततश्च पुरोऽनुवाक्याऽभावः। "अथ यदपुरोनुवाक्यकाः प्रयाजा भवन्ति" इति श्रूयते। पञ्चग्रहणं कर्मभेदज्ञापनार्थम्। पञ्च ह्येतानि कर्माणि। "समिद्धहोमेन ह्येव समृद्धा आहुतय" इति वचनात् 'समिद्धतमे' इत्युक्तम् ॥ १७ ॥

( द्वितीयादिप्रयाजेषु यजेत्येव प्रैषः )

यज यजेति शेषम् ॥ १८ ॥

---

( १ ) अन्वर्थसंज्ञाविधानात् सर्वत्र प्राप्नोति, तेन प्रयाजेष्विति

समिधो यजेति हि प्रथममुक्तम् । शेषं यज यजेत्येवं वक्तव्यम् । "अग्ने यज यजेत्येवोत्तरानाह" इति वचनात् ॥ १८ ॥

( एकत्रैव तिष्ठन् समिद्धतमे पञ्चापि प्रयाजान् जुहुयात् )

[१] ध्रुवस्तिष्ठन् ॥ १९ ॥

इति वचनम् । अभिक्रमणमुत्तरसूत्रे वक्ष्यति ॥ १९ ॥

(आहवनीयसंमुखं गत्वागत्वा प्राक्संस्थान् पञ्च प्रयाजान् जुहुयात्)

(२)पूर्वं पूर्वं वाऽभिक्रामम् ॥ २० ॥

णमुलयम् । ततश्चाभिक्रम्याभिक्रम्येति द्रष्टव्यम् । तस्मादभितरामभितरामेव क्रामेदभितरामभितरामाहुतीर्जुहुयादिति । तेन ध्रुवपक्षे समिद्धतमे, अभिक्रमणपक्षे पूर्वं पूर्वमिति ॥ २० ॥

( जुह्वां चतुर्गृहीतेन त्रीन्प्रयाजान् हुत्वा चतुर्थ-पञ्चमप्रयाजार्थं जुह्वामुपभृत आनयति )

उपभृतो जुह्वामानयत्यनवमृशंश्चतुर्थम् ॥२१॥

चतुर्थप्रयाजं प्रति उपभृतो जुह्वामानयति । तच्चानवमृशन् स्रुचौ । "स वा अनवमृशन्समानयति" इति (३) ॥ २१ ॥

---

नियम्यते; समाख्यातः सन्निधेर्बलवत्त्वादित्याशयः ।

( १ ) एकस्मिन् स्थाने स्तम्भ इव तिष्ठन् पञ्च प्रयाजान् यजति, अपक्रमणकारणे सत्यपि नापक्रामेदिति भावः । अत्र 'सर्वान्वैकष्यम्' इत्यापस्तम्बसूत्रमुपोद्बलकम् ।

( २ ) अभिक्रम्याभिक्रम्याहवनीयसंमुखं गमनं कृत्वा पूर्वं पूर्वं प्राक्संस्थपङ्क्त्या पञ्चापि प्रयाजान् पृथक् पृथक् स्थाने जुहोतीत्यर्थः । 'पञ्च प्रयाजान् प्राचः, प्रतिदिशं वा–समिधः पुरस्तात् , तनूनपातं दक्षिणतः, इडः पश्चाद्, बर्हिरुत्तरतः, स्वाहाकारं मध्ये' इत्यापस्तम्बसूत्रे ।

[ ३ ] आपस्तम्बः—'त्रीनिष्ट्वाऽर्धमौपभृतस्य जुह्वामानीय प्रत्याक्रम्य शेषेण ध्रुवामभिघार्यानुपूर्वं हवींष्यभिघारयन्त्युपभृतमन्तत' इति ।

अधिकारमुपजीवन्नाह—

( प्रयाजवृद्धौ चतुर्थेचतुर्थे उपभृतः समानयनम् )

एवं प्रवृद्धौ ॥ २२ ॥

प्रयाजप्रवृद्धौ चतुर्थे चतुर्थे समानयति[१] ॥ २२ ॥

( अनुयाजवृद्धौच चतुर्थे चतुर्थे समानयनम् )

अनुयाजेषु च ॥ २३ ॥

एवमेव प्रतिपत्तव्यम् ॥ २३ ॥

[ जुहूमध्युह्याध्युह्य प्राचीमवतार्य सर्वत्र जुहुयात् ]

उत्तरा जुहूमध्युह्य प्राचीमवहृत्य जुहोति ॥ २४ ॥

उत्तरैव जुहूरित्यत्राच्यम् "उत्तराम्" इति। तेनोत्तरां प्राचीमवहृत्ये-ति सम्बन्धः। "इत्थमेव कुर्यात् प्राचीमेव स्रुचमुपावहृत्य" इति हि श्रूयते। अध्युह्याध्युह्य जुहोति न सकृदवतारितया। "हुत्वा तेनैवा-धिहृत्योपभृत्यधिनिदध्यात्" इति वचनात् ॥ २४ ॥

एवं सर्वत्र ॥ २५ ॥

न प्रयाजमामात्रे एवैतत्। न हि प्रयाजान् प्रकृत्य श्रूयते इदम्। होममात्रोद्देशेन चेह श्रवणम् "अथातो होमस्यैव" इति प्रकृत्यैतच्छ्-रूयते इति ॥ २५ ॥

इति तृतीयाध्याये द्वितीया कण्डिका।

( जुहूपभृतोः सर्वहोमेषु नाभिदेशे धारणम् )

नाभिदेशे धारणम् ॥ १ ॥

प्रकृतयोर्जुहूपभृतोः। "अथातो धारणस्यैव" इति हि प्रकृत्याम-नन्ति "अथ हैष मध्यमः प्राणस्तस्मादु तमुपन्यच्येवैव धारयेत्" इति। सर्वत्रशब्दश्चानुवर्त्तते। तथा च सर्वविषयमेतद्धारणं भव-ति, न प्रयाजेष्वेव। अनारभ्य ह्येतत्पठ्यते ॥ १ ॥

---

[१] अत एव 'चतुर्थसप्तमदशमेषु समानयन्ति' इति याज्ञिकोक्तिः।

( प्रथमे प्रयाजे इष्टे "एको ममैका तस्य" इत्यादिकमनुमन्त्र-णं यजमानः कुर्यात् )

प्रयाजानुमन्त्रणमेको ममैका तस्य योऽस्मान्द्वेष्टि यं च वयं द्विष्म इति ॥ २ ॥

प्रयाजे इष्टे सत्यनुमन्त्रणं कर्त्तव्यम् "एको मम" इति । तच्चैतद्या-जमानम्, अकरणत्वात् । आत्माभिवादिपदसम्बन्धे सत्यप्याशीर्यो-गाभावात् अनेकयजमानके कर्मण्यविपरिणामः ॥ २ ॥

( द्वितीय-तृतीय-चतुर्थेषु प्रयाजेषु इष्टेषु क्रमेण "द्वौ मम द्वे त-स्य" त्रयो मम तिस्रस्तस्य" "चत्वारो मम चतस्रस्तस्य" इत्या-दिकमनुमन्त्रणम् )

एवं मिथुनैर्यथासंख्यम् ॥ ३ ॥

उत्तरत्र यथासंख्यमेवमनुमन्त्रणानि कार्याणि । एवं ह्याम्ना-यते-"तस्मात्प्रथमे प्रयाजऽइष्टे ब्रूयादेको ममेति, तथा द्वौ ममेति द्वि-तीये प्रयाजे, त्रयो ममेति तृतीये प्रयाजे" इत्येवमादि । तदेवमर्थं लाघविक आचार्यः सूत्रयति "एवं मिथुनैर्यथासंख्यम्" इति ॥ ४ ॥

[ "पञ्च मम न तस्य किंचन" इत्यादिकं पञ्चमे इष्टे )

न तस्य किंचनेति पञ्चमे ॥ ४ ॥

"पञ्च मम न तस्य किं चन" इत्येवं पञ्चमे प्रयाजे प्रयोगः ॥ ४ ॥

( पञ्चसु प्रयाजेषु क्रमेण "त्विषिमान्" "अपचितिमान्" "य-शस्वी" "ब्रह्मवर्चसी" "अन्नादः" इत्येतैश्च 'भूयासम्' इत्येतत्पद-विशिष्टैः अनुमन्त्रणं कर्तव्यम् )

त्विषिमानपचितिमान्यशस्वी ब्रह्मवर्चस्यन्नाद इति च॥५॥

एतैश्च यथासंख्यमनुमन्त्रयेत । साकाङ्क्षत्वात् भूयासमिति प्रतिपदमध्याहारः । स च श्रुतावभिहित एव "स प्रथमं प्रयाज-मनुमन्त्रयेत त्विषिमान भूयासम्" इति ।

पूर्वस्माच्चैतदनुमन्त्रणं भिद्यते । पृथग्विधानसामर्थ्यात् । प्रयो-जनम् असंहितावत्प्रयोगः ।

'त्विषिमान्भूयासम्' इत्येवमादि आशीर्योगसामर्थ्यादनेकयज-

मानके विपरिणस्यते ।

अनुमन्त्रणस्य चासन्निपातात्प्रोषितोऽपि यजमानः करोति ॥५॥

[ प्रयाजवृद्धौ आगन्तूनां प्रयाजानां पञ्चमधर्मसम्बन्धः ]

आगन्तूनां चतुर्थपञ्चमाभ्या॰ स्थानात् ॥ ६ ॥

"नव प्रयाजान्यजति" इत्येवमादौ प्रयाजधर्मपरिप्राप्तौ सन्देह इदमारभ्यते । आगन्तूनां चतुर्थपञ्चमाभ्यां यो धर्मः प्राप्तस्तेन सम्बन्धं कुर्यात् । स चानुमन्त्रणस्थानादिकः । कुत एतत् । स्थानात् । क्रमादित्यर्थः । चतुर्थपञ्चमयोर्ह्यन्तराले आगन्तवः पठ्यन्ते । अतश्च सन्निधानात्तद्धर्मसम्बन्ध इष्यते । धर्मापेक्षायां हि सन्निहितव्यतिक्रमे कारणं नास्ति ॥ ६ ॥

प्रथमचतुर्थाभ्यां वा यथालिङ्गम् ॥ ७ ॥

प्रथमचतुर्थयोर्वा धर्मेण सम्बन्धः कर्त्तव्यो, लिङ्गात् । यो बहुदेवत्यस्तस्य प्रथमधर्मः, य एकदेवत्यस्तस्य चतुर्थधर्म इति । लिङ्गं ह्यत्र पर्युपस्थापकम् । ननु चैवं सति द्वितीयतृतीययोरप्यविशेषाद्धर्मप्रवृत्त्या भवितव्यम् । नेत्युच्यते । प्रथमचतुर्थयोर्हि कारणमन्यदप्यस्ति । एकत्र प्राथम्यमितरत्रानन्तर्यम् ॥ ७ ॥

( १ ) सर्वान्वोत्तमेनोपायित्वात् ॥ ८ ॥

अथ वा उत्तमधर्मेण सर्वान् सम्बध्नीयात् । कुत एतत् । उपायित्वात् । तमेव पञ्चमं होतव्यं प्रति तत्साकल्यसञ्जननाय उपायिन आगन्तवः । कथमवगम्यते । येन "नव प्रयाजान्यजति" इत्यत्राभ्यासेन संख्या पूरयितव्या । न हि नवैतानि कर्माणि । उत्पन्नसंयोगात्संख्यायाः । एवं च सति न्यायादन्त्यस्याभ्यासः प्राप्नोति । न हि पूर्वमेवाभ्यासो युज्यते इत्यन्त्यस्याभ्यासोऽयम् । तेन पञ्चमधर्मसम्बन्ध एवात्र युज्यते(२) ॥ ८ ॥

---

(१) सिद्धान्तमाह ।

(२) एवं च प्रयाजवृद्धौ सर्वत्र "पञ्च मम न तस्य किञ्चन योऽस्मान् द्वेष्टि यञ्च वयं द्विष्मः, अन्नादो भूयासम्" इत्येवानुमन्त्रणम् । अत्र तनूनपान्नाराशंसयोर्विकल्पः, शतपथे विशेषाश्रवणेऽपि शाखान्तरे विशेषश्रुतेः ।

( प्रयाजान् हुत्वा यागस्थानादेत्य जुह्वा ध्रुवाया आग्नेयादिहविषामुपभृतश्चाभिघारणं जुहूरिक्तत्वार्थं न स्थाल्याः )

एत्य जुह्वाऽभिघारणं ध्रुवाया हविष ऽउपभृतश्च ॥ ९॥

सन्निधानाद्यजतिस्थानस्थितस्यैवाभिघारणं मा भूदित्यत 'एत्य' इत्युच्यते।

ध्रुवादीनामुच्चारणं स्थालीव्युदासार्थम्। तत्कथम्। न हि स्थाल्यामभिघारणस्य प्राप्तिरस्ति। उत्तमप्रयाजसङ्कीर्त्तितदेवतासम्बद्धहविरभिघारणमत्रेष्यते। तच्च ध्रौवं, पुरोडाशौ औपभृतं च। एवं ह्यत्र वाक्यशेषः "तऽउत्तमे प्रयाजे स्वाहाकारेणैव सर्वं यज्ञं समस्थापयन्" इति प्रकृत्याग्न्यादयः सङ्कीर्त्तिताः। ततश्चात्रैव सर्वयागपरिसमाप्त्या यातयामानि हवींषि संवृत्तानीति पुनराह "ते देवाऽअकामयन्त कथं न्विमं यज्ञं पुनराप्याययेम"इति प्रकृत्य "स यज्जुह्वामाज्यं परिशिष्टमासीत्तेन यज्ञं समस्थापयंस्तेनैव यथापूर्वं हवीꣳष्यभ्यघारयन्" इति। ततश्च स्थाल्या अनभिघारणम्।

हविःशब्दश्चात्र गोबलीवर्दन्यायेन पुरोडाशयोर्वर्त्तते।

अत्रैतद्विचार्यते। किं हविःसंस्कारोऽयमुत प्रयाजशेषप्रतिपत्तिः। किं तावत् प्राप्तम्। हविःसंस्कारोऽयं, द्वितीयानिर्देशात्। द्रव्ये च तृतीया श्रूयते "प्रयाजशेषेण हवीꣳष्यभिघारयति" इति। लिङ्गाच्च "पुनरेवैनानि तदाप्याययत्ययातयामानि करोति" इति।

प्रयाजशेषप्रतिपत्तिर्वा, दृष्टार्थत्वात्। दृष्टो ह्यत्रार्थो जुह्वा रिक्तता। तया ह्याज्यभागाविज्येते। अतस्तद्द्रव्यसंसर्गाभावे दृष्टार्थता। इतरथा हि हविरभिघारणाददृष्टं कल्प्येत। तच्चान्याय्यं दृष्टे सति। यदुक्तं हविषि द्वितीया द्रव्ये च तृतीया। तत्रापि वस्तुबलात्तृतीया द्वितीयार्थे, द्वितीया च सप्तम्यर्थे "सुपां सुपो भवन्ति"इति। लिङ्गं त्वर्थवादप्रायम्। चिन्तायाः प्रयोजनम्—हविःसंस्कारे पशुपुरोडाशाभिघारणार्थं प्रयाजशेषः स्थापयितव्यः, शेषप्रतिपत्तौ सन्निहितेष्वेव कार्यं इति ॥ ९ ॥

( प्रयाजानन्तरमाज्यभागानुष्ठानम् )

आज्यभागाभ्यां चरत्याग्नेयेन सौम्येन ॥ १० ॥

आज्यभागाविति कर्मणोः संज्ञा। असौ च संव्यवहारार्था

"आज्यभागप्रभृतीडान्तमेके" इत्येवमाद्यर्थौ । ताभ्यां चरति । चरतिरनुष्ठानार्थः । तावनुतिष्ठतीत्यर्थः । स चैक आग्नेयो ऽपरः सौम्यः । अग्निदेवत्य आग्नेयः । सोमदेवत्यश्च सौम्यः । स्मर्यते हि देवतातद्धितः "अग्नेर्ढक्" "सोमाट् ट्यण्" इति च । आग्नेयमस्मिन् कर्मणि द्रव्यमित्याग्नेयः । एवं सौम्यः ॥ १० ॥

(सवषट्कारासु आहुतिषु चतुरवत्तं होतव्यम् )

चतुरवत्तं सवषट्कारासु ॥ ११ ॥

सवषट्कारास्वाहुतिषु चतुरवत्तं(१) होतव्यम् । "चतुरवत्तं जुहोति" इति हि श्रूयते ॥ ११ ॥

( "आप्यायतां ध्रुवा" इत्यादिना मन्त्रेण ध्रुवामभिघारयेत् )

अनिधायावदायावदाय ध्रुवामभिघारयति, "आप्यायतां ध्रुवा हविषा घृतेन यज्ञं यज्ञं प्रति देवयद्भ्यः । सूर्याया ऽऊधो ऽअदित्या ऽउपस्थ ऽउरुधारा पृथिवी यज्ञे ऽअस्मिन्" निति ॥ १२ ॥

अनेन मन्त्रेण । अनिधाय स्रुचावित्युच्यते । वाचनिको हि तयोर्विमोकः "ते ऽएतत्स्विष्टकृति विमोचनमागच्छतः" इत्यादि । "अवदायावदाय" इति वीप्सा प्रतिस्रुचविषया । चतुरवत्तविषयत्वे ह्यनुपपत्तिः । "आहवनीययजतयो ध्रुवायाः" इति परिभाषितम् । अतस्तदभिघारणमुच्यते । आज्यभागयोर्यजतित्वाद्याज्यापुरोऽनुवाक्यावत्त्वम् ।

अनुवाक्या च प्रेषितेनानूच्यते । तत्रैतत्सन्दिह्यते—किमवदानोत्तरकालमनुवाचनम्, उत सह, आहोस्वित्पूर्वमिति? । न चेहाचार्येण विशेषः प्रदर्शितः । किं तु विकृतावनुप्रवृत्तिर्दृश्यते । पशौ गृहीत्वाऽनुवाचनम् । तत्पुरोडाशे च सहानुवाचनम् "अवद्यन्नाह इन्द्राग्निभ्याम्" इति । क्वचिच्च पूर्वानुवाचनम् । यथा वरुणप्रघासेषु मारुत्यां, "स-

(१) एतच्च आज्ययागपरम् । पुरोडाश-सान्नाय्ययोः परिभाषायामुक्तत्वात् । अत एव "आज्यग्रहणमादवत्येन" इत्यत्रापि प्रवर्तते इति बोध्यम् ।

व्येन स्रुचौ गृहीत्वा" इति । तत्र पूर्वानुवाचनमेव युज्यते । तस्य हि विकृत्यनुप्रवृत्तिदर्शनं मा भूत्यामित्युक्तम् । नन्वितरयोरप्यस्ति । सत्यमेवम् । तत्तु वाचनिकम् । अस्यापि वाचनिकत्वमिति चेत् । न । वचनस्यान्यपरत्वात् । वाससआलम्भोऽत्र विधीयते । स च अप्राप्तः । तस्मात्पूर्वानुवाचनं प्रकृतितः प्राप्तमेवानूद्यते इति । पशुपुरोडाशादौ त्वनन्यपरत्वात् वचनस्य सहानुवाचनादिपरतैव । तस्मात्पूर्वमनुवाचनम्, ततोऽवदानं, पुनरतिक्रम्य प्रैषवचनमिति । तदपि प्रदर्शितमाचार्येण "अतिक्रम्याश्राव्याह समिधो यज" इत्येवमादौ (१)सर्वयज्ञातिष्वेष एव क्रम इति ॥ १२ ॥

( अनुब्रूहि इतिप्रैषानन्तरम् अध्वर्युर्होता च नापव्याहरेत् आश्रावणपर्यन्तम् )

## अनुब्रूहीत्युक्त्वा नापव्याहरेद्धोता चाश्रावणात् ॥ १३ ॥

अनुवाचनोत्तरकालमध्वर्युर्नापव्याहरेत्, होता च-आश्रावणं यावत् ॥ १३ ॥

( आश्रावणोत्तरं प्रत्याश्रावणात्पूर्वमग्नीन्नापव्याहरेत् )

## ( २ ) आश्राविते॒ऽग्नीदाप्रत्याश्रावणात् ॥ १४ ॥

प्रत्याश्रावणम् "अस्तु श्रौषट्" इति । आ तत इत्येतदुक्तं भवति ॥ १४ ॥

---

( १ ) आपस्तम्बः 'आग्नेयः सौम्यश्चाज्यहविषा वाज्यभागौ चतुर्गृहीताभ्यां जमदग्नीनां तु पञ्चावत्ताभ्यामथ जामदग्न्यो जामदग्न्यमामन्त्र्य पञ्चावत्तं कुर्वीत सर्वत्रावदास्यन्नुच्चैः अनुब्रूहीति पुरोनुवाक्यां सम्प्रेष्यत्यवदायावदाय स्रुवेण प्रस्तरबर्हिः समज्य जुहूपभृतावादाय दक्षिणाऽतिक्रम्याश्राव्य प्रत्याश्राविते॒ऽसु यजेति याज्यामिति सार्वत्रिकम्' इति ।

( २ ) अध्वर्युणा आश्रावणे कृते आ प्रत्याश्रावणमग्नीन्नापव्याहरेत् । 'ओश्रावय' 'अस्तु श्रौषट्' इत्यनयोरन्तरा नापव्याहरणमग्नीध इति ।

( "अस्तु श्रौषट्" इति प्रत्याश्रावणानन्तरमध्वर्युः यजेतिप्रैषात्पूर्वं नापव्याहरेत् )

प्रत्याश्राविते ऽध्वर्युराहोतृप्रैषात् ॥ १५ ॥

यजेति होतृप्रैषः, आ ततो नापव्याहरेदिति ॥ १५ ॥

( यजेतिप्रैषानन्तरं होता वषट्कारात्प्राग् न व्याहरेत् )

होता ऽऽवषट्कारात् ॥ १६ ॥

नापव्याहरेदिति वर्त्तते। "सोऽनुब्रूहीत्येवोक्त्वाऽध्वर्युर्नापव्याहरेत्" इति प्रक्रम्यैतच्छ्रूयते ॥ १६ ॥

( सोमयागेऽध्वर्युर्ग्रहं गृहीत्वा स्तोत्रोपाकरणात्पूर्वं नापव्याहरेत् )

सोमे च ग्रहं गृहीत्वोपाकरणात् ॥ १७ ॥

सोमे चाध्वर्युर्ग्रहं गृहीत्वा नापव्याहरेत् आस्तोत्रोपाकरणात् ॥१७॥

( उद्गात्रादयः "एषोत्तमा" इति होतृप्रैषात्पूर्वं स्तोत्रोपाकरणानन्तरं न व्याहरेयुः )

उपाकृत ऽउद्गातार ऽआहोतृप्रैषात् ॥ १८ ॥

उपाकृते स्तोत्रे उद्गातारो नापव्याहरेयुः, आहोतृप्रैषात्। होतृप्रैषश्च उत्तमस्तोत्रियायाः प्रस्तावसमनन्तरं "एषोत्तमा" इति, येन होता सम्बोध्यते ॥ १८ ॥

( सोमयागे होत्रादयो ग्रहसंबद्धहोमवषट्कारात्पूर्वं न व्याहरेयुः )

(१)होताऽऽवषट्कारात् ॥ १९ ॥

नापव्याहरेदिति वर्त्तते। कियन्तं कालम्। आ ग्रहसम्बद्धहोमवषट्कारात्। "अथ सौम्येऽध्वरे स वै ग्रहं गृहीत्वाऽध्वर्युर्नापव्याहरेत्" इति प्रकृत्यैतदपि श्रूयते ॥ १९ ॥

---

(१) सूत्रे होतृग्रहणं सकलशस्त्रकर्तृणामुपलक्षकम्, तेन प्रशास्त्रादयोऽपि "एषोत्तमा" इति प्रैषोत्तरं शस्त्रव्यतिरिक्तं किमपि न ब्रूयुः।

( आहवनीयस्येशाने आग्नेयमाज्यभागं, तस्यैवाग्नेये सौम्यं,
द्वयं वा समिद्धतमे जुहुयात् )

आग्नेयमुत्तरपूर्वार्द्धे, दक्षिणपूर्वार्द्धे सौम्यम् ॥ २० ॥

आग्नेयमाज्यभागमुत्तरपूर्वार्द्धे जुहोति। दक्षिणपूर्वार्द्धे सौम्यम् ॥२०॥

समिद्धतमे वा ॥ २१ ॥

"उत्तरार्द्धपूर्वार्द्धे हैक ऽआग्नेयमाज्यभागं जुह्वति" इति प्रक्रम्यै-
तच्छ्रूयते ॥ २१ ॥

( आज्यभागानन्तरं समिद्धतमे आग्नेयाग्नीषोमीयपुरोडा-
शाभ्यां जुहुयात् )

हविर्भ्यां च ॥ २२ ॥

"चरति" इति वाक्यशेषः, "समिद्धतमे" इति च । "समि-
द्धहोमेन ह्यत्र समृद्धा आहुतय" इति हि श्रूयते ॥ २२ ॥

( आग्नेयाग्नीषोमीयपुरोडाशयागयोर्मध्ये आज्येनोपांशु
अग्नीषोमौ यजेत )

पुरोडाशावन्तरेणाग्नीषोमा उपाꣳश्वाज्यस्य ॥ २३ ॥

यजति । अत्र
पुरोडाशयागयोर्मध्ये उपांश्वाज्यस्याग्नीषोमौ
पुरोडाशाविति द्वितीयोपपदविभक्तिः(१) ॥ २३ ॥

---

(१) अत्रायं क्रमः । आग्नेय आज्यभागो ध्रुवातश्चतुर्गृहीतेन,
सौम्य आज्यभागोऽपि, आग्नेयेन पुरोडाशेन यागः, तत्राग्नये ऽनुब्रू-
हीत्यनुवाचनम्, जुह्वां ध्रुवायाः स्रुवेणाज्यं गृहीत्वोपस्तारः, आ-
ज्यस्थाल्याः सकाशाद् ध्रुवाया अभिघारणम्, पुरोडाशमध्यादङ्गु-
ष्ठपर्वमात्रं तिरश्चीनमवदानं ग्राह्यम्, द्वितीयं पूर्वार्धात्, पञ्चाव-
त्तिनस्तृतीयं पश्चार्धात्, ध्रौवेणोपर्यभिघारः, पुनर्ध्रुवाया आप्याय-
नम्, आज्यस्थाल्याज्येनावत्तस्य हविषोऽवदानयोः प्रत्यभिघारः, अ-
तिक्रम्याश्राव्याग्निं यजेत्युक्त्वा वषट्कृते सह वा स्रुक्पार्श्वेन हो-
मः, आज्यभागवत् ध्रुवातश्चतुः पञ्चकृत्वो वाऽवद्यायोपांशुयागः, आ-
ग्नेययागवत् द्वितीयेन पुरोडाशेनाग्नीषोमीययागः, ततः स्विष्टकृदिति
देवभाष्ये । उपस्ताराभिघारौ स्थाल्याज्येन, न ध्रौवेणेति कर्कः ।

( दर्शेष्टौ आग्नेयैन्द्राग्नपुरोडाशयोर्मध्ये अग्नीषोमौ विष्णुं वा ऽऽज्येनोपांशु यजेत )

(१)विष्णुर्वाऽमावास्यायाᳫं हौत्राम्नानात् ॥ २४ ॥

अमावास्यायां विष्णुर्वेज्यते अग्नीषोमौ वा । एवं हि हौत्रे [कात्यायनपरिशिष्टे ] आम्नायते "वैष्णवश्चेत् इदं विष्णुरिति" ॥ २४ ॥

[ ध्रौवाज्यातिरिक्तानां सर्वेषां हविषामुत्तरार्धादवदायोत्तरतः स्विष्टकृद्धोमः ]

यावद्धविरुत्तरार्धात्स्विष्टकृतः ॥ २५ ॥

यावन्ति हवींषि सर्वेषामुत्तरार्धात्स्विष्टकृदिज्यते । सम्प्रतिपन्नदेवतैकत्वाच्च सकृत्प्रक्षेपः । प्रतिपत्त्यर्थकर्म चैतत् । उत्तरार्द्धः प्रतिपाद्यते, यागश्च निर्वर्त्यते । अत एव च यावदुक्तेऽपि प्रवर्त्तते॥२५॥

तत ऽएव होमः ॥ २६ ॥

उत्तरत एव होमो भवति ॥ २६ ॥

शेषात्स्विष्टकृते समवद्यतीत्येतदुक्तम् । उपांशुयाजशेषादपि ध्रौवात्स्विष्टकृदवदाने प्राप्ते आह—

( ध्रौवाज्यस्याशेषत्वात् न ततः स्विष्टकृदवदानम् )

नाज्यादशेषात् ॥ २७ ॥

न स्विष्टकृदर्थमवदानं ध्रौवादाज्याद् ग्रहीतव्यम् । कुत एतत् । अशेषत्वात् । न ह्येतच्छेषभूतम् । ननूपांशुयाजनिर्वृत्त्युत्तरकालं शेषव्यपदेशोऽस्येति । नेति ब्रूमः । न ह्येतदुपांशुयाजायैव गृह्यते । "सर्वस्मै वाऽएतद्यज्ञाय गृह्यते यद् ध्रुवायामाज्यम्" इति । न च सर्वार्थस्यैकदेशे निर्वृत्ते शेषव्यपदेशोऽस्ति[२] ॥ २७ ॥

---

(१) व्यवस्थितोऽयं विकल्पः-संनयतोऽग्नीषोमौ, असंनयतो विष्णुरिति । "ऐन्द्रं सान्नाय्यं संनयतो माहेन्द्रं वा, वैष्णवं त्वसंनयतुपांशुयाजम" इति शाङ्खायनसूत्रात् ।

(२) अपरा व्याख्या । न ह्याज्यं शेषरूपमस्ति । शेषस्य हि कृतार्थस्य प्रतिपत्त्यपेक्षस्य स्थितस्य प्रतिपत्त्यर्थानि शेषकार्याणि ।

[ अन्याहुतिभिरसंसृष्टां 'स्विष्टकृदाहुतिं जुहुयात् ]

असꣳसृष्टामाहुतिभिः ॥ २८ ॥

स्विष्टकृदाहुतिं जुहोतीति वाक्यशेषः । "स वा ऽअभ्यर्द्धं ऽइवेत-राभ्य ऽआहुतिभ्यो जुहोति" इति प्रक्रम्याह "रुद्रियः स्विष्टकृद्रुद्रि-येण ह पशून्प्रसजेद्यदितराभिराहुतिभिः सꣳसृजेत्" इति ॥ २८ ॥

( स्रुचौ निधाय अनुयाजार्थं संचरमभ्युक्ष्य उपस्तीर्य आग्ने-यस्य मस्तकादन्यस्माच्च प्राशित्रं द्विर्यवमात्रमवदायाभिघारयेत् ]

निधाय ॥ २९ ॥

सञ्चरमभ्युक्ष्य प्राशित्रमवद्यति यवमात्रं पिप्पल-मात्रं वाऽन्यतरत ऽआज्यमुभयतो वाऽऽग्नेयात् ॥ १ ॥

स्रुग्निधानं वाचनिकम् । "त ऽएतास्स्विष्टकृति विमोचनमागच्छ-तः" इति ॥ २९ ॥

इति तृतीयेऽध्याये तृतीया कण्डिका ।

सञ्चरश्च परिधानपरेण सञ्चरोऽभिप्रेतः ।

तस्य चाभ्युक्षणमनुयाजार्थम् । स्विष्टकृत ऊर्ध्वमनुयाजार्थं ह्य-नेन सञ्चरेण सञ्चरणम् । ननु प्राशित्रसमर्पणार्थं कस्मान्न भवति । न । तस्य पाक्षिकमनेन [ संचरेण ]समर्पणम्[१] । अपाक्षिकं चा-भ्युक्षणम् । तेन करिष्यमाणप्रयोजनत्वादनुयाजार्थमेव अभ्युक्षणस्य

---

न चाज्यमेवंविधमस्ति । न ह्युपांशुयाजार्थं पूर्वं पृथक् प्रकल्पित-मस्ति, यस्य शेषो भवति । अतः साधारणादेव ध्रौवाद्वचनेनोपां-शुयाजार्थं गृह्यते । यत्तावद् ध्रुवायामुपांशुयाजार्थं गृहीतेऽवशि-ष्टमाज्यम् तत् पश्चाद्ध्रव्युपस्तरणाभिघारणाद्युपयोगीत्यकृतार्थं, न प्रतिपत्त्यर्हम् । सर्वान्ते च तेन निःशेषेण समिष्टयजुर्हवत इति न ततः शेपकार्यम् । यज्जुह्वां चतुर्गृहीतं तन्निःशेषं हुतमिति शेषाभा-वादेव तत्सम्बन्धिकार्यस्याभाव इत्यनन्तदेवाः ।

(१) प्राशित्रसमर्पणस्य "अध्वर्युसंचरेण ब्रह्मणे प्रदाय पूर्वेणैके" इत्युत्तरसूत्रे आहवनीयात्पूर्वेणापि पक्षे विधानात् अध्वर्युसंचरस्य पाक्षिकत्वम् ।

न्याख्या । प्रयोजनं तदभावे ( अनुयाजाभावे ) अभाव इति । (अभ्युक्षणस्यानुयाजार्थत्वादेव) पशौ च श्यक्तस्विष्टकृदुत्तरकालम्पर्युक्षणं, न पुरोडाशस्विष्टकृतीति । ज्योतिष्टोमे च तृतीयसवने सौम्ययागसमनन्तरमभ्युक्षणम्, नेतरयोः सवनयोः।अनुयाजाभावात्।

केचित्तु तृतीयसवने ऽपि स्विष्टकृद्यागसमनन्तरमेवाभ्युक्षणमिच्छन्ति, न सौम्यसमनन्तरम् । तदनन्तरमेव दृष्टत्वात् । शुक्रूपतरमिव चैतदिति ।

प्राशित्रमिति ब्रह्मणो भागः । तदवद्यति । अवद्यति–शब्दोपादानसामर्थ्याद्द्विरिति प्रतिपत्तव्यम् । अवद्यतेर्हि द्विरवदानसम्बन्धो दृष्टः । त्रित्वसम्बन्धोऽपीति चेत्, न । विशेषसंयोगात्–"त्रिर्जमदग्नीनाम्" इति । तथा च प्राशित्रं प्रकृत्य पठ्यते "द्विर्हविषोऽवदाय" इति ।

तेन यदवद्यति तद्यवमात्रं पिप्पलमात्रं वेति । शाखिनां तु पठ्यते– "द्वे शकले अवद्यति यवमात्रे पिप्पलमात्रे वा" इति । पिप्पलमात्रमिति च पिप्पलफलमभिप्रेतम् । न पिप्पलमात्रम् । यवमात्रेण सहोच्चारणात् । क्वचिच्च दर्शनात्—"यथाऽऽम्रं वोदुम्बरं वा पिप्पलं वा बन्धनात्प्रमुच्येत" इति फलविषय एव पिप्पलशब्दः ।

आज्यं चान्यतरतो भवत्युभयतो वा । "अन्यतरत ऽआज्यं कुर्यादधस्ताद्वोपरिष्टाद्वा" इति वचनात् । तथा "स ऽआज्यस्योपस्तीर्य द्विर्हविषोऽवदायाथोपरिष्टादाज्यस्याभिघारयति तद्यथैव यज्ञस्यावदानमेवमेवैतत्" इति ।

"आग्नेयान्मस्तकं विरुज्य द्वे शकलेवद्यति यवमात्रे पिप्पलमात्रे वा" इति वचनमङ्गीकृत्याग्नेयादित्युक्तम् ॥ १ ॥

( वक्ष्यमाणान् आग्नीध्र–ब्रह्म–यजमानभागानाग्नेयाद् गृह्णीयात )

## भागांश्च ॥ २ ॥

गृह्णातीति सूत्रशेषः । तांश्चाग्नेयादेव प्राशित्रसहचरतया । स चाप्युपदेशः । क्रमस्तूपरिष्टाद्वक्ष्यते । स्थितं तावपदपर्यवसितम् । अन्तराऽन्यत्प्रक्रियते । तत्किमर्थम् । चतुर्द्धाकरणसिद्धान्तसमानन्यायतयेति निरवद्यम् ॥ २ ॥

२ (ब्रह्मणे प्राशित्रं प्रदाय उपस्तीर्य सर्वहविर्दक्षिणतो मध्याच्च द्विरवदाय द्विरभिघार्येडां पञ्चावत्तां कुर्यात्)

**अध्वर्युसञ्चरेण ब्रह्मणे प्रदाय पूर्वेणैकेऽप ऽउपस्पृश्येडां पञ्चावत्तां दक्षिणतो मध्याच्च यावद्धविः स्विष्टकृद्वदाज्यम् ॥ ३ ॥**

प्रक्रान्तं प्राशित्रमध्वर्युसञ्चरेण समर्प्य, पूर्वेण वाऽऽहवनीयं, ततोऽप उपस्पृशति 'रुद्रियः प्राशित्र'इति । ततश्च तदभावे न भवति । तत इडां पञ्चावत्तां गृह्णाति । यावद्धविरिति । प्रतिपत्तित्वात् ।

ननु च "दक्षिणतो मध्याच्च" "स्विष्टकृद्वदाज्यम्" इति चोक्ते पञ्चावत्तग्रहणमवाच्यम् । सर्वेषां तुल्यत्वप्रज्ञापनायेति केचित् । तदेतदसत् । न हि पुरोडाशस्याज्यस्य च तुल्यता शक्याऽभ्युपगन्तुम् । प्रतिपाद्यते ह्यत्र पुरोडाशो नाज्यम् । असंयुक्तविधानात् । तेन पत्नीसंयाजेडायामपि पञ्चावत्तता यथा स्यादिति पञ्चावत्तग्रहणम् । ननु चानुक्तेऽपि पञ्चावत्तमेवेदम्, ततश्च तत्रापि भविष्यत्येव । न । इह पुरोडाशप्राधान्यात्तत्कार्ये च पत्नीसंयाजेष्वाज्यप्रसङ्गाद् द्विरेवाज्यं प्राप्नोति, नोपस्तरणाभिघारणप्राप्तिरिति । तेन सुष्ठूच्यते पञ्चावत्तामिति ॥ ३ ॥

(आग्नेयाद्ब्राह्मणेनोक्तान् आग्नीध्रादिभागानस्मिन्नवसरे गृह्णीयात् । तत्र यजमानभागं ध्रुवायाः पुरस्ताद्बर्हिषि निदध्यात्)

**यजमानभागं पूर्वार्द्धाद्दीर्घं प्रशीर्य पुरस्ताद् ध्रुवायाः करोति ॥ ४ ॥**

"पूर्वार्द्धं पुरोडाशस्य प्रशीर्य पुरस्ताद् ध्रुवायै निदधाति" इति श्रुतत्वात् । अयं च भागानामवसरः । ततश्च विनियोगक्रमेण पूर्वमग्नीधस्ततो ब्रह्मणस्ततो यजमानस्येति । ध्रुवायाः पुरस्तादिति व्यतिरिक्ते देशे करोति ॥ ४ ॥

[ इडां होत्रे प्रदाय तामविसृजन्दक्षिणाऽतिक्रामेत् )

**इडाꣳ होत्रे प्रदायाविसृजन् दक्षिणाऽतिक्रामति ॥ ५ ॥**

भागैर्व्यवहितत्वादिडाग्रहणं क्रियते । तां होत्रे प्रदायाविसृजन्दक्षिणाऽतिक्रामति ॥ ५ ॥

[ इडाज्येन होतुरङ्गुलिपर्वणी अञ्ज्यात् ]

इडां प्रतिगृह्य होतुरङ्गुलिपर्वणीऽअनक्ति ॥ ६ ॥

प्रकृतत्वादिडाग्रहणमकार्यं, क्रियते च 'पर्वाञ्जनं यथा ततः (इडातः) क्रियेत' इत्येवमर्थम् । तथा च दर्शयति । "स होतुरिह निलिम्पति तद्धोतौष्ठयोर्निलिम्पते" इति प्रकृत्याह "एतद्धवै मनुर्बिभयाञ्चकारेदं वै मे तनिष्ठं यज्ञस्य यदियमिडा पाकयज्ञिया यद्वै मऽइह रक्षाᳬंसि यज्ञं न हिᳬंस्युरिति तामेतत्पुरा रक्षोभ्यः पुरा रक्षोभ्य इत्येव प्राशयत तथो ऽएवैनामेष ऽएतत्पुरा रक्षोभ्यः पुरा रक्षोभ्य इत्येव प्राशयते ऽथ यत्प्रत्यक्षन्न प्राश्नाति नेदनुपहूतां प्राश्नानीत्येत देवैनां प्राशयते यदोष्ठयोर्निलिम्पते" इति इडाया अङ्गुलिपर्वाञ्जनं दर्शयति । तेन प्रकृतायामपीडायां पुनरिडाग्रहणम् ।

पर्वशब्दः सन्धिवचनो लिङ्गात्—"काण्डात्काण्डात्प्ररोहन्ती परुषः परुषस्परि" इति । तथा "काण्डात्काण्डाद्ध्येषा पर्वणः पर्वणः प्ररोहति" इति दूर्वोच्यते । तत्र पर्वशब्दं सन्धिवचनं दर्शयति ॥ ६ ॥

( होतुः पाणौ पञ्चकृत्वः पुरोडाशरूपेडावदानादवद्येत )

अवान्तरेडामादधाति पूर्ववत् ॥ ७ ॥

अवान्तरेडामिडाया एव होतुः पाणौ समवद्यति । "अथ होतुः पाणौ समवद्यति समवत्तामेव सतीं तदेनां प्रत्यक्षं होतरि श्रयति" इति श्रूयते । पूर्ववद्ग्रहणाच्च पञ्चावत्तामिति । पुरोडाशावदानादेव पञ्चावत्तता । न ह्याज्यं संसृष्टरूपत्वाद्विवेकेन ग्रहीतुं शक्यते इति ॥ ७ ॥

[ अथ होतुः पाणौ इडामादध्यात् ]

इडाञ्च ॥ ८ ॥

[१] आदधातीति वर्त्तते ॥ ८ ॥

[ होतारं सर्वेऽन्वारभेरन् ]

सर्वेऽन्वारभन्ते ॥ ९ ॥

---

[ १ ] होतुर्हस्ते इति शेषः ।

प्रकृतत्वादिडामिति केचित्। अपरे तु वाक्यसामर्थ्याद्धोतुरन्वारम्भमिच्छन्ति "स्वर्गस्य लोकस्यैतद् द्वारं यद्धोता तस्माद्धोतारमन्वारभेत" इति ॥ ९ ॥

( यजमानः आग्नेयं चतुर्धा कृत्वा बर्हिषदं कृत्वा इदं ब्रह्मणः इत्यादिना भागानादिशेत्, न समर्पयेत् ]

इडोपहूतेत्युच्यमान ऽआग्नेयं बर्हिषदं करोति ब्रह्मन् पिन्वस्वायुर्मे धुक्ष्व प्रजां मे धुक्ष्व पशून् मे धुक्ष्व ब्रह्म मे धुक्ष्व क्षत्रं मे धुक्ष्व विशो मे धुक्ष्व योऽस्मान् द्वेष्टि यं च वयं द्विष्मस्तस्य प्रजया पशुभिराप्यायस्वेति तं चतुर्द्धा कृत्वा ॥ १० ॥

इडोपहूतेत्येवमुच्यमाने आग्नेयं बर्हिषदं करोति "ब्रह्मपिन्वस्व" इत्यनेन मन्त्रेण। विपरिणम्यते चासावनेकयजमानके कर्मणि। तन्निर्देशाच्चतुर्द्धा कृतं बर्हिषदं करोति। "आग्नेयं चतुर्द्धा करोति" इति वचनादाग्नेयमित्युक्तम्। चतुर्द्धाकरणस्य च व्यादेशार्थत्वात्तस्य च यजमानकर्तृकत्वात् क्त्वाप्रत्ययसामर्थ्याच्च यजमानश्चतुर्द्धाकरणे। सत्रेषु च व्यादेशाभावादभावश्चतुर्द्धाकरणस्य ॥ १० ॥

बर्हिष्यृत्विग्भ्य ऽआदिशति ॥ ११ ॥

बर्हिषीति नियमार्थमुच्यते। आदेशश्च वाचनिको, न समर्पणं तावत् (तस्याग्रे विधानात्)। तेनेदं ब्रह्मणः, इदं होतुरित्येवमाद्यादेशः॥११॥

(याज्ञिकानां मते चतुर्धाकरणं, प्राशित्रावदानम्, आग्नीध्रादिभागहरणं च आग्नेयाग्नीषोमीयाभ्यामुभाभ्याम्। कर्कमते तु प्राशित्रावदानं भागहरणं चोभाभ्यां, चतुर्धाकरणं तु आग्नेयादेवेति )

उभौ वाऽविशेषात ॥ १२ ॥

उभौ वा चतुर्द्धा क्रियेते, नाग्नेय एव। कुतः। अविशेषात्। "अथ

यत्र प्रतिपद्यते तच्चतुर्द्धा पुरोडाशं कृत्वा बर्हिषदं करोति" इत्यविशेषश्रवणात्। किं च चरितार्थत्वाविशेषात्, संस्कार्यत्वाविशेषाच्च। तथा प्रतिपत्तिसव्यपेक्षत्वात्–इति याज्ञिकाः।

अत्रोच्यते। स्यादेतदेवं यद्यविशेषः स्यात्। अस्ति तु विशेषः—"आग्नेयं चतुर्द्धा करोति" इति। यद्यपि च माध्यन्दिनीयायां पुरोडाशमात्रश्रवणम्, तथापि त्वाग्नेयमिति वचनाद्विशेषनिष्ठैव न्याय्या। न चाग्नीषोमीय आग्नेयः। यत्र हि निरपेक्षादग्निपदात्तद्धित उत्पद्यते स आग्नेयः। न च सोमसव्यपेक्षस्याग्निपदस्य सामर्थ्यमस्ति। सापेक्षं चासमर्थं भवतीति। "समर्थानां प्रथमाद्वा" इति ह्यधिकृत्य तद्धिताम्नानम्। तेनाग्नीषोमीयस्यानाग्नेयत्वाच्चतुर्द्धाकरणाभाव इष्यते।

यद्येवम् "उभौ वाऽविशेषात्" इति सूत्रं किमर्थम्। आशङ्कानिवृत्त्यर्थम्। अपि च प्राशित्रभागानाम् "आग्नेयात्" इति सूत्रितम् "आग्नेयाद्भागांश्च" इति। तत्सिद्धान्तार्थं वक्तव्यम् "उभौ वाऽविशेषात्" इति। तत्कुतः। वचनात्। हविर्मात्रस्य हि प्राशित्रं श्रूयते "द्विर्हविषोऽवद्यति" इति। भागानां च "पूर्वार्द्धे पुरोडाशस्य प्रदायि" इति पुरोडाशसंयोगः। यद्येवं, किमर्थं सूत्रमाग्नेयादिति। "आग्नेयान्मस्तकं विरुज्य" इत्यतोवचनात्। अस्तु तदर्थतेति चेत्। न। प्रदेशविधिपरत्वाद्वाक्यस्य। तस्मात्सर्वत्र प्राशित्रग्रहणं न्याय्यम्। भागास्तु पुरोडाशसंयोगात्सान्नाय्ये न प्रवर्त्तन्ते। याज्ञिकसिद्धान्तेऽपि न चतुर्द्धाकरणं सान्नाय्यस्य। अपुरोडाशत्वात्। तस्य च पुरोडाशसंयोगात्। प्रकृतौ ह्यौपदेशिका धर्माः। सान्नाय्यविकारे च पशौ चतुर्द्धाकरणाभावात्। "अथ पशुं सम्मृशति" इति हि प्रकृत्याह "एतर्हि सम्मर्शनस्य कालोऽथ यत्पुरा सम्मृशति य एनमुपतिष्ठन्ते ते विमथिष्यन्त इति शङ्कमानो, यद्यु विमाथां (बलादपहारं) न शङ्केतात्रैव सम्मृशेत्" इति चतुर्द्धाकरणाभावे विमथनाशङ्कायां सम्मर्शनविधिसंस्तत्र इति ॥ १२ ॥

(चतुर्धाकृतं पुरोडाशमालभ्य "अत्रपितर" इति यजमानो जपेत्)

## अत्र पितर इति यजमानो जपति ॥ १३ ॥

चतुर्द्धाकृतं पुरोडाशमालभ्य, उत्तरत्र विसर्गोपदेशात्। "अत्र पितर" इति यजमानो जपेत् ॥ १३ ॥

( पुरोडाशं विसृज्य "अमीमदन्त" इति जपेत् )

विसृज्यामी मदन्तेति ॥ १४ ॥

जपतीति वर्त्तते । अयं च कैश्चित्प्रोषितस्यापि यजमानस्येष्यतेऽनाश्रितत्वात् । तत्पुनरनुपपन्नम् । आलम्भपूर्वकत्वाद्विसर्गस्य । तेन यथा पूर्वेऽध्वर्युरेवमुत्तरेऽपीति । चतुर्द्धाकरणे च सत्यनयोः प्रवृत्तिः "तदत्र पितॄणां भाजनेन" इति वाक्यशेषात् ॥ १४ ॥

[ चतुर्धा कृत्वा आदिष्टानां भागानाम् एकैकं भागं ब्रह्मादिभ्यो भक्षणार्थं यजमानो दद्यात् ]

एकैकमाहरति ॥ १५ ॥

भागिने भागमिति वाक्यशेषः । तच्च पकाशोपहारतादर्थ्याद्भक्षणार्थं हरणम् । द्रव्यसंस्कारत्वाच्च । अन्वाहार्येऽपि तथेति चेत्, न । परिक्रयार्थत्वाद्द्रव्यसंस्कारत्वाच्चेति ॥ १५ ॥

( "उपहूते द्यावापृथिवी" इति होत्रा पठ्यमाने षडवत्तभागमग्नीधे दद्यात् )

द्यावापृथिव्योरुपह्वानेऽग्नीधे षडवत्तम् ॥ १६ ॥

"अथ यत्राहोपहूते द्यावापृथिवी इति तदग्नीध आदधाति" इति हि श्रूयते । तत्र कैश्चिद्भागद्वयं उपस्तरणाभिघारणोपेतं षडवत्तमिष्यते । अन्यथा षडवत्ताभावात् । तत्पुनर्नोपपद्यते । न ह्यत्रोपस्तरणाभिघारणे विहिते । कथं तर्हि षडवत्तमुच्यते । प्रत्यस्तमितावयवार्थवृत्तितया षडवत्तशब्दोऽग्नीद्भागे उपचरित उपलभ्यते, अश्वकर्णादिशब्दवत् ॥ १६ ॥

( अग्नीत् षडवत्तं प्राश्नीयात् )

प्राशनात्युपहूता पृथिवीति ॥ १७ ॥

तत्षडवत्तमग्नीत्प्राश्नाति "उपहूता पृथिवी" इत्यनेन मन्त्रेण । "अथ द्वितीयमुपहूता द्यौः" इति (काण्वे) श्रुतमपि सूत्रकृता नोपनिबद्धम् । वाक्यभेदादेव तदर्थोपलब्धेः ॥ १७ ॥

( होत्रा आशीःप्रार्थने क्रियमाणे "मयीदम्" इतिमन्त्रं "यजमानो जपेत् )

आशासाने मयीदमिति यजमानो जपति ॥ १८ ॥

"भूयसि हविष्करण उपहूत" इत्येवमाद्याशीःप्रार्थनमाशासनम्। "एषा वा आशीः" इति वचनात्। अत्र मयीदमिति यजमानो जपति।

अत्र यजमानग्रहणं शक्यमकर्तुम्। "पुरुषयोगिमन्त्रसंस्कारयोस्त्यागे सामर्थ्यात्" इति(का०श्रौ०१।७।२०)परिभाषितत्वात्। एवं तर्हि पत्नीसंयाजेडायामपि यजमानो यथा जपेदिति। तत्र हि पत्न्युपहवः क्वचिदाम्नातः-"उपहूतेयं पत्नी" इति। आशीर्वचनेनैकवाक्यत्वात्तस्या एव जपो मा भूदिति यजमानग्रहणम् ॥ १८ ॥

( उपहूतामिडां यजमानयुक्ता ऋत्विजः प्राश्नन्ति )

उपहूतां प्राश्नन्ति युक्ताः ॥ १९ ॥

उपहूतामिडामृत्विजः प्राश्नन्तीत्यर्थः ॥ १९ ॥

यजमानश्च ॥ २० ॥

सा चैषा इडा, प्राशित्रं, भागाश्च यावदुक्तेऽपि प्रवर्त्तन्ते। द्रव्यसंस्कारत्वात् ॥ २० ॥

(वेदेः पश्चादुपविष्टा यजमानोऽध्वर्य्वादयश्च पवित्राभ्यां मार्जयन्ते)

(१)पवित्रयोर्मार्जयन्तेऽपरेण वेदिं "सुमित्रिया न" इति ॥ २१ ॥

तृतीयार्थे सप्तमी। न ह्यत्र सप्तम्यर्थसम्भवः। करणता तु सम्भवति मार्जनं प्रति। "सुपां हि स्थाने सुपश्छन्दसि भवन्ति" इति, "छन्दोवत्सूत्राणि" इति च इति स्मर्यते। तेनात्र सप्तमी तृतीयार्थे। लिङ्गाच्च "पवित्रपूता यदत ऊर्ध्वम्" इति।

केचिच्चात्रोदकेन मार्जनमिच्छन्ति। मन्त्रलिङ्गात् "सुमित्रिया न आप" इति। तत् पुनरविधायकत्वान्मन्त्राणामनुपपन्नम्। उदकानुपदेशाच्च। न चान्यदत्र मृज्यर्थे करणं नास्ति। यथा पशुवपान्ते। न च पवित्राभ्यां मृज्यर्थो न सम्भवति। लिङ्गाच्च 'पवित्रेण पूताः पवित्रपूता' इति। यदि चोदकमपि साधनं स्यात्, प-

वित्रपूता इति समासो न स्यात् । असामर्थ्यात् । यच्च श्रूयते "पवित्रवति मार्जयन्ते" इति तत्रापि पवित्रवद्वस्तुनिर्देशादनध्यवसाय एवेत्यन्यथा नेयमिति ।

मन्त्रश्च "सुमित्रिया न ऽआप ऽओषधयः सन्तु" इत्येवमन्तः स्यात् । परिसमाप्तत्वाद्वाक्यस्य । न च "दुर्मित्रिया" इति प्रदेशान्तरे विनियुक्तः । न च परादिना पूर्वान्तन्यायोऽत्र सम्भवति । अप्रकरणसमधीतत्वात्तस्य । प्रकरणान्तरसमधीते तु यत्नाद्वाक्यसमुच्चयो भवति । यथा "ज्योतिरसीति समिदन्तेन" इति (१) ॥ २१ ॥

( मार्जनपवित्रयोः प्रस्तरे निधानम् )

## यजमानस्य प्राणापानौ पातमिति प्रस्तरे ते करोति ॥ २२ ॥

प्रकृतत्वात्पवित्रप्राप्तौ ते इत्यवाच्यम् । उच्यते च । तेन शाखापवित्रव्युदासार्थमिति । तस्यापि समस्य मार्जनात्प्राप्तिः, अतस्ते इति यत्नः क्रियते ।

अनेकयजमानके च त्रिपरिणामो मन्त्रस्य ।

मार्जनं चेडाभक्षनिमित्तत्वात्तदभावे न भवति ।

पवित्रप्रतिपत्तिस्तु भवति प्रतिपत्तेरेव ॥ २२ ॥

## तूष्णीं वा ॥ २३ ॥

पवित्रयोः प्रस्तरे करणम् ॥ २३ ॥

( अत्र वा ब्रह्मा प्राशित्रं भक्षयेत् )

## अत्र वा ब्रह्मा प्राश्नाति ॥ २४ ॥

तुल्यश्रुतित्वादत्र वा प्राशित्रभक्षणम् ॥ २४ ॥

---

( १ ) "ज्योतिरसीति समिदन्तेन" ( ५।४।२६ ) इति कात्यायनसूत्रे 'समिदन्तेन' इत्युक्त्वा "विश्वेषां देवानाᳪसमित्" इतिवाक्यसमुच्चयः, नतु "प्रदातमिध्मं त्वᳪ सोमेति प्रचरण्या जुहोति" (८।७।१) इति प्रकरणान्तरसमधीतमन्त्रस्य परादिना पूर्वान्तत्वेन । तथा "वसतीवरीग्रहणं "हविष्मतीः" इत्यनेन" इति सोमप्रकरणाधीतमन्त्रस्य परादिना "दुर्मित्रिया" इतिवाक्यसमुच्चयो नेति भावः ।

(चतुर्धाकरणव्यतिरिक्तं भागं ब्रह्मणे आहवनीयस्य पूर्वतः समर्पयेत्)

(१) भागमस्मै परिहरति ॥ २५ ॥

अस्मै ब्रह्मणे(अव्यवायार्थं)पूर्वेणाहवनीयं भागं समर्पयतीत्यर्थः॥२५॥

(अप्रोषिते यजमानाय च तद्भागं समर्पयेत्)

यजमानभागं चाप्रोषिते ॥ २६ ॥

अप्रोषिते यजमानभागं च परिहरति (२) ॥ २६ ॥

(अन्वाहार्यमभिघार्योत्तरत उद्वास्य ब्रह्मयजमानयोर्मध्यतो हृत्वा वेदिमध्ये स्थापयित्वाऽध्वर्युरालभेत)

(३) अन्वाहार्यमभिघार्योद्वास्यान्तरा ब्रह्मयजमानौ हृत्वा वेद्यां निधायालभते प्रजापतेर्भागोऽस्यूर्जस्वान् पयस्वान् प्राणापानौ मे पाहि समानव्यानौ मे पाह्युदानव्यानौ मे पाह्यूर्ग-

---

(१) अयं च चतुर्धाकरणभागव्यतिरिक्तः, पञ्चत्ताख्याग्नीध्र-भाग-यजमानभागसहचरितः। तेषां दानस्य पूर्वमेव विहितत्वात्।

[२] यदि तु यजमानः प्रोषितो भवति तदाऽध्वर्युणा दत्तं यजमानभागं ब्रह्मा गृहीत्वा प्राशित्रपात्रे निदधाति,प्रस्तरहोमोत्तरं तु स हूयते इत्यर्थः। अप्रोषिते अस्मिन् काले समर्पणेऽपि प्राशनं व्रतविसर्गान्ते। "सं यज्ञपतिराशिषा इति भागं प्राश्नाति"इति तदन्ते एव प्राशनविधानात्। सहचरितत्वाद् ब्रह्मणः स्वभागप्राशनमपि कालान्तराविधानात् तदैवेति बोध्यम्।

[३] भागपरिहरणानन्तरमध्वर्युरन्वाहार्यमभिघार्य स्थालीस्थेनाज्येनोपरि निक्त्वा उत्तरत उद्वास्य दक्षिणाग्नेरुपरिष्टादुत्तार्य गार्हपत्यदक्षिणाग्न्योरन्तरालेन प्रत्यङ् नीत्वा दक्षिणाग्नेर्दक्षिणेनान्तरा ब्रह्मयजमानौ हृत्वा ब्रह्मयजमानयोरन्तरालेन नीत्वा तत्रापि यजमानं दक्षिणेन ब्रह्माणमुत्तरेण पूर्वेणाहवनीयं प्रणीतोत्करावन्तरा हृत्वा वेदिमध्ये आसाद्यालभतेऽध्वर्युरित्यर्थः।

स्यूर्जं मयि धेह्यक्षितिरसि मा मे क्षेष्ठा ऽअ-
मुत्रामुष्मिन् लोक ऽइह चेति ॥ २७ ॥

सर्वार्थत्वात्स्थाल्येनाभिघारणम्। आलम्भो यजमानस्य स्यात्। मन्त्रलिङ्गात्। दाने च तस्याधिकारात्। अध्वर्योर्वा करणत्वात्। करणमन्त्रविषयाशिषां च यजमानयोगित्वं न्यायात्,तत्कथम् आध्वर्यवः पदार्थः। मन्त्रो लिङ्गेन याजमान आशङ्क्येत। प्रधानभूतश्च पदार्थः। गुणभूतश्च मन्त्रः। तेनाध्वर्योरालम्भेऽधिकारो युज्यते। तस्मिन्मन्त्रेऽपि लक्षणया यजमानाभिधानमित्यदोषः। तथा च लिङ्गं "यां वै काञ्च यज्ञ ऽऋत्विज ऽआशिषमाशासते यजमानस्यैव सा" इति।

ऊर्गसीत्यस्यान्नविषयत्वाद्गवादौ (दक्षिणायां) विपरिणामः।

ऊर्जं मयि धेहीत्यत्रापि (विपरिणामं) केचिदिच्छन्ति। तत्पुनर्विचारयितव्यम्। न हि प्रकृतेर्गविषयतेष्यते। तेनान्यदेवोर्गन्तरं प्रार्थ्यते। ततश्चाविपरिणाम इष्यते।

मयि धेहीति गणयन्नै विपरिणस्यते।

अभिघारणं तु गवादेरनुपकारकत्वान्न प्रवर्त्तते। स्वादिम्ने ह्योदनोऽभिघार्यते। न च गोः स्वादिम्ना प्रयोजनम्।

ब्रह्मयजमानयोस्तु अन्तराले हरणं गोर्न भवति। वाससस्तु प्रवर्त्तते ऽविरोधादिति ॥ २७ ॥

( अन्वाहार्यो दक्षिणा )

(१) सा दक्षिणा ॥ २८ ॥

स दक्षिणेति वक्तव्ये दक्षिणागतलिङ्गान्तर्भावेन सेत्युक्तम्। अयं च परिक्रयार्थः। ततश्च पक्वान्नोपहारतादर्थ्येऽपि दानसमनन्तरं भक्षणं न भवति। चतुर्द्धाकरणं तु द्रव्यसंस्कारत्वात्पक्वान्नोपहारतादर्थ्याच्चानन्तरमेव भक्षणम् ॥ २८ ॥

( अन्वाहार्यस्य हविषां च उदगग्नेरवतारणमिति परिभाष्यते )

उदगुद्वासयति हविश्च ॥ २९ ॥

---

(१) य एषो ऽन्वाहार्य उक्तः सा दर्शपूर्णमासयोर्दक्षिणा भवति।

उदगुद्वासनमन्वाहार्यस्य, हविषश्च पुरोडाशादेः ॥ २९ ॥

इति तृतीयाध्याये चतुर्थी कण्डिका ।

( पूर्वमुद्धृते उल्मुके आहवनीये प्रक्षिप्य अनुयाजार्थमवशेषितां समिधं गृहीत्वा ब्रह्माणं प्रेष्य अग्नीधं प्रेषयेत् )

(१) समस्योल्मुके समिधमादायाह ब्रह्मन्प्रस्थास्यामि,समिधमाधायाग्निमग्नीत्सम्मृड्ढीति ॥ १ ॥

समास आहवनीये एव प्रतिक्षेपः । "ते पुनरनुसꣳस्पर्शयान्ति" इति हि श्रूयते । समिच्च या ऽसावनुयाजार्थं परिशेषिता तामादायाह "ब्रह्मन्प्रस्थास्यामि" इत्येवमादि ।

प्रैषद्वयं चैतत् । तत्रैकोऽनुयाजार्थः, ततश्च तदभावे आतिथ्यादौ न भवति । सम्मार्गप्रैषस्तु सम्मृजिद्वारेण सर्वार्थत्वात्प्रतिपत्त्यर्थकर्मसाधनभूताहवनीयसंस्कारोपजनकत्वेनानुयाजाभावेऽपि प्रवर्त्तत एव । तथा च सम्मार्गं प्रकृत्याह"युक्तो यदत ऽऊर्ध्वमसꣳस्थितं यज्ञस्य तद्वहात्"इति ।

अत्र केचित्पूर्वं समिदादानमिच्छन्ति, तत उल्मुकसमासम् । कुत एतत् । एवं विकृतौ ह्यनुप्रवृत्तिर्दृश्यते "पात्रप्रक्षालनान्तेऽनुयाजाः समिदादि"इति । तदेतदनुपपन्नमिव । न ह्यत्र सूत्रभङ्गे किञ्चित्कारणमस्ति । तदभावे च यथाव्यवस्थितसूत्रव्याख्यैव युज्यते । यत्तु"समिदादि"इत्युक्तम्, तद् न्यायपूर्वकत्वादेकस्यादिशब्दस्य लोपेन 'समिध आदौ यत्तदादि' इति द्रष्टव्यम् ।

समिदादानं च प्रैषाङ्गं केचिदिच्छन्ति । तदुत्तरकालं प्रैषविधानात् । न चाध्वर्योः समिदाधानं,येन(समिदादानस्य) दृष्टार्थता स्यात् । अत आदानस्य प्रैषार्थतेति । तच्चानुपपन्नम् ।अदृष्टार्थत्वप्रसङ्गात् । दृष्टश्चात्रार्थ आधानम् । ततश्च तादर्थ्येनादृष्टपरिकल्पनं न भवति ।नन्वाधानमग्नीधो नाध्वर्योरिति कथं दृष्टार्थता स्यात् । उच्यते । अर्थादग्नीधे समर्पयिष्यत्येवं दृष्टार्थता सम्भवति । तस्मादाधानार्थमेव ( समि-

---

(१) अध्वर्युरुल्मुके आहवनीये प्रक्षिप्य प्राक् परिशेषितां समिधमादाय 'ब्रह्मन् प्रस्थास्यामि' इति ब्रह्माणं प्रति ब्रवीति, अग्नीधं चाग्निमग्नीत्सम्मृड्ढीति ब्रवीतीत्यर्थः ।

दादानम् )। एवं च सति अवभृथेऽनुयाजसद्भावे आधानाभावा-दनादानमिति।

उल्मुकसमासश्चानुयाजार्थं आहवनीयसंस्कारः। तथाचाऽस्मृ-तावनुयाजनिर्वृत्त्युत्तरकालं पुनरसमासः।

स्वावयवेनोपचयस्य संस्कारत्वादवभृथेष्वथामपि प्रवर्तते।

अग्निमग्नीत्सम्मृड्ढीति वाक्यस्य विपरिणामश्चोदितार्थाभिधा-नात् ॥ १ ॥

( होता यजमानो वा समिधमनुमन्त्रयेत )

एषा त ऽइति होताऽनुमन्त्रयते ॥ २ ॥

अनुमन्त्रणं च समिधः स्यात्। "ताᳬं होताऽनुमन्त्रयते" इति व-चनात्। मन्त्रलिङ्गाच्च। ततश्च वरुणप्रघासेषु विपरिणामः। "एते ते ऽग्ने समिधौ ताभ्याम्" इति ॥ २ ॥

(१)अजानति यजमानः ॥ ३ ॥

"स यदि मन्येत न होता व्वेदेत्यपि स्वयमेव यजमानोऽनुमन्त्रये-त" इति वचनात् ॥ ३ ॥

( अग्नीत् अनुपरिधि अग्निं सकृत्सकृत्संमृज्यात् )

संमार्ष्टि पूर्ववदपरिक्रामꣳ सकृत्सकृत्सस्रुवाᳬं-समिति ॥ ४ ॥

पूर्ववदग्निं सम्मार्ष्टि। अपरिक्रम्य, सकृत्सकृत् त्रिस्त्रिः परिक्र-म्येति मा भूत्, सस्रुवाᳬंसमिति च विशेषः। मन्त्रस्य चावभृथे वि-परिणामः ॥ ४ ॥

( 'ॐप्रतिष्ठ' इति ब्रह्मणाऽनुज्ञातो जुह्वामौपभृतं समानीय त्रीन-नुयाजान् जुहुयात् )

ब्रह्मानुज्ञातोऽनुयाजैस्त्रिभिश्चरत्यौपभृतꣳ समानीय ॥ ५ ॥

---

(१) अनुमन्त्रणं कर्तुं होतरि अजानति यजमानः "एषाते" इति समिधमनुमन्त्रयेत इत्यर्थः।

ब्रह्मानुज्ञात इत्यवाच्यम् । सामर्थ्यादेव तत्प्राप्तेः । उक्तं च "एतं ते इति समिदामन्त्रितः प्रसौति" इति । वाच्यं वा, तदनुज्ञोत्तरकालं प्रवृत्तिर्यथा स्यादिति । अथवा प्रैषसमनन्तरं तदर्थप्रवृत्तिर्माभूत्, न्यायतो हि प्रैषसमनन्तरं प्रैषार्थः प्राप्नोति तन्माभूदित्यत इदमुच्यते "ब्रह्मानुज्ञात" इति । तद्यथा "अनुज्ञात उत्तरेणाहवनीयं सम्प्रति निदधाति" इति । त्रिभिरिति चानुयाजत्रित्वप्रज्ञापनायोच्यते । अथवा चतुर्थस्यानुयाजत्वाभावप्रज्ञापनार्थम् । यद्येवम् "अनुयाजान्ते स्वरुं जुहोति" इति प्राक् ततः स्वरुहोमः प्राप्नोति । नैतदेवम् । अनुयाजाङ्गं ह्यसौ । तदन्त एव ( साङ्गानुयाजान्त एव ) निरुपचरितोऽन्तः । तस्माददोषः । औपभृतं समानीय जुह्वाम् ॥ ५ ॥

( अनुयाजानामनुवाक्याऽभावाद्याज्यार्थमेव होतारं प्रेषयेत् )

अतिक्रम्याश्राव्याह देवान्यजेति ॥ ६ ॥

अतिक्रम्याश्रावणवचनमनुवाक्यानिरासार्थम् । "याज्यापुरोनुवाक्यावन्तो यजतय" इत्यनेन प्राप्तत्वात् । "अथ यद्पुरोनुवाक्यकाऽनुयाजा भवन्ति" इति विशेषवचनात् तन्निरासः । तस्मात्साध्वभिहितम् "अतिक्रम्याश्राव्याह देवान्यज" इति ॥ ६ ॥

[सर्वत्रानुयाजेषु देवान्यजेत्येव प्रैषः]

यज यजेत्युत्तरौ ॥ ७ ॥

उत्तरौ द्वावनुयाजौ प्रति यज यजेत्येवं वक्तव्यम् । एवं हि श्रूयते ॥ ७ ॥

देवान् देवानिति वा सर्वत्र नियमशब्दात् ॥ ८ ॥

सर्वत्र देवान्यजेत्येवं प्रयोगः । कुत एतत् । नियमशब्दात् "देवान्यजेत्येवाध्वर्युराह, देवं देवमिति सर्वेषु होता" इति । अथ यज यजेत्युत्तरयोरभिधीयते तत्रैवकारो न समर्थितः स्यात्-"देवान्यजेत्येवाध्वर्युराह" इति ॥ ८ ॥

किञ्च—

विकृतिदर्शनाच्च ॥ ९ ॥

विकृतौ हि दर्शनं भवति-"अतिक्रम्याश्राव्याह देवान्यजेति सोपबर्हिषौ द्वावनुयाजौ यजति" इति । तेन नियमशब्दाद्देवान् देवानिति-

वा सर्वत्र। "यज यजेति चोत्तरयोः" इति तु शाखान्तरात्। एवं च सति वरुणप्रघासादौ यत्र यज यजेति पुनर्वचनम् तत्र नियम एवेष्यत इति सम्प्रदायः॥ ९॥

( ध्रुवस्तिष्ठन्ननुयाजान् प्रतीचो जुहुयात )

(१)प्रतीचो जुहोति ॥ १० ॥

"प्रत्यञ्चोऽनुयाजास्तदपानरूपम्" इति वचनात्॥ १०॥

अधिकारमुपजीवन्नाह—

उपसत्सु च ॥ ११ ॥

उपसत्सु च प्रत्यञ्चो होमाः। तुल्यं हि शास्त्रमत्रापि॥ ११॥

प्रतीचो जुहोतीति वचनात्कर्तुरपि प्रत्यगपसरणे प्राप्ते ऽनियमे वा नियमार्थमाह—

(२)ध्रुवः ॥ १२ ॥

इति॥ १२॥

( अनुयाजाङ्गभूतां चतुर्थीमाहुतिं प्राचीं कुर्यात् )

चतुर्थं समानीय प्राचीम् ॥ १३ ॥

चतुर्थं होमं प्रति औपभृतं समानीय प्राचीमाहुतिं जुहोति। तच्च यजतिस्थानादेत्य। यजतीनां हि स्थानं परिभाषितम्—"तिष्ठन्नुदङ् प्राङ्" इति(दक्षिणतः)। तथाचोक्तं "परिधीनपरेण सञ्चरो होष्यत" इति। ननु च होममात्राभिसम्बन्धात्सर्वत्रैवं प्राप्नोति। न। आश्रावणाभिसम्बन्धात्—"यऽआश्रावयिष्यन् सव्येनातिक्रामति दक्षिणेनाश्राव्य" इति। नन्वाश्रावणातिक्रमणविशेषे इदं वचनम्, अनाश्रावणहोमे त्वनियम इति। उच्यते। एतन्मूलमेवैतत्सूत्रं, वचनान्तराभावात्। तस्मादाश्रावणसम्बन्धेऽवेवातिक्रमणं नेतरत्रेति। इतरहोमस्तूत्तरत एव व्यवस्थितेन कर्त्तव्यः। तथोक्तम् "उत्तरत उपचारो यज्ञ" इति। चतुर्थग्रहणं चात्रानुयाजाङ्गत्वप्रज्ञापनार्थम्। इतरथा ह्यनुया-

---

(१) एतांस्त्रीननुयाजानध्वर्युः प्रत्यक्संस्थान् जुहोतीत्यर्थः।

(२) अध्वर्युरेकत्र स्थित एव त्रीननुयाजान् प्रत्यक्संस्थान् जुहोति, न प्रत्यनुयाजं प्रत्यगपसरतीत्यर्थः।

जत्रयव्यतिरेकेणान्यदपूर्वोत्पादकं होमान्तरमाशङ्क्येत । अतश्चानुयाजप्रवृत्तौ प्रवृत्तिरस्य, न तदभावे इति । एवं च सति "अनुयाजान्ते स्वरुं जुहोति" इति साङ्गानुयाजकर्माभिनिर्वृत्त्युत्तरकालं स्वरुहोमः सिद्धो भवति ।

अथ वा देवानामेव देवतात्वमत्रापि यथा स्यादिति चतुर्थग्रहणम् । मन्त्राभावेऽपि चात्र स्वाहाकारोऽस्त्येवेति वक्ष्याम उपरिष्टात् ॥ १३ ॥

( अभिचरति यजमाने अध्वर्युः "अशन्यमुं जहि" इत्यादिभिरनुमन्त्रणं कुर्यात् )

अभिचरन्ननुयाजानुमन्त्रणमशन्यमुं जहि ह्रादुन्यमुं जह्युल्कुष्यमुं जहीति ॥ १४ ॥

अभिचरन्ननुयाजानुमन्त्रणं करोति । "अशन्यमुं जहि" इत्येवमादिभिः प्रतिमन्त्रं, वाक्यभेदात् । तच्चाध्वर्युः । पुरुषयोगाभावात्समाख्यानाच्च ॥ १४ ॥

एवं प्रवृद्धौ समं विभजेत् ॥ १५ ॥

एवमनुमन्त्रणानां विकारेऽनुयाजप्रवृद्धौ समो विभागः कर्त्तव्यः। "समं स्यादश्रुतत्वात्" इति न्यायात् । अनुयाजप्राप्तौ च पुरुषार्थस्वरूपस्याप्यनुमन्त्रणस्य प्रवृत्तिरिष्टैवेत्यभिप्रायः ॥ १५ ॥

स्वस्थानान्त्येन वोपायित्वात् ॥ १६ ॥

न वा समो विभागः कर्त्तव्यः। किं तर्हि विकृतौ पठ्यमानानामनुयाजमन्त्राणां यत्स्वं स्थानं तदन्त्येन धर्मसम्बन्धः कर्त्तव्यः । ततश्च द्वितीयादीनां नाराशंसानुमन्त्रणमितरेषां स्विष्टकृदनुमन्त्रणमिति । कुत एतत् उपायित्वात्। प्रथमे ह्यभिनिर्वृत्ते द्वितीयेचानिर्वृत्ते तमेव प्रत्यपेक्षा न प्रथमं तृतीयं वा । एवं द्वितीयेऽभिनिर्वृत्ते तृतीयविषयापेक्षेति। ततश्च स्वस्थानान्त्ययोरेवायमभ्यास इति। यद्यपि च पूरणेऽन्त्यस्याभ्यासो न्याय्यः तथापि पाठक्रमाद् द्वितीयस्याभ्यास इष्यते । प्रयाजेषु तु चतुर्थान्त एव पाठ इति । तेन युक्तस्तत्र पञ्चमस्यैवाभ्यासः । प्रयोजनम्—प्राङ् नाराशंसादभ्यासविनाशे साभ्यासो द्वितीय आवर्त्तते । एवं तृतीयेऽपि द्रष्टव्यम् । आह च—

अनुवृत्तौ तु या संख्या साऽभ्यासेनैव पूर्यते ।
इष्टस्तेनानुयाजानामभ्यासो विकृताविति ॥
तत्रान्त्याभ्यास इष्येत न स्यात्पाठो यदाऽन्तरा ।
सति त्वन्तरपाठे हि नान्त्यस्याभ्यास इष्यते ॥
देवीर्द्वारो यदि ह्येष प्रथमाभ्यास इष्यते ।
निवृत्तत्वात्स्वरूपेण तस्य न ह्युपपद्यते ॥

किञ्च—

अकृते हि द्वितीये च तदपेक्षैव युज्यते ।
स्वस्थानान्त्येन वोपायादिति सूत्रमुदाहृतम् ॥
प्रयाजेषु तु पाठस्य न्यायेनाभिन्नवाक्यता ।
अतः पञ्चम एवासौ पौनःपुन्येन भाव्यते ॥

अत्रोच्यते । एवं प्रवृद्धौ समं विभजेत्, स्वस्थानान्त्येन वोपायित्यादित्यनेनानुमन्त्रणविषयो निर्णयः कृतः । न च पुरुषार्थस्वरूपस्यानुमन्त्रणस्य विकारे अनपेक्षितत्वात्प्रवृत्तिरस्ति । न च "खादिरं वीर्यकामस्य यूपं कुर्यात्" इतिवत् प्रवृत्तिरिष्यते।तत्र हि खादिरः क्रत्वपेक्षयैव प्रवृत्तः । इह त्वनुमन्त्रणानिबन्धनोऽभिचारः।न चानुमन्त्रणं क्रत्वपेक्षया गृह्यते । अतदर्थत्वात । तेन न्यायोपदर्शनार्थमिदमुक्तम् । धर्मान्तरविवक्षया वास च स्थानादिः । यद्वा अभ्यस्यमानप्रज्ञापनायेत्युक्तमेव ॥ १६ ॥

(यजमानो दक्षिणेनोत्तानेन जुहूं प्राचीं प्रेरयेत्, सव्येनोपभृतं प्राङ्मुखीमेव प्रतीचीं प्रेरयेत्)

## एत्य जुहूपभृतौ व्यूहत्यग्नीषोमयोरिति जुहूं प्राचीं दक्षिणेनोत्तानेनाग्नीषोमौ तमितीतरेणेतरां नीचा प्रतीचीम् ॥ १७ ॥

एत्येत्यध्वर्युविषयमवाच्यम् । प्राप्तत्वादेव । तेन यजमानस्य एत्य व्यूहनं यथा स्यादित्येवमर्थमुच्यते ।

जुहूपभृद्ग्रहणं च न कार्यम् । जुहूं प्राचीं दक्षिणेनेत्यभिहितत्वात् । इतरेणेतरामिति चोक्तत्वात् । अतस्तद्विकाराणां व्यूहनव्युदासार्थमिति केचित् । तदसत् । न हि तद्विकाराणां शूर्पादीनां चोदकेन

व्यूहनं प्राप्तं निवर्त्तयितुं शक्यम्। प्रतिषेधशास्त्राभावादिति। कस्तर्हि जुहूपभृद्ग्रहणस्य समाधिः। उच्यते। जुहूपभृतौ व्यूहतीत्युक्ते विशेषार्थं पुनर्वचनं, जुहूं प्राचीं दक्षिणेनेति, इतरेणेतरां प्रतीचीमिति च। अपि चोपभृत्संशब्दनं पुनरत्र नास्त्येव। तेन जुहूपभृतौ व्यूहतीति पूर्वमभिहिते इतरशब्देनोपभृच्छक्यते वक्तुम्। तस्मादपुनरुक्ततेति।

अग्नीषोमयोरित्यनेन मन्त्रेण दक्षिणेन हस्तेन जुहूं प्राचीं व्यूहतीति। "अग्नीषोमौ तम" इतीतरेण सव्येन इतरामुपभृतं नीचा प्रतीचीं व्यूहति।

अत्र प्रतीचीमिति प्रत्यङ्मुखीमुपभृतं कृत्वा प्रतीचीमेव केचित्प्रेरयन्ति। तदेतन्नोपपद्यते। यत्कारणं–प्रतीचीमित्येकः शब्दः, स यदि वा प्रेरणेन सम्बध्यते स्रुचा वेति। तत्र प्रेरणाभिसम्बन्धो युज्यते। यतः "उपभृतं प्रतीचीं सव्येन" इत्येवमुक्त्वाऽऽह "अपाञ्चं तमपोहति योऽस्मा ऽअरातीयति" इति। अथ कस्मात्प्रतीचीमित्यस्य प्रेरणसम्बन्धः स्रुक्सम्बन्धश्च नेष्यते। अस्ति किल शाखिनां वचनं "नाना विषूचीनौ व्यूहति" इति। नैतत्। एवं वचनमस्ति नास्तीति सन्दिग्धम्। अथाप्यस्ति तथापि माध्यन्दिनपाठार्थ एव तस्यापि वचनस्य "नाना विषूचीनौ व्यूहति" इति। विष्लृ व्याप्तौ। उची समवाये। नानाव्याप्तिसमवायिनौ व्यूहतीत्यर्थः। तेन प्राचीं प्रतीचीमित्येतदेवोक्तं भवति। ततश्च प्राच्येव (प्राङ्मुख्येव) प्रतीची प्रेर्यते ॥१७॥

## यथादेवतमन्यत ॥ १८ ॥

प्रकृत्यर्थ एवायमारम्भः। विकृतौ सूत्रारम्भसामर्थ्यात् यथार्थमूहश्चोदित इति। तेन प्रकृतावेवाग्नीन्द्रामित्रावरुणाद्यर्थं वचनम्। ननु चैवं सति (चतुर्थाध्याये वक्ष्यमाणम्) इन्द्राग्न्योरिति व्यूहनमवाच्यम्। समाम्नायप्रदर्शनार्थत्वाददोषः। तत्पुनर्वचनं "पराद्ना पूर्वान्त" इत्यनेन "इन्द्राग्न्योरुज्जितिम्" इत्यस्यापि प्राप्तिर्माभूदिति प्रकृत्यर्थम्। उपांशुयाजपुरोडाशाग्नीषोमयोस्तु तन्त्रेणोच्चारणं गुणभेदाभावात् ॥ १८ ॥

(अध्वर्युर्वा मन्त्रोहेन जुहूपभृतौ पूर्ववद्व्यूहेत्)

अध्वर्युर्माऽनूज्जयत्वयं यजमानो वाजस्यैन-

मिति पूर्वे, यमयं यजमानो द्वेष्टि यश्चैनं द्वेष्टीत्युत्तरे ॥ १९ ॥

अध्वर्युर्वा स्रुचौ व्यूहति । तुल्यशास्त्रत्वात्-"यदि स्वयं यजमानो यद्यु अध्वर्युः"इति । तदा मन्त्रे विशेषमाह-"अनूज्जयत्वयं यजमानो व्वाजस्यैनम्"इति पूर्वे। "यमयं यजमानो द्वेष्टि यश्चैनं द्वेष्टि" इत्युत्तरे इति । यजमानपदस्य चात्र समवायादनेकयजमानके सविशेषणस्य विपरिणामः । व्यूहनस्य चेष्टदेवतासङ्कीर्त्तनार्थतया कृतप्रयोजनस्रुक्संस्कारद्वारेण चान्तापच्छिन्नेऽपि प्रयोगः । यथा "इडान्ताऽऽतिथ्या सन्तिष्ठते" इति । तत्रापि हि देवतासङ्कीर्त्तनमिष्यते । इष्टत्वाद्देवतायाः,कृतप्रयोजनकत्वात्स्रुचाम् । तथाच सूत्रकारप्रस्थानं "व्यूहनपरिध्यञ्जने कृत्वैक" इति ॥ १९ ॥

( जुहूमभ्युक्ष्य तदाज्येन परिधीन् पश्चिमादिक्रमेणाऽञ्ज्यात् )

अभ्युक्ष्य जुह्वा परिधीनक्ति यथापूर्वम् ॥ २०॥

व्वसुभ्य ऽइति प्रतिमन्त्रम् ॥ १ ॥

अभ्युक्षणं च जुह्वाः स्यात् । ( परिध्यञ्जनरूप )कार्याभिसम्बन्धात् । जुह्वेति । जौहवेनेत्यर्थः । यथापूर्वमिति । न्यायात् । अथ वा प्रदक्षिणोपचारोदक्संस्थतासम्पत्त्या दक्षिणस्य प्रथमं मा भूदिति ( यथापूर्वमिति ) । अस्तु तथेति चेत् । न । तस्य स्मार्त्तत्वात् । एतत्तु वाचनिकमिति ॥ २० ॥

इति तृतीयाध्याये पञ्चमी कण्डिका ।

"वसुभ्य" इत्यनेन मन्त्रेण प्रतिमन्त्रम् । अत्र "रुद्रेभ्यस्त्वा"इति चतुर्थ्यन्तनिर्देशाद्रौद्रोऽयमिति केचित् । ततश्च तदन्ते उदकोपस्पर्शनमिति । तदयुक्तम् । परार्थत्वाद्रुद्रपदस्य । नात्र रुद्रस्य देवतात्वम् । हविर्भाग्वा देवता स्यात्सूक्तभाग्वा । न चात्र रुद्रो हविर्भजते, न च सूक्तम् । परिधिपरत्वान्मन्त्रस्य । "रुद्रेभ्यस्त्वा अनज्मि"इत्यज्यमानपरिध्यभिधानम् । अतस्तत्प्रशंसार्थं वस्वाद्युच्चारणम् । एवं प्रशस्तमिदमञ्जनं यत्क्रियमाणं वसुभ्यो रुद्रेभ्यश्च क्रियत इति । तस्मादरौद्रत्वान्नोदकोपस्पर्शनमत्रेति ॥ १ ॥

( प्रथमं परिधिं गृहीत्वा सूक्तवाकाय होतारं प्रेषयेत् )

प्रथमं परिधिं गृहीत्वाऽऽश्राव्याहेषिता दैव्या होतारो, भद्रवाच्याय प्रेषितो मानुषः सूक्त-वाकाय सूक्ता ब्रूहीति ॥ २ ॥

प्रथमग्रहणमनियमव्युदासार्थम् । अन्यथा हि यः कश्चिद् गृह्येत। परिधिग्रहणं च परिधिसंस्कारार्थम्, ग्रहणक्रियाकर्मभावनिर्देशात् । "परिधिमभिपद्याश्रावयति" इति । तथा "परिधिभ्यो ह्येतदाश्रावयति" इति आश्रावणस्य तादर्थ्यं दर्शयति। तथा "स ऽआश्राव्याहेषिता दैव्या होतार" इति प्रकृत्याह। "दैव्या वा ऽएते होतारो यत्परिधय" इति परिध्यर्थतां मन्त्रस्य दर्शयति।

सूक्तवाकप्रेषणक्रियोपग्रहार्थं वा । तदागमे विधानात् । लिङ्गञ्च "इषिता दैव्या होतार इति दैव्या वाऽएते होतारो यत्परिधयोऽग्नयो हीष्टा होतार" इति । दैव्या होतारः प्रेषिता इदानीं भद्रवाच्याय भद्रवदनाय मानुषं होतारं सूक्तवाकाय प्रतीतीत्येकवाक्यतासामर्थ्यात्तादर्थ्यमवगम्यते । अन्यथा ह्येकवाक्यतासमधिगतौ भिन्नवाक्यता अन्याय्याऽऽपद्येत । तत्रैतदुक्तं भवति । एते परिधयः प्रेषिता इदानीं मानुषो होता प्रेष्यत इति । ग्रहणक्रियाकर्मभावः प्रैषार्थत्वेऽप्यविरुद्धः । प्रयोजनं प्रैषाभावे परिध्यनालम्भो, यथा दर्विहोमेषु ॥ २ ॥

( पशुयागे 'ब्रूहि' इति मन्त्रघटकपदस्य स्थाने 'प्रेष्य' इति संयोज्य मैत्रावरुणं प्रेषयेत् )

पशौ प्रेष्येति ॥ ३ ॥

ब्रूहीत्यस्य स्थाने पशौ प्रेष्येति वक्तव्यम् । तत्र हि मैत्रावरुणस्य प्रैषाम्नानम् ॥ ३ ॥

( प्रस्तरमादाय तदाधारविधृती आहवनीये प्रक्षिप्य प्रस्तरस्य अग्रमध्यमूलानि जुहूपभृद्ध्रुवासु अनक्ति )

सञ्ज्ञानाथामिति प्रस्तरादानम् ॥ ४ ॥

कर्तव्यमिति सूत्रशेषः ॥ ४ ॥

विधृती स्थाने कृत्वाऽनक्त्येनं व्यन्तु व्यय ऽइति ॥ ५ ॥

विधृत्योः स्थानमाहवनीयः । सर्वहविषां तदधिकरणत्वात् । अनक्त्येनं प्रस्तरं "व्यन्तु व्यय" इत्यनेन मन्त्रेण ॥ ५ ॥

कथम्—

अग्रं जुह्वामुपभृति मध्यं मूलमितरस्याम् ॥ ६ ॥

( इतरस्यां ) ध्रुवायाम् । प्रस्तरसंस्कारश्चायम् । तथा चोपभृदाद्यभावेऽपि ( स्थाल्याज्येन ) प्रस्तरोऽज्यत एवेति ॥ ६ ॥

प्रस्तरात्तृणमादाय सूक्तवाकान्ते ऽनुप्रहरेत् ]

मरुतामिति नीचैर्हृत्वा तृणमादायानुप्रहरति ॥ ७ ॥

मरुतामित्यनेन मन्त्रेण प्रस्तरं नीचैर्हृत्वा ततस्तृणमादायानुप्रहरति ॥ ७ ॥

हस्तेनाचरति ॥ ८ ॥

आचरणमुपसमूहनम् । तच्च सामर्थ्यात्काष्ठादिना प्राप्तं वचनसामर्थ्याद्धस्तेनैवोच्यते—"तमङ्गुलिभिरेव ग्रोयुर्ध्येरन् काष्ठैः" इति ॥ ८ ॥

हस्ताचरणाधिकारमुपजीवन्नाह—

यजमानभागं च प्रोषिते ॥ ९ ॥

प्रोषिते यजमाने तद्भागं च हस्तेनैवाचरति । तच्च स्वावसर एव(व्रतविसर्गे), गुणपरत्वाद्वचनस्य ॥ ९ ॥

क्षत्रियवैश्ययोश्च नित्यम् ॥ १० ॥

क्षत्रियवैश्ययोः पुनर्नित्यमेव हस्तेन भागो होतव्यः ॥ १० ॥

अहं त्वदस्मि मदसि त्वमेतन्मम त्वं योनिस्तव योनिरस्मि । ममैव सन्दिवि देवेष्वधि पुत्रः पित्र्ये लोककृज्जातवेदः स्वाहेति ॥ ११ ॥

अनेन मन्त्रेण ॥ ११ ॥

## सूक्तवाकान्ते ॥ १२ ॥

इत्यस्य तृणमादायानुप्रहरतीत्यनेन सम्बन्धः।
एवं ह्यामनन्ति "सूक्तवाकेन प्रस्तरं प्रहरति" इति । तत्रैतत्सन्दिह्यते–किं सूक्तवाकप्रस्तरप्रहरणयोरङ्गाङ्गिलक्षणः संयोगः उत कालार्थ इति?। किं तावत्प्रतिभाति । अङ्गाङ्गिलक्षण इति।कुत एतत् । सूक्तवाकेनेति करणविभक्त्या निर्देशात् । प्रस्तरमिति च कर्मविभक्त्या । "सूक्तवाक एव याज्या प्रस्तर आहुतिः" इति चामनन्ति । तत्रायं यागः प्रस्तरद्रव्यकः, अग्न्यादिदेवताकश्च । अग्न्यादयो ह्यत्र सूक्तवाके सङ्कीर्त्यन्ते । मन्त्रस्य च क्रियासाधनप्रकाशकत्वमुचितम् । तेनात्र प्रस्तरद्रव्यस्याग्न्यादयो देवता इति गम्यते । स्पष्टतरं चैतदभिधीयते "अग्निरिदꣳ हविरजुषतावीवृधत" इति । इदमिति सन्निहितं प्रस्तरद्रव्यं निर्दिशति । अपि च फलसङ्कीर्त्तनं भवति "आयुराशास्ते" इत्येवमादि । तेन प्रस्तरद्रव्यकः सूक्तवाकमन्त्रकश्चाग्न्यादिदेवताकश्चायुरादिफलको होम इति ।

तदेतदपरे नेच्छन्ति । उभयोः परार्थत्वात् । प्रस्तरस्य हि स्रुग्धारणार्थता ज्ञाता—"प्रस्तरे जुहूꣳ सादयति" इति । सूक्तवाकस्य चेष्टदेवतासङ्कीर्त्तने दृष्टोऽर्थ इति तादर्थ्याऽध्यवसानं युक्तम् । अतो निर्ज्ञातार्थयोर्यः संयोगः स कालार्थ एव भवति । यथेध्मप्रक्षेपसामिधेन्यनुवचनयोरिति । तदन्ते प्रक्षिप्यमाणः प्रस्तरः सूक्तवाकेनैव प्रहृतो भवतीति वचनं "सूक्तवाकेन प्रस्तरं प्रहरति" इति । "सूक्तवाक एव याज्या प्रस्तर आहुतिः"इति चैवमेव द्रष्टव्यम् । यच्चाग्न्यादिसङ्कीर्त्तनं तत् प्रधानयागेष्टदेवताभिधानपरम् । कर्मनिर्वृत्त्युत्तरकालमपि हि कृताकृतप्रत्यवेक्षया देवतास्मरणं दृष्टार्थमेव भवति । अतो न प्रस्तरदेवतात्वेनाग्न्यादिसङ्कीर्त्तनमिति । न हि प्रस्तरस्य चाग्न्यादीनां च सम्बन्धो ज्ञातः, येन प्रस्तरदेवतात्वेन सङ्कीर्त्तनं भवेदिति । यच्च "अग्निरिदꣳ हविः"इति सन्निहितप्रस्तराभिनिर्देशक इति, तदपि प्रस्तरस्य प्रतिपाद्यस्य हविष्ट्वानुपपत्तेः तत्प्रतिनिर्देशाभावात्पुरोडाशादिविषयमेव । यच्चायुरादिफलसङ्कीर्त्तनं, तदपि स्तुतिमात्रपरम् । न ह्यायुरादिफलता प्रस्तरप्रहरणस्य वाक्यादवगता । न च मन्त्रे सङ्कीर्त्तनमात्रादेव निर्ज्ञातप्रधानसम्बन्धस्य फलवत्ता वाक्या-

ऽभ्युपगन्तुम् । न च फलवत् फलवतोऽङ्गं भवति वचनमन्तरेण । तस्मान्नाङ्गाङ्गिलक्षणः संप्रयोग इति । प्रयोजनं प्रस्तरप्रहरणाभावेऽप्यातिथ्यादौ सूक्तवाकः प्रयुज्यते एव ॥ १२ ॥

( अग्नीत् अध्वर्युम् अनुप्रहरेत्यध्येषयेत् )

## अग्नीदाहानुप्रहरेति ॥ १३ ॥

अग्नीद्वचनं न कर्त्तव्यम् । प्रैषार्थेऽध्वर्युः प्रैषेचाग्नीदित्युक्तत्वात् "स्वयं चाविरोधात्" इत्यत्र । तेन वरुणप्रघासादिष्वविपरिणामार्थमिति केचित् । तत्कथम् । वचनात् । वचनं हि तत्र भवति—"अथाग्नीदाहानुप्रहरेति ता ऽउभावेवानुप्रहरतः" इति । तदेतदसत् । न हि वरुणप्रघासेष्वनुप्रहरेत्यस्य विपरिणामो न युज्यते—प्रकृतौ प्रहरणक्रियाकर्तुरेकस्य प्रेषणम्, विकृतौ द्वयोः कर्त्रोरिति । न च भेदेन प्रैषदानं, प्रयोगवचनो मा बाधीति । तस्माद् युक्तरूप ऊहः । न च तत्राग्नीदाहानुप्रहरेति विधानम् । प्रकृतितः प्राप्तत्वात् । अतो यथाप्राप्तस्यानुवादोऽयम् । अतः श्रुत्यनुकरणमेतत् ।

अथवा ऽध्वर्योः प्रैषार्थकर्तृत्वे सति यः कश्चिदध्येषणायां स्यात्तत्राध्वर्युप्रत्यासत्तेरग्नीद्यथा स्यादित्येवमर्थमग्नीद्ग्रहणम् । न्यायतः प्राप्त एव चात्राग्नीदभिधीयते, अन्यत्रापि स एव यथा स्यादिति । यथा "आहन्त्यन्यो दृषदुपले" इति । यथा च "अतः पत्न्यवहन्त्यन्यो वा" इति । एवं च सत्यनेनैव न्यायेन ज्योतिष्टोमे प्रतिप्रस्थातुः प्रैषे ऽधिकारः । अपि चाह—

उक्तत्वात्प्रेषणेऽन्यस्य तद्विशेषोऽवसीयते ।
तेन सूत्रकृता प्रोक्तमग्नीद्ग्रहणमत्र तु ॥ १३ ॥

( प्रस्तरसंबन्धितृणमाहवनीये प्रास्याध्वर्युरात्मानमालभेत )

## प्रास्य तृणं चक्षुष्पा ऽइत्यात्मानमालभते ॥ १४ ॥

प्रस्तरसम्बद्धं तृणमाहवनीये प्रास्य "चक्षुष्पा" इत्यात्मानमालभते । स चायं तृणप्रहरणे सति भवति । "तेनो ऽअप्यात्मानं नानुप्रवृणक्ति" इति लिङ्गात् । करिष्यमाणप्रयोजनात्मसंस्कार इत्यपरे । तथा च सर्वत्र प्रवृत्तिः ॥ १४ ॥

( संवदस्व, अगन्, श्रौषट् इत्यग्नीद् ब्रूयात् । अगानग्नीत्, श्रावय, स्वगादैव्या इत्यादि अध्वर्युर्ब्रूयात )

संवदस्वागानग्नीदगञ्छ्रावय श्रौषट् स्वगा दैव्या होतृभ्यः स्वस्तिर्मानुषेभ्यः शंयोर्ब्रूहीत्येतेषाᳬ संवदस्वागञ्छ्रौषडित्यग्नीच्छेषमितरो व्यत्यासं ब्रूतः ॥ १५ ॥

संवदस्वेत्येवमादीनां संवदस्वागञ्छ्रौषडित्यग्नीदाह, शेषं चाध्वर्युर्व्यत्यासेन । तस्य चास्य शंयोर्वाकार्थत्वात्तदभावे निवृत्तिः । शंयोर्वाकस्यार्थकर्मत्वाद्यावदुक्ते निवर्त्तते ॥ १५ ॥

( परिधीननुप्रहरेत् )

परिधीननुप्रहरति यं परिधिमिति प्रथममितरौ च युगपदग्नेः प्रियमिति ॥ १६ ॥

प्रतिपत्तिश्चरितार्थत्वात् । ततश्च यावदुक्तान्तापच्छिन्नयोरपि प्रवृत्तिः । प्रहरणमन्त्रयोश्चाग्न्यभिप्रायकत्त्वादवभृथे विपरिणामः ॥१६॥

( स्रुचौ प्रगृह्य सᳬस्रवभागा इति मन्त्रेण संस्रवान् विश्वेभ्यो देवेभ्यो जुहुयात् )

स्रुचौ प्रगृह्णाति सᳬस्रवभागा इति सᳬस्रवाञ्जुहोति ॥ १७ ॥

प्रग्रहणे मन्त्रः स्यात् । "स सम्प्रगृह्णाति सᳬस्रवभागास्थ" इति वचनात् । होमे वा । स्वाहाकारवषट्कारयोस्तदर्थत्वात् । तयोश्च तत्र भावात् । लिङ्गाच्च "तद्यथा वषट्कृतं हुतमेवमस्यैतद्भवति" इति । यत्पुनर्वचनं तद् होमोपलक्षणार्थम् ।

प्रतिपत्त्यर्थकर्म चैतत् । ततश्चान्तापच्छिन्नेऽपि प्रवर्त्तते ।

अविशेषितत्वाच्च संस्रवाणां नाज्यसाधनयागशेषभूतता । अतश्च सर्वत्र प्रवृत्तिः ।

विश्वेदेवाश्चात्र देवता । "इमां वाचमभिविश्वे गृणन्त" इति मन्त्रलिङ्गात् वाक्यशेषाच्च—"स वै विश्वेभ्यो देवेभ्यः सम्प्रगृह्णाति" इति । एवं च सति दार्विहोमेषु विश्वेभ्यो देवेभ्यः स्वाहेति होमः ।

"अथ जुहूं चोपभृतं च सम्प्रगृह्णाति" इति द्वयोः प्रग्रहणविधान-सामर्थ्यात् उभाभ्यामपि होमः ॥ १७ ॥

( अनसि चेद्धविर्ग्रहणं तदा धुरि स्रुचौ निदध्यात् )

घृताची ऽइति धुरि निदधात्यनसि चेद्ग्रहणम् ॥ १८ ॥

"घृताची" इत्यनेन मन्त्रेण धुरि स्रुचौ निदधाति । चरितार्थत्वाद् द्रव्यसंस्कारः । अतश्चान्तापच्छिन्नेऽपि प्रवृत्तिः ।

अयं(मन्त्रस्थः)धुर्यशब्दः कैश्चित् पत्नीयजमानविषयतया वर्ण्यते । धुर्याविव धुर्यौ । यथा धुर्यावनड्वाहावनसः प्रणेतारौ एवं दम्पती अपि यज्ञस्येति । एवं च सति पितृयज्ञे धुर्यं पाहीति विपरिणामः । पत्न्यभावात् । सम्प्रदाये तु नेष्यते । धुर्यशब्दस्यानडुद्विषयत्वात् । यद्यपि च तावत्र न स्त एव तथापि त्वनसोऽनडुत्सम्बन्धोऽस्तीति तत्र निधीयमानाभ्यां स्रुग्भ्यां तद्धिंसा मा भूदिति धुर्यौ पातमिति स्रुगभिधानं युक्तरूपम् ॥ १८ ॥

( पात्र्यां चेद्धविर्ग्रहणं स्फ्ये स्रुचोर्निधानम् )

स्फ्ये पात्र्यां चेत् ॥ १९ ॥

पात्र्यां चेद्ग्रहणं, स्फ्ये सादयति ॥ १९ ॥

( यज्ञ नम इति मन्त्रेण वेदिमालभेत )

यज्ञ नमश्च त इति वेदिमालभते ॥ २० ॥

स चायं वेदिसंस्कारः समिष्टयजुःसाधनभूतद्रव्यप्रयुक्तः । ततश्च तदभावेऽभाव इति ॥ २० ॥

( वेदं, स्रुक्स्रुवम्, आज्यस्थालींच होत्रध्वर्य्वग्नीध आदाय गार्हपत्यं गच्छेयुः )

वेदꣳ होता स्रुक्स्रुवमध्वर्युराज्यस्थाली-मग्नीदादाय ॥ २१ ॥

इति तृतीयाध्याये षष्ठी कण्डिका ।

पत्नीसंयाजेभ्यो गार्हपत्यं गच्छन्ति ॥ १ ॥

"ते वै पत्नीः संयाजयिष्यन्तः प्रतिपरायन्ति" इति प्रकृत्य "जुहूं च स्रुवं चाध्वर्युरादत्ते वेदं होताऽऽज्यविलापनीमग्नीत्" इति ह्याम्नन्ति । प्रतिपरायन्तीति वचनाद्गार्हपत्यो गम्यते । विकृत्यनुप्रवृत्तिदर्शनाच्च—"गृहपतेरेव गार्हपत्ये जाघन्या पत्नीः संयाजयन्ति" इति । स्रुवग्रहणं च उपभृद्व्युदासार्थम् । उपभरणार्थेन हि तत्प्राप्तिरिति(१) ॥ १ ॥

( अध्वर्युः आहवनीयस्य पूर्वतः, गार्हपत्यस्य पश्चिमतो वा—तत्रापि पत्न्या मध्यतो वा बाह्यतो वा गार्हपत्यस्यैशानदेशं गत्वोपविश्य दक्षिणं जानु भूमौ निपात्य जुहुयात् । )

अध्वर्युः पूर्वदक्षिणेन गार्हपत्यमेत्य पूर्वेणा, परेणान्तरेण पत्नीमेकेषाम् ॥ २॥

पूर्वेणाहवनीयम् । अपरेण वा गार्हपत्यम् । तत्राप्येकेषामन्तरेण, ( मध्येन ) बाह्यतो वा पत्नीमिति ॥ २ ॥

(२) उपविश्य दक्षिणं जान्वाच्य ॥ ३ ॥

सोमादीन्यजति ॥ ३ ॥

अधिकारमुपजीवन्नाह—

( उपविष्टहोमः सर्वत्र दक्षिणजानुनिपातपूर्वकः )

एवं सर्वत्रोपविष्टहोमेषु ॥ ४ ॥

उपविश्य दक्षिणं जान्वाच्य । यजतित्वात्तिष्ठतिक्रियायां प्राप्तायाम उपविश्येत्युच्यते । जान्वञ्चनं च भूमौ पातनं समाचारात् । लिङ्गाच्च "ततो देवा यज्ञोपवीतिनो भूत्वा दक्षिणं जान्वाच्योपासीदन्"इति ॥ ४ ॥

---

(१) तत्प्राप्तिरिति । स्रुवप्राप्तिरित्यर्थः । अतो व्यर्थं सत् उपभृतो व्यावर्तकमिति भावः ।

(२) यजतित्वात्तिष्ठद्धोमे प्राप्ते आह—उपविश्येति ।

( पत्नीसंयाजान् उपांशु कुर्यात् )

उपाᳬशु चरन्ति ॥ ५ ॥

पत्नीसंयाजैरिति ॥ ५ ॥

अधिकारमुपजीवन्नाह—

( चरणशब्दोपादाने सर्वकर्मोपांशु अन्यत्रोपांशुत्वश्रवणं देवतामात्रगतम् )

चरणशब्दे सर्वं देवताऽन्यत्र ॥ ६ ॥

यत्र चरणशब्दस्तत्र सर्वमुपांशु भवति । यथा पितृयज्ञे "उपाᳬशु चरन्ति" इति । देवताऽन्यत्र, चरणशब्दादन्यत्रोपांशुत्वश्रवणे देवतामात्रमुपांशु ॥ ६ ॥

( स्थाल्याज्येन सोमादीन् यजेत् )

यजति सोमं त्वष्टारं देवानां पत्नीरग्निं गृहपतिमिति ॥ ७ ॥

स्थाल्येनाज्येन सोमादीन्यजति । "चतस्रो देवता यजति" इति प्रकृत्याह "ता वा ऽआज्यहविषो भवन्ति" इति ॥ ७ ॥

( देवपत्न्युद्देश्यके तृतीये पत्नीसंयाजे पुरस्तात् कटादिनाऽन्तर्धानम्, पत्नीकर्तृकोऽध्वर्योरन्वारम्भश्च )

तृतीयेऽन्तर्धानं पुरस्तात् ॥ ८ ॥

तृतीये पत्नीसंयाजे पुरस्तात्कटादिनाऽन्तर्द्धानं, "स यत्र देवानां पत्नीर्यजति तत्पुरस्तात्तिरः करोति" इति श्रुतेः ॥ ८ ॥

पत्न्यन्वारभतेऽध्वर्युम् ॥ ९ ॥

अधिकारात्तृतीये एव पत्नीसंयाजेऽन्वारम्भः । अध्वर्युग्रहणाच्च न द्रव्यान्वारम्भः ।

स चायमध्वर्युसंस्कारो द्वितीयानिर्देशात् । ततश्च पत्न्यभावेऽपि यः कश्चित्करोति ॥ ९ ॥

( पत्नीसंयाजाख्यकर्म इडान्तं भवति, तत्र शंयोर्विकल्पः )

शंय्वन्तं भवतीडान्तं वा ॥ १० ॥

यदेतत्पत्नीसंयाजकर्म तच्छय्वन्तमिडान्तं वा भवति । न चात्र विकल्पः शंयुरिडा वाऽन्ते भवति इति, किं तर्हि इडा भवत्येव—शंयोर्विकल्पः । कुत एतत् । यत इदमामनन्ति, "तदिडान्तं भवति" इति प्रकृत्य "उतो प्रस्तरस्यैव रूपं क्रियते स यदि प्रस्तरस्य रूपं कुर्यात् वेदस्यैकं तृणमाच्छिद्य" इत्येवमादि यावच्छंयोर्ब्रूहीति(१) ॥ १० ॥

( शंय्वन्ते वेदतृणं गृहीत्वा तस्य अग्रमध्यमूलानि क्रमेण स्रुक्-स्रुव-स्थालीषु अञ्ज्यात )

शंय्वन्ते वेदतृणमादायानक्ति प्रस्तरवत्स्रुचि स्रुवे स्थाल्यां च ॥ ११ ॥

शंय्वन्ते कर्मणि वेदतृणं गृहीत्वा प्रस्तरवदनक्ति अग्रं जुह्वां, मध्यं स्रुवे, बुध्नं (२)स्थाल्यां "व्यन्तु वय" इत्यनेन मन्त्रेण। "अनक्ति प्रस्तरवत्" इत्युपदेशात् ॥ ११ ॥

अग्नीदाहानुप्रहरेति ॥ १२ ॥

कृतव्याख्यानम् ॥ १२ ॥

प्रास्यत्तृणादि पूर्ववत् ॥ १३ ॥

प्रास्यत्तृणं तदादि पूर्ववत्कर्म भवति ॥ १३ ॥

---

(१) गृहपतियागानन्तरं पूर्ववदिडां पञ्चावत्तामादायेडां होत्रे प्रदायाविसृजन्दक्षिणातिक्रामतीडां प्रतिगृह्य होतुरङ्गुलिपर्वणी अनक्त्यवान्तरेडामादधाति पूर्ववदिडां च सर्वेऽन्वारभन्ते मर्यादामिति यजमानो जपत्युपहूतां प्राश्नन्ति युक्ता यजमानश्च पवित्रयोरभावाद्दर्भैर्मार्जयन्तेऽपरेण वेदिं सुमित्रियान इत्येतावदिडान्तं भवतीत्यभिप्रायः ।

(२) 'बुध्नम्' मूलमित्यर्थः ।

( शंयोर्वाकान्ते स्रुक्स्रुवं प्रगृह्य गार्हपत्ये "अग्नेऽदब्धायो" इति मन्त्रेण जुहुयात् )

शंय्वन्ते स्रुक्स्रुवं प्रगृह्णात्यग्ने ऽदब्धायविति॥ १४॥

शंयोर्वाकान्ते स्रुक्स्रुवं प्रगृह्णाति। "अग्नेऽदब्धायो" इति जुहोति। अधिकाराद्गार्हपत्ये। प्रतिपत्त्यर्थकर्म चैतत्। पत्नीसंयाजशेषत्वाच्च तदभावे निवृत्तिः। न च पशौ भवति। प्रतिपाद्यद्रव्याभावात्। पत्नीसंयाजानां चार्थकर्मत्वाद्यावदुक्ते निवृत्तिः॥ १४॥

( दक्षिणाग्नौ होमः )

सव्येनावृत्य दक्षिणाग्नौ जुहोत्यग्नय इति सरस्वत्या इति च १५॥

सव्यावर्त्तनविधानं शास्त्राभावादतीत्यनिष्क्रमणप्रज्ञापनार्थम्। ततश्च यदि पूर्वदक्षिणेन गार्हपत्यं प्रविष्टस्तदैतद्भवति, नेतरत्र। तत्रापि केचित्सव्येनावृत्य इडां करोतीति सूत्रमभिसंबन्धयन्ति। होमार्थत्वात्प्रवेशनस्य। तन्न। अव्यवहितसम्बन्धेऽपि तदर्थोपपत्तेः। न च होमायैव प्रवेशनम्। विशेषानवगतेः। अतः साङ्गपत्नीसंयाजनिर्वृत्त्युत्तरकालमतीत्य निष्क्रमणम्। तेन "सव्येनावृत्य दक्षिणाग्नौ जुहोति" इत्येवमभिसम्बन्धः। तच्चैतदर्थकर्म। ततश्च यावदुक्तान्तापच्छिन्नादौ निवृत्तिः॥ १५॥

( पिष्टलेपहोमो दक्षिणाग्नौ अग्न्युद्देशेन )

उलूखले मुसले यच्च शूर्पे ऽआशिश्लेष दृषदि यत् कपाले। उत्प्रुषो विप्रुषः सत्याः सन्तु यजमानस्य कामाः स्वाहेति—

इति सप्तमी कण्डिका।

पिष्टलेपाञ्जुहोति ॥ १ ॥

अधिकाराद्दक्षिणाग्नावेव । पिष्टलेपसाधनत्वाच्च तच्छब्देनाहुत्यभिधानम् । अथवा पिष्टसम्बन्धिनो लेपास्तैराहुतिरिति । एवं च सति प्रतिपत्तिरेषा । ततश्चेडान्तेऽपि कर्मणि प्रवर्त्तते ।

यच्च कैश्चिदभिधीयते—आज्याहुतिरेषेति । तदपि पिष्टलेपग्रहणादवसन्नम् ।

प्रतिपाद्यमानेऽपि हि द्रव्ये जुहोतिसंशब्दनादत्र देवतया भवितव्यम् । देवतोद्देशेन हि परित्यक्तस्य द्रव्यस्य प्रक्षेपे जुहोतिशब्दो वर्त्तते । न चात्र देवता गम्यते तद्धितेन चतुर्थ्या वा । मन्त्रोऽपि चानिर्दिष्टदेवतालिङ्ग एव । उलूखलादीनां चात्रोपादानमाश्लिष्टविशेषणत्वेन, न देवतारूपत्वेन । यदुलूखलादिष्वाश्लिष्टं तज्जुहोतीति सम्बन्धो, न लभ्य इति । कामानामपि चात्र सत्यता प्रार्थ्यते । ततश्च तेषामपि न देवतात्वम् । एवञ्चानवगतदेवताको होम इत्यनुपपन्नम् ।

अत्रोच्यते । अनादिष्टदेवतालिङ्गेष्वपि मन्त्रेषु देवतापेक्षायां सत्यां किं यत्किञ्चिद्देवतान्तरं परिकल्प्यतामुत प्रकृतैव गृह्यतामिति । तत्र प्राकृतपरिग्रहो न्याय्यः । सन्निधानात् । अप्राकृतोपादाने पुनरसन्निधानात्सन्देह इति । तथा च नैरुक्ताः—"तद्येऽनादिष्टदेवतामन्त्रास्तेषु देवतोपपरीक्षा यद्देवतः स यज्ञो वा यज्ञाङ्गं वा तद्देवता भवति" इति । तत्राप्याग्नेयोपांशुयाजाग्नीषोमीयसन्निधाने पुरोडाशसम्बन्धिनः पिष्टलेपा इति सन्निधानविशेषादाग्नेयाग्नीषोमीयदेवतापरिकल्पनं न्याय्यतरम् । तदुद्देशेन हि तद्द्रव्यं गृहीतं यच्छेषोऽयमिति । उपांशुयाजसान्नाय्यदेवतानामसम्बन्धादतद्देवतात्वम् ।

केचित्तु सम्बन्धाविशेषे सत्यप्येकयैव देवतया कार्याभिनिर्वृत्तेर्मुख्यत्वादाग्निमेव प्रकल्पयन्ति । विकारे तर्हि कथम् । तत्रापि वैकृतदेवताभिसम्बन्धात् तद्देवत्यत्वपरिकल्पने प्राप्ते—उच्यते । प्राकृतदेवताभिस्तद्वानेव मन्त्रो विकृतिमुपाच्छतीति न वैकृतदेवत्यता घटते । न ह्यस्य विकृतौ पाठ इति । तस्माद्विकृतावपि प्रकृतदेवताकत्वमेवेति ॥ १ ॥

( पत्न्या वेदयोक्त्रयोर्विमोकः )

पत्नी वेदं प्रमुञ्चति वेदोसीति, योक्त्रं च "प्र मा मुञ्चामि वरुणस्य पाशाद्येन माऽबध्नात्सविता सुशेवः। ऋतस्य योनौ सुकृतस्य लोकेऽरिष्टां मा सह पत्या दधात्विति" ॥ २ ॥

चशब्दात्पत्न्येव। कृतप्रयोजनत्वात्प्रतिपत्तिरूपता। ततश्चान्तापच्छिन्नेऽपि प्रवृत्तिः ॥ २ ॥

( वेदं वेदिं यावत्स्तृणाति होता )

स्तृणात्यावेदेः ॥ ३ ॥

"तᳬ होता आवेदेस्तृणाति" इत्येतच्छ्रूयते। द्रव्यविषयोऽयमाङ्शब्दप्रयोग इति मर्यादा प्रतिपत्तव्या। कर्मविषये त्वभिविधिरिति परिभाषितम् "आऽमुष्मादिति कर्मसु तच्च" इति। अथ हौत्रे स्पष्टतरं वचनं ततोऽत्राप्यभिविधिरस्तु ॥ ३ ॥

( ध्रौवाज्यस्य जुह्वा वातोद्देशेन उपविश्य होमः )

ध्रौवᳬ समिष्टयजुर्जुहोति देवा गातुविद इति ॥ ४ ॥

समिष्टयजुरिति कर्मणः संज्ञा "समिष्टयजुरन्तं भवति" इत्येवमाद्यर्था। "जुह्वाऽवचने" इति जुह्वैव होमः। जुहोतित्वाच्चोपविष्टस्य। "तिष्ठन् ध्रुवया समिष्टयजुर्जुहोति" इति तु नोपनिबद्धम्।

अर्थकर्म चैतत्। ततश्चान्तापच्छिन्ने निवृत्तिः।

वातश्चात्र देवता। "स्वाहा वाते धा" इति लिङ्गात्।

ननु च "देवा गातुविद" इति सम्बुद्धिनिर्दिष्टानां देवानां देवतात्वमस्तु। नेत्युच्यते। न हि ते हविःसम्बन्धितया सम्बोध्यन्ते। किं तर्हि विसर्गाय। देवा गातुविदो गातुं यज्ञं वित्वा गातुं गन्तव्यमित गच्छतेति। तथा च लिङ्गम्—"तदेतेन यथायथं व्यवसृजन्ति" इति। तेन विसर्गाय सम्बोधनम्।

मनसस्पतेस्तर्हि देवतात्वमस्तु। तस्य हि सम्बोधनं मनसस्पत इमं

देव यज्ञमिति देवयज्ञसम्बन्धस्तस्यावसीयत इति । नैतदेवम् । तस्यापि ह्यत्र पारार्थ्येनैव श्रवणम् । मनस्पतेरुच्यते 'इमं यज्ञं वाते धेहि' इति । न यज्ञसम्बन्धो मनसस्पतेः । गतेषु देवेषु मनसस्पतिरिमं यज्ञं वाते स्थापयत्वित्याशास्यते । एवं सप्तमीनिर्दिष्टस्यापि तस्यैव देवतात्वमनुरूपतरम् । यज्ञशब्देन चात्र लक्षणया द्रव्यं वोच्यते, कर्म वा । द्रव्यवचनत्वे द्रव्यस्य वाते स्थापनं तदुद्देशांशनैवोपपद्यते, नान्यथा । कर्मवचनेऽपि च कर्मणोऽपि तत्साधनभावाभ्युपगमनेन वाते ऽवस्थानमुपपद्यते । तस्माद्वात एवात्र देवतेति ।

प्रयोजनं जुहोतौ वाताय स्वाहेति प्रयोगः ॥ ४ ॥

( बर्हिर्होमः )

बर्हिः सम्बर्हिरिति ॥ ५ ॥

जुहोतीति वर्त्तते । सम्बर्हिरित्यनेन मन्त्रेण बर्हिर्जुहोति । प्रतिपत्तिश्चरितार्थत्वात् । ततश्चान्तापच्छिन्नंसऽप्यनिवृत्तिः ॥ ५ ॥

(अध्वर्युराहवनीयं परितो गत्वा प्रणीता अपो वेद्यां निनयेत् )

वेद्यां प्रणीता निनयति परीत्य कस्त्वेति ॥ ६ ॥

परिगमनं कर्तुरत्र न प्रणीतानाम् । तत्परिगमने हि परिणीयेत्येवमवक्ष्यत् । प्रतिपत्तिश्चरितार्थत्वादिति । प्रणीतासम्बन्धादाहवनीयं परीत्येति ॥ ६ ॥

पुरोडाशकपालेन कणानपास्यत्यधः कृष्णाजिनं रक्षसामिति ॥ ७ ॥

पुरोडाशकपालयोर्भूतपूर्वगत्या सम्बन्धविवक्षयम् । न हि वर्त्तमानः कपालस्य पुरोडाशेन सम्बन्धोऽस्ति । तस्य च करणत्वेन निर्देशाद्यत्रापि पुरोडाशो नास्ति यथा चर्विष्ट्यां तत्रापि कपालमात्रमुपादेयम् ।

तच्चैतद्देवताभिसम्बन्धात्प्रतिपत्त्यर्थकर्म केश्चिदिष्यते । देवताभिसम्बन्धश्च मन्त्रवर्णाद् "रक्षसां भागोऽसि" इति । वाक्यशेषाच्च । "ततो देवाः सर्वं यज्ञं संवृज्य" इति प्रकृत्य "अथ यत्पापिष्ठं यज्ञस्य भागधेयमासीत्तेनैनान् निरभजन्नस्ना पशोः फलीकरणैर्हविर्यज्ञादिति

रक्षांसि फलीकरणैर्निर्भक्तानि" इत्याह। ततश्च तेषां देवतात्वमिति।

नैतदेवमित्यपरे। न ह्यत्र देवता चोद्यते। नात्र चतुर्थी तद्धितो वा। येन देवता गम्येत। मन्त्रवर्णादपि देवता कल्प्यते यत्र जुहोतिचोदना। तत्र हि देवतोद्देशेन परित्यक्तस्य द्रव्यस्य प्रक्षेपो युज्यते। तत्रावश्यम्भाविन्यां देवतायां मन्त्रवर्णस्य च क्रियासाधनाभिधायित्वसामर्थ्यात्ततो देवता परिकल्प्यते। न चेह होमश्चोद्यते। तस्मान्न देवता परिकल्प्यते। मन्त्रवर्णवाक्यशेषौ त्वर्थवाद प्रायौ।

प्रयोजनं न देवताभिधानमत्र। न चायं रक्षोऽभिधायकः। द्रव्यपरत्वान्निर्देशस्य। ततश्च नोदकोपस्पर्शनमत्र ॥ ७ ॥

( आहवनीयं परितो गत्वा पूर्णपात्रं निनीतं यजमानोऽञ्जलिना गृह्णीयात् )

पूर्णपात्रं निनयति परीत्य सन्ततं यजमानोऽञ्जलिना प्रतिगृह्णाति संवर्चसेति ॥ ८ ॥

आहवनीयं परीत्य पूर्णपात्रं निनयति। "सꣳस्थिते गृहे दक्षिणतः परीत्य पूर्णपात्रं निनयति" इति वचनात्। सन्ततमित्यव्यवच्छिन्नम्। यजमानश्च तदञ्जलिना प्रतिगृह्णाति "संवर्चसा" इत्यनेन मन्त्रेण। पदार्थश्चायं, ततश्चान्तार्पाच्छन्ने निवर्त्तते।

तत्रैतद्विचार्यते। किं निनयनं प्रधानमुत ग्रहणमिति। किं चातः। यदि निनयनस्य प्राधान्यम्, प्रोषितेऽपि यजमाने इहैव कर्त्तव्यम्। अथ ग्रहणस्य प्राधान्यम्, यत्र यजमानस्तत्र पूर्णपात्रो निनेयः। पूर्णपात्रं निनयतीति वचनात् निनयनस्य प्रधानता, ग्रहणस्य तु तादर्थ्यम्। तदञ्जलिना प्रतिगृह्णातीति ग्रहणार्थता वा निनयनस्य। चोदितत्वाविशेषात्। दृष्टोपकाराभिनिर्वृत्तेश्च। सञ्जनयति हि निनयनं ग्रहणस्य दृष्टमुपकारम्। अन्यथा ग्रहणानभिनिर्वृत्तिः। न तु ग्रहणं निनयनस्य दृष्टोपकारोपजनकम्। तदभावेऽपि निनयनोपपत्तेः। तस्माद् ग्रहणार्थं निनयनमिति द्वादशाहे सर्वैः ( यजमानैः ) ग्राह्यः ॥ ८ ॥

(पूर्णपात्रजलेन यजमानो मुखविमार्जनं कुर्यात्)

मुखं विमृष्टे ॥ ९ ॥

अधिकाराद्यजमान एव ॥ ९ ॥

(विष्णुक्रमान् प्रागुदग्वा क्रामेत्)

विष्णुक्रमान्क्रमते दिवि विष्णुरिति प्रतिमन्त्रं पृथिव्यामितीत ऽऊर्ध्वो वा ॥ १० ॥

पृथिव्यामिति इतो मन्त्रपदादूर्ध्वो वा । क्रमणं तु प्रागुदग्या । अयमपि पदार्थ एव ॥ १० ॥

(यजमानो भागं स्वकीयमीक्षते)

अस्मादन्नादिति भागमवेक्षते ॥ ११ ॥

साकाङ्क्षत्वान्निर्भक्त इत्यनुषङ्गः । भागसंस्काराच्चान्तर्लुप्तेऽपि प्रवृत्तिः । एतस्मादेव बहुयजमानकेऽप्येकः करोति ।

स्वस्वांशावेक्षणमित्यपरे । एककर्तृकत्वे चान्वारम्भः ॥ ११ ॥

अस्यै प्रतिष्ठाया इति भूमिम् ॥ १२ ॥

अवेक्षते इतिक्रियापदानुषङ्गः (सूत्रे) । मन्त्रे च "ततोनिर्भक्त" इत्येवमादि ( अनुषज्यते ) ।

स चायं पदार्थोऽर्थकर्मत्वादन्तर्लुप्ते वर्त्तते ॥ १२ ॥

( प्राचीमीक्षते )

अगन्मस्वरिति प्राङ्॥ १३ ॥

ईक्षत इति वर्त्तते । एतदप्यर्थकर्मैव । नात्र प्रतिपत्तिरूपतेति ॥ १३ ॥

( आहवनीयमीक्षते )

संज्योतिषेत्याहवनीयम् ॥ १४ ॥

ईक्षते इति वर्त्तते । अप्रतिपत्तिरूपत्वादेतदप्यर्थकर्म ।

ज्योतिषो हि सम्भवनमत्र प्रार्थ्यते । तेन यागसाधनभूताहवनीयद्रव्यसम्बन्धेऽपि सति न तत्संस्कारपरिकल्पनम् । एवं चान्तलोपे निवृत्तिः ॥ १४ ॥

( सूर्यमीक्षते )

स्वयम्भूरिति सूर्यम् ॥ १५ ॥

स्वयम्भूरित्यनेन मन्त्रेण सूर्यमवेक्षते ॥ १५ ॥

वर्च्चोदा ऽइति यं वा कामं कामयते ॥ १६ ॥

"वर्च्चोदा ऽअसि" इति अत्र मन्त्रे प्रयोगः । यं वा कामं कामयते तद्वाचिपदप्रयोगो वा । सूर्यावेक्षणमपि अर्थकर्मैव ॥ १६ ॥

[ प्रदक्षिणमावर्तते ]

सूर्यस्येत्यावर्त्तते प्रदक्षिणम् ॥ १७ ॥

प्रदक्षिणग्रहणादितरथावृत्तिव्युदासः । अथवा श्रौतमेतदिति । "आवृत्तिसामन्तेषु प्रदक्षिणम्" इति तत् स्मार्त्तम् । श्रौते सति कोविशेष इति चेत् । श्रौतं प्रायश्चित्तं तदपचारे यथा स्यादिति ॥ १७ ॥

प्रदक्षिणाधिकारमुपजीवन्नाह—

ग्रहग्रहणप्रतिगरहोमेषु च तूष्णीम् ॥ १८ ॥

ग्रहग्रहणादिषु तूष्णीं प्रदक्षिणावर्त्तनम् (१) ॥ १८ ॥

( गार्हपत्योपस्थानम् । )

गार्हपत्यमुपतिष्ठतेऽग्ने गृहपत ऽइति शतं हि मा इति ब्रूयाद्वा ॥ १९ ॥

नवेति मन्त्रे विशेषः । एतदप्यर्थकर्म ॥ १९ ॥

---

(१) कर्त्तव्यमिति शेषः । इदमत्रानुसन्धेयम्–सशस्त्रग्रहेष्वेवायं धर्मः, न शस्त्रमात्रे प्रतिगीर्ये न ग्रहग्रहणमात्रे न होममात्रे इति । प्रदक्षिणक्रियाशेषत्वान्मन्त्रोऽपि प्राप्तस्तूष्णीमित्यनेन व्यावर्त्यत इति ।

( पुनः प्रदक्षिणमावृत्य प्राग् गत्वा आशीःप्रार्थनं कुर्यात् )

सूर्य्यस्येत्यावर्त्तते प्रदक्षिणम् ॥ २० ॥

गच्छति प्राङुरु विष्णविति ॥ २१ ॥

ततोऽसि तन्तुरस्यनुमा तनुह्यस्मिन्यज्ञे ऽस्या७ साधुकृत्यायामस्मिन्नन्नेऽस्मिँल्लोक ऽइदं मे कर्मेदं वीर्य्यं पुत्रोऽनुसन्तनोत्विति पुत्रस्य नाम गृह्णाति ॥ २२ ॥

पुत्रस्याशीःप्रार्थनार्थत्वाद् द्वादशाहे प्रतियजमानं पुत्रनामग्रहणम् ॥ २० ॥ २१ ॥ २२ ॥

आत्मनो ऽविद्यमाने, तन्तवे त्वा ज्योतिषे त्वेति वा ॥ २३ ॥

अविद्यमाने पुत्रे आत्मनो नाम गृह्णीयात्, तत्स्थाने "तन्तवे त्वाज्योतिषेत्वा" इति वा प्रयोगः ॥ २३ ॥

( तूष्णीमाहवनीयमुपतिष्ठते )

आहवनीयमुपतिष्ठते तूष्णीम् ॥ २४ ॥

मन्त्राभावाल्लौकिकवागुच्चारणप्रतिषेधः ॥ २४ ॥

( व्रतविसर्गः )

व्रतं विसृजते येनोपेयात् ॥ २५ ॥

येन मन्त्रेणोपेयात्तेनैवोत्सर्गः ॥ २५ ॥

[ यजमानस्य स्वकीयभागाशनम् ]

संयज्ञपतिराशिषेति भागं प्राश्नाति ॥ २६ ॥

साकाङ्क्षत्वात् [मन्त्रे]युज्यतामित्यध्याहारः । व्रतविसर्गभाग-

प्राशनयोरन्तरापच्छिन्नेऽपि प्रवृत्तिः। प्रतिपत्तिरूपत्वात् ॥ २६ ॥

[ प्रैषप्रयोगपूर्वकं ब्राह्मणं भोजयेत् ]

**ब्राह्मणं तर्प्पयितवै ब्रूयाद्यज्ञमेवैतत्तर्प्पयतीति श्रुतेः ॥ २७ ॥**

श्रुत्युपादानसामर्थ्यात्तदनुष्ठानं यथा स्यात् प्रैषवचनमात्रमेव मा भूदिति ॥ २७ ॥

इत्यष्टमी कण्डिका।

इत्युपाध्यायकर्ककृतौ कात्यायनसूत्रविवरणे
तृतीयोऽध्यायः समाप्तः।



# चतुर्थोऽध्यायः ।

( अमावास्यायां पिण्डपितृयज्ञः कर्तव्यः )

**अपराह्णे पिण्डपितृयज्ञश्चन्द्रादर्शनेऽमावास्यायाम् ॥ १ ॥**

श्रुत्यर्थमनुविधित्सुनाऽऽचार्येण पौर्णमासमनुविहितम् । इदानीमवसरप्राप्तं दर्शस्यानुविधानं कर्त्तव्यम् । तत्र च प्राक्कालीनः पिण्डपितृयज्ञः, सोऽनुविधेय इत्यत आह—

अपराह्णे पिण्डपितृयज्ञ इति । अह्नोऽपरो भागः अपराह्णः ।

तृतीयो भाग इत्यपरे । वाक्यशेषात् "पूर्वाह्णो वै देवानाम्" इत्युपक्रम्य "अपराह्णः पितृणाम्" इति ।

पिण्डपितृयज्ञ इति पिण्डदानकर्मनाम । अर्थानुगमात् संज्ञेयं यौगिकी पिण्डैः पितृणां यज्ञः पिण्डपितृयज्ञ इति । होमस्य च तादर्थ्यदर्शनात् "स देवैः प्रसूतोऽथैतत्पितृभ्यो ददाति" इति । "मासि मासि वोऽशनम्" इति च प्रकृत्य "यदेवैष न पुरस्तान्न पश्चाद्ददृशेऽथैभ्यो ददाति" इत्याहृत्य पिण्डदानमेवाभिधीयते, न जपहोमादि । प्रयोजनं तदकरणेऽभ्यावृत्तिः ।

चन्द्रादर्शनमभ्रादिनाऽपि भवति, तन्माभूदित्यमावास्यया विशेष्यते । तदेवोच्यतामिति चेत्, न । अमावास्याशब्दस्य कर्मविषयताऽपि दृश्यते "चतुर्होत्रा पौर्णमासीमभिमृशेत्पञ्चहोत्राऽमावास्याम्" इति । तत्र को दोषः । चतुर्दश्युपवासपक्षेऽपि प्राप्नोति । अस्तु तथेति चेत् । न । श्रुतिविरोधात् "यदेवैष न पुरस्तान्न पश्चाद्ददृशे" इति । अनेन च क्षयो लक्ष्यते । "तस्मिन्क्षीणे ददाति" इति हि श्रूयते । स च परमः क्षयः । इतरस्तु प्रत्यहमेव भवति । एवं च सति परमक्षयविशिष्ट एव काले पिण्डपितृयज्ञो नान्यत्रेति । यथा राजसूये पक्षमध्ये आमावास्ये दाक्षायणेच । खर्विकामावास्यायां दृष्टेऽपि चन्द्रमस्यपराह्णे परमक्षय इति क्रियत एव काले पिण्डपितृयज्ञः । "यदेवैष न पुरस्तान्न पश्चाद्ददृशे" इति क्षयोपलक्षणार्थत्वात् । "तस्मिन्क्षीणे ददातीत्यथ यत्क्षीणे दद्यात्समदं ह कुर्याद्देवेभ्यश्च पितृभ्यश्च" इति ॥१॥

( पिण्डपितृयज्ञार्थं दक्षिणाग्नौ चरुश्रपणं तत्रैव च होमः )

दक्षिणाग्नौ श्रपणꣳ होमश्च ॥ २ ॥

गार्हपत्याहवनीयापवादोऽयं, वचनात् ॥ २ ॥

( दक्षिणाग्नेः परिस्तरणं, तस्योत्तरतः पश्चाद्वा अर्थवतां पात्राणामेकश आसादनम् )

परिस्तीर्य तं पूर्ववत्पात्रासादनमेकशः ॥ ३ ॥

तमित्यवाच्यमाने 'न ज्ञायते कस्य परिस्तरणम्'इति तन्निर्देशः। पूर्ववदिति श्रपणस्य पश्चादुत्तरतश्चार्थवच्चेति। द्वन्द्वता मा भूदेकश इति ॥ ३ ॥

( गार्हपत्यादपरादिशि व्रीहिभिः अपूर्णां चरुस्थालीं स्रुचं वा तूष्णीं गृहीत्वा दक्षिणाग्नेरुत्तरतो गार्हपत्यस्य पुरस्ताद्दक्षिणाभिमुखास्तिष्ठन्नवहन्यात् )

अपरेण गार्हपत्यं चरुमपूर्णꣳ स्रुचं वा तूष्णीं गृहीत्वोत्तरेण दक्षिणाग्निमवहन्ति तिष्ठन् ॥ ४ ॥

"स जघनेन गार्हपत्यम्"इति वचनात्। अपूर्णता चरोः (चरुस्थाल्याः) स्रुचश्च। "अपूर्णं पितृणाम्"इति। तूष्णीमिति च लौकिकवागुच्चारणप्रतिषेधः, न ह्यत्र मन्त्रप्राप्तिरस्त्यपूर्वत्वात्। "उत्तरेण दक्षिणाग्निं तिष्ठन्नवहन्ति"इति वचनात् ॥ ४ ॥

( सकृत्फलीकुर्यात् )

सकृत्फलीकरोति ॥ ५ ॥

फलीकरणं पुनः पुनर्लोकप्राप्तम्, अतः सकृदुच्यते ॥ ५ ॥

( ईषत्स्विन्नचरुमभिघार्योद्वास्य मेक्षणेन जुहुयात् )

सारतण्डुलमपूर्णꣳ श्रपयित्वाऽभिघार्योद्वास्य मेक्षणेन जुहोत्यग्नय इति सोमायेति च ॥ ६ ॥

सारशब्दः सकलतण्डुलवाची। प्रसिद्धेः। ईषत्स्विन्नता वा। वाक्यशेषात् "शृताशृतं पितृणाम्"इति। प्रसिद्धिरनैकान्तिकी। गुडण्यपि सारशब्दप्रयोगात्।

"पूर्णं वै देवानामर्द्धपूर्णं मनुष्याणामुपर्यर्द्धं पितॄणाम्" इत्यपूर्णग्रहणम् । श्रपयित्वाऽभिघारयत्याज्येन । तत्कुतः । अन्यत्रापि दर्शनात्—"आज्येनाभिघार्य" इति । तच्च यथाकथंचिदभिघारणमात्रं, नियमाभावात् ।

उद्वासनं दक्षिणतः । पित्र्यत्वात् । पूर्वेणानीय मेक्षणेन जुहोत्यग्नय इति सोमायेति च ।

तच्च वैकङ्कतमाहुतिसम्बधात् ।

होमश्च यज्ञोपवीतिना प्राङ्मुखेनैव । दैवत्वात् । "स उद्वास्याग्नौ द्वे आहुती जुहोति देवेभ्य" इति । न वा पित्र्यकर्माङ्गत्वात् । प्रधानोपचारन्यायाच्चाङ्गानाम् । महापितृयज्ञे च देवाज्यग्रहेण यज्ञोपवीतित्वविधानात्—"स यज्ञोपवीती भूत्वाऽऽज्यानि गृह्णाति" इति । प्राप्तानुवाद इति चेत् । न । अनन्यपरत्वाद्वाक्यस्य । मन्त्रलिङ्गाच्च "कव्यवाहनाय पितृमते" इति । कव्यवाहनः पितॄणामिति पितृसम्बन्धात् । तस्मात्पित्र्यवदेव होमः[१] ॥ ६ ॥

(दक्षिणाग्नौ मेक्षणं प्रास्य तस्य दक्षिणतः पश्चिमतो वा स्फ्येन रेखां कुर्यात्)

प्रास्य तद्दक्षिणेनोल्लिखत्यपहता इत्यपरेण वा ॥ ७ ॥

"अग्नौ मेक्षणमभ्यादधाति" इति । दक्षिणेनापरेण वाऽग्नेरेव । स्फ्येनेति शाखान्तरात् ॥ ७ ॥

(रेखायाः परस्ताद्दक्षिणत उल्मुकं निदध्यात्)

उल्मुकं परस्तात्करोति ये रूपाणीति ॥ ८ ॥

लेखायाः ॥ ८ ॥

---

(१) अयं च प्रधानोपचारन्यायः पित्र्येष्टौ लिङ्गदर्शनात्पित्र्ये एव । तेन सोमयागे पिण्डदाने प्राचीनावीतित्वमेव, अन्नप्राशनहोमे च यज्ञोपवीतित्वमेव । अतएव भाष्यकारेण पितृनमस्कारानन्तरम् "उपस्पृश्य" इति सूत्रस्य पित्र्यधर्मव्युदासार्थत्वमभिहितम् । अन्यथा दैवकर्माङ्गभूतपितृनमस्कारे पितृधर्माप्राप्तेस्तदसंगतिः स्पष्टैव । श्राद्धाङ्गदैवकर्मणि तु "पिण्डपितृयज्ञवदुपचारः पित्र्ये" इति विशेषविधानेन तत् परिसंख्यायते इति बोध्यम् ।

( रेखाया मूलमध्याग्रेषु दक्षिणसंस्थमवनेजनं पिण्डदानाय कार्यम् )

उदपात्रेणावनेजयत्यपसव्यं सव्येन वोद्धरणसामर्थ्यात् ॥ ९ ॥

अत्राभिनयश्रुतिरुद्धाटितोद्धरणसामर्थ्यादिति—"इतीव वै देवेभ्यो जुह्वत्युद्धरन्ति मनुष्येभ्योऽथैवं पितॄणाम्" इति । पाणौ हि तीर्थचतुष्टयम् । अग्रे देवतीर्थम् मूले मनुष्याणामिति । अथैवमित्यङ्गुष्ठमूलं वा कनिष्ठिकाप्रदेशो वा । तत्राङ्गुष्ठमूले पितृतीर्थे स्मर्यत इत्यपसव्यमिति । कनिष्ठिकादेशे हि सव्यता भवति । सा च पितृभ्येऽनुचितेति ॥ ९ ॥

असाववनेनिक्ष्वेति यजमानस्य पितृप्रभृतित्रीन् ॥ १० ॥

असाविति नामादेशपूर्वकं यजमानस्य पितृप्रभृतित्रीनवनेजयति ॥ १० ॥

( अवनेजनक्रमेण रेखायामुपमूलं सकृदाच्छिन्नान् कुशानास्तीर्य पिण्डान् दद्यात् )

उपमूलं सकृदाच्छिन्नानि लेखायां कृत्वा यथावनिक्तं पिण्डान् ददात्यसावेतत्त इति ॥ ११ ॥

अन्नमिति चाध्याहारः । उपमूलमित्यस्वपदविग्रहो नित्यसमासः । मूलसमीपे यानि सकृदाच्छिन्नानि तान्युपमूलं दितानि बर्हिस्तृणानि । "अन्यत्रापि तृणार्थे" इत्युक्तत्वात् । लेखायां कृत्वा यथाऽवनिक्तं यत्र यत्रावनेजनं कृतं तत्र तत्र पिण्डान् ददाति असावेतत्त इति पितृप्रभृति ॥ ११ ॥

ये चत्वामन्विति चैके ॥ १२ ॥

मन्त्रस्य शेषं कुर्वन्ति ॥ ॥ १२ ॥

( पिण्डानामाभिमुख्येन "अत्रपितर" इति जपित्वा अप्रदक्षिणमावृत्योदङ्मुखो भूत्वा ग्लानिपर्यन्तं श्वासं निरुध्य प्रदक्षिणमावृत्य "अमीमदन्त" इति जपेत् )

अत्र पितर इत्युक्त्वोदङ्ङास्त आ तमनात् ॥ १३ ॥

पिण्डानामाभिमुख्येनोक्त्वाऽप्रदक्षिणं गत्वोदङ्ङास्ते तमनादर्वाक् ॥ १३ ॥

आवृत्यामीमदन्तेति जपति ॥ १४ ॥

आवर्त्तनं तेनैव मार्गेण । "अथोपपल्यय्य जपति" इत्युपदेशात् ॥ १४ ॥

( पुनरवनेजनं कृत्वा नीविविस्रंसनं कृत्वा षट् पुटाञ्जलीन् कुर्यात् )

अवनेज्य पूर्ववन्नीविं विस्र(ँ)स्य नमो व इत्यञ्जलिं करोति ॥ १५ ॥

विस्रंसनोपदेशात्पूर्वमेव नीविमत्परिधानम् । प्रतिनमस्कारं चाञ्जलिकरणम् "षट्कृत्वो नमस्करोति" इति वचनात् । षट्कृत्वो नमस्करोतीति सूत्रकारानुपदेशाश्चेति चेत् । स्यात् महापितृयज्ञे उक्तत्वात् "षड्वा नमस्कारान्" ( का. श्रौ.अ. ५ कं. ९ सू. २५ ) इति । श्रुतेश्च तुल्यत्वात् "षट्कृत्वो नमस्करोति" इति ॥ १५ ॥

( प्रतिपिण्डं सूत्राणि ऊर्णादशा वा यजमानलोमानि वा समर्पयेत् )

एतद्व इत्युपास्यति सूत्राणि प्रतिपिण्डम् ॥१६॥

बहुवचनोपदेशात् त्रीणि त्रीणि ॥ १६ ॥

ऊर्णादशा वा ॥ १७ ॥

वेति विकल्पः ॥ १७ ॥

वयस्युत्तरे यजमानलोमानि वा ॥ १८ ॥

(१)उत्तरग्रहणाद् द्वे वयसी अभिप्रेते । ततश्चोर्ध्वं पञ्चाशतः ॥१८॥

---

(१) तरप्प्रत्ययस्य द्वयोरेकस्यातिशये विधानात् तरप्प्रत्ययान्तेन उत्तरशब्देन द्वयोर्मध्ये उत्तरं वयसीत्यर्थलाभादिति भावः । द्वैविध्यं च उपचयापचयभेदात् । तत्र पूर्णस्य "शतायुर्वै पुरुष" इति श्रुतेः शतवर्षपरिच्छिन्नत्वात् तत्पूर्वार्धस्य पञ्चाशद्वर्षपरिमितत्वात् तदूर्ध्वमुत्तरं वय इति बोध्यम् ।

(अवनेजनावशिष्टं जलं पिण्डेषु पिण्डसमीपे वा निषिञ्चेत्)

ऊर्जमित्यपो निषिञ्चति ॥ १९ ॥

पिण्डमूलेषु । "तर्पयत मे पितॄन्" इति लिङ्गात् ॥ १९ ॥

( अध्वर्युणा स्थाल्यामवहितान् पिण्डान् यजमानोऽवजिघ्रति )

अवधायावजिघ्रति यजमानः ॥ २० ॥

स चायं यजमानसंस्कारः । "स यजमानभाग" इति वचनात् । ततश्च नाध्वर्युरवजिघ्रति । "अथावजिघ्रति प्रत्यवधाय पिण्डान्" इति प्रतिप्रयोगसामर्थ्यादध्वर्युरेव प्रत्यवधाने । ल्यप्प्रयोगान्नेति चेत् । स्यात्कालार्थत्वात् । (१)निरुप्याज्यं प्रातर्दोहनमिति यथा॥२०॥

[ सकृदाच्छिन्नान्यग्नावभ्याधाय उल्मुकमभ्यादध्यात् ]

उल्मुकसकृदाच्छिन्नान्यग्नौ ॥ २१ ॥

अभ्यादधातीति वाक्यशेषः । तत्र च पूर्वं सकृदाच्छिन्नानि, तत उल्मुकम् । "अग्नौ सकृदाच्छिन्नान्यभ्यादधाति पुनरुल्मुकमपि सृजति" इति वचनात् । अजादित्वादल्पाक्षरत्वाच्च (उल्मुकस्य) पूर्वनिपातः ॥ २१ ॥

[ ऋतुस्नाता पुत्रकामा पत्नी मध्यमपिण्डं भुञ्जीत ]

(२)आधत्तेति मध्यमपिण्डं पत्नी प्राश्नाति पुत्रकामा ॥ २२ ॥

प्रसवसमर्थेति वाक्यशेषः ॥ २२ ॥

पिण्डपितृयज्ञस्याधिकारनिरूपणायाह—

---

( १ )आज्यनिर्वाप-दोहनयोः समानकर्तृकत्वाभावेऽपि पूर्वोत्तरकालिकत्वार्थो ल्यप्प्रयोगो यथा, तथाऽत्रापि । न च "समानकर्तृकयोः पूर्वकाले" इतिसूत्रविरोधो दुर्वार इति वाच्यम् । स्थिते इत्यध्याहारेण तत्र समानकर्तृकत्वान्वयेन तद्विरोधाभावात् एवमेव य दोर्वंशं नरः श्रुत्वा सर्वपापैः प्रमुच्यते" इत्यादीनामुपपत्तिः । औत्सर्गिकं तु श्रूयमाणक्रियासमानकर्तृकत्वमेवेति बोध्यम् ।

(२) पुत्रकामा यजमानपत्नी 'आधत्तपितरोगर्भम्' इत्यनेन मन्त्रेण मध्यमपिण्डं प्राश्नाति, भुङ्क्ते इत्यर्थः ।

( जीवत्पितृकस्य पिण्डपितृयज्ञाननुष्ठानम् )

प्रेतेभ्यो ददाति जीवपितृकोऽपि जीवान्तर्हितेऽपि ॥ २३ ॥

दानं प्रवर्त्ततएव । पितृशब्दस्याविशेषाविषयत्वात् ॥ २३ ॥

जीवपितृकस्य होमान्तम् ॥ २४ ॥

कर्म स्यात् ॥ २४ ॥

अनारम्भो वा ॥ २५ ॥

कुतः—

न व्यवेते जातूकर्ण्यः ॥ २६ ॥

यस्माज्ज जीवेन व्यवेते व्यवहिते दानं मेने जातूकर्ण्यः ॥ २६ ॥

किमिति न व्यवेते—

न जीवन्तमति ददातीति श्रुतेः ॥ २७ ॥

"न जीवन्तमतीत्य ददाति" इति शाखान्तरेषु श्रवणात् । अतो होमान्तं कर्म स्यात् । यद्येवम्, अनारम्भ एव श्रेयान् । कुतः । दानस्य प्रधानभूतत्वात् । न च प्रधानाभावेऽङ्गानां प्रवृत्तिरस्ति । अतोऽनारम्भ एवेत्यवधार्यते ॥ २७ ॥

चतुर्दश्युपवासपक्षे ऽमावास्यायां पूर्वाह्णे दर्शयागः । तत्र चापराह्णे पश्चात्पिण्डपितृयज्ञः । अमावास्योपवासे पूर्वः प्राप्नोति ।

तत्रानियमे प्राप्ते आह—

( पिण्डपितृयज्ञो दर्शाङ्गम् )

पूर्वो वाऽङ्गत्वात् पिण्डपितृयज्ञः ॥ २८ ॥

पूर्व एव दर्शात्पिण्डपितृयज्ञो, न पश्चात् । कुत एतत् । अङ्गत्वप्रतिपादकवाक्यात् "पूर्वेद्युः पितृभ्यो यज्ञं निष्क्रीय प्रातर्देवेभ्यः प्रतनुते" इति । अमावास्यायामेव पूर्वो भवति ॥ २८ ॥

इदमत्र विचार्यते—किं पिण्डपितृयज्ञो दर्शाङ्गमुतानङ्गमिति ? । किं तावत्प्राप्तम् । अनङ्गमिति ब्रूमः—

प्रकरणकाललिङ्गानुग्रहवचनानाहिताग्नि-
श्रुतिभ्योऽनङ्गम् ॥ २९ ॥

प्रकरणभेदात् । प्रकरणपठितमङ्गं भवति, न चायं तत्प्रकरणे पठ्यते । किं च कालभेदात् पूर्वाह्णोऽपराह्ण इति । अङ्गानां चैककालता भवति । अपि च लिङ्गं भवति—"यक्ष्मणा गृहीतः पौर्णमासेन यजेत पिण्डपितृयज्ञेनैवामावास्यामवरुन्धे"—आमावास्यमन्तरेणापि पिण्डपितृयज्ञं दर्शयति । तस्मादनङ्गं उपपद्यते । अनुग्रहवचनं च पृथग्दर्शाङ्गवति "कथमेषां पितृयज्ञोऽनन्तरितो भवति" इति । अथाङ्गं स्यात् "कथमेषामामावास्यं हविरनन्तरितं भवति" इत्युक्ते "दध्ना च" इत्यामावास्यानुग्रहेणैवानुगृहीतः पितृयज्ञो ऽनुग्रहवचनं पृथक् नोपपद्यते । अपि चानाहिताग्निश्रुतिर्भवति "अप्यनाहिताग्निना कार्य" इति । अङ्गत्वे हि दर्शे असति न क्रियेत । ततोऽप्यनङ्गमिति ॥ २९ ॥

अङ्गं वा समभिव्याहारात् ॥ ३० ॥

अथवाऽङ्गं पिण्डपितृयज्ञः । कुत एतत् । समभिव्याहारात् । समित्येकीभावेनाभिव्याहरणं समभिव्याहारो वाक्यम् । वाक्यादित्यर्थः । पूर्वेद्युः पितृभ्यो निष्क्रयं कृत्वा प्रातर्देवेभ्यः प्रतननम् । यच्च येन विना न भवति तत्तदर्थं, तादर्थ्यलक्षणं तु शेषत्वं, तस्मादङ्गमिति । यत्तु प्रकरणभेदादनङ्गमिति । प्रकरणान्तरसमधीतमप्यङ्गं भवत्येव । यथा प्रवर्ग्यः सौत्रामणी चेति । भिन्नकालमप्यङ्गं भवति । यथाऽग्निहोत्रार्थमुद्धरणम् । लिङ्गं वचनं द्रष्टव्यम् । अनुग्रहवचनमर्थवादोऽङ्गत्वेऽप्युपपद्यते । "अप्यनाहिताग्निना कार्य" इति वचनम् । तस्मादङ्गं पिण्डपितृयज्ञ इति ॥ ३० ॥

इति चतुर्थाध्याये प्रथमा कण्डिका ।

पिण्डपितृयज्ञः प्राक्कालत्वादनुविहितः ।

इदानीमामावास्यमनुविधीयते—

( चतुर्दश्याममायां वा पलाशशाखाच्छेदनम् )

श्वो नोदेतेत्यदृष्टे वा पर्णशाखां छिनत्ति

शमीलीं वेषेत्वेत्यूर्जेत्वेति वा ॥ १ ॥

'श्वः न उदेता चन्द्रमा' इति ज्ञात्वा पर्णशाखां छिनत्ति। कुत एतत्। "तद्धैके दृष्ट्वोपवसन्ति" इति वचनात्। अदृष्टे वा। तत्कुतः। "अमावास्यायाममावास्यया यजेत" इति श्रुतत्वात्। पर्णः पलाशः। शमीलीं (१)वा। शमीमयीं वेत्यर्थः। इषेत्वेत्यूर्जेत्वेति वा। "तामाच्छिनत्तीषेत्वोर्जेत्वा" इति हि श्रूयते। न चानयोर्मन्त्रयोः करणत्वात्समुच्चयः ॥ १ ॥

छिनद्मीति वोभयोः साकाङ्क्षत्वात् ॥ २ ॥

छिनद्मीति उभाभ्यां सम्बध्यते। कुतः। साकाङ्क्षत्वात्। उभयोश्छेदने विनियुक्तत्वात् "तामाच्छिनत्तीषेत्वोर्जेत्वा" इति ॥ २ ॥

सन्नमयामीति वोत्तरे ॥ ३ ॥

तत्कुतः। "ऊर्जे त्वेत्यनुमार्ष्टि" इति वचनात्। अनुमार्जनं च प्रगुणीकरणम्। तच्च मन्त्रलिङ्गादेव प्राप्तमाचार्येण नाभिहितम्। एवं च सति द्वावपि मन्त्रौ माध्यन्दिनपाठाच्छेदने विनियुज्येते विकल्पेन। उत्तरस्त्वनुमार्जने एव। काण्वपाठात्(२) ॥ ३ ॥

( प्राच्या उदीच्याः प्रागुदीच्या वा पलाशशाखाया ग्रहणम् )

बहुलपलाशामशुष्काग्रां प्रागुदीची-

मन्यतमां वा ॥ ४ ॥

अन्यतमामिति वचनं न सर्वदिग्विषयम्। "प्राचीमाहरति उदीचीमाहरति प्रागुदीचीमाहरति" इति वचनात् ॥ ४ ॥

---

(१) शम्या अवयवः शमीली ताम्, 'शम्याष्ट्लञ्, टिड्ढाणञ्' इति पाणिनिसूत्राभ्यां ष्ट्लञ्ङीप्प्रत्ययाभ्यां रूपम्।

२ तथाचापस्तम्बः 'ऊर्जेत्वेति सन्नमयत्यनुमार्ष्टि वा' इति। सन्नमनमृजूकरणम्।

( शाखाछेदनात्पूर्वं व्रतोपायनं पौर्णमासवद्वा )

व्रतमुपैति ॥ ५ ॥

अनिर्ज्ञातकालस्य शाखाच्छेदनस्यावसरविधित्सयेदमुक्तम् । ततश्च व्रतोपायनीयाशनोत्तरकालं छेदनमिति । तत्प्राप्तिश्च प्रकरणाविभागात् । सूत्रकारोपदेशाच्च "पौर्णमासवदन्यत्" इति ॥ ५ ॥

व्रतग्रहणे नियमो माभूदित्याह—

(१)यथोक्तं वा ॥ ६ ॥

( पलाशशाखया वत्सानां स्त्रीपुंससाधारण्येन एकैकस्योपस्पर्शनम् )

मातृभिर्वत्सान्संसृज्य वत्सं शाखयोपस्पृशति वायव स्थेति ॥ ७ ॥

संसर्गश्च मेलनम् । वत्सस्य चोद्दिश्यमानत्वात्प्रतिवत्समुपस्पर्शनम् । लिङ्गं चाविवक्षितमुद्दिश्यमानत्वादेव । क्वचिच्चोपदेशात् "पुंवत्साम्" इति । यदि वत्सशब्दः स्त्रीविषयोऽपि तदैतदुपपद्यते । तथा च पाणिनिः—"ग्राम्यपशुसङ्घेष्वतरुणेषु स्त्री" इति 'स्त्रीशब्दः साधुर्भवति तरुणेषु पुंशब्द' इति । एवं च सति स्त्रीवत्सा अपि गावो गृह्यन्ते ॥ ७ ॥

उपायव स्थेति चैके ॥ ८ ॥

मन्त्रश्लेषं कुर्वन्ति । उपस्पर्शनं च पृथक्करणार्थम् । उत्तरसूत्रात् ॥८॥

( वत्समातृणामेकां पलाशशाखयोपस्पृशेत )

देवो व इति मातृणामेकां व्याकृत्य ॥ ९ ॥

"शाखयोपस्पृशति वत्सेन व्याकृत्य" इति वचनात् । एकस्याश्चोपस्पर्शने सर्वासां संस्कार इति । कुत एतत् । मन्त्रे बहुवचनोपदेशात् "आप्यायध्वमघ्न्या" इति । ततश्च "वहिनीदध्यैन्द्रम्" [का० श्रौ० अ० १५ कं० १ सू० २८ ] इत्यत्र मन्त्रो विपरिणस्यते इति सम्प्रदा-

१ यस्मिन् काले वैकल्पिकमुक्तं तत्र काले वा भवति इह वेति सूत्रार्थः ।

यः। अपरे तु अन्यायनिगदत्वादविपरिणाममिच्छन्ति । यैवोपस्पृश्यते तस्या एव संस्कार इति। बहुवचनं पूजार्थम्। "एता उ त्या उषसः केतुमक्रत" इतिवत् ॥ ९ ॥

( सान्नाय्ये इन्द्रो महेन्द्रो वा देवता )

ऐन्द्रं भवति माहेन्द्रं वा ॥ १० ॥

मन्त्रे हीन्द्रशब्द एव दृश्यते स एव मा भूदित्यत आह माहेन्द्रं वेति। अतश्च विकल्पः । तच्च वचनात्—"तद्वैके महेन्द्रायेति कुर्वन्ति" इति ॥ १० ॥

[ अग्न्यगारस्य पुरस्तात्पलाशशाखाया उपगूहनम् ]

यजमानस्य पशूनित्यग्न्यगारस्यान्यतरस्य

पुरस्ताच्छाखामुपगूहति ॥ ११ ॥

द्वे ह्यग्न्यगारे। तयोरन्यतरस्य पुरस्तादुपगूहनम्। यजमानग्रहणं च पशुविशेषणत्वाद् बहुयजमानकेऽपि नोह्यते। पशूनां तु क्रत्वङ्गभूतानां पालनमिहेष्यते। ततश्च वहिनीदधानि ( पशुं पाहीति ) विपरिणामः ॥ ११ ॥

( सान्नाये पुरोडाशे च उपवेषकरणम् )

मूलादुपवेषं करोति वेषाऽस्युपवेष इति ॥ १२ ॥

"मूलतः शाखां परिवास्योपवेषं करोति" इति वचनात्। उपवेषनिष्पत्तौ च मन्त्रः । शाखायाश्च परिवासनं संस्कारः । ततश्च केवलायामामिक्षायां तूष्णीमेव शाखापरिवासनम्। परिवासितया हि पयसोऽपाकरणमिति ॥ १२ ॥

सान्नाय्ये शाखासंयोगात् ॥ १३ ॥

सान्नाय्ये एवोपवेषः। कुतः। शाखासंयोगात् "शाखां परिवास्योपवेषं करोति" इति ॥ १३ ॥

उपधानाद्वोभयोः ॥ १४ ॥

वाशब्दः पक्षव्यावृत्तौ। उपधानार्थत्वादुपवेषस्योभयत्र प्रवृत्तिः। ततश्च शाखाऽभावे वारणो भवति ॥ १४ ॥

[ शाखां परिवास्य तस्यां कुशद्वयरूपं पवित्रं बध्वा तस्या अग्न्यगारे उपगूहनम् ]

वसोः पवित्रमिति पवित्रमस्यां बध्नाति कुशौ ॥ १५ ॥

"वसोः पवित्रम्"इत्यनेन मन्त्रेण कुशावेव पवित्रं बध्नाति शाखायाम् । ते चैते परिवासनपवित्रबन्धने शाखोपगूहनात्पूर्वं कर्त्तव्ये । अर्थाद्धि पाठो बाध्यत इत्युक्तं "विरोधेऽर्थस्तत्परत्वात्"इति । पश्चाच्च परिवासनादौ क्रियमाणे सति उपगूहनमदृष्टार्थं स्यात् । दृष्टार्थता चास्याः शाखाया अनाश इति । दृष्टे च सति नादृष्टपरिकल्पना साध्वी । अतः पश्चादुपगूहनमिति ॥ १५ ॥

( वेण्याकारं वा पवित्रं शाखायां बध्नीयात् )

त्रिवृद्वा ॥ १६ ॥

[ १ ] त्रिवृत् वेण्यभिधीयते । तां वा बध्नाति । वाशब्दो विकल्पार्थः ॥ १६ ॥

(सान्नाय्ययाजिनो ऽन्त्येऽहनि रात्रौ यवाग्वाऽग्निहोत्रहोमो न पयसा)

यत्राग्वाऽग्निहोत्रहोमः सन्नयतस्ताँ रात्रिम् ॥ १७॥

तां रात्रिमिति वचनात् पक्षमध्ये आमावास्ये न यवागूनियमः ॥ १७ ॥

[ गौर्वत्सेन सङ्गतेति दोग्ध्रा उक्तरिते अध्वर्युः स्थालीमादायाधिश्रित्योदगग्रं पवित्रमस्यां निधाय अशूद्रेण दोहयित्वा यजमाने स्थालीमन्वारब्धे आसिच्यमाने पयसि देवस्त्वेति जपेत् ]

हुत उपसृष्टां प्रब्रूतादित्याह ॥ १८ ॥

हुतेऽग्निहोत्रे दोग्धारमाहोपसृष्टां प्रब्रूतादिति ॥ १८ ॥

प्रोक्ते धौरसीति स्थाल्यादानम् ॥ १९ ॥

उपसृष्टेति प्रोक्ते दोग्ध्रा प्रतिप्रश्ने द्यौरसीति स्थाल्यादानम् । तच्चाधिश्रयणार्थम् । अतश्च वायव्ये पयसि अधिश्रयणाभावादनादा-

[ १ ] आपस्तम्बः, त्रिवृद्दर्भमयं पवित्रं शाखायां शिथिलमवसजति इति ।

नम् । एवं कार्यापत्त्या च वपाश्रपण्योरादाने विपरिणामः—'द्यौ स्थः' 'पृथिवी स्थ' इति ॥ १९ ॥

मातरिश्वन इत्यधिश्रयति ॥ २० ॥

स्थालीम् ॥ २० ॥

वसोः पवित्रमिति पवित्रमस्यां करोत्युदग्ग्रं ॥ २१ ॥

प्राग्वेति विकल्पः । तच्चैतच्छ्रौतं प्रागुदग्ग्रहणम् । स्मार्तं हि वचनमन्तरेणापि प्राप्नोत्येव । प्रयोजनं तदपचारे श्रौतं प्रायश्चित्तम् ॥ २१ ॥

वाग्यतो दोहयत्यशूद्रेण ॥ २२ ॥

दोहयतीति कारितत्वादध्वर्युणा गां धुक्ष्वेति । शूद्रपर्युदासाच्च क्षत्रियवैश्ययोरभ्यनुज्ञा ॥ २२ ॥

स्थाल्यन्वारब्धे देवस्त्वेत्यासिच्यमाने जपति ॥ २३ ॥

स्थाल्यन्वारब्धे यजमाने "देवस्त्वा" इति आसिच्यमाने जपत्यध्वर्युः ॥ २३ ॥

[ 'कामधुक्ष' इति प्रश्ने क्रमेण 'सा विश्वायुः' इत्यादिना प्रतिवचनम् ]

कामधुक्ष इति प्रश्नः ॥ २४ ॥

'कां दुग्धवानसि' इति दोग्धारं पृच्छति ॥ २४ ॥

प्रोक्ते सा विश्वायुरित्याह ॥ २५ ॥

अमूमिति प्रोक्ते नामाङ्किते "सा विश्वायुः" इति आह ॥ २५ ॥

एवमितरे उत्तराभ्यां प्रतिमन्त्रम् ॥ २६ ॥

एवमितरे द्वे दोहयति । एवंशब्दाच्च समस्तः क्रियोपदेशः । अयं तु विशेषः—उत्तराभ्यां प्रतिमन्त्रमभिदधाति ॥ २६ ॥

विसृष्टवागुत्तरा अनन्वारब्धे ॥ २७ ॥

दोहयतीति वाक्यशेषः । अन्वारम्भवाग्यमयोश्च प्रतिषेधाज्जपो भवत्येव ॥ २७ ॥

'उत्तरा दोहयति' इत्येतावत्युक्ते न ज्ञायते कियत्यो दुह्यन्ते इति- अत आह—

( तिसृणां दोहनम् )

यावत्स्वमधिकारात् ॥ २८ ॥

यावत्यश्चास्य गावस्तावत्य इति । कुत एतत् । अधिकारात् । अपरिज्ञाने सत्यधिकारो व्यवच्छेदकः ॥ २८ ॥

तिस्रो वा नित्यत्वात् ॥ २९ ॥

तिस्रो वा दुह्यन्ते । त्रित्वे हि नित्यं बहुवचनं व्यवस्थितम् ॥२९॥

ननु चतुर्थादावपि भवत्येव । सत्यमेवम्—

आदिसामर्थ्यात् ॥ ३० ॥

त्रित्वगतमेव बहुवचनमाद्रियते । उक्ते हि बहुत्वे कुतः शास्त्रार्थ इति किमित्युत्तरमवगम्यते ॥ ३० ॥

दर्शनाच्च ॥ ३१ ॥

दृश्यते चायमर्थो यथा बहुवचनश्रवणे त्रित्वगतमेवोपादीयते । "कृष्णा भौमाः, धूम्रा आन्तरिक्षाः, बृहन्तो दिव्याः, शबला वैद्युताः, सिध्मास्तारकाः" इति पञ्च बहुवचनान्यनुक्रम्य पञ्चदश दर्शयति- "अर्द्धमासानां वा ऽएष प्रतिमा यत्पञ्चदशिनो यत्पञ्चदशिन आलभते" (श० ब्रा० कां० १३ । अध्या० २ ब्रा० ५ कं० १) इति ॥३१॥

( परिक्षालनोदकमध्वर्युः स्थाल्यामासिञ्चेत् )

परिक्षालनमानयति "सम्पृच्यध्वमृतावरीरूर्मिणा मधुमत्तमाः । पृञ्चतीर्मधुना पयो मन्द्रा धनस्य सातय" इति ॥ ३२ ॥

तच्चाध्वर्युरानयति । दोहमात्रेऽन्यस्य श्रुतत्वात् ॥ ३२ ॥

( सायंहोमशेषेण पय आतनक्ति )

उद्वास्यातनक्ति "प्राग्घुतशेषेणेन्द्रस्य त्वेति ॥३३॥

प्रातर्हुतशेषेणेति सम्प्रदायः । नेत्यपरे । तदा प्रातर्हुतशेषेणेत्येवावक्ष्यन् । अतः प्राक्शब्दस्य पूर्वकालवाचित्वात्पूर्वं यद्धुतशेषं सायंहोमशेषमित्यर्थः । आतनक्तीति आतञ्चे रूपम् । स च सङ्कोच-

नार्थः । सङ्कोचः काठिन्यं, तत्तु सायंहोमशेषेण सुकरमिति । इन्द्रस्य त्वेति चोपलक्षणम् । महेन्द्रस्यापि भावात् । "तद्धैके महेन्द्रायेति कुर्वन्ति" इति ॥ ३३ ॥

( सोदकेनोत्तानेन अमृन्मयेन पयस्थालीमपिदध्यात् )

(१) सोदकेनापिदधात्यमृन्मयेन विष्णो हव्यमिति ॥ ३४ ॥

"अथोदकवतोत्तानेन पात्रेणापिदधाति" इति वचनात् ॥ ३४ ॥

निधाय वत्सापाकरणं पूर्ववत् ॥ ३५ ॥

निधाय तत्पयो, वत्सापाकरणं पूर्ववत् । तत्र पयसे । "ऐन्द्रं पयोऽमावास्यायाम्" इति ॥ ३५ ॥

( असोमयाजिनोऽमायामाग्नेयैन्द्राग्नपुरोडाशौ )

प्रातराग्नेय ऐन्द्राग्नश्च द्वादशकपालोऽसन्नयतः ॥३६॥

"स एष उभयत्राच्युत आग्नेयोऽष्टाकपाल" इत्याग्नेयग्रहणम् । "अमा वै नोऽद्य वसुर्वसति" इत्युपक्रम्य "तस्मादैन्द्राग्नो द्वादशकपालः पुरोडाशो भवति" इत्याह । तच्चानदसन्नयतः ॥ ३६ ॥

( प्रातर्दोहनं पात्रान्तरे कर्तव्यम् )

निरुप्याज्यं प्रातर्दोहनमन्यस्मिन् ॥ ३७ ॥

आज्यनिर्वापे कृते प्रातर्दोहनमन्यस्मिन्पात्रे कर्त्तव्यम् । अन्यस्मिन्निति ग्रहणात्सायंदोहस्य तत्रैवातञ्चनम् ॥ ३७ ॥

( प्रातर्दोहं श्रपयित्वा सायंदोहमाहृत्य प्रातर्दोहमभिघार्य उद्वास्य उभौ दोहावनक्ति )

परिक्षालनान्तं कृत्वा सायंदोहमाहृत्य प्रातर्दोहꣳ श्रपयित्वाऽभिघार्योद्वास्योभावनक्ति ॥३८॥

प्रातर्दोहं श्रपयित्वा सायंदोहाहरणम् । यथाऽत्र दध्यर्थता भवति । अभिघारणं च पयसः । उभावनक्तीति प्राणदानम् ॥ ३८ ॥

---

(१)यदि मृन्मयं स्यात्तृणं दारु वाऽन्तर्दधाति इति देवयाज्ञिकः ।

(१)तदुभयोः—

( दध्नः पूर्वं पाठात् प्राणदानादयस्तस्य पूर्वम् , अवदानंतु श्रुतिवशात् पूर्वं पयस एव )

(२)शृतस्याग्रेऽवद्यतीति श्रुतेः ॥ ३९ ॥

अपन्यायत्वाच्छ्रुतिग्रहणम् । दध्नो हि पूर्वं क्रम इति । यदवद्यति तच्छृतस्य प्रथमम् ॥ ३९ ॥

( प्रणीतापवित्राभ्यां समस्य शाखापवित्रेण भक्षान्ते मार्जयित्वा तत् पुनः शाखायां निधेयम् )

समस्य मार्जनम् ॥ ४० ॥

शाखापवित्रेण सह मार्जनम् । तच्च पुनः शाखायामेव कर्त्तव्यम् ( न तु प्रस्तरे ) । मार्जनमात्रे एव श्रवणात् ॥ ४० ॥

( इन्द्राग्न्योरिति मन्त्रेण जुहूपभृतोर्व्यूहनम् )

इन्द्राग्न्योरिति व्यूहनम् ॥ ४१ ॥

ननु च "यथादेवतमन्यत्"इत्युक्तत्वादवाच्यमेतत् । न समाम्नायज्ञापनार्थत्वात् । अज्ञाप्यमाने हि समाम्नाये पदादिनापूर्वान्तन्यायेन इन्द्राग्न्योरित्यस्य पूर्वव्यूहनशेषतैव प्राप्नोति । तस्मात्साधूक्तमिन्द्राग्न्योरिति व्यूहनमिति ॥ ४१ ॥

( प्रस्तरेण सह शाखां प्रहरेत् )

सह शाखया प्रस्तरानुप्रहरणम् ॥ ४२ ॥

प्रस्तरप्रहरणस्य निर्ज्ञातकालत्वात् शाखाप्रहरणस्य चानिर्ज्ञातकालत्वात् प्रस्तरेण सह शाखां प्रहरतीति वाक्यार्थः ॥ ४२ ॥

( परिध्युपवेषयोर्होमः )

परिधिभिः सहोपवेषं जुहोति "जुहोमि त्वा सुभग सौभगाय पुरुतमं पुरुहूत श्रवस्यन्निति॥ ४३॥

---

(१) तदुभयोरित्यस्य यदवद्यति तच्छृतस्य प्रथमम् इत्यनेन संबन्धः ।
(२) अवद्यतीत्यन्तमावर्तनीयम् । तत्रैकं प्रतिज्ञानिर्देशकम् । द्वितीयं हेतुनिर्देशम् इति बोध्यम् ।

मन्त्रभेदाच्च कर्तृभेदः । ततश्चाग्नीदुपवेषं जुहोति(१) ॥ ४३ ॥

( सद्योऽन्वाधानव्यतिरिक्तमुक्तादन्यत्सर्वं पौर्णमासवत् )

## (२)पौर्णमासवदन्यदसद्यः ॥ ४४ ॥

न चायमतिदेशः । प्रकरणसाधारण्यात् साधारणत्वाद्धर्माणाम् । एवं चोभयत्र गुणकामप्रवृत्तिरविरुद्धा । इयांस्तु विशेषः—असद्यः ॥ ४४ ॥

( सोमयाजिनः सान्नाय्यनियमः )

## सोमयाजी सन्नयेत् ॥ ४५ ॥

सोमयाजिनो नियमः ॥ ४५ ॥

( सोमयाजिनोऽन्यस्य सान्नाय्यविकल्पः )

## कामादितरः ॥ ४६ ॥

"तस्मादप्यसोमयाजी सन्नमेव नयेत्" इति ॥ ४६ ॥

( त्रिंशतं वर्षाणि दर्शपूर्णमासाभ्यां यजेतेत्येकः पक्षः )

## त्रिंशतं वर्षाणि दर्शपूर्णमासाभ्यां यजेत ॥ ४७ ॥

"तस्मादु त्रिंशतमेव वर्षाणि यजेत" इति श्रुतत्वात् । दर्शपौर्णमासग्रहणं न कर्त्तव्यम् । उपक्रमादेतत्सिद्धेः । कर्त्तव्यं वा । आनन्तर्यात्सान्नाय्यस्य तद्गुणकविषयतैव मा भूदिति ॥ ४७ ॥

( दाक्षायणयज्ञी पञ्चदश वर्षाणि यजेत )

## पञ्चदश दाक्षायणयज्ञी ॥ ४८ ॥

"यद्यु दाक्षायणयज्ञी स्यादथो अपि पञ्चदशैव वर्षाणि यजेत" इति ॥ ४८ ॥

( अग्निहोत्रमिव यावज्जीवं दर्शपूर्णमासाभ्यां यजेतेतिशिष्टसंमतः पक्षः )

## अग्निहोत्रमेव वा जुहुयात् ॥ ४९ ॥

---

(१) प्रतिपत्तिरियम्, चरितार्थत्वात् । अतो नाशादोषादौ सकृद्गृहीतेनाज्येन होमः ।

(२) अत्र उक्तादन्यत् सर्वं पूर्णमासवत् 'भवति' इति शेषः ।

एवशब्द इवार्थे। यथाऽग्निहोत्रं यावज्जीवम् एवं दर्शपूर्णमासावपीति। उभयोस्तुल्यशास्त्रत्वात्(१)। "यावज्जीवमग्निहोत्रं जुहोति, यावज्जीवं दर्शपूर्णमासाभ्यां यजेत" इति ॥ ४९ ॥

इति चतुर्थाध्याये द्वितीया कण्डिका।

दर्शपूर्णमासयोः सान्नाय्यवतोरसान्नाय्यवतोश्चानुविधानं कृतम्। इदानीं दाक्षायणगुणकयोः कर्त्तव्यम्। तत्र च पयस्या विद्यते। सा च दधिपयोभ्यां भाव्यते। विकारत्वाच्च धर्मातिदेशं प्रत्यपेक्षा–किमत्र दध्नो धर्मा उत पयस इति। अनेनातिदेशप्रसङ्गेन यावानतिदेशः स सर्वो ऽभिधीयते। तत्पूर्वकत्वाच्च विशेषातिदेश ऊहो बाधश्चेति

तत्र तावदतिदेशविचारः क्रियते, यावद्वैकृतीषु चोदनासु यागत्वं च प्रतिपाद्यते। "सौर्यं चरुं निर्वपेत् ब्रह्मवर्चसकामः, ऐन्द्राग्नमेकादशकपालं निर्वपेत् प्रजाकामः, अग्नीषोमीयमजमालभेत" इति चैवमाद्यासु किं यावदुक्तं निर्वापमात्रम् आलम्भमात्रं च, उत यागा एते इति?।

शब्दलक्षणत्वात्कर्म्मणो यावदुक्तान्येतानि–इति प्राप्ते उच्यते—

( निर्वापादिमात्रश्रवणेऽपि द्रव्यदेवतासंयोगात् यागकल्पना )

**कर्मशब्दो द्रव्यदेवतायुक्तो यजतिः॥ १ ॥**

कर्मशब्द आख्यातशब्दो व्यापारशब्दो यो द्रव्यदेवतायुक्तः स यजतिः प्रत्येतव्यः। यागः प्रत्येतव्य इत्यर्थः। यद्यपि यजतिः याजिरिति च धातोर्निर्देशकस्तथापि तस्य द्रव्यदेवतासंयोगाभावात् तदर्थ एव गृह्यते। द्रव्यदेवतायुक्तः कर्मशब्दो याग इति। कुत एतत्। द्रव्यदेवतासंयोगात्। यश्च द्रव्यस्य देवतोद्देशेन त्यागः स याग इति। द्रव्यदेवतायुक्ते च कर्मशब्दे यागं दर्शयति। "मैत्राबार्हस्पत्यं चरुं निर्वपति" इत्यभिधाय "तयोरुभयोरवद्यन्नाह मित्राबृहस्पतिभ्यामनुब्रूहीत्याश्राव्याह मित्राबृहस्पती यजेति वषट् कृते जुहोति" इति सहानुवा-

(१) अतश्च विकल्पः, तथाचापस्तम्बः 'स्वर्गकामो दर्शपूर्णमासाभ्यां यजेत सर्वकामो वा युगपत् कामयताहारपृथक्त्वे वा यावज्जीवं यजेत त्रिंशतं वर्षाणि वा जीर्णो वा विरमेत्' इति।

चनविधिपरे वाक्ये यागं दर्शयति। तथा पशौ "अग्नीषोमाभ्यां छागस्य हविः प्रेष्येति वषट् कृते जुहोति"इति प्रैषविशेषविधिपरे वाक्ये यागं दर्शयति । एकदेशस्थितमपि च लिङ्गं स्थालीपुलाकवत् सर्वत्र गमकम्भवति । न्यायस्य तुल्यत्वात् । तस्माद्यागा एते इति ॥ १ ॥

यागेषु सत्सु किं यागमात्रं भवत्युत धर्मा अपि सन्तीति ? । यदा च सन्ति तदा किं पूर्णाहुतिका, उताग्निहोत्रिका, उत दर्शपौर्णमासिका, उत ज्योतिष्टोमिका इति, अथ दर्शपूर्णमासिका एवेति । किं तावत्प्राप्तम् । धर्माणामनाम्नानादधर्मका इति ।

एवं प्राप्तेऽभिधीयते—

( इष्टिषु अग्नीषोमीयपशौ च दर्शपूर्णमासधर्माणामातिदेशः )

## दर्शपूर्णमासधर्मा इष्टिपशुषु सामर्थ्यात् ॥ २ ॥

सामर्थ्यादित्ययं हेतुर्धर्मसत्तायां तद्विशेषे च । साधारणधर्मसत्तायां तावत्-एवमेताश्चोदनाः समर्था भवन्त्यर्थवत्यो भवन्तीत्यर्थः । इतरथा सापेक्षाः सत्योऽनर्थिकाः स्युः । तत्कथम् । सौर्यं यागेन ब्रह्मवर्चसं भावयेदित्यपरिपूर्णं वाक्यम्(१) । यच्च नामापरिपूर्णं तद् अध्याहारेण वाऽनुषङ्गेण वा पूरयितव्यम् । न हि वेदे मात्रामात्रस्याप्यानर्थक्यमिष्यते । तेनात्र विध्यन्तोऽनुषक्तव्यो वाक्यपूरणायानर्थक्यं मा भूदिति ।

स च दार्शपौर्णमासिकः सामर्थ्यादेव । स एवात्र शेषी भवितुं समर्थः । व्यक्तचोदनाचोदितत्वेन निर्वपतिसशब्देनेन च प्रतीयमानत्वात् । नान्य इति । विध्यन्तानुषङ्गेण च धर्माणामनुषङ्ग इति दर्शपौर्णमासधर्मा इति सूत्रितम् । इष्टिपशुष्विति च इष्टिषु पशौ चेति द्रष्टव्यम् । पश्वन्तरेषु ह्यग्नीषोमीयधर्मप्राप्तिं वक्ष्यति "अग्नीषोमीयदर्शनात्"इति ॥ २ ॥

## दर्शनाच्च ॥ ३ ॥

दृश्यते चायमर्थो यथा दर्शपूर्णमासधर्मा इष्टिपशुषु प्रवर्त्तन्ते इति । "सावित्रीमिष्टिं निर्वपति" इति प्रकृत्याह-"तस्यै प्रयाजेषु तायमानेषु ब्राह्मणो वीणागाथी दक्षिणत उत्तरमन्द्रामुदाघ्नंस्तिस्रः स्व-

---

१ किम्, केन,कथम् , इत्यंशत्रये कथमंशाभावादपरिपूर्णता वाक्यस्य ।

थः सम्भृता गाथा गायति" इति गाथागानविधिपरे वाक्ये प्रयाजान्द-र्शयति। तथा पशौ "स उत्तरमाघारमाघार्यांसꣳस्पर्शयन् स्रुचौ प-र्यैत्य जुह्वा पशुः समनक्ति" इति पशुसमञ्जनविधिपरे वाक्ये उत्तरा-घारं दर्शयति ॥ ३ ॥

एवं सर्वेष्टिष्वेवानुमानिकवचनेन धर्मप्राप्तिरभिहिता। इदानीं तदपवादत्वेन प्रत्यक्षशिष्टेन धर्मप्राप्तिरभिधीयते—

( चातुर्मास्येषु वैश्वदेवधर्माणामतिदेशः )

## वैश्वदेवधर्माश्चातुर्मास्येषु वचनप्रवृत्तिभ्याम् ॥ ४ ॥

वैश्वदेवमिति चातुर्मास्यानां प्रथमं पर्व। तस्य धर्मा उत्तरेषु पर्वसु प्रवर्त्तन्ते। कुतः। वचनात्। वचनादिति हेतुश्चायमुपदेशश्च। ततश्च य-त्रैव वचनं तत्रैव प्राप्तिः। प्रतिपर्वं वचनं भवति "अथैतान्येव पञ्च हवीꣳषि भवन्ति" इति। तानि चाग्नेयादीनि वैश्वदेविकानि पञ्च चोद्यन्ते। तेषां चोपक्षीणत्वात्तद्धर्मकाणीति गम्यते। धर्मप्रवृत्तिं च दर्शयति शु-नासीरीये—"अथैतान्येव पञ्च हवीꣳषि भवन्ति" इत्यभिधाय "तस्या-युक्तोपाकिरन्त्युत्तरवेदिं, न गृह्णन्ति पृषदाज्यं, न मन्थन्त्यग्निम्" इति प्रतिषेधात। प्रतिषेधश्च प्राप्तिपूर्वको भवति। अप्राप्तत्वाच्चोत्तरवेदिप्र-तिषेधोऽनुवादकः ॥ ४ ॥

( वारुणप्रघासिकेऽवभृथे सौमिकावभृथाद्धर्मातिदेशः )

## सोमाच्चावभृथे सामप्रतिषेधात् ॥ ५ ॥

सौमिकादवभृथाद्वारुणप्रघासिके धर्मप्राप्तिः। कुतः। वचनात्। चशब्देन वचनमनुकृष्यते। उच्यतेऽनेन शब्देनेति वचनं नामधेयम-वभृथ इति। सामप्रतिषेधाच्च। सौमिकादवभृथान्नामसामान्येन सामगानं प्राप्तम्। तत्प्रतिषेधो विधीयते। नाप्राप्तं प्रतिषेधति "तत्र न साम गीयते" इति ॥ ५ ॥

( रुधिरापासनं न कणापासनवत् )

## कणवत्पशौ न मन्त्रोपदेशात् ॥ ६ ॥

कणापासनक्रियावत् रुधिरापासनक्रिया "तथो एवासृक्पशौ" इति वचनेन प्राप्नोति। सा च प्रतिषिध्यते—न मन्त्रोपदेशादिति।

धर्मशेषक्रियाप्राप्तिः स्यात्, न मन्त्र उपदिश्येत । उपदिश्यते च "रक्षसां भागोऽसि" इति । तस्मात्तावन्मात्रमेव भवति । अशेषक्रियाविषयं वचनमित्याशङ्कानिवृत्त्यर्थमिदमुक्तम् ॥ ६ ॥

( आज्यदोहसामगाने लौकिकाग्नेरेवोपधानम् )

विशये लौकिकमयुक्तत्वात् ॥ ७ ॥

विशयः संशय उच्यते । यथा आज्यदोहेषु सामसु "अग्निमुपधाय स्तुवन्ति" इति, किं लौकिकम् अग्निद्रव्यम् उत वैदिकमिति । अत्र लौकिकं ग्रहीतव्यम् । अयुक्तत्वात् । इतरस्य च विशिष्टकार्यसंयोगादिति । ननु "अन्ये वाऽयुक्तत्वात्" (का० श्रौ० अ० २ कं० ८ सू० ६) इत्यभिहित एवायं न्यायः । न । प्रकरणसमधीतविषयता तस्येति । अस्य पुनरप्रकरणसमधीतविषयतेति योगान्तरारम्भः ॥ ७ ॥

दर्शपौर्णमासधर्माः सौर्यादिष्वपि भवन्तीत्येतदुक्तम् । दर्शपौर्णमासयोश्च षट् प्रधानानि । तत्रैतच्चिन्त्यते किं यस्मिन्कस्मिंश्चिद्वैकृते प्रधाने यतः कुतश्चिद्धर्मपरिप्राप्तिरुत नियमकारिकारणं किंचिदस्तीति? । किं तावत्प्राप्तम् । नियमकारणाभावादनियम इति ।

एवं प्राप्ते उच्यते–

( विकृतौ प्रधानविशेषे दर्शपूर्णमासीयप्रधानविशेषस्यैव धर्मा देवतैक्यादिसामान्यात् )

विधिविशेषः कर्मण्येक–द्वि–शब्दपरिमाण–द्रव्य–देवता–गुणसामान्येभ्यः ॥ ८ ॥

विधेर्विशेषः विधिविशेषः । वैकृते प्रधाने एकत्वादिभिर्विशेषैर्विशेषेण धर्मप्राप्तिः । यथा सौर्ये देवतैकत्वेनायान्तरसामान्येनाग्नेयधर्मप्राप्तिः । सत्यपि द्व्येकत्वे निर्वपतिसंशब्दने च नाग्नीषोमीयादिभ्यः । सदृशे हि प्रतीतिर्भवति । प्रतीतेन च धर्मसम्बन्ध इष्यते ।

द्विदेवतत्वाच्चाग्नावैष्णवेऽग्नीषोमीयविध्यन्तः । द्वित्वसामान्यात् ऐन्द्राग्नस्यापीति चेत् । न । शब्दपरिमाणात् उभौ हि पञ्चाक्षराविति ।

मारुते च शब्दपरिमाणादैन्द्राग्नविध्यन्तः ।

द्रव्यसामान्येन च विध्यन्तप्राप्तिर्यथा पुरोडाशे पौरोडाशिकः, सान्नाय्ये च सान्नाय्यस्य ।

देवतासामान्येन च विध्यन्तप्राप्तिर्यथाऽऽग्नेये आग्नेयस्य ।

ननु चैतदवाच्यम्, एकत्वेनैव गतार्थत्वात् । वाच्यं वा सौम्ये चरावग्नीषोमीयधर्मपरिप्रापणार्थम् । तत्र हि सोमोऽप्यस्तीति ।

इन्द्रसद्भावादैन्द्राग्नविध्यन्त ऐन्द्रे पुरोडाशे । तदेतदनुदाहरणम् । न ह्यत्र देवतासामान्यमस्ति समुदायात्तद्धितोत्पत्तेः । कस्तर्ह्यत्र समाधिः । "वक्ष्यति द्रव्यदेवताविरोधे द्रव्यस्य समवायात्" इति । तादर्थ्येन देवतासामान्योपन्यासः ।

गुणसामान्येनापि विध्यन्तप्रवृत्तिरिष्यते । यथा प्रतिकाममाग्नेये पौर्णमास्यां क्रियमाणे पौर्णमासाग्नेयविध्यन्तः, अमावास्यायाममावास्याग्नेयविध्यन्त इति । कालो ह्यत्र गुण इति । तदेतदपरेऽनुदाहरणमाहुः । न हि कालो गुण इति शक्यते वक्तुम् । सगुणं हि कर्म काले विधीयते इति ।

गुणसामान्ये तर्हि किमुदाहरणम् । अस्ति वैश्वदेवो द्वादशकपालः । तत्र देवताऽनेकत्वसामान्यादैन्द्राग्नविध्यन्तेनाग्नीषोमीयविध्यन्तेन वाऽनियमेन भवितव्यमित्येवं प्राप्ते आह । गुणसामान्यादैन्द्राग्नविध्यन्तः । उभौ हि द्वादशकपालाविति । शब्दपरिमाणं तत्रोदासीनमेव ॥ ८ ॥

अथ द्रव्यदेवताविरोधे किं द्रव्यसामान्येन विध्यन्तनियमोऽस्तु उत देवतासामान्येनेति ? । यथा वैष्णवे नवकपाले द्रव्यसामान्येन पौरोडाशिको, देवतासामान्येनोपांशुयाजविध्यन्त इति ।

तत्र नियमकारिकारणाभावादनियमे प्राप्ते आह—

( वैष्णवे नवकपाले, द्रव्यसामान्यात्पुरोडाशधर्माः, नतु देवतासामान्यादुपांशुयागधर्माः )

नियमो द्रव्यदेवताविरोधे द्रव्यस्य समवायात् ॥ ९ ॥

अत्र नानियमः । द्रव्यसामान्येन पौरोडाशिको विध्यन्तो नोपांशुयाजस्य । द्रव्यदेवतयोरुभयोरपि विध्यन्तपर्युपस्थापकत्वे द्रव्यमेव बलीयः । कुत एतत् । समवायात् । द्रव्यं हि यागे समवैति ।

तद्धि स्वजन्यमानं यागमभिनिर्वर्त्तयति । देवता तूद्देशांशेनोपकरोति । तेनासौ विप्रकृष्टेति । सन्निकृष्टविप्रकृष्टयोश्च सन्निकृष्टे सम्प्रत्ययः । अथवा समवायादिति द्रव्यमेव विशेष्यत्वेन हृदि समवैति देवता विशेषणत्वेन । विशेषणविशेष्ययोश्च विशेष्ये सम्प्रत्ययः ॥ ९ ॥

(१)आमिक्षायामुभयोस्तन्निर्वृत्तेः ॥ १० ॥

आमिक्षायामुभयोर्दधिपयसोर्धर्मप्राप्तिः । ताभ्यां ह्यसौ निर्वर्त्यते॥१०॥

नैकचोदनात् ॥ ११ ॥

नैतदस्ति, यदुक्तमुभयोर्द्धर्मप्राप्तिरिति । किं कारणम् । एकचोदनात् । एका हीयं चोदना "मैत्रावरुण्यामिक्षा" इति । सा चैका सती नोभे विकर्तुमर्हति । अतोऽन्यतरस्य विध्यन्तः ॥ ११ ॥

(२)दध्नः संघातात् ॥ १२ ॥

दध्नो हि विध्यन्तः प्रवर्त्तते । सङ्घातत्वसामान्यात् ॥ १२ ॥

(३)पयसस्तद्भावात् ॥ १३ ॥

पयसो वा तत्र विध्यन्तः प्रवर्त्तते । कुतः।तद्भावात् । ततो ह्यामिक्षा भवति । घनीभावयितुं दध्यानीयते । अथवा तद्भावादिति तद्रसस्य भावादामिक्षायाम् । मधुरं पयो मधुरा चामिक्षा ॥ १३ ॥

पशौ देवतासामान्यादग्नीषोमीयविध्यन्ते प्राप्ते आह—

( अग्नीषोमीयपशौ साम्नाय्यधर्माः )

पशोः साम्नाय्यस्य तदुक्तम् ॥ १४ ॥

पशोः साम्नाय्यस्य विध्यन्तः । तदुक्तम् "द्रव्यदेवताविरोधे द्रव्य-

---

(१)'दाक्षायणे श्रूयते' 'मैत्रावरुणी पयस्या' इति, चातुर्मास्येषु 'वैश्वदेवी पयस्या' इति, पयस्या वारुणी मारुती चेति। पयस्या दधिपयोभ्यां निष्पाद्यते । तत्र सन्देहः, किमस्यामुभयोर्धर्मा, उत दध्नः, उत पयस इति ?। तत्राद्यं पक्षमुद्भावयति' इति देवभाष्ये ।

(२)द्वितीयं पक्षमनुवदति ।

(३)सिद्धान्तमाह ।

स्य समवायात्'' इति । ननु नैवात्र द्रव्यदेवतयोर्विरोधो विद्यते । पशुद्रव्यस्य चोदितत्वात् । ( समाधत्ते ) इतरेतरप्रभवत्वेन पशुद्रव्ये प्रतीते साम्नाय्ये प्रतीतिर्भवति । प्रतीत्या च धर्मसम्बन्ध इष्यते । साम्नाय्यधर्माणां पशुद्रव्यं पर्युपस्थापकम् । देवता पौरोडाशिकानाम् । अतो द्रव्यदेवताविरोध एवायम् । ननु तेनैव गतार्थत्वादवाच्यमेतत् । न । तत्राव्यवहितं द्रव्यम्, इह पशुद्रव्येण व्यवधानादारम्भः ॥१४॥

## प्रायश्चित्तश्रुतेश्च ॥ १५ ॥

"पशूखा चेत्स्रवेत्साम्नाय्योखा वा तामभिमन्त्रयेत्" इति पशावप्युखां दर्शयति । सा च साम्नाय्यस्य विध्यन्ते घटते । ननु विपरीतमेतल्लिङ्गम् । साम्नाय्यस्य विध्यन्ते हि सति तदुखास्रुत्यभिमन्त्रणं पशूखायां प्राप्नोत्येव । विधाने तु सुतरामप्राप्तिर्गम्यते । सत्यम् । साम्नाय्ये च प्रधानस्य स्रुतिः, पशावुपसर्जनभूतस्योदकस्येति । तेन द्रव्यान्यत्वात्पुनरुच्यते ॥ १५ ॥

सङ्घातत्वसामान्यात्पशौ दध्नो विध्यन्ते प्राप्ते आह—

( अग्नीषोमीयपशौ पयोधर्माः )

## पयसः कालानन्तर्यधर्मानुग्रहेभ्यः ॥ १६ ॥

पयसो वा विध्यन्तः प्रवर्त्तते । एककालता पयसः पशोश्च । "यदा वै योषा रेतो धत्तेऽथ पयो धत्ते" इति । तथा "यदा पशुर्जायतेऽथ पयो जायते" इति । अथवा सद्यःकालः पशुः पयोऽपि सद्यःकालमेव । अनन्तरं च पशोः पयः । दधि तु पयोऽवस्थया व्यवहितम् । अत आनन्तर्यात्पयोविध्यन्तः । धर्मानुग्रहश्च भवति । पयःपात्राणां प्रोक्षणादयो धर्माः प्रवर्त्तन्ते, न दध्नः । तेषां चानुग्रहः कृतो भवति ॥ १६ ॥

प्राकृतं धर्मजातं विकृतिषु चोदकेन प्राप्नोतीत्युक्तम् ।

ततो द्व्यहकालतायामपि प्राप्तायामिदमाह—

( एतदधिकरणसिद्धान्तलेखः २५ सूत्रे द्रष्टव्यः । )

## सद्यस्त्वं काशकृत्स्निः ॥ १७ ॥

काशकृत्स्निः सद्यस्त्वम् मेने विकृतीनाम् । "य इष्ट्वा सोमेन

पशुनाऽऽग्रयणेन वा यक्ष्यमाणः स पौर्णमास्याममावास्यायां वा यजेत" इति वचनात् ॥ १७ ॥

अनुवादः पूर्वस्येति वात्स्यबादरी ॥ १८ ॥

वात्स्यश्च बादरिश्च वात्स्यबादरी तावाहतुः । विकृतिविषयत्वेन पौर्णमासी वाऽमावास्या चोच्यते । तेच प्रकृतितोऽपि चोदकेन प्राप्ते एव, अतोऽनुवादोऽयमिति ॥ १८ ॥

स्थितं तावदपर्यवसितम् । अन्यदन्तरा चिन्त्यते । यन्नाम प्राकृतस्य द्रव्यस्य कार्ये वैकृतमन्यद् द्रव्यान्तरं विधीयते, यथा "मौद्गं चरुं निर्वपेच्छ्रियै श्रीकाम" इति । किं तत्प्राकृतद्रव्यधर्मान् लभते उत न लभते इति । किं तावत्प्राप्तम् । व्रीहीन् प्रोक्षति व्रीहीनवहन्तीति व्रीहिसंयोगेन श्रुता धर्माः कथमिव मुद्गेषु भविष्यन्तीत्यत आह—

( प्राकृतकार्यापन्ने मुद्गादौ प्रोक्षणादयो व्रीहिधर्मा भवन्ति )

स्थानापत्तेर्द्रव्येषु धर्मलाभोऽविप्रतिषिद्धः ॥ १९ ॥

यद्वैकृतं द्रव्यं प्राकृतस्य कार्यापन्नं भवति तत् तद्धर्मान् लभते । कुतः । कार्यापत्तेः । प्राकृतस्य हि द्रव्यस्य धर्मसम्बन्धोऽपूर्वप्रयुक्तः । न स्वरूपप्रयुक्तः । आनर्थक्यात् । अपूर्वसाधनविशेषकारिता ह्यसौ । एवं च वैकृतेऽपि सोऽस्तीति प्रवर्त्तत एव ॥ १९ ॥

वैकृतद्रव्यं प्राकृतकार्यापन्नं तद्धर्मैर्युज्यत इत्युक्तम् । तेन तन्मन्त्राभिधानमपि लभते । इदं तु सन्दिह्यते, किमूहितेनाभिधानं कर्त्तव्यमुतानूहितेनेति । किं तावत्प्राप्तम् । अर्थबाधो मा भूदित्यनूहितेनेति प्राप्ते आह—

( विकृतौ अर्थाभिधानायोहः कर्तव्यः )

यथार्थमूहश्चोदिते ॥ २० ॥

चोदिते वैकृते प्रधाने द्रव्ये यथार्थमूहः कर्त्तव्यः । स (१)यथा यथा तमर्थं प्रकाशयति तथा तथोह्यते । यत्कारणम् । प्रकृतौ तेन मन्त्रेण यागसाधनं द्रव्यमभिहितं, विकारेऽपि हि तेन तदेव कर्त्तव्यम् । न

(१)यथा प्रकृतौ 'अग्नीषोमाभ्यां छागस्य वपायै मेदस' इति मन्त्रघटकछागपदस्थाने 'मेषस्य' इति भवत्यैन्द्रमेषादौ ।

चाविपरिणतरूपः शक्नोति कर्तुमित्यर्थाद्विपरिणम्यते ॥ २० ॥

प्रकृतावनेकपत्नीके यागे पत्नीशब्दस्य विपरिणामे प्राप्ते आह—

( प्रकृतौ पत्नीशब्देऽनूहः )

न प्रकृतावपूर्वत्वात् ॥ २१ ॥

इति। न प्रकृतौ विपरिणामोऽस्ति, अपूर्वत्वात्प्रकृतेः। न हि प्रकृतेरन्या प्रकृतिरस्ति, यद्विक्रियते। विकृतौ तु प्रकृतिवद्भावाद्विपरिणामः॥२१॥

प्रकृतिवद्विकृतिः कर्तव्येत्यनेनाशेषधर्मपरिप्राप्ताविदमाह—

( विकृतौ वचनादिना कार्याप्रवृत्तिः )

विकृतौ वचनार्थलोपविरोधेभ्योऽप्रवृत्तिः ॥ २२ ॥

विकृतौ वचनादप्रवृत्तिर्भवति। यथा पितृयज्ञे "न होतारं वृणीते नार्षेयम्" इति। अर्थलोपादप्रवृत्तिर्भवति। यथा मुद्गेष्ववघातस्य। विरोधादपि निवर्त्तते। यथा चरौ पेषणमिति ॥ २२ ॥

किमेतावदेव विकृतौ न प्रवर्त्तते। नेत्याह—

( विकृतौ अनुपङ्गलिङ्गस्य अभावे तत्प्रयोज्यस्याप्यभावः )

परार्थोत्पत्तेस्तदभावेऽभावः ॥ २३ ॥

परस्यार्थे निष्पद्यमाने यदुत्पन्नं तस्य परस्याभावे तस्याप्यभावो भवति। यथा सान्नाय्येष्ट्यां कणापासनस्य ॥ २३ ॥

परार्थोत्पन्नस्य पराभावेऽभावे प्राप्ते आह—

( परार्थोत्पन्नस्य पराभावेऽपि क्वचिद्वचनात्सत्ता )

चोदितत्वाद्वा भावः ॥ २४ ॥

परार्थोत्पन्नावपि भवत्येव यत्र चोदना भवति। यथा "यूपशकलेन ग्रहं सम्मार्ष्टि" इति यूपाभावेऽपि शकलमात्रं गृह्यते ग्रहसम्मृज्यर्थम्(१) ॥ २४ ॥

---

(१)ग्रहसंमार्जनक्रियायाः प्राधान्येन स्वसिद्ध्यर्थं शकलद्रव्याक्षेपादिति भावः। यत्र तु क्रिया द्रव्यार्था तत्र साधनभूतद्रव्याभावे तदभावः, यथा पौष्णचरौ कण्डनस्य।

स्थितादुत्तरमुच्यते। पौर्णमास्याममावास्यायां वा यजेतेत्यनुवादोऽयमित्युक्तम्। तत्र प्रतिविधीयते—

(वैकृतीष्टीनां पौर्णमास्यमावास्याकालनियमः)

न विपक्षे क्रियाः स्युः समभिव्याहारात् ॥ २५ ॥

किं चिह्नितं पक्षस्येति विपक्षः प्रतिपदुच्यते। तत्र च वैकृत्यः क्रिया न स्युः। क तर्हि। पक्षान्त एव स्युः। कुतः। "पौर्णमास्याममावास्यायां वा यजेत" इति वचनात्। ननूक्तमयमनुवाद इति। नानुवादः। अनुवादे हि पौर्णमासीशब्देन गौण्या वृत्त्या प्रतिपल्लक्ष्यते। तत्र श्रुतिः परित्यक्ता भवति। न चैतद्युक्तं, यल्लक्षणाऽनुरोधेन श्रुतिर्बाध्यते। अपि चानुवादोऽप्रवृत्तिविशेषकरत्वादनर्थक एव भवति। सोमस्य चैतदेव कालविधानं "य इष्ट्या सोमेन पशुना ऽऽग्रयणेन यक्ष्यमाणः स पौर्णमास्याममावास्यायां वा यजेत" इति। न ह्यन्यत्र सोमस्य पौर्णमास्यमावास्ये विहिते। अतोऽपि नानुवादः(१) ॥ २५ ॥

इति चतुर्थाध्याये तृतीया कण्डिका।

दर्शपौर्णमासयोः सान्नाय्यवतोरसान्नाय्यवतोश्चानुविधानं कृतम्। इदानीं दाक्षायणयज्ञोऽनुविधीयते—

(दाक्षायणयज्ञ इति दर्शपूर्णमासयोरेव गौणं नाम न कर्मान्तरम्)

दाक्षायणयज्ञः प्रजापशव्वन्नयशस्कामस्य ॥ १ ॥

दाक्षायणयज्ञ इति कर्मणो नामधेयम्। द्रव्यसंस्कारेष्वप्रसिद्धत्वात्। "तस्माद्दाक्षायणयज्ञो नाम" इति वचनात्। स च प्रजापश्वन्नयशस्कामस्य भवति। पर्यायेण च योगसिद्धिः। न हि कामानां युगपदुत्पत्तिसम्भवः ॥ १ ॥

---

(१) 'य इष्ट्येत्यत्रेष्टिग्रहणेनैवाग्रयणग्रहणे सिद्धे पुनस्तदुपादानम् अनिष्टिरूपस्याप्याग्रयणस्य पौर्णमास्यमावास्यालक्षणकालविधानार्थम्। तेन "दर्शपूर्णमासानीजानो दक्षिणाग्निपक्वचातुष्प्राश्यं ब्राह्मणान् भोजयेत्" इत्यनिष्टिरूपेऽपि आग्रयणे अयं कालः सिद्धो भवतीति भावः।

## नाम—फल—गुणयोगात्कर्मान्तरम् ॥ २ ॥

तथैतत्कर्मान्तरं न दर्शपौर्णमासाविति । कुतः । नामान्यत्वात् । अन्यद्धि नाम दाक्षायण इति । नामान्यत्वे चान्या प्रतीतिर्भवति । यथा देवदत्तादन्यो यज्ञदत्त इति । फलान्यत्वाच्च । अन्याद्धि फलं श्रूयते प्रजादि । फलान्यत्वे च फलिनोऽन्यत्वं भवति । गुणान्यत्वाच्च । गुणान्यत्वं च दृश्यते "मैत्रावरुण्यामिक्षा" इत्येवमादि । गुणान्यत्वे च गुणिनोऽन्यत्वं गम्यते । अतः कर्मान्तरमिति ॥ २ ॥

## गुणविधानं वा सन्निधिसम्पद्वचनाभ्याम् ॥ ३ ॥

अथवा न कर्मान्तरम् । तावेव गुणविकृतौ दर्शपौर्णमासाविति । कुत एतत् । सान्निधेः । दर्शपौर्णमासौ हि प्रकृत्याह "तस्मात्तु त्रिंशतमेव वर्षाणि यजेत" इत्यभिधाय "यद्यु दाक्षायणयज्ञी स्यादथो अपि पञ्चदशैव वर्षाणि यजेत" इति । सान्निहिते च तत्प्रतीतिर्भवति । तथा च सम्पद्वचनम् "अत्र ह्येव सा सम्पत्सम्पद्यते" इति । यदि तदेव कर्म तदा साभ्यासैर्यागैस्त्रिंशत्सम्पत् पञ्चदशभिर्वर्षैः सम्पाद्यते । यत्तु नामान्तरत्वादिति । भवत्येवैकस्यापि नामान्तरं हस्तः करः पाणिरिति । धर्मान्तरत्वाच्च नामान्यत्वं ब्राह्मणपरिव्राजकवत् । फलं गुणाश्रयम् । गुणान्यत्वेऽपि च न गुणिनोऽन्यता । न हि देवदत्तस्योन्मादादिना (उन्मर्दनादिना) अन्यत्वं भवति । तस्मात्तदेवेदं कर्म गुणविकृतमिति । (१)प्रयोजनं दर्शपूर्णमासयोराक्रिया ॥ ३ ॥

( दाक्षायणयज्ञानुष्ठानप्रकारः )

## अग्नीषोमीयः पौर्णमास्यामैन्द्राग्नोऽमावास्यायाम् ॥ ४ ॥

क्रियते इति वाक्यशेषः । एवं हि श्रूयते "पूर्वेद्युरग्नीषोमीयेण यजते पौर्णमास्यां, तथैन्द्राग्नेन यजते ऽमावास्यायाम्" इति ॥ ४ ॥

## सान्नाय्यवत्प्रातः ॥ ५ ॥

सान्नाय्यशब्दो यागार्थे दधनि पयसि च वर्त्तते । तच्च नोभय-

---

(१)अस्यां 'दाक्षायणयज्ञानुष्ठानपक्षे' इति शेषः । अत एव 'अञ्जसा ह वा अस्य दर्शपूर्णमासाभ्यामिष्टं भवति' इति श्रुतावपि दाक्षायणानुष्ठानोत्तरं दर्शपूर्णमाससमाप्तिरुक्ता ।

मुभयत्र भवति। अमावास्यायां हि पयस्योच्यते। पौर्णमास्यां पुनराग्नेयः पुरोडाशो भवत्यैन्द्रं सान्नाय्यमित्येतावदेव। उभयरूपेऽप्युभयत्र प्रवर्त्तमाने सति"अथ प्रातराग्नेयः पुरोडाशो भवति मैत्रावरुणी पयस्या नेयन्नादयानीति न्वेवाग्नेयः पुरोडाशोऽथैतावेव मित्रावरुणौ द्वे देवते" इति देवताद्वित्वं नोपपद्यते। उभयरूपे ह्यैन्द्रोऽपि प्राप्नुयात्। तस्माद्विभागेन सान्नाय्यवत्प्रातः। एवं चोपांशुयागो न भवति(१)॥५॥

(२)अमावास्याया पयस्या मैत्रावरुणी ॥ ६ ॥

(३) तत्रैव दोहनं शृते वा दध्यानयति ॥ ७ ॥

---

(१)अत्र मुख्यायां पौर्णमास्यामुद्धरणादिकर्मापवर्गान्तमग्नीषोमीयं सद्य एव प्रातः परिसमाप्य पुनरुद्धृत्याग्न्यन्वाधानव्रत्याशनशाखाच्छेददध्यर्थवत्सापाकरणोपवेषकरणपवित्रबन्धनानि यथाकालं कृत्वा सायंहोमानन्तरं दोहयित्वा निधानान्तं कृत्वा प्रातर्दोहार्थं वत्सापाकरणं शाखोपगूहनं च कुर्यादिति देवभाष्ये।

(२) अत्र मुख्यायाममावास्यायां प्रातःकाले सद्य एवोद्धरणादिकर्मापवर्गान्तमैन्द्राग्नयागं कृत्वा तदानीमेव पुनरुद्धृत्याग्न्यन्वाधानपिण्डपितृयज्ञव्रत्याशनशाखाच्छेदनसन्नमनोपवेषकरणपवित्रबन्धनानि यथाकालं कृत्वा सायंहोमानन्तरं मैत्रावरुणपयस्यार्थं वत्सापाकरणं कुर्यात्। अत्र 'मित्रावरुणाभ्यां भागम्'इति गोवत्सस्पर्शने विशेषः शाखोपगूहनं चेति देवभाष्ये।

(३) तत्रैव तस्मिन् लौकिकदध्न्येवाज्यनिर्वापानन्तरं पयस्यार्थं दोहनं कर्त्तव्यम्, प्रथममुख्यायां लौकिकं घनीभूतं दध्यासिच्येत्यर्थः। अथवा पयसि शृते सति पश्चाद्दध्यानयति न प्रथमम्। अत्र देवयाज्ञिकभाष्ये व्याख्याद्वयं दृश्यते। तत्र 'तत्रैव दोहनम्' इत्यत्र 'सान्नाय्यवत्' इत्यनेन सायम्प्रातश्च दोहे प्राप्ते प्रातरेवेति नियमः, एवं 'शृते वा दध्यानयति'इत्यत्र वाशब्दोपादानादशृते वा पयसि लौकिकदध्यानयनमित्याद्या। द्वितीया तु उभयत्र दधिपयसोर्विद्यमानत्वेन उभयत्रैव दोहने प्राप्ते पयोविकारत्वात्पयस्यायाः निरुप्याज्यं प्रातर्दोहनं कर्त्तव्यम्। अथवा शृते प्रातर्दोहे सायंदोहदधि आनयतीति। स्वशाखायां पयस्यानिष्पादनप्रकारस्यानुपदेशात् शाखान्तरोक्तप्रकारस्यैव प्राप्तत्वा-

( लौकिके ) दधनि वा दोहनम् ( शृते वा दध्यानयति ) ॥ ७ ॥

वाजिनं निषिच्योत्करे करोति ॥ ८ ॥

वाजिनमवसेचनमुच्यते । तस्य च यागसम्बन्धाद्यागधर्माः प्रवर्त्तन्ते । वेद्यामासादने प्राप्ते उत्करे इत्युच्यते । न चात्र वेदिधर्माः प्रवर्त्तन्ते । स्वरूपप्रयुक्तत्वात् ॥ ८ ॥

अनाज्यलिप्तं वा ॥ ९ ॥

तत्रस्थाभिघारस्य विकल्पः । "अनाज्यालिप्तं निषिञ्चेत्" इति वचनात् । ततश्च प्राणदानं भवत्येव(१) ॥ ९ ॥

प्रहृत्य तृणं तेन ( वाजिनेन ) चरति त्रिमुच्य वा स्रुचौ ॥ १० ॥

एवं हि श्रूयते इति ॥ १० ॥

बर्हिरवसिञ्चन् गृह्णाति तदृषभेषु रेतो दधातीति श्रुतेः ॥ ११ ॥

ग्रहणं च यथाकथञ्चित् न स्रुवेण । अवद्यतीत्यश्रवणात् । अपन्यायश्चावसेक इति श्रुतिग्रहणम् ॥ ११ ॥

वाजिभ्योऽनुवाचयति ॥ १२ ॥

पूर्वानुवाचनं मा भूदित्यतः ( ग्रहणानन्तरम् ) उच्यते ॥ १२ ॥

प्रतिवषट्कारं हुत्वा वाजिनशेषेण दिशो व्याघारयति दिश इति प्रतिमन्त्रं प्रदक्षिणं पुरस्तात्प्रथमम् ॥ १३ ॥

वाजिनशेषं च स्रुच्यम् । प्रदक्षिणग्रहणं च श्रौतं, न स्मार्त्तम् ।

---

दिदमेव मतं साधु भाति । 'तप्ते प्रातर्दोहे सायन्दोहमानयति' इति आपस्तम्बवचनात् इत्यलम् ।

(१) अथवा वाजिनस्याज्यलेपो न कार्य इत्यर्थः । अत्र पक्षे वाजिनस्य तत्राभिघारणप्राणदानोपस्तरणाभिघारणादयो न भवन्ति ।

अतस्तदपचारे श्रौतमेव प्रायश्चित्तम् ॥ १३ ॥

उत्तमाभ्यां मध्ये पूर्वार्धे च ॥ १४ ॥

(१) मन्त्राभ्यां ( आहवनीयस्य ) मध्ये पूर्वार्द्धे च व्याघारणम्॥१४॥

स्वाहाकारः सर्वत्र साकाङ्क्षत्वात् ॥ १५ ॥

साकाङ्क्षा ह्येते । क्रियापदाभावात् । अतः स्वाहाकारविधानम् । (दिश इत्यादौ)मन्त्राश्च यथाश्रुता एव । न चतुर्थ्यन्तेन प्रयोगः ।सुपां सुपो भवन्तीति चतुर्थ्यर्थे एव प्रथमा । एवं च सति जयाहोमेऽपि यथाश्रुता एव मन्त्राः "चित्तं च चित्तिश्च" इति,न चतुर्थ्यन्तेन प्रयोगः॥१५॥

( २ ) शेषमुपह्वयस्वेत्यामन्त्र्यामन्त्र्य भक्षणमुपहूत इति प्रसूतः ॥ १६ ॥

उपह्वयस्वेत्यामन्त्रणं प्रत्यृत्विजम् । प्रसूत इत्यनुज्ञातः ॥ १६ ॥

पितृकृतैर्नामभिरामन्त्रणे प्राप्ते—

युक्तनामभिर्वा ॥ १७ ॥

इत्याह । युक्तनामानि च होत्रादीनि । एवं हि श्रूयते "तद्वै पञ्चैव भक्षयन्ति होताचाध्वर्युश्च" इत्येवमादि ॥ १७ ॥

अधिकारमुपजीवन्नाह—

सोमे च ॥ १८ ॥

सोपहवं भक्षणं कर्त्तव्यम् । "नानुपहूतः सोमः पातव्य" इति वचनात् ॥ १८ ॥

( ३ ) साधारणेषु वा सामर्थ्यात् ॥ १९ ॥

---

(१) दिशः प्रदिशः, आदिशः, विदिशः, उद्दिशः, दिग्भ्यः स्वाहा इत्येषां मन्त्राणां मध्ये 'उद्दिशः' 'दिग्भ्यः स्वाहा' इत्याभ्यामिति भावः ।

( २ ) शेष भक्षणार्थं हस्ते कृत्वा ऽमुकोपह्वयस्वेति होत्रादीन् पृष्ट्वा पृष्ट्वा उपहूत इति तेनानुज्ञातः सन् शेषभक्षणं करोतीत्यर्थः ।

( ३ ) अनेकऋत्विक्साधारणेषु सोमेषु उपह्वानम् अनुज्ञाप्रार्थनम् । सामर्थ्यात् सप्रयोजनत्वात् । असाधारणसोमे विवादशङ्काऽभावेन अनुज्ञाप्रार्थनस्यानावश्यकत्वादिति सूत्रार्थः ।

एवमनुज्ञावचनमर्थवद्भवति ॥ १९ ॥

इदानीं भक्षमन्त्रानाह—

ऋतूनां त्वा वाजिनां वाजिनं भक्षयामीति वा ॥ २० ॥

वाज्यहं वाजिनस्योपहूतस्योपहूतो भक्षयामीति वा ॥ २१ ॥

वाजे वाजी भूयासमिति वा ॥ २२ ॥

वाक्यभेदाच्च विकल्पः ॥ २० ॥ २१ ॥ २२ ॥

इदानीं भक्षयितॄनाह—

होत्रध्वर्युब्रह्माग्नीध्रयजमानाः ॥ २३ ॥

भक्षयन्तीति वाक्यशेषः। समासोक्तावपि हि क्रमोऽयमेवाश्रयितव्यो, येन यजमानस्य प्राथम्यमुच्यते ॥ २३ ॥

प्रथमो वोभयतस्तु यजमानः ॥ २४ ॥

प्रथमो वेति। तत् कुतः। प्रथमो यजमानो भक्षयतीति। उभयतस्त्विति प्राथम्यपक्षे उत्तमोऽपि भक्षयेत्। "अथो अप्युत्तम" इति वचनात् ॥ २४ ॥

दाक्षायणं वा दक्षिणा ॥ २५ ॥

दाक्षायणं सुवर्णमुच्यते ( शतरक्तिकापरिमितम् )। अन्वाहार्यो वेति विकल्पः ॥ २५ ॥

संवत्सरं वा यजेत ॥ २६ ॥

पञ्चदश वर्षाणीत्युक्तमेव। संवत्सरश्चात्र सावनः परिगृह्यते। अत्रापि सैव यागसम्पत्कर्त्तव्या। सा च सावने उपपद्यते, न चान्द्रमसे इति ॥ २६ ॥

मा॰ँसस्त्र्यनृतमूत्रकृतवासा॰ँसि वर्जयेत् ॥ २७ ॥

"अहनि मा॰ँसमैथुनं वर्जयेत्" इति, तत्कर्माणि वर्त्तमाने द्रष्टव्यम्। अहनीति वचनात्। एतत्पुनः आ दर्शप्रयोगादन्तरालधर्मो वचनसामर्थ्यादिति ॥ २७ ॥

इति चतुर्थाध्याये चतुर्थी कण्डिका।

दर्शपूर्णमासप्रकरण एव काम्य आग्नेय आम्नातः । "यत्कामो ह वा एतेन यज्ञेन यजते सोऽस्मै कामः समृध्यते" इति । तं च प्रकृत्योपांशुत्वविधानम्—"उपांशु तस्यै देवतायै यजति यस्या इष्टिं निर्वपति" इति ।

तदनुविधानप्रसङ्गेन यस्य यस्योपांशुत्वं तस्य तस्योच्यते—

( कामायैवोत्पन्नस्य व्यक्तैकचोदनाचोदितस्य समानतन्त्रस्य कर्मणो देवताया उपांशुत्वम् )

## उपांशु काम्यदेवता ॥ १ ॥

काम्ये कर्मणि देवतानामुपांशुत्वं भवति । देवताग्रहणं न कर्त्तव्यम् । "चरणशब्दे सर्वं देवताऽन्यत्र" इत्युक्तत्वादुपांशुत्वस्य । एवं चेद्व्यक्तचोदनादेवतास्वेवोपांशुत्वं नाव्यक्तासु सोमविकारेष्विति देवताग्रहणम् । सौत्रामण्यां तर्हि व्यक्तत्वादुपांशुत्वमस्तु । नैतदेवम् । तन्त्रभेदस्तु तत्र । एकतन्त्रे चोपांशुत्वमित्याचार्याभिप्रायः । येनैन्द्रवायोधसयोरुपांशुत्वं विदधातीष्टिषु च । एवं च राजसूयेऽप्यनुमत्यादिषु नैवोपांशुत्वं तन्त्रभेदात् । प्रजाकामस्यैश्वदेवे तर्ह्यस्तु उपांशुत्वं, व्यक्तत्वादेकतन्त्रत्वाच्चोदनैकत्वात् काम्यत्वाच्च । तथा पञ्चबिले । नैतदेवम् । न हि तत्र काम्यतयैवोत्पत्तिः । तेन यत्र व्यक्तत्वं चोदनैकत्वं चैकतन्त्र्यं च कामार्थं चोत्पत्तिस्तत्रैवोपांशुत्वम् । यथा मित्रविन्दायाम् । आह च—

व्यक्तत्वे चोदनैकत्वे तन्त्रैक्ये यत्र कामना ।
तादर्थ्येनैव चोत्पत्तिस्तत्रैव स्यादुपांशुता ॥ १ ॥

( आग्रयणवैश्वदेवादीनामुपांशुत्वम् )

## आग्रयणे वैश्वदेवः ॥ २ ॥

उपांशुर्भवति ॥ २ ॥

## एककपालाश्चावारुणाः ॥ ३ ॥

वारुणवर्जम् ॥ ३ ॥

## प्राजापत्यः ॥ ४ ॥

उपांशुर्भवति । "तस्माद्यत्किञ्च प्राजापत्यं यज्ञे क्रियत उपांश्वेव तत्क्रियते" इति वचनात् ॥ ४ ॥

सावित्रश्चातुर्मास्येषु ॥ ५ ॥

उपांशु ॥ ५ ॥

तत्रैव—

वैश्वदेवी ॥ ६ ॥

पयस्या ॥ ६ ॥

वायव्यम् ॥ ७ ॥

पयः । नपुंसकलिङ्गोपदेशात् । यवाग्वां तर्हि न प्राप्नोति । प्राप्स्यति । यागधर्मत्वात् । न हि द्रव्यधर्मोऽयम् । अपूर्वप्रयुक्तत्वात् । दर्शयति च पर्वाणि प्रकृत्य "तेषां वै चतुर्णां द्वयोस्त्रीणि त्रीणि हवीᳬंष्यनिरुक्तानि भवन्ति द्वे द्वे द्वयोः" इति वैश्वदेवशुनासीरीययोस्त्रयाणामनिरुक्ततां दर्शयति । तस्माद्यवाग्वामप्युपांशुत्वम् ॥ ७ ॥

(१)तनूहवीᳬंषि ॥ ८ ॥

दीक्षणीया—प्रायणीया—ऽऽतिथ्यादेवताः ॥ ९ ॥

देवसूदेविकाहवीᳬंषि ॥ १० ॥

उपांशु भवन्ति । दीक्षणीयादिषु देवताग्रहणं वागन्तपक्षार्थम् । सहप्रधानेन दीक्षणीयादौ वागन्तेन मा भूदिति ॥ ८ ॥ ९ १० ॥

वायव्योऽग्नौ ॥ ११ ॥

मैत्रावरुणी च ॥ १२ ॥

अग्नावेव ॥ १२ ॥

ऐन्द्रः सौत्रामण्यां प्रथमः ॥ १३ ॥

वायोधसश्च ॥ १४ ॥

उपांशु ॥ १४ ॥

---

(१)तानि च "अग्नये पवमानाय प्रथमा अग्नये पावकायाग्नये शुचये च द्वितीया" इत्येवमादीनि(का. श्रौ. अ. ४ । कं. १० सू. ८–१० ) ।

( प्रतिकाममाग्नेयानुष्ठानम् )

आग्नेयं प्रतिकाममाहरेत् ॥ १५ ॥

आग्नेयं प्रकृत्य श्रूयते-"सोऽस्मै कामः समृध्यते यस्मै कामायेष्टिं निर्वपति" इति ॥ १५ ॥

( वृष्टिकामनायां विशेषः )

वर्षार्थे पुनः प्रकृतौ वा ब्रूयाद्वृष्टिकामोऽस्मीति ॥ १६ ॥

अध्वर्युं ब्रूयात्पुरोवातं च विद्युतं च मनसा ध्यायेति ॥ १७ ॥

अभ्राण्यग्नीध्रम् ॥ १८ ॥

स्तनयित्नुं च वर्षं चेति होतारम् ॥ १९ ॥

सर्वाण्येतानीति ब्रह्माणम् ॥ २० ॥

एवमादि निगदव्याख्यातम् । सर्वाण्येतानीति चार्थनिर्देशो न शब्दनिर्देशः । यत्कारणम् । न ह्येतानीत्येतावता नैरुत्सुक्यं भवति । अतः प्रतिपदमुच्चारणमिति ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥

इदानीं दर्शपूर्णमासयोरेवारम्भनिमित्तमङ्गमाह—

( अन्वारम्भणीयाऽनुष्ठानप्रकारः )

अन्वारम्भणीयाऽऽग्नावैष्णव एकादशकपालः सरस्वत्यै(१)चरुः सरस्वते द्वादशकपालो दर्शपूर्णमासारम्भे ॥ २१ ॥

---

( १ ) चरुलक्षणं छन्दोगपरिशिष्टे 'स्वशाखोक्तश्च सुस्विन्नो ह्यदग्धो ऽकठिनः शुभः । न चातिशिथिलः पाच्यो न चरुश्चारसस्तथा' इति ।

एकादशकपालग्रहणं न कर्त्तव्यम् । अग्नीषोमीयविकारत्वादेव तत्प्राप्तेः । कर्त्तव्यं वा, कपालानां प्रत्यक्षविधानं यथा स्यादिति । ततश्च तद्गतगुणकामप्रवृत्तिरिति केचित् । दर्शपूर्णमासारम्भे इति श्रुतत्वात्प्रथमप्रयोगे एव भवति । एवं हि श्रूयते–"दर्शपूर्णमासावारमाणोऽन्वारम्भणीयया यजेत" इति । आरम्भस्य च विद्यमानत्वाद्विकारेऽपि प्रवृत्तिः । यथाऽऽग्रयणेष्ट्याम् । चातुर्मास्येषु च आरम्भस्य एकत्वात्सकृदेव भवति । क्षामवत्यादिषु त्वारम्भभेदात्पुनः पुनः प्रयोगः ॥ २१ ॥

पष्ठौही दक्षिणा मिथुनौ वा ॥ २२ ॥

पृष्ठेन या वोढुं समर्था वृषभं सा पष्ठौही । मिथुनौवेति । मिथुनाहौ दद्यादिति ॥ २२ ॥

( पौर्णमासानन्तरं वैमृधेष्टेरारम्भविकल्पः )

इन्द्राय विमृध एकादशकपालः

पौर्णमासमनु ॥ २३ ॥

"पौर्णमासेनेष्ट्वेन्द्राय विमृधेऽनुनिर्वपति" इति वचनात् ॥ २३ ॥

सचायम्—

(१)आदिविकल्पः ॥ २४ ॥

शाखान्तरादादित एवारभ्य आऽन्ताद्विकल्पः ॥ २४ ॥

( आमावास्यानन्तरमादित्यचरोरारम्भविकल्पः )

आदित्यश्चरुरामावास्यम् ॥ २५ ॥

अनु भवतीति सूत्रशेषः ॥ २५ ॥

( इति चतुर्थाध्याये पञ्चमी कण्डिका । )

---

(१)आदावारम्भे एव विकल्पो यस्य सः, आरभ्यते न वेति । यद्यारभ्यते तदा यावज्जीवं क्रियत एव । तदुक्तम् "रूपं कालोऽनुनिर्वापो देवता श्रपणं हविः । आदौ ये विधृताः पश्चात्त इमे सर्वदा मताः" इति।

( आग्रयणेष्ट्यनुष्ठानप्रकारः )

आग्रयणमैन्द्राग्नमग्रपाकस्य ॥ १ ॥

आग्रयणमिति कर्मणो नामधेयं वक्ष्यमाणस्य । तत्र च प्रथमं हविरैन्द्राग्नम् । "तस्मादैन्द्राग्नो द्वादशकपालः पुरोडाशो भवति" इति । अग्रपाकग्रहणेन च शरद्वसन्तौ लक्ष्येते । तत्कथम् । अग्रे पाकोऽग्रपाकः प्रथमपाक इत्यर्थः । स च शरद्वसन्तयोर्भवति । "शरद्वसन्तयोराग्रयणम्" इति च शाखान्तरात् ॥ १ ॥

व्रीहीणां यवानां च ॥ २ ॥

चकारपि यागो यथा स्यादिति यवग्रहणम् । तेषामेव नियमो माभूदिति व्रीहिग्रहणम् । व्रीहिकाले व्रीहीणां, यवकाले यवानाम् । अत एव च यावच्छक्नोति ॥ २ ॥

वैश्वदेवश्चरुः ॥ ३ ॥

"तस्मादेव वैश्वदेवश्चरुर्भवति" इति ॥ ३ ॥

पयसि वा ॥ ४ ॥

स च वा पयसि भवति । पयःपक्षे अत्र प्रणीताधर्माः कार्याः ॥४॥

द्यावापृथिवीय एककपालः ॥ ५ ॥

अस्य च वैश्वदेविकद्यावापृथिवीयप्रकृतित्वम् । लिङ्गदर्शनात् । "तस्य हि सर्वहुतं करोति अपर्यावर्तं जुहोति" इति चाम्नायते । तेनैते सर्वहोमापरिवृत्ती आज्ययागविधि परे वाक्यं अनुवदति-"तस्य पारिचक्षा यस्यै वै कस्यै च देवतायै हविर्गृह्यते सर्वमेव स्विष्टकृदन्वाभक्तोऽथैतं सर्वमेव जुहोति न स्विष्टकृतेऽवद्यति सा परिचक्षातो हुतः पर्यावर्तेत" इति सा द्वितीया परिचक्षा [निन्दा] । तच्चैतदुभयमप्यनिष्टमित्याज्यस्यैव यागः कर्तव्य इति । तस्माद्वैश्वदेविकैककपालप्रकृतित्वमिति । एवं च सति त्रेधा बर्हिरहतवासःपरिधानं चेहापि भवति । नवप्रयाजाद्यपीति चेत् । न । ऐन्द्राग्नवैश्वदेवविरोधात् [ उभयानुरोधेन नवप्रयाजबाधात्] । आज्ययागेऽपि [वक्ष्यमाणे द्यावापृथिव्याज्ययागपक्षे ऽपि] वासःपरिधानादि भवतीति चेत् । नैतदेवम् । पुरोडाशेन हि तत्पर्युपस्थाप्यते । न चाज्यस्यासौ धर्मः । तस्मादप्रवृ

त्तिरिति । ननु वायव्ये पयसि द्रव्यान्यत्वेऽप्युपांशुत्वं भवति । युक्तं तत्र प्रत्यक्षो ह्यसौ धर्मः । इह पुनश्चोदकत इति ॥ ५ ॥

(१)उद्वास्यान्तांश्छादयेदाज्येन ॥ ६ ॥

तच्चैतदाज्यं लौकिकमपूर्वत्वात् ॥ ६ ॥

आज्यस्य वा यजेत ॥ ७ ॥

"तस्मादाज्यस्यैव यजेत्" इति वचनात् [आज्येन द्यावापृथिवीययागः] ॥ ७ ॥

पुराणानां वा चरुः ॥ ८ ॥

वैश्वदेवश्चरुर्वा पुराणानां कर्त्तव्यः । "तं वै पुराणानां कुर्यादित्याहुः" इति वचनात् । वा नवानाम् । "तौ वा उभावेव नवानाᳬ स्याताम्" इति ॥ ८ ॥

प्रथमजो गौर्दक्षिणा ॥ ९ ॥

प्रथमजश्च गौर्न गोकुलस्य । अप्रतीतत्वात् । गोश्च जन्मना सम्बन्धोऽतः प्रतीतत्वात्प्राथम्यं तदपेक्षम् ( गवापेक्षम् ) ॥ ९ ॥

प्रसङ्गमुपजीवन्नाह —

वैश्वदेवस्य च ॥ १० ॥

प्रथमजो गौर्दक्षिणा ॥ १० ॥

( शुक्रास्तादिवशादनारब्धदर्शपूर्णमासस्य आग्रयणकालप्राप्तौ अनिष्टिरूपाग्रयणम् )

दर्शपूर्णमासानीजानो दक्षिणाग्निपक्वं चातुष्प्राश्यं ब्राह्मणान् भोजयेत्किञ्चिद्दद्यात् ॥ ११ ॥

आहिताग्निः सन्यावद्दर्शपूर्णमासौ न करोति अथ चाग्रयणकालप्राप्तिर्भवति तत्राग्रयणे विशेषः कथ्यते । नवानां दक्षिणाग्निपक्वं चातुष्प्राश्यं ब्राह्मणान् भोजयित्वा किञ्चिद्दद्यात् । "तत्रो यच्छक्नु-

---

(१)द्यावापृथिवीयमुद्वास्य प्राणदानानन्तरमस्यान्तानाज्येन लौकिकघृतेनाच्छादयेदित्यर्थः ।

यात्तद्धयात्" इति वचनात् । अस्य चाग्रयणत्वात् पौर्णमास्यमावास्या वा काल इति ॥ ११ ॥

( अग्निहोत्रेणैवाग्रयणसिद्धिमिच्छतो नवान्नेनाग्निहोत्रहोमः, नवान्नाशितायाः गोः पयसा वा )

अग्निहोत्रायणिनो नवैः सायम्प्रातरग्निहोत्रहोमः ॥ १२ ॥

अग्निहोत्रेणैव यो नामायनं गमनं कर्तुमिच्छति अग्निहोत्रेणैवाग्रयणं गमयतीत्यर्थः । स नवैः सायंप्रातरग्निहोत्रहोमं कुर्यात् । यः सायंप्रातरग्निहोत्रहोमः स नवैः कर्तव्यः । न ह्येतदाग्रयणम् । सायंप्रातर्ग्रहणादेवाग्रयणप्राप्तिरिति । तथा च दर्शपूर्णमासानारम्भस्य चातुर्मास्यविधिपरे वाक्ये अग्निहोत्रहोमं प्रतिषेधति—"नाग्निहोत्रं जुहुयादन्यत्रा आग्रयणमन्यत्राग्निहोत्रम्" इति । अतश्चात्र न यजनीयकालनियम इति ॥ १२ ॥

(१)तदाशितायाः वा पयसा ॥ १३ ॥

नवाशितायाः वा गोः पयसा जुहोति ॥ १३ ॥

( संवत्सरदीक्षादौ यज्ञे प्रारब्धे आग्रयणकालप्राप्तौ दीक्षितव्रतं नवान्नाशितायाः गोः पयसा कर्तव्यम् )

दीक्षितव्रतं च ॥ १४ ॥

तत्कालातिपाते नवाशितायाः गोः पयसा कर्तव्यम् ॥ १४ ॥

( संवत्सरोपसत्कादौ यज्ञे उपसत्सु आग्रयणकालप्राप्तौ नवान्नेन रौहिणौ पुरोडाशौ कार्यौ )

उपसत्सु रौहिणौ कुर्वीत ॥ १५ ॥

उपसत्सु वर्तमानासु नवद्रव्येण रौहिणौ कर्तव्यौ ॥ १५ ॥

---

(१)तद् नवान्नमाशिता तदाशिता तस्याः गोः पयसा वा सायंप्रातरग्निहोत्रहोम इत्यर्थः ।

( संवत्सरसुत्यादौ आग्रयणकालप्राप्तौ नवान्नेन सवनीयाः पुरोडाशाः कर्तव्याः )

सुत्यासु सवनीयाः ॥ १६ ॥

कर्त्तव्याः ॥ १६ ॥

( आरण्याग्रयणे शरदि सौम्यः श्यामाकचरुः )

सौम्यः श्यामाकचरुरारण्यस्य ॥ १७ ॥

आरण्याग्रयणम् । आरण्यञ्च श्यामाकनीवारादि । आरण्यग्रहणाच्च सौम्ये ऽकृते तन्न भक्ष्यते इति ॥ १७ ॥

( आरण्याग्रयणे ग्रीष्मे वेणुयवमयः सौम्यश्चरुर्वा भवति)

(१)वैणवो ग्रीष्मे ॥ १८ ॥

सौम्यः कर्त्तव्यः । श्यामाकचरोश्च कालानिर्देशात् शरद्येव भवति ॥ १८ ॥

( श्यामाकवैणवाग्रयणयोर्दक्षिणाविशेषः )

पुनः संस्कृतो रथो दक्षिणा क्षौमं मधुपर्को वर्षाधृतं वा वासः ॥ १९ ॥

क्षौममात्रमुच्यते । वर्षासु यत्परिहितम् । ऊतमित्येके । तत्र धृतशब्दो नाञ्जसो भवति । तस्माद्वर्षासु यद्धृतं परिहितं तदेव ग्रहीतव्यमिति ॥ १९ ॥

इति चतुर्थाध्याये षष्ठी कण्डिका ।

( आधानकालनिरूपणम् )

अमावास्यायामग्न्याधेयम् ॥ १ ॥

अग्न्याधेयमिति कर्मणो नामधेयम् । तच्च समुदायस्य । तेन ह्यसावग्निराधीयते उत्पाद्यते निष्पाद्यते । न मन्थनमात्रं स्थापनमात्रं वा । आहवनीयशब्दो हि संस्कारनिमित्तः, न जातिनिमित्तो योगनि-

(१) वैणवः वेणुमयश्चरुरित्यर्थः । तथाचापस्तम्बः—' वेणुयवानामिष्टिमेके समामनन्ति ' इति ।

मित्तो वा । तेषु सत्सु शब्दप्रयोगदर्शनात् । अतश्च यावान् कश्चिद् दृष्टार्थो ऽदृष्टार्थो वा तत्संस्कारायाम्नायते स सर्वोऽग्न्याधेयशब्दवाच्यः । एवं च सति संस्कारैकदेशाभावेऽपि अनाहवनीयता। अतश्च सकलकर्मसमुदायाभ्यावृत्तिरिति सम्प्रदायः ।

अत्र वदामः । कश्चित्संस्कारोऽङ्गवान्भवति । यथा पूर्णाहुत्यामाज्याधिश्रयणाद्यङ्गं, तूष्णीमग्निहोत्रे च परिस्तरणादि, इष्टिषु चान्वन्वाधानादि । यस्यैवाङ्गिनोऽङ्गापचारस्तस्यैवावृत्तिर्युक्तरूपा न सकलस्याधानस्येति । न चेहाङ्गापचारेऽपि प्रायश्चित्तं भवति । आहवनीयाद्यधिष्ठानाभावात् । ननु च विद्यन्त एवाहवनीयादयः—"त्रिभिरक्षरैर्गार्हपत्यमादधाति पञ्चभिराहवनीयमादधाति" इतिप्रयोगदर्शनात् । नेत्युच्यते । यदीयतैवाहवनीयाद्युत्पत्तिः स्यात् शेषं व्यर्थमेव स्यात् । तस्मात् "पञ्चभिराहवनीयमादधाति" इति भाविनी वृत्तिः । अतो नैमित्तिकहोमस्याभावः । यद्येवं पूर्णाहुत्यादिहोमोऽप्यत्र न भवति । उच्यते । आहत्याहवनीयसंस्कारायैव विधानादित्यदोषः । तस्मादिह विहितानां भाविनी वृत्तिर्युक्ता न तु नैमित्तिकहोमानाम् । ते हि सत्याहवनीये विधीयन्ते । पूर्णाहुत्यादयस्तु तदुत्पत्त्यर्थतयेति विशेषः ।

अमावास्याशब्दश्चात्र गौण्या वृत्त्या प्रतिपद्विषयः । एवं हि श्रूयते आधानं प्रकृत्य "यदहरेवैष न पुरस्तान्न पश्चाद् दृश्येत तदहरुपवसेत्" इति । उपवासशब्दश्च यमनियमापेक्षः । "यदहरस्य श्वोऽग्न्याधेयं स्यात्तद्वैवाश्नीयात्" इत्येवमादिविधानात् । तस्मादमावास्यायामुपक्रम्य प्रतिपद्याधानम् । कृत्तिकादिषु तु नैवम् । न हि तत्रैवं वचनमस्तीति ॥ १ ॥

## कृत्तिकारोहिणीमृगशिरःफल्गुनीषु ॥ २ ॥

स चायं विकल्पः । "कृत्तिकास्वग्नी आदधीत" इति निरपेक्षविधानात् । ननु चामावास्यायां कृत्तिकास्विति च किमिति न भवति । नैतदेवम् । एवं हि समामनन्ति "स योऽमावास्यायामग्नी आधत्ते यथा विवृतायां द्वारि द्वारा पुरं प्रपद्येत स तत एव स्वर्गं लोकमियादेवं तत्" इत्यमावास्यायां विधाय नक्षत्रनिषेधेन संस्तौति—"अथ यो नक्षत्र आधत्ते यथा पिहितायां द्वार्यद्वारा पुरं प्रतिपित्सेत्स जिह्मः पुरः स्यादेवन्तत्" इति । तस्मादत्रापि नक्षत्रविकल्पः ॥ २ ॥

हस्तो लाभकामस्य ॥ ३ ॥

स चायं विशिष्टो लाभ उच्यते, न लाभमात्रम् । "य इच्छेत्प्र मे दीयेत" इति वचनात् । तस्मात्प्रतिग्रहलाभः । अतश्च ब्राह्मणविषय एवायम् ॥ ३ ॥

चित्रा च क्षत्रियस्य ॥ ४ ॥

च—शब्दाल्लाभकामस्य ॥ ४ ॥

वसन्तो ब्राह्मणब्रह्मवर्चसकामयोः ॥ ५ ॥

"तस्माद्ब्राह्मणो वसन्त आदधीत" इति वचनात् । "ब्रह्मवर्चसकामो वसन्त आदधीत" इतिच । ब्रह्मवर्चसं च ब्राह्मणस्यैवोचितम् । तस्मात्सकामनिष्कामयोर्ब्राह्मणयोरिति ॥ ५ ॥

ग्रीष्मः क्षत्रियश्रीकामयोः ॥ ६ ॥

ग्रीष्मः क्षत्रियस्याधानकालो भवति । "तस्मात् क्षत्रियो ग्रीष्म आदधीत" इति वचनात् । "श्रीकामो ग्रीष्मआदधीत" इति हि श्रूयते । सर्वविषयं चैतत् । विशेषानवगमात् ॥ ६ ॥

वर्षाः प्रजापशुकामवैश्यरथकृताम् ॥ ७ ॥

आधानस्य कालो भवति प्रजाकामपशुकामवैश्यरथकृताम् । कामसम्बन्धश्च सर्वविषयः, न वैश्यविषय एव । "वैश्यो वर्षास्वादधीत" इति च निष्कामस्यापि वैश्यस्य । "वर्षासु रथकार आदधीत" इति च रथकारस्य वर्षाः ॥ ७ ॥

इदानीं पूर्वेद्युरुपक्रममाह—

( अग्न्यगारनिर्माणादिकमाधानपूर्वाङ्गम् ]

अग्न्यगारे कुर्वन्ति ॥ ८ ॥

बहुवचनोपदेशादप्रकृताः ॥ ८ ॥

उदग्वंशं वाऽपरम् ॥ ९ ॥

वा प्राग्वंशम् । पूर्वं तु प्राग्वंशमेव ॥ ९ ॥

दक्षिणपूर्वे द्वारे ॥ १० ॥

( यथापरिक्रमेण ) अपरस्य दक्षिणम्, पूर्वस्य पूर्वम् । न ह्येके-

कस्य द्वारद्वयविधानमुपपद्यते । यस्मादपरस्य पूर्वं सामर्थ्यपरिप्राप्तम् (१) ॥ १० ॥

पौर्णमासवद्वपनम् ॥ ११ ॥

भवति । यतिना च अशिखमतिदिश्यते । विकल्पस्य तु सूत्रान्तराभिहितत्वात्—"ऋतुनक्षत्रसम्भारसामवपनादीन्न वा कुर्यात्" इति ॥ ११ ॥

क्षौमे वस्ते ऽहते पत्नी च ॥ १२ ॥

क्षौमे आतसे अहते आधौते(ईषद्धौते)। पत्नी च। "क्षौमे वसानावग्नी आदधीयाताम्" इति वचनात् ॥ १२ ॥

सꣳस्थिते ऽध्वर्यवे देये ॥ १३ ॥

ते च परिसमाप्ते ऽध्वर्यवे देये ॥ १३ ॥

गार्हपत्यागारे निर्मथ्याभ्यादधाति ॥ १४ ॥

मन्थनं सन्निधानात्प्रकृताभ्यामरणिभ्याम्। अनयोर्हि सन्निधानात् ॥ १४ ॥

वैश्यकुलाम्बरीषमहानसाद्वा ॥ १५ ॥

वैश्यकुलात् अपरिगृहीतो (लौकिकः)हुतोच्छिष्टो वा परिगृह्यते। ( न तु परिगृहीत आवसथ्यादिः )। अम्बरीषो भ्राष्ट्रः। कन्दुरिति यः प्रसिद्धः। महानसो यत्राक्षीणोऽग्निर्यथा लौकिकेषु सत्रेषु ॥ १५ ॥

दिवाऽश्नाति रात्रौ वा ॥ १६ ॥

"यदहरस्य श्वोऽग्न्याधेयꣳस्यात्दिवैवाश्नीयात्" इति। न चायं दिवसनियमः। किं तर्हि राज्यशनविकल्पार्थमिदमुक्तम्—"तदपि काममेव नक्तमश्नीयात्" इति ॥ १६ ॥

उपास्तमयं देवाः पितरः पितरो देवा योऽहमस्मि स सन्यजे यस्याहमस्मि न तमन्तरयामि

---

(१)सामर्थ्येन प्रयोजनवशेन प्राप्तम् । गार्हपत्यागारे पूर्वद्वारम्, आहवनीयागारे पश्चिमद्वारं विना च गार्हपत्यादाहवनीयपर्यन्तं धारानिनयनस्य आहवनीयगृहाद्गार्हपत्यावेक्षणस्य चासंभवापत्तेः।

स्वं म इष्टꣳस्वꣳश्रान्तꣳस्वꣳहुतमस्त्विति ॥ १७ ॥

आह्वयति । तत्कुतः । "स यो हैवं विद्वान् देवाः पितर इति ह्वयति" इत्याह्वाने विनियोगात् ॥ १७ ॥

पूर्वेण प्रविशति दक्षिणेन पत्नी ॥ १८ ॥

पूर्वेण द्वारेण यजमानो दक्षिणेन पत्नी ॥ १८ ॥

पश्चादग्नेरुपविशतो दक्षिणतः पत्नी ॥ १९ ॥

गार्हपत्यागारनिहितस्याग्नेः पश्चात् । दक्षिणतः पत्नी तु वचनात् ॥ १९ ॥

अश्वत्थशमीगर्भारणी प्रयच्छति ॥ २० ॥

अश्वत्थश्चासौ शमीगर्भश्च अश्वत्थशमीगर्भस्तत्सम्बन्धिन्यौ अरणी प्रयच्छति यजमानाय । ते चाग्न्युत्पत्त्यर्थे परिगृह्येते । एवं च सति ते एव व्यक्ती सर्वदा भवतः । अन्ते च प्रतिपत्तिदर्शनात् । "अरणी वृषणयोः" इति । तथा च सत्यनयोरभावे नारण्यन्तराद्युपादानं शक्यं कर्तुं, व्यक्तिनियमात् ॥ २० ॥

अभावे ऽगर्भस्य ॥ २१ ॥

शमीगर्भाभावे ऽश्वत्थमात्राद् गृह्येते ॥ २१ ॥

वाचं यच्छापूर्णाहुतेरित्याहास्तमिते निशायां पर्युदयं वा प्रधानकालत्वात् ॥ २२ ॥

"अस्तमिते आदित्ये रात्रौ यजमानमाह" इति शाखान्तरश्रवणात् । अस्तमिते इति श्रुतत्वादस्तमितग्रहणम् । रात्राविति च श्रुतत्वान्निशाग्रहणम् । पर्युदयमिति च वाग्यमस्य पदार्थधर्मत्वात् । तेषां च पर्युदयकालता दृष्टा । यतवाक्त्वेन हि पदार्थाः सुखेनानुष्ठीयन्त इति दृष्टार्थता भवति । इतरथा ऽदृष्टार्थता स्यात् । तस्मात्पर्युदयमेवेति । यत्तु "अस्तमिते आदित्ये, रात्रौ" इति च श्रूयते तदुदयसमीपेऽपि भवत्येव । प्रागुदयाद्धि रात्रिरेव भवतीति । अपरं तु विकल्पमेवेच्छन्ति ॥ २२ ॥

इति चतुर्थाध्याये सप्तमी कण्डिका ।

गार्हपत्यागारे ऽजं बध्नाति, न वा विद्यमानं, प्रातरग्नीधे दद्यात्, अस्तमिते ॥ १ ॥

"तद्धैके ऽजमुपबध्नन्ति" इति प्रकृत्याह "तदु तथा न कुर्याद्यद्यस्याजः स्यादग्नीधायैनं प्रातर्दद्यात्तेनैव तं काममाप्नोति" इति । तेन यद्यजो नास्ति ततो नियोगतो बध्यते । विद्यमाने तु प्रातरग्नीधे संस्थिते कर्मणि दानम्, "संस्थिते" इति काण्वपाठात् । "एनाँ रात्रिमजं बध्नाति" इति चास्तमितग्रहणम् ॥ १ ॥

(१) रौहिते चर्मण्यानडुहे चत्वारि हविष्यपात्राणि मिमीते तं चातुष्प्राश्यं पचति ॥ २ ॥

हविष्याश्च व्रीहयो न यवाः । ओदननिर्देशात्—"अथ चातुष्प्राश्यमोदनं पचन्ति" इति । "तं चातुष्प्राश्यं पचति" इति तन्मितिनिर्देशात्तण्डुला एव मीयन्ते न व्रीहयः । कण्डनस्याश्रुतत्वात् । पात्राणि च त्रिप्रसृतिपरिमाणानि । भोक्तृतृप्तिपरिमाणं त्वत्र व्यवच्छेदकम् ॥ २ ॥

उद्धास्यासेचनं मध्ये कृत्वा सर्पिरासिच्याश्वत्थीस्तिस्रः समिधो घृताक्ता आदधाति समिधाग्निमिति प्रत्यृचम् ॥ ३ ॥

चातुष्प्राश्यस्यासेचनं मध्ये कृत्वा सर्पिरासिच्य तेनाक्तास्तिस्रः समिध आदधाति "समिधाग्निम्" इति प्रत्यृचमिति ॥ ३ ॥

उपत्वेति जपति ॥ ४ ॥

"त्रिभिरादधात्येकं जपति" इति हि श्रूयते ॥ ४ ॥

(२)द्वितीयां वाऽध्वर्युः ॥ ५ ॥

---

(१) 'अस्तमिते' इति अस्मिन् सूत्रे संयोज्य 'सूर्ये ऽस्तमुपगते रक्तवृषभचर्मणि व्रीहिपूर्णानि चत्वारि पात्राणि स्थापयति । चतुर्णाम् ऋत्विजां तृप्तिपर्याप्तं तं चातुष्प्राश्यं गार्हपत्येऽग्नौ पचति' इत्यर्थं देवयाज्ञिक उक्तवान् ।

(२)अथवा न उपत्वेति ऋचं जपत्यपि तु सुसमिद्धायेतीमां जपतीत्यर्थः ।

द्वितीयां वा जपति । येनैवं श्रूयते–"समिद्वतीभिर्घृतवतीभिरग्निमभिरभ्यादधाति" इति । समिच्छब्दवतीभिर्घृतशब्दवतीभिश्चेति । द्वितीया च न समिच्छब्दवती, अतो द्वितीयामेव जपतीति । पाठक्रमस्तु लिङ्गेन बाध्यते । अध्वर्युग्रहणं च पाठक्रमव्युदासार्थम् । अतश्च समिदाधानान्ते जपः (न तु द्वितीयस्थानपठिताया अपि मध्ये जपः)। अपरे तु जपं याजमानमिच्छन्ति । "मन्त्राश्चाकर्मकरणा" इति सूत्रितत्वात् । तेनाध्वर्युरित्युच्यते ॥ ५ ॥

चत्वार ऋत्विजः प्राश्नन्ति ॥ ६ ॥

तमोदनम् ॥ ६ ॥

राद्धस्ते ब्रह्मौदन इत्याह ॥ ७ ॥

अध्वर्युः ॥ ७ ॥

वरं ददाति ॥ ८ ॥

ऋत्विग्भ्यो यजमानः । चातुष्प्राश्येन चानतेर्निर्वर्त्तितत्वादिष्टिषु ( वक्ष्यमाणासु अग्नये पवमानायेत्यादिषु ) ब्रह्मवरणं न भवति । असति(१)चातुष्प्राश्ये भवत्विति चेत् । न । अध्वर्य्वादिवत्प्रवृत्तत्वात् । "अन्याधेये ब्रह्मा सामानि गायति" इति प्रवृत्तक्रिय एवासाविति॥८॥

संवत्सरं वा पुरस्तात्कुर्यात्ततः सर्वानादधीत॥ ९॥

इदमन्यत्पक्षान्तरम् । पुरस्तादाधानस्य संवत्सरं यावत्(तण्डुल) मानादिवरदानान्तमोदनं कुर्यादिति । अस्मिंश्च पक्षे उत्तमरात्रिसंयोगेन चत्वारः पदार्था भवन्ति–अशननियमः, अजबन्धनम्, जागरणम्,वाग्बन्धश्चेति । उत्तमसंयोगेन ह्येते श्रूयन्ते । "यदहरस्य श्वोऽग्न्याधेयꣳ स्याद्दिवैवाश्नीयात्" इति अशननियमः । तथा "एताꣳरात्रिमजं बध्नन्ति" इति अजबन्धनम् । तथा "जाग्रति जाग्रति देवा" इति प्रकृत्याह—"स सदेवतरः श्रान्ततरस्तपस्वितरोऽग्नी आधत्ते" इत्याधानकालता भवति ( अशननियमादीनां त्रयाणाम् ) । वाग्बन्धस्य प्रधानकालत्वादित्युक्तमेवेति ।

ततः सर्वानादधीत । तत एव ( एवंविधसंवत्सरसमिदाधानसंस्कृ-

[१]चातुष्प्राश्यस्य वैकल्पिकत्वादिति भावः ।

तादेव) अग्नेः सकाशात् सर्वेऽग्नय आधीयन्ते । सभ्योऽपि तत एव । सर्वग्रहणात् । तस्य हि मन्थनं विहितम्-"सभ्यं च निर्मथ्य" इति ॥९॥

अत्र ( अरणी विनैव संवत्सरसमिदाधानेन श्रौताग्निसाधनपक्षे ) आधानोत्तरकालं कर्म विरच्यते—

गार्हपत्येऽनुगते ग्रामाग्निमाहृत्य चातुष्प्राश्यं पक्त्वा विहरेत् ॥ १० ॥

विहरणोपदेशादग्निहोत्रकाले गार्हपत्यानुगमने लौकिकमग्निमाहृत्य चातुष्प्राश्यं पक्त्वा चतुर्भ्यो दत्वा तमेव विहृत्याग्निहोत्रहोमं कुर्यात् । पुनः स्वयोनेराहरणम् । गुणविधित्वाच्च नात्र मानादि भवति (गुणमात्रविधाने धर्मानपेक्षणात्) ॥ १० ॥

रात्रिं जागरणधारणे ॥ ११ ॥

जागरणं यजमानस्य, धारणमग्नेः ॥ ११ ॥

शकलैर्वा ॥ १२ ॥

प्रसिद्धैः । गोमयादिभिर्वा । ननु चैतदवाच्यम् । सामर्थ्यसिद्धत्वात् । वाच्यं वाऽन्यतरनियमो यथा स्यादिति(१) ॥ १२ ॥

(उषसि आधानोपक्रमः)

व्युष्टायामुपशमय्य दक्षिणा वा संहरेदन्वाहार्यपचनश्चेत् ॥ १३ ॥

व्युष्टायां रात्रावुपशमय्य तमग्निं ( वक्ष्यमाणमुल्लेखनादिकं कुर्यात् ) । दक्षिणा वा संहरेत् यद्यन्वाहार्यपचनो [ दक्षिणाग्निः ] नित्योऽभिप्रेतः स एव भवति ॥ १३ ॥

स्थानमुल्लिख्याभ्युक्ष्यान्वारब्धे हिरण्यं निधायोपाखूत्करान्निवपत्यन्तेषु शर्कराः ॥ १४ ॥

उपशमितस्याग्नेः स्थानमुल्लिख्यान्वारब्धेऽभ्युक्ष्य हिरण्यं निधायोपाखूत्करान्निवपत्यन्तेषु शर्कराः । अन्तग्रहणाच्च ऊपाखूत्करैर्वृत्ता-

---

(१) ततश्च न शकलसमुच्चितैर्गोमयपिण्डैर्धारणमिति भावः ।

कारः कर्त्तव्यः। ततोऽन्तेषु शर्करा इति। अत्र चोल्लेखनोपलक्षिताः स्मार्त्ता अपि पदार्थाः परिसमूहनादयः पूर्वं कर्त्तव्याः। अभ्युक्षणं तु तन्त्रेणैव भवति ॥१४॥

हिरण्यमुपर्य्येके ॥ १५ ॥

उपरिष्टादेके हिरण्यमिच्छन्ति। एवमपि हि श्रुतत्वात् ॥ १५ ॥

एवमितरयोः ॥ ॥ १६ ॥

आहवनीयदक्षिणाग्न्योः स्थाने कर्त्तव्ये ॥ १६ ॥

अयं तु विशेषः—

पुरस्तादाहवनीयस्याष्टासु प्रक्रमेष्वेकादशसु द्वादशसु मत्या वा ॥ १७ ॥

"तं वा अष्टासु विक्रमेष्वादधीत" इत्येवमादिवचनात् ॥ १७ ॥

इतरस्य वितृतीये दक्षिणतः ॥ १८ ॥

इतरस्य दक्षिणाग्नेः वितृतीये देशे दाक्षिणतः स्थानं कर्त्तव्यम् ॥ १८ ॥

उत्सृतेऽग्निमन्थनमनुत्सृत एके ॥ १९ ॥

उदितेऽनुदिते वाऽग्निमन्थनं भवति ॥ १९ ॥

उदिते तूद्धरणम् ॥ २० ॥

उद्धरणं तूदित एव कर्त्तव्यम् ॥ २० ॥

अपरेण गार्हपत्यायतनम् ॥ २१ ॥

मन्थनं भवतीति वाक्यशेषः ॥ २१ ॥

तत्र च—

अश्वमानयेति ब्रूयात् ॥ २२ ॥

"तस्माद्यत्राग्निं मन्थिष्यन्त्स्यात्तदश्वमानेतवै ब्रूयात्" इति। अतश्च यो मन्थिष्यन् स प्रैषं ददाति। स चाध्वर्युः शाखान्तरे विहितः—"तस्मादध्वर्युः प्रत्यङ्मुखो मन्थति" इति। अग्नीत्तु प्रैषार्थं करोति॥२२॥

(१) स्थितेऽश्वे पुरस्तात् ॥ २३ ॥

मन्थनं भवति ॥ २३ ॥

जाते वरदानम् ॥ २४ ॥

जातेऽग्नौ वरदानं कर्त्तव्यम् ॥ २४ ॥

मनसैके ॥ २५ ॥

मनसा वा सङ्कल्पमात्रं कृत्वा पश्चाद्ददाति ॥ २५ ॥

तस्याभिश्वासः प्राणममृते दध इति ॥ २६ ॥

अभिश्वासेन च प्राण्यते अग्निः समर्थः क्रियते । ततश्च मुखेनाभिश्वासः क्रियते ॥ २६ ॥

उच्छ्वासोऽमृतं प्राण आदध इति ॥ २७ ॥

वायूपादानम् उच्छ्वासः । सैव चापाननक्रिया । "स पुनरपानिति तदेनमन्तरात्मन्नाधत्त" इति । तदेनमग्निमन्तरात्मन्नाधत्त इति यजमानसंस्कारोऽयमिति तत्कर्तृकः । अतश्च पुनराधेये न भवति । अनग्निसंस्कारत्वात् । अभिश्वासस्तु भवत्येव । द्वावपि चैतावेककर्तृकौ । "स पुनरपानिति" इति वचनात् । अभिश्वासः पुनः जातसंयोगात् "ततः सर्वानाद्धीत" इत्यत्र न भवति । उच्छ्वासस्त्वात्मसंस्काराद्भवत्येवेति ॥ २७ ॥

इति चतुर्थाध्याये अष्टमी कण्डिका ।

---

(१) तत्र च प्रथममधरारणिमुत्तराग्रां निधाय उत्तरारण्या ईशानदिग्भागादष्टाङ्गुलदीर्घं द्व्यङ्गुलविपुलं प्रमन्थं छित्त्वा तस्य मूलं चात्रबुध्ने प्रवेश्य अधरारण्या मूलादष्टाङ्गुलं त्यक्त्वा अग्राच्च द्वादशाङ्गुलं त्यक्त्वा तदन्तराले अङ्गुलचतुष्टयपरिमिते पूर्वेऽरण्यन्ते मन्थनस्थानं कृत्वा चात्रबुध्नप्रोतस्य प्रमन्थस्याग्रं तत्र निधाय चात्राग्रकीलकस्योपर्युदगग्रामोविलीं निधाय यन्त्रं धारयित्वा चात्रं नेत्रेण प्रदक्षिणं त्रिर्वेष्टयित्वा तथा मन्थनं कुर्याद्यथा जातोऽग्निः प्राच्यां पतति । तत्र यजमानः प्राङ्मुखो यन्त्रधारणं करोति, पत्नी चात्रं नेत्रेण त्रिर्वेष्टयित्वा मन्थनं करोति । ततः शाखान्तरादध्वर्युश्च—'तस्मादध्वर्युः प्रत्यङ्मुखो ऽभिमन्थति' इति । चात्रादीनां लक्षणमन्यत्र स्पष्टम् ।

( गार्हपत्याधानम् )

(१)दारुभिर्ज्वलन्तमादधाति भूर्भुव इति सम्भारेष्वमुष्य त्वा व्रतपते व्रतेनादध इति यथर्षि ॥ १ ॥

यथर्षिग्रहणेन शाखान्तरपरिपाठितमार्षेयं गृह्यते । "यद्याङ्गिरा अङ्गिरसां त्वा देवानां व्रतपते व्रतेनादध इति, यदि भृगवः भृगूणां त्वा देवानां व्रतपते व्रतेनादध इति, भार्गवाङ्गिरसव्यतिरिक्तानाम् आदित्यानां त्वा देवानाम्" इत्येवं हि शाखान्तरे पठ्यते(२) ॥ १ ॥

वरुणस्य त्वेति क्षत्रियस्येन्द्रस्य त्वेति राजन्यस्य ॥ २ ॥

व्रतपते व्रतेनादध इत्युभयत्र सम्बध्यते । राजन्यग्रहणेन च कैश्चिदनभिषिक्तो गृह्यते । अनभिषिक्तः क्षत्रिय इति । एतच्चायुक्तम् । यत्कारणं क्षत्रियायां ब्राह्मणजातो राजन्य इति स्मर्यते, तस्मात्स एव ग्रहीतव्यः ॥ २ ॥

मनोष्ट्वा ग्रामण्य इति वैश्यस्य, ऋभूणां त्वेति रथकृतः ॥ ३ ॥

आदधाति । देवानामिति अत्रापि हि पठ्यते । रथकारशब्दश्च जातिनिमित्त इत्युक्तम् ॥ ३ ॥

---

(१) तं जातमग्निं दारुभिर्यज्ञियवृक्षकाष्ठैर्ज्वलन्तं दीप्यमानं सम्भारेषु सम्भाराणां हिरण्यादीनामुपरि भूर्भुव इति मन्त्रेण अमुष्य त्वेति मन्त्रेण च स्थापयति, यथर्षि यस्य य ऋषिर्भवति तस्यामुष्येति स्थाने तद्वाचि पदं षष्ठ्यन्तं प्रयोज्यमित्यर्थः ।

(२)तथा चापस्तम्बः 'भृगूणां त्वा देवानामिति यो भार्गवः स्यात्, अङ्गिरसां त्वा देवानामिति यो ब्राह्मण आङ्गिरसः स्यात्, आदित्यानां त्वा देवानामित्यन्यासां प्रजानां, वरुणस्य त्वा राज्ञो व्रतपत इति राज्ञः, इन्द्रस्य त्वेन्द्रियेण व्रतपत इति राजन्यस्य, मनोष्ट्वा ग्रामण्यो व्रतपत इति वैश्यानाम्, आदित्यानां त्वेति रथकारस्येति यथर्ष्याधानम्' इति ।

रथन्तरं गायेति प्रेष्यति ॥ ४ ॥

प्रैषप्रैषार्थयोः कर्तृभेदान्न ज्ञायते कः प्रैषे को वा प्रैषार्थे इत्यत आह—

गानमध्वर्योः ॥ ४ ॥

समाख्यानात्। अध्वर्युवेदविहितं हि सामगानम्। उत्पत्तिमात्रं हि सामवेदे दृष्टम्। प्रैषार्थस्य च प्रधानभूतत्वात् ॥ ५ ॥
एवं प्राप्ते आह—

ब्रह्मा वा वेदयोगात् ॥ ५ ॥

ब्रह्मा वा साम गायति। कुत एतत्। ब्रह्मणोऽपि ह्यध्वर्युवेदविहितकर्मयोगोऽस्ति। वेदत्रयविहितं हि ब्रह्मत्वम्। अतः समाख्या तत्रापि घटते ॥ ५ ॥

युक्तत्वाच्चाध्वर्योः ॥ ६ ॥

अपि च। युक्तोऽध्वर्युः पदार्थान्तरेषु। तथा च सूत्रान्तरम्—"प्रस्तोता परिसामानि गायति, अग्न्याधेये सौत्रामण्यां च ब्रह्मा" इति। तस्माद् ब्रह्मैव सामगाने ॥ ६ ॥

( आहवनीयाधानोपक्रमः )

इध्मेनोद्धरणमुपयम्य ॥ ७ ॥

परिधिवृक्षसम्बन्धिना इध्मेन ( गार्हपत्ये प्रदीप्तेन ) आहवनीयोद्धरणम् ( कर्परस्थाभिः ) उपयमनीभिर्मृद्भिर्गृहीत्वा। विस्रस्तत्वाच्च मृद्भिर्ग्रहणानुपपत्तिः, अतस्तत्रारोपणमात्रेणैवोपयमनम्। तत्र चेध्माग्रमारोप्यते। [१]बुध्नः पुनरग्नाविति ॥ ७ ॥

यथैनं धूम उपेयात् ॥ ८ ॥

तथा चोद्धरणं कर्त्तव्यं यथा यजमानं धूम उपगच्छेत्। अनेन च प्रकारेण यजमानस्य धूमानुगमनं विधीयते ॥ ८ ॥

---

(१)बुध्नो मूलं तद् अग्नौ आदीप्यते, नतु इध्माग्रम्। "इध्मपूर्वार्धे गृहीत्वा" इत्यग्रेऽभिधानात्। आदीपने तदसम्भवात्।

**वामदेव्यमिति प्रेष्यत्यश्वः पुरस्ताद्युवा, तदभावे ऽयुवा,ऽश्वाभावे ऽनड्वान् ॥ ९ ॥**

"तं यत्र प्राञ्चं हरन्ति तत्पुरस्तादश्वं नयन्ति" इति वचनात् । मन्थनकालाहृत एवायमश्वो नाश्वान्तरम् । तदभावे चानड्वान्भवति । अस्मिंश्च पक्षे अनभिधायकत्वादश्वमानयेतिप्रैषाभावः । (प्रकृतित्वादनूहः) ॥ ९ ॥

**(१) सम्भारानधिष्ठाप्य दक्षिणपूर्वपादेन प्राञ्चं नीत्वाऽऽवर्त्य स्थापयति ॥ १० ॥**

दक्षिणपूर्वपादेनेति सन्निधानात् । सम्भारानुत्तरेण प्राञ्चं नीत्वाऽऽवर्त्य स्थापने क्रियमाणे सन्निहितो दक्षिणपूर्वपादः । एवं च सत्यग्नौ (अग्निचयने उखासम्भरणे दक्षिणतो नीयमाने सन्निधानात् पिण्डस्य ) सव्येनाक्रमणम् ॥ १० ॥

( आहवनीयाधानम् )

**बृहदिति प्रेष्यत्यग्निना पदं द्विरुपस्पृश्य तृतीयेनादधाति द्वितीयेन प्रथमेन वा भूर्भुवः स्वरिति पूर्ववत् ॥ ११ ॥**

अग्निना पदं द्विरुपस्पृश्य तृतीयेनोपस्पर्शनेनादधाति द्वितीयेन प्रथमेन वा भूर्भुवः स्वरित्यनेन मन्त्रेण । पूर्ववच्छन्देन च यथर्षीति लभ्यते ॥ ११ ॥

**पुरस्तात्परिक्रम्येध्मपूर्वार्द्धं गृहीत्वा द्यौरिव भूम्नेत्याह ॥ १२ ॥**

---

(१) एवं प्राङ्मुखे ऽश्वे अग्रतो नीयमाने आहवनीयखरसमीपं प्राप्य प्राङ्मुखस्यैवाश्वस्य दक्षिणपूर्वपादेनाग्निमदक्षिणचरणेनाहवनीयखरस्थान् हिरण्यादिसम्भारानधिष्ठाप्य अश्वपादेनाक्रमय्य तमश्वं प्राञ्चं नीत्वा तत आवर्त्य प्रदक्षिणावर्तेनेन प्रत्यङ्मुखं कृत्वा संमुखं स्थापयतीत्यर्थः ।

पुरस्तात्परिक्रम्याग्नेः इध्मपूर्वार्द्धं गृहीत्वा द्यौरिव भूम्नेति मन्त्रं जपति । तच्चैतद्यजमानः करोति । "इध्मपूर्वार्द्धोन्वारम्भण" इति अन्वारम्भोपदेशात् । तस्य च याजमानत्वात् । मन्त्रलिङ्गाच्च "अग्निमन्नादमन्नाद्यायादधे" इति ॥ १२ ॥

आयं गौरिति चोपतिष्ठते सार्पराज्ञीभिः ॥ १३ ॥

च-शब्दाद्यजमानोऽन्युपस्थाने । सार्पराज्ञीग्रहणं च संव्यवहारार्थम् "सार्पराज्ञ्यै वा कुर्यात्" इति ॥ १३ ॥

( दक्षिणाग्न्याधानम् )

दक्षिणाग्निमादधाति ॥ १४ ॥

गार्हपत्यात् । नित्यपक्षे योऽसौ दक्षिणाहृतस्तमादधाति ॥ १४ ॥

( सभ्याधानम् )

सभ्यं च निर्मथ्य ॥ १५ ॥

चशब्दादादधातीति । तं च सभास्थाने । "अथ य एष सभायामग्निः" इति वचनात् । सभा च यत्र स्थितोऽध्यापयति व्याचष्टे वा ॥ १५ ॥

गां दीव्यध्वमित्याह ॥ १६ ॥

दीव्यतिः क्रीडार्थः । गां पणं कृत्वा द्यूतं रमध्वमित्यर्थः । बहुवचनोपदेशात्प्रकृतत्वाच्च ऋत्विजोऽभिधीयन्ते द्यूतस्य कर्तृत्वेन । तच्चैतद् द्यूतं सभ्याङ्गम् । सभ्यस्य प्रकृतत्वात् । उपरितनसूत्रे च तद्धर्मोपदेशात् "धारणोपस्थानमतः" इति । सभ्याङ्गत्वं च पुनराधेये न भवत्येव । विद्यमानत्वादत्र सभ्यस्य ॥ १६ ॥

धारणोपस्थानमतः ॥ १७ ॥

यद्यपि च तनूहवींषि कालान्तरे क्रियन्ते तथापि तु सभासनमत एवारभ्य कर्त्तव्यमिति ॥ १७ ॥

इति चतुर्थाध्याये नवमी कण्डिका ।

( सभ्याधानानन्तरं श्यैतादिसामगानप्रैषः )

श्यैत-वारवन्तीय-यज्ञायज्ञियानीति च प्रेष्यति ॥ १ ॥

च—शब्दः सभ्यानन्तर्यप्रदर्शनार्थः । श्यैतादीनां चैककालं प्रैषोच्चारणमिति सम्प्रदायः ।

प्रैषप्रैषार्थयोरानन्तर्याद्भेदेनेत्यपरे। ततश्च श्यैतगानोत्तरकालीनो वारवन्तीयप्रैषः। वारवन्तीयोत्तरकालीनश्च यज्ञायज्ञियस्य ॥ १ ॥

दक्षिणेनाग्नीन्परीत्योदगुत्सृजति ॥ २ ॥

प्रदक्षिणमग्निपरिगमनं कृत्वा उदगुत्सृजत्यश्वम्। दक्षिणग्रहणाच्च नेतरथावृत्तिर्भवति ॥ २ ॥

( ऋतुनक्षत्रादिविकल्पः )

ऋतुनक्षत्रसम्भारसामवपनचातुष्प्राश्यजागरणेध्मपूर्वार्द्धान्वारम्भणसार्पराज्ञीर्न वा कुर्यात् ॥ ३ ॥

ऋत्वादिविकल्पार्थमिदमुक्तम्। ऋतौ तावत् "ते वा एतऋतव उभय एवापहतपाप्मान" इति प्रकृत्याह—"तस्माद्यदैवैनं कदाच यज्ञ उपनमेदथादधीत" इति। तथा "यदैवैनं श्रद्धोपनमेदथादधाति" इति ऋत्वनादरः। तथा नक्षत्रेषु—"तस्मान्न नक्षत्र आदधीत" इति नक्षत्रविषयोऽनादरः।

नक्षत्रानादरे चामावास्यायां नियम इति सम्प्रदायः। तत्पुनर्नातीव युक्तरूपम्। यत्कारणम् अमावास्या नक्षत्रं च भेदेन विहिते। "कृत्तिकादिष्वादधीत" इति नक्षत्रविधानम्। तदनादरे चाकृत्तिकादिष्वपीति गम्यते। तथा चाह "यद्वृ नक्षत्रकामः स्यादेतद्वा अनपराद्धं नक्षत्रं यत्सूर्यः स एतेनैव पुण्याहेन यदेतेषां नक्षत्राणां कामयेत तदुपेत्सेत्" इति। एवं सति अनमावास्यायामकृत्तिकादिष्वप्याधानं भवत्येव।

सम्भारेषु विहितप्रतिषेधाद्विकल्पः। "न वै कश्चन सम्भारः सम्भरेत्" इति वचनात्। सामस्वपि "बालोहाभिस्तेजोवन्ति सामानि तस्मान्न गेयानि" इति। वपनेऽपि शाखान्तराद्विकल्पः। चातुष्प्राश्येऽपि "चातुष्प्राश्यमोदनं पचन्ति" इति विधायाह "यद्वा अस्य ब्राह्मणाः कुले वसन्त्यृत्विजश्चानृत्विजश्च तेनैव तं काममाप्नोति" इति विकल्पः। जागरणमपि विधायोच्यते—"तद्वपि काममेव स्वप्यात्" इति। इध्मपूर्वार्द्धान्वारम्भणे च "पूर्वार्द्धमुल्मुकानामभिपद्य जपति" इत्युक्त्वाऽऽह—"स यदि कामयेत जपेदेतद्यद्यु कामयेतापि नाद्रियेत" इति। सार्पराज्ञ्युपस्थानमपि "अथ सार्पराज्ञ्या ऋग्भिरुपतिष्ठत" इति विधायाह "तस्मान्न सार्पराज्ञ्या ऋग्भिरुपातिष्ठेत" इति ॥ ३ ॥

विकल्पप्रसङ्गेनेदमपरमुच्यते—

(नित्याग्निहोत्रधर्मककर्मण आधानाङ्गतया तूष्णीं विधानम्)

अग्निहोत्रं च तूष्णीꣳ श्रुतेः पूर्णाहुत्यन्ते ॥ ४ ॥

अग्निहोत्रशब्दोऽत्र धर्मवन्नैयमिकाग्निहोत्रधर्मातिदेशार्थः । वा जुहुयाद्वा न जुहुयादिति । कुत एतत् । एवं हि शाखान्तरे पठ्यते "होतव्यमग्निहोत्रं न होतव्यमग्निहोत्रम्" इति । विधिप्रतिषेधावाशङ्क्याग्निहोत्रं चेत्युक्तम् । तत्पुनरयुक्तम् । न ह्येतौ विधिप्रतिषेधौ । तूष्णींहोमप्रशंसैषा । "यदि जुहोत्ययथाकुर्यादथ न जुहोत्यग्निः परापतेत्तस्मात्तूष्णीं जुहुयात्" इति । अतो न विकल्पः ।

तच्चैतदग्निहोत्रं सायमारम्भं प्रातरपवर्गं प्रयोगद्वयपरिसमापनम् । आग्नेयी सायमाहुतिः सौरी प्रातराहुतिः प्रधानभूते । अत्र चैककालत्वादङ्गानि तन्त्रेण । प्रधानाहुती तु चतुर्गृहीतेनाग्नेयीं हुत्वा पात्रान्तरे तदुन्नीय चतुर्गृहीतान्तरेण सौरीम् । शेषमेकीकृत्योत्तराहुतिरिति । तच्चैतत्पूर्णाहुत्यन्ते भवति ॥ ४ ॥

पूर्णाहुतिविधानमाह—

( पूर्णाहुतिविधानम् )

निरुप्याज्यं गार्हपत्येऽधिश्रित्य स्रुक्स्रुवं च सम्मृज्योद्वास्योत्पूयावेक्ष्य गृहीत्वाऽन्वारब्ध एव꣡ सर्वत्र स्वाहेति ॥ ५ ॥

पूर्णाहुतिरिति कर्मणो नामधेयम् । अन्वर्थसंज्ञा चैषा । तेन पूर्णैव होतव्या । "तां वै पूर्णां जुहोति" इति वचनात् । निरुप्याज्यं गार्हपत्येऽधिश्रयेत् । गार्हपत्यग्रहणं च आहवनीयव्युदासार्थम् । तत्रापि हि श्रपणं विहितं "श्रपणं वाऽऽहवनीये" इति । अपरे तु मन्यन्ते । अधिश्रयणं संस्कारमात्रमेवैतत् । न ह्येतच्छ्रपणं श्रा पाके इति धात्वर्थः । पाकेनैव त्वाज्यं संवृत्तम् । तस्मान्नाहवनीयव्युदासार्थं गार्हपत्यग्रहणम् । कस्तर्ह्यत्र समाधिः । गार्हपत्यशब्दस्य संस्कारनिमित्तत्वात्तदभावाच्च भाविन्या वृत्त्या गार्हपत्यत्वाध्यारोपणार्थं गार्हपत्यग्रहणम् । एवं सत्याहवनीयेऽप्ययमेव न्यायः । स्रुक्स्रुवं संमृज्यते । होमसम्बन्धाद्विकङ्कती स्रुक् । स्रुवश्च विशे-

षितत्वात्क्षामादिर एव । तथा च अग्निहोत्रहोमे विधानसामर्थ्यात् वैकङ्कतः स्रुवो भवति । उद्वास्योत्पूयावेक्ष्य स्रुवेण ग्रहणम् । स्रुवस्य सम्मार्जनविधानात् ग्रहणार्थता । सम्मार्जनोत्पवने च दर्भैः । येन कचित् "पाणिना सम्मार्ष्टि" इत्याह । अन्वारब्धे जुहोति स्वाहेति । एवं सर्वत्र । यत्राव्यक्ता जुहोतिचोदना तत्राधिश्रयणादि प्रवर्त्तते । कुत एतत् । जुहोतिशब्दात् । अव्यक्तासामान्याच्च ॥ ५ ॥

वरं ददामीति वाग्विसर्जनम् ॥ ६ ॥

वरदानं च पूर्णाहुत्यङ्गम् । "तस्यां वरं ददाति" इति वचनात् । पूर्णाहुतिधर्माश्चानुदूधृताभ्यस्तमयाहुतौ विहिताः "गार्हपत्य आज्यमधिश्रित्योद्वास्योत्पूयावेक्ष्य" इत्येवमादि । इयं त्वविहितधर्मका । तेन चोदनासारूप्येण ततो धर्मान् गृह्णाति । अत आचार्येण तदीया धर्मा इहोपदिष्टाः । तत्रान्वारम्भणवरदाने न विहिते । अतस्तयोरनतिदेशः । वाग्यमोऽपि चेहैवेति नातिदिश्यते ॥ ६ ॥

( तनूहविषां कालविधानम् )

द्वादशाहान्ते तनूहवी ँषि निर्वपति मासे द्वितीये तृतीये षण्मास्ये संवत्सरे सद्यो वा न वा ॥ ७ ॥

इति निगदव्याख्यातम् ॥ ७ ॥

तनूहवींष्युच्यन्ते—

( पवमानादीष्टयः )

अग्नये पवमानाय प्रथमा ॥ ८ ॥

इष्टिर्भवति ॥ ८ ॥

अग्नये पावकायाग्नये शुचये च द्वितीया ॥९॥

अदित्यै चरुस्तृतीया ॥ १० ॥

न चेयं तनूहविषां मध्ये पठ्यते । तेनास्या उपांशुत्वं न भवतीति सम्प्रदायः । शाङ्खायनशाखायां तूपांशुत्वमस्याः पठ्यते ॥९॥१०॥

आग्नेय एव वा पुरस्तादादित्यस्य ॥ ११ ॥

आग्नेयो वा प्रागादित्यात् । अथादित्यै चरुरुपांशु ॥ ११ ॥

षड् दक्षिणाः प्रतिविभज्य ददाति द्वादश चतुर्विंशतिं वा ॥ १२ ॥

प्रतीष्टि विभागेन दक्षिणादानम् ॥ १२ ॥

भूयसीश्च यथाश्रद्धम् ॥ १३ ॥

उक्तसंख्याव्यतिरेकेण यथाश्रद्धं भूयसीश्च ददाति ॥ १३ ॥

धेनुरादित्यस्य ॥ १४ ॥

ताश्चैता दक्षिणा इष्टिसम्बन्धादिष्ट्यङ्गं, न सकलस्याधानस्य । तथाचोक्तम् "उलूखलमुसलाभ्यां दृषदुपलाभ्याᳬ हविर्यज्ञं घ्नन्ति" इति प्रकृत्य "स एष यज्ञो हतो न ददक्षे तं देवा दक्षिणाभिरदक्षयन्" इति। तस्मादिष्टीनामेव दक्षिणा इति । प्रयोजनम् इष्ट्यभावे तदभावः॥१४॥

अनृतातिथ्यपनोदपूतिदार्वाधानर्बीसपक्कनाव्युदकानि वर्जयेत् ॥ १५ ॥

अनृतातिथ्यपनोदः स्मृतिप्राप्त एवानूद्यते । "नानृतं वदेत्" इति स्मृतिः । "अप्रणोद्योऽतिथिः" इति च । तदनुवादोऽयम्-'न वा आहिताग्निनाऽनृतं वदितव्यम्' इति । तदेतन्नातीव युक्तरूपम् । यतोऽनुवादमात्रमनर्थकम् । विधौ च प्रवृत्तिविशेषकरत्वम् । तस्माच्छ्रौत एवायं सत्यवदननियमः । एवं च तदतिचारे श्रौतं स्मार्त्तं च प्रायश्चित्तम् । पूतिशब्दो दुर्गन्धिद्रव्यवाची । प्रसिद्धेः । ऋबीसपक्कं यत्पृथिव्या गर्त्ते तिन्दुकादि पाचितम् । ऋबीसशब्दश्च पृथिवीवचनो नैरुक्ताभिप्रायात् । "योऽयमृबीसे पृथिव्यामग्निः" इति । नाव्युदकं च । अग्निहोत्रार्थमुद्धृते ऽग्नावुदकदानप्रतिषेधः । "स यदुद्धृतेऽग्नावभ्यागता नोदकं याचन्ते" इति । नौशब्दश्चात्राग्निहोत्रविषयो "नौर्हवा एषा स्वर्ग्या यदग्निहोत्रम्" इति ॥ १५ ॥

(१)ब्रह्मचार्यग्निनित्यधारी क्षीरहोम्यग्निमुपशायी

---

(१) यजमान आधानानन्तरं द्वादशरात्रम्, अथवा षड्रात्रम्, अथवा अन्ततः अन्तिमपक्षे त्रिरात्रं ब्रह्मचारी भवेत् । अग्निनित्यधारी गार्हपत्याहवनीयदक्षिणाग्निसभ्यान्नित्यं धारयेत । क्षीरहोमी

द्वादशरात्रं षड्रात्रं त्रिरात्रमन्ततः ॥ १६ ॥

निगदव्याख्यातम् । पुरुषधर्मश्चायम् । ततश्च सोमाधाने समारोपस्य क्रतुधर्मत्वात् पुरुषधर्मोऽग्निनित्यधारित्वं बाध्यते ॥ १६ ॥

इति चतुर्थाध्याये दशमी कण्डिका ।

अग्न्याधेयमनुविहितम् । अवसरप्राप्तमिदानीं पुनराधेयमुच्यते—

( पुनराधेयम् )

(१)पुनराधेयमाधानाप्रतिज्ञातस्य ॥ १ ॥

पुनराधेयमिति कर्मणो नामधेयम् । तच्चाधानाप्रतिज्ञातस्य भवति । यस्याधानसमनन्तरमेव प्रतिज्ञातमपगतं स आधानाप्रतिज्ञातः । एवं हि श्रूयते-"यस्याधानमनर्थकं स्यात् स पुनरादधीत" । तथा "योऽग्नी आधाय सर्वज्यानिं जीयते स पुनरादधीत" ॥ १ ॥

राज्ययशस्कामस्य वा ॥ २ ॥

त्रिरात्रावरमग्नीनुत्सृज्य ॥ ३ ॥

---

दुग्धेनैवाग्निहोत्रं जुहुयात् । अग्निमुपशायी अग्निसमीपे एव भूमौ शयीतेत्याद्यर्थः ।

( १ ) सूत्रार्थस्तु यो धनवृत्ताध्ययनादिमत्तयाऽतिप्रसिद्धः पुरुषः स प्रतिज्ञात इत्युच्यते । न प्रतिज्ञातो ऽप्रतिज्ञातः, आधानलक्षणेन निमित्तेनाप्रतिज्ञातः आधानाप्रतिज्ञातः । यः प्रागाधानाल्लब्धप्रतिष्ठो ऽपि अग्न्याधानसमनन्तरं संवत्सरादर्वागेव वित्तमानादिहानेर्लाभाभावाद्वाऽप्रतिष्ठितो ऽप्रसिद्ध इव स्यात्, अप्रतिष्ठ इव भवेत् तस्येदं दुष्टाग्न्युत्सर्गपूर्वकमदुष्टाग्न्युत्पादकं पुनराधेयसंज्ञकं कर्म भवतीत्यर्थः । तथाचाथर्वणे पठ्यते "आधानाद् वृद्धिहानिश्चेदर्वाक् संवत्सराद्रोहिण्यामग्निहोत्रमुत्सृज्य पुनर्वस्वोः पुनरादधीत" इति । शाङ्खायनोऽपि "काम्यं पुनराधेयमजानानस्य" इति पठितवान् । अथवा प्रतिज्ञातं प्रियं, न प्रतिज्ञातमप्रतिज्ञातमप्रियम् । आधानसमनन्तरमेव सर्वस्वहानिपुत्रमरणादिहानिदर्शनादाधानमेव यस्याप्रियमभवति तस्य पुनराधेयमिति । "एतद्वास्य प्रियतमं धाम" इत्यादि दर्शनात्प्रतिज्ञातशब्दस्य प्रीतौ शक्तेः ।

त्रिरात्रमवरं यस्य कालस्य स त्रिरात्रावरः । अतश्चतूरात्रादय-पि भवति । अग्नीनिति बहुवचनोपदेशात् त्रय एवोत्सृज्यन्ते । अतश्च सभ्यस्यानुत्सर्गः ॥ २ ॥ ३ ॥

सद्यो वा ॥ ४ ॥

तत्र विशेषं वक्ष्यति "सद्यश्चेत्"इति ॥ ४ ॥

पुनर्वस्वोः ॥ ५ ॥

"पुनर्वस्वोः पुनराधेयमादधीत"इति वचनात् ॥ ५ ॥

वर्षासु मध्यन्दिने वा ॥ ६ ॥

"स वै वर्षास्वादधीत"इति वचनात् । "तस्मादु मध्यन्दिन एवादधीत"इति च । स चायं विकल्पः । मध्यन्दिने वर्षाकालसम्पत्तेः । "योऽयं मध्यन्दिनोऽथ वर्षा" इति प्रकृत्य "तस्मादु मध्यन्दिन एवादधीत"इत्याह ॥ ६ ॥

कुशैराधानम् ॥ ७ ॥

उभयोरग्न्योः । "तं वै दर्भैरुद्धरति"इति हि श्रूयते ॥ ७ ॥

व्रीह्यपूपमर्कपलाशयोः पक्वं गार्हपत्यस्थाने

निदधात्येवमाहवनीयस्य यात्रौ सद्यश्चेत् ॥ ८ ॥

स चायमपूपः प्राक् सम्भारेभ्यः स्थाप्यते । सम्भारेषु ह्यग्निनिधानं विहितं "भूर्भुव इति सम्भारेषु"इति । न चापूपस्य सम्भारैः सह विकल्पः । धर्ममात्रत्वात् । अतः परिसमूहनादीन् पञ्च पदार्थान् कृत्वा अपूपस्थापनम् । सद्यःपक्षे चापूपौ भवतः, न रात्र्यन्तरपक्षे । अपूपं प्रकृत्याह "पूर्वाभ्यामेवैनावेतदग्निभ्यामन्तर्दधम" इति । पुनरुक्तन्निराकरणायाह "रात्रिभिर्हैवान्तर्हितौ भवत" इति ॥ ८ ॥

आग्नेयः पञ्चकपाल उपाꣳशु प्रागुत्तमादनुयाजात् ॥ ९ ॥

"तेनोपाꣳशुचरन्ति"इति प्रकृत्याह "उच्चैरुत्तममनुयाजं यजन्ति"इति । अतः प्रागित्युक्तम् ॥ ९ ॥

तद्वर्जं वा ॥ १० ॥

उत्तमानुयाजवर्जं वोपांशु भवति । "उच्चैरुत्तममनुयाजं यजति" इत्येतावानेव हि विधिः । आग्नेयं प्रकृत्याह "तेनोपाꣳशु चरन्ति" इति । चरणशब्दे च सर्वस्योपांशुताऽऽचार्येणोक्ता "चरणशब्दे सर्वम्" इति । पञ्चकपाल एवैको भवति नान्या इष्टयः । एवकारकरणात् "आग्नेयमेव पञ्चकपालं पुरोडाशं निर्वपति" इति ॥ १० ॥

अग्नीनिति वा प्रथमे प्रयाजे ऽनुयाजे च ॥ ११ ॥

वा समिधो यजेति देवान् यजेति वा । एवं श्रूयते प्रयाजान्प्रकृत्य "स आश्राव्याह समिधो यजेति अग्नीन्यजेति त्वेव ब्रूयात्" । तेन विकल्पाशङ्कया अग्नीनिति वेत्युक्तम् । यद्येवमग्नीनित्येवेत्यवधारयितव्यम् । समिधो यजेति हि तस्यैव संस्तवायोच्यते । अतोऽग्नीनित्येवेत्यवधार्यते ॥ ११ ॥

आज्यभागो द्वितीयो ऽग्नये पवमानायेन्दुमते वा ॥१२॥

सचायं वाचनिको देवताविकल्पः ॥ १२ ॥

हिरण्यं दक्षिणाऽनड्वान्वाऽग्न्याधेयिकीश्चे-
च्छ्रुतेः ॥ १३ ॥

श्रुतिग्रहणं समुच्चयविधानार्थमिति केचित् । तदयुक्तम् । अग्न्याधेयिकीर्दत्त्वा पुनराधेयिकीर्ददात्ययमनुवाद एव । अग्न्याधेयिक्यो हि पूर्वं दत्ताः ततः पुनराधेयिक्यः । श्रुतिग्रहणं च विध्याशङ्कानिवृत्त्यर्थम् ॥ १३ ॥

अग्न्याधेयवदन्यत्सद्यः ॥ १४ ॥

उक्तव्यतिरेकेणान्यदग्न्याधेयवद्भवति । इयांस्तु विशेषः—सद्यः । अग्न्यगारकरणम्, अरणिप्रदानम्, उच्छ्वासश्च न भवति । अनग्निस्कारात् ॥ १४ ॥

अपराह्णे मैत्रावरुणी वशाऽनस्तमिते पुरोडाशेडान्तं
कृत्वा रात्रिशृतया प्रातश्चरन्ति तत आधानम् ॥ १५ ॥

इदमन्यत्पक्षान्तरम् । पूर्वेद्युरपराह्णे मैत्रावरुणीं वशामालभ्य रात्रौ श्रपयित्वा प्रातः प्रचारस्तत आदधीत । पुनर्वस्वोरेव नान्य-

न । नात्र त्रिरात्रावरमुत्सर्गौ नापूपाविति ॥ १६ ॥

इति चतुर्थाध्याये एकादशी कण्डिका ।

पुनराधेयमनुविहितम् । इदानीमग्निहोत्रस्यावसरः । तं प्रोत्सार्य शाखान्तरावगतक्रमेण तदङ्गभूतमुपस्थानमनुविधीयते—

( बृहदुपस्थानम् )

सायमाहुत्याᳫं हुतायां यजमानोऽग्नी उपतिष्ठ-ते वात्सप्रेण ॥ १ ॥

सायमुपतिष्ठेत । "सायᳫं हि देवा उपातिष्ठन्त" इति वचनात् । वात्सप्रमिति चोपस्थानक्रियानाम (न मन्त्रनाम) । यद्यपि च "हुतायाम्" इत्युक्तं तथापि तु समिदाधानमन्त्रक्रमानन्तर्यात्तदनन्तरमेव कर्त्तव्यम् । हुतशब्दश्च हुतप्रायाविषयः । यथा "हुते च धारावजम्" ( का० श्रौ० अध्या० ४ । कं० १३ । सू० १९ ) इति ॥ १ ॥

न वा ॥ २ ॥

न वोपतिष्ठेत । "अथ यस्मादुपैवतिष्ठेताथ यस्मान्नोपतिष्ठेत" इति विहितप्रतिषिद्धत्वाद्विकल्पः ॥ २ ॥

(१)तिस्रस्त्रिरुपप्रयन्तोऽस्य प्रत्नां परिते चित्रा-वसाविति च ॥ ३ ॥

प्रक्रमादेव त्रित्वसिद्धेस्तिस्र इति ग्रहणात् स्वस्थानस्थितानामेव त्रिरावृत्तिः । चित्रावसाविति च त्रिरेव ॥ ३ ॥

सन्त्वमित्युपनिश्य ॥ ४ ॥

जपतीति वाक्यशेषः । "एतावन्नु तिष्ठन् जपत्यथासीनः सन्त्वम्" इति वचनात् ॥ ४ ॥

---

(१)अत्र "उपप्रयन्तोऽध्वरम्" इत्यारभ्य "परिते दूडभ" इत्यन्तं वात्सप्रोपस्थानं समाम्नायक्रमेणैव कर्त्तव्यम् । तत्र विशेषमाह—

गां गच्छत्यन्धस्थेति ॥ ५ ॥

एतच्च सन्निधानात् कर्माङ्गभूतां गां प्रति गमनम् । सन्निहितप्रत्ययन्यायात् । एवं च सति गोपक्षे एवैतदुपस्थानं नान्यत्रेति ॥ ५ ॥

सꣳहितेत्यालभते ॥ ६ ॥

गामेव ६ ॥

गार्हपत्यं गत्वोपतिष्ठत उपत्वेति ॥ ७ ॥

"अग्नी उपतिष्ठते" इति द्विवचनोपदेशात् अधस्तनमाहवनीयस्य ॥ ७ ॥

गां गच्छतीड एहीति ॥ ८ ॥

तामेव—

काम्या एतेत्यालभते ॥ ९ ॥

सोमानमित्यनुदकं व्रतोपायनवत् ॥ १० ॥

"अथान्तरेणाहवनीयं च गार्हपत्यं च प्राङ् तिष्ठन्नग्निमीक्षमाणो जपति सोमानम्" इति वचनात् । उदकसंस्पर्शनाविधानाच्चानुदकमिति ॥ १० ॥

पौर्णमासवत्पुत्रनामग्रहणम् ॥ ११ ॥

वत्युपदेशाच्च "तन्तवे त्वा" इत्यादि सर्वं प्रवर्त्तते । नामग्रहणान्तं वात्सप्रमिति ॥ ११ ॥

( क्षुल्लकोपस्थानम् )

भूर्भुवः स्वरिति वोभौ ॥ १२ ॥

भूर्भुवः स्वरित्यनेन वा मन्त्रेणोभावप्यग्नी उपतिष्ठते । क्रमस्तु स एव । क्रमान्तराविधानात् । अस्य च वात्सप्रेण सह विकल्पः । "यद्वा अदो दीर्घमग्न्युपस्थानम्" इति प्रकृत्य यत आह "तस्मादेतेनैवोपातिष्ठेत" इति । एतच्च अगोपक्षेऽपि भवति । न ह्यत्र गां प्रति गमनं स्पर्शनं वाऽस्तीति ॥ १२ ॥

( प्रवसतो यजमानस्याग्न्युपस्थानम् )

## प्रवत्स्यन्सर्वान्नर्यैति प्रतिमन्त्रम् ॥ १३ ॥

अश्वस्तनोपस्थानसमनन्तरमस्य पाठ इति प्रवसतो यजमानस्याग्न्युपस्थानमभिधीयते । प्रवसन्यजमानः सर्वानग्नीनुपतिष्ठते नर्यैति प्रतिमन्त्रम् । "नर्य प्रजां मे पाहि" इति च गार्हपत्यं प्रथमम् । उत्पत्तिक्रमात् । तत आहवनीयं, पुनर्दक्षिणाग्निम् । मन्त्राणां तु लैङ्गिको विनियोगः । नृभ्यो हितो नर्यो गार्हपत्यः ॥ १३ ॥

## गच्छति मत्या वाग्विसर्जनम् ॥ १४ ॥

गमनं सामर्थ्यपरिप्राप्तमेव वाग्विसर्गावसरविधित्सयोच्यते । वाग्यमस्तूपस्थानसमनन्तरमेव भवति । अवसरान्तराविधानात् ॥ १४ ॥

( प्रोषितस्य यजमानस्य व्रतग्रहणाविष्णुक्रमादिकम् )

## प्रवसन्याजमानं कुर्याद्यथाकालमात्मसंस्काराद्धर्ममात्रत्वाच्छ्रुतेश्च ॥ १५ ॥

प्रोषितोऽपि याजमानं करोति । यथाकालमिति अग्निहोत्रकाले आग्निहोत्रं याजमानं,पौर्णमासकाले पौर्णमास्यम्, एवं सर्वत्र । कुत एतत्।आत्मसंस्कारात्-हेतुश्चायमुपदेशश्च।यदात्मसंस्कारकं तत्कर्त्तव्यम । यथा व्रतग्रहणपावनमुण्डनादि । यजमानस्य ह्यसौ संस्कारः । प्रोषितोऽपि च यजमानो यजमान एव । यच्च धर्ममात्रं तत्कर्त्तव्यम् । यथा विष्णुक्रमादि । कुत एतत् । धर्ममात्रत्वादेव । न ह्येतत्कर्मणि सन्निपतितम् । श्रुतेश्च । श्रुतिरप्यमुमर्थं ज्ञापयति-यथा प्रोषितेनापि याजमानं कर्त्तव्यम्। "यत्स दूरं परेत्याथ तत्र प्रमाद्यति कस्मिन्साऽस्य हुताहुतिर्गृहे यामस्य जुह्वति" इति प्रकृत्याह "यो जविष्ठो भुवनेषु" इत्येवमाद्यभिधाय "मन एवैतदाह मनसैवास्यानपप्रोषितं भवति" इति 'मनसैवानुचिन्तनेन प्रत्यक्ष इव भवति' इत्यमुमर्थं ज्ञापयति ॥ १५ ॥

एत्य च मत्या वाग्यमनम् ॥ १६ ॥

पुनरेत्य मत्या वाग्यमनं करोति ॥ १६ ॥
( प्रवासादागतस्य कांचिदपि अनुपेत्य आहवनीयाद्युपस्थानादिकम् )

समित्पाणिरनुपेत्य कञ्चिदुपतिष्ठत आहवनीयगार्ह-
पत्यदक्षिणाग्नीनागन्मेति प्रतिमन्त्रम् ॥ १७ ॥

समिद्भिर्गृहीताभिरागच्छति । गुर्वादिकमप्यनुपेत्य कं चिदाहव-नीयादीनुपतिष्ठते आगन्मेति प्रतिमन्त्रम् । समासेऽपि च सत्ययमेव क-मः । "स आहवनीयमेवाग्र उपतिष्ठते" इति श्रुतत्वात् ॥ १७ ॥

समित्परिसमूहनानि चोपविश्य ॥ १८ ॥

चशब्दादनन्तरमेव । "तिष्ठन्त्समिधः सर्वत्र" इत्युक्तं समिध्युपवे-शनं वाचनिकम् । परिसमूहनं तृणानामपलुस्पनमपनयः । "अग्ने-स्तृणान्यपचिनोति" इति शाखान्तरात् । तृणप्रक्षेप इत्यपरे ॥ १८ ॥

तूष्णीं वोपस्थानं पूर्ववत् ॥ १९ ॥

येन क्रमेण गच्छता कृतं तेनैव क्रमेण । "स वै खलु तूष्णीमेवो-पतिष्ठेत" इति प्रकृत्य यत आह "स वेद गार्हपत्यः परिदां (परिरक्षणं) मेदनुपागाव्" इति, "स वेदाहवनीय" इति च ॥ १९ ॥

एत्य च ॥ २० ॥

पूर्ववदेव । येन क्रमेणागच्छता कृतम् ॥ २० ॥

गृहा मा बिभीतेति गृहानुपैति ॥ २१ ॥

क्षेमाय व इति प्रविशति ॥ २२ ॥

गृहानेव । अत ऊर्ध्वं स्मार्त्तंपुत्रदर्शनजपादि प्रवर्त्तते ॥ २२ ॥

न हिꣳस्याद् गृहान्कामꣳ श्वः ॥ २३ ॥

इति चतुर्थाध्याये द्वादशी कण्डिका ।

शाखान्तरपाठक्रमात् वात्सप्रोपस्थानमुक्तम् । इदानीमवसरप्राप्तमग्निहोत्रमनुविधीयते—

( अग्निहोत्रम् )

उद्धरेति यजमानो ब्रूयात्सायंप्रातरग्निहोत्रे ॥ १ ॥

एतच्चाध्वर्युहोमपक्षे । स्वयंहोमपक्षे तु स्वयमेवोद्धरणमिति प्रैषाभावः । अग्निहोत्रग्रहणाच्च सत्यप्युद्धरणे पौर्णमासादिषु न भवति । सायारम्भं प्रातरपवर्गमग्निहोत्रमिति सायमभिहितत्वान्मा भूत्प्रातः प्रैषाभाव इति प्रातर्ग्रहणम् । तत्कुतः । आचार्याभिप्रायात्-"आवृत्तिर्वा प्रधानकालात्"(का. श्रौ. अ. २६ । कं. ६ । सू. २७)इति ॥ १ ॥

गार्हपत्यादाहवनीयस्योद्धरणमनस्तमितानुदितयोः ॥ २ ॥

"गार्हपत्यं वाव स गच्छति गार्हपत्याद्धि स आहृतो भवति"इति श्रुतत्वात् । "अनस्तमितानुदितयोः"इति शास्त्रात् उदितहोमिनामपि अनुदिते एवोद्धरणम् ॥ २ ॥

प्रत्यङ्मुखो वा सायं निदध्यात् तस्मिन्सायंप्रातर्होममेके ॥ ३ ॥

तस्मिन् प्रत्यङ्मुखनिहिते एके सायंप्रातर्होमं कुर्वन्ति । एके पुनः प्रातरुद्धरन्ति । विकल्पेन श्रुतत्वात् ॥ ३ ॥

नित्यो दक्षिणाग्निः ॥ ४ ॥

स च "दक्षिणा वा सꣳहरेत्" इत्यस्मिन्पक्षे ॥ ४ ॥

नित्याधिकारोपजिजीविषयेदमाह—

सर्वे गतश्रियः ॥ ५ ॥

नित्या भवन्ति । "धार्या गतश्रिय"इति वचनात् । गतश्रीश्च प्राप्तश्रीः । यं प्रतिगता श्रीः । एवं हि श्रूयते-"त्रयो ह वै गतश्रियः ब्राह्मणः शुश्रुवान्, क्षत्रियो विजयी, वैश्यो ग्रामणीः" इति ॥ ५ ॥

सदा वाऽऽहरणम् ॥ ६ ॥

दक्षिणाग्नेः । अधिकारात् । दक्षिणाग्निं प्रकृत्याह "अहरहरेवैनमाहरेयुः" इति ॥ ६ ॥

एकेषामुपवसथे ॥ ७ ॥

"उपवसथ एवैनमाहरेयुः" इति वचनात् ॥ ७ ॥

(१)नवावसिते वा ॥ ८ ॥

"नवावसिते वैनमाहरेयुः" इति वचनात् 'नवावसिते वा' इत्युक्तम् ॥ ८ ॥

तस्मिन्पचेयुरमांसम ॥ ९ ॥

तस्मिन्नवावसिताहृते पचेयुरमांसम्। "तस्मिन्पचेयुस्तद् ब्राह्मणा अश्नीयुः" इति वचनात् ॥ ९ ॥

(२)पाकाभावे गोः पयोऽधिश्रयितवै ब्रूयात् ॥ १० ॥

तच्च यजमानः। अध्वर्योरधिश्रयणे कर्तृत्वात् ॥ १० ॥

तद् ब्राह्मणं पाययितवै ब्रूयात् ॥ ११ ॥

तच्चाध्वर्युः प्रत्याह। पयःपायने यजमानस्याधिकारात् ॥ ११ ॥

अन्तरेणापराग्नी गत्वा दक्षिणेन वाऽप्रदक्षिणमाहवनीयं परीत्योपविशति यजमानः ॥ १२ ॥

दक्षिणेन प्रवेशनमग्निहोत्रे इति "अन्तरेणापराग्नी गत्वा दक्षिणेन वा" इति। अप्रदक्षिणमाहवनीयं परीत्योपविशति यजमानः। वचनादप्रदक्षिणं परिगमनम् ॥ १२ ॥

पत्नी च पूर्ववत् ॥ १३ ॥

प्रत्यग्दक्षिणतो गार्हपत्यस्य। चशब्दाद्यजमानश्च पूर्ववत्। "दक्षिणतो ब्रह्मयजमानयोरासने" इति पौर्णमासे परिभाषितम्। वतिना तदतिदिश्यते ॥ १३ ॥

अपरेणाहवनीयं कूर्चं निदधाति कुशान्वा ॥ १४ ॥

कूर्चशब्द आसनपट्टे दृष्टः—"कूर्चादुपावसर्पन्नुवाच" इति, तथा

---

(१) नवावसिते नवगृहे इत्यर्थः।

(२) पचनार्हतण्डुलाभावे 'गोः पयोऽधिश्रयितवै' इति यजमानोऽध्वर्युं ब्रूयात।

"हिरण्मये वा कूर्चे हिरण्मये वा फलके" इति । स्रुचश्चैतदासनं-"कूर्चे निधाय" इति वचनात् । कुशानामपि वैकल्पिकत्वात्तदेव कार्यम्॥१४॥

परिस्तरणं वा सर्वेषां प्रागुदग्भिरुदगग्रान् दक्षिणाग्रान्करोतीति श्रुतेः ॥ १५ ॥

परिस्तरणमाहवनीयस्य प्रागुदग्भिर्दर्भैः प्रागग्रैरुदग्रैश्च दर्भैः । एवं हि मृतकाग्निहोत्रे आहवनीयं प्रकृत्य श्रूयते-"अथ यान्यमून्युदीचीनाग्राणि तृणानि भवन्ति दक्षिणाग्राणि तानि करोति" इति वचनात् । अमूनीति चाग्निहोत्रतृणान्युच्यन्ते । तद्यदि तत्र प्रागुदग्भिस्तदैतदुपपद्यत इति । मृतकाग्निहोत्रे आहवनीयस्यैतद् दृष्टमिहापि तस्यैव परिस्तरणमित्याशङ्क्य "वा सर्वेषाम्" इत्युच्यते । सर्वेषामेवैतत्परिस्तरणं, कार्याविशेषात् ॥ १५ ॥

आहवनीयं पर्युक्ष्योदधारां निनयत्यागार्हपत्यात् ॥ १६ ॥

तं च ॥ १७ ॥

ततो दक्षिणाग्निम् ॥ १८ ॥

तं च पर्युक्ष्य ततो दक्षिणाग्निं पर्युक्षतीति । प्राक्संस्थेऽपि पर्युक्षणे गार्हपत्यसमनन्तरमेव दक्षिणाग्नेः पर्युक्षणम् । अतस्ततो दक्षिणाग्निमित्युक्तम् ॥ १६ ॥ १७ ॥ १८ ॥

हुते च धारावर्जम् ॥ १९ ॥

पर्युक्षतीति वाक्यशेषः । तच्च प्राग् व्रतविसर्गात् । व्रतस्य हि पदार्थधर्मत्वात् पर्युक्षणमपि हि पदार्थ इति ॥ १९ ॥

इति चतुर्थाध्याये त्रयोदशी कण्डिका ।

अग्निहोत्रीं दोहयति पुंवत्सामशूद्रेण स्थाल्यामार्यकृतायामूर्ध्वकपालायां दक्षिणतः प्राचीमुदीचीं वा ॥ १ ॥

अग्निहोत्रशब्दः कर्मवाची सन्निहिततत्साधनभूते द्रव्ये द्रष्टव्यः । तदग्निहोत्राख्यं द्रव्यं यस्यां विद्यते सेयमग्निहोत्रिणी । तत्रापि मतुब्लोपे कृते अग्निहोत्रीमिति भवति । तथा च दृश्यते "यथाऽग्निहोत्री

दोह्यमाना वा स्येता" इति। पयस्यपि चाग्निहोत्रशब्दो दृश्यते—"यस्याग्निहोत्रं दोह्यमानममेध्यमापद्येत" इति। पुंवत्सामिति वचनात्—"तस्मादस्य पुंवत्साऽग्निहोत्री स्यात्" इति। अशूद्रेणेति वचनात् दोहयतीति कारितः। तेन 'गां धुक्ष्व' इति प्रैषदानम्। स्थाल्यामार्यकृत्या-म्। आर्यशब्देन त्रैवर्णिक उच्यते। स्थाल्यामिति लिङ्गात्—"यद्युत्तानी स्थाली स्याद्यदि वा भिद्येत" इति। ऊर्ध्वकपालायाम्, न तिर्यक्कपालायाम्। दक्षिणतो व्यवस्थितां प्राचीं दोहयति उदीचीं वेति। तुल्यशास्त्रत्वात्। ननु परिभाषितत्वादवाच्यमेतत्प्राचीमुदीचीं वेति। कर्तृधर्मः स इत्यदोषः। एवं च सान्नाय्ये गवां न दिङ्नियमः ॥ १ ॥

पूर्वेणाहवनीयमाहृत्य गार्हपत्येऽधिश्रयत्युत्तरतो निरुह्याङ्गारान् ॥ २ ॥

पूर्वेणाहवनीयमिति वचनात्। गार्हपत्यग्रहणं च नियमार्थम्। उत्तरतो निरुह्याङ्गारानिति अङ्गारनिरूहणमत्रैवावसरे स्यात्। व्यवुपदेशात्—आहृत्य निरुह्याधिश्रयतीति। न वा श्रुतिविरोधात्—"य एवैतेऽङ्गारा निरूढा येष्वधिश्रयिष्यन् भवति" इति। अतः पूर्वतरं निरूहणं, तत आहरणमिति। अधिश्रयणं च श्रपणार्थम्। "सुशृतेन जुहोति" इति वचनात्। लिङ्गाच्च "उदन्तं पौष्णं विष्यन्दमानं मारुतम्" इत्येवमादि। एतच्चाचार्येण प्रायश्चित्तेषूपनिबद्धम्। इह पुनरधिश्रित्यैव जुहुयादिति। अतश्च विकल्पः ॥ २ ॥

एवमन्यत्रापि होमार्थस्याहरणम् ॥ ३ ॥

एवमेव पूर्वेणाहवनीयं पञ्चवातीयादौ होमार्थस्याहरणं कर्तव्यम् ॥ ३ ॥

दक्षिणेन वौषधम् ॥ ४ ॥

औषधं व्रीहियवादि। तद् आहवनीयं दक्षिणेन वा नीयते। तत्प्रतियोगादुत्तरेण वा। अतश्च प्राग्द्वारनियमो गम्यते। तस्मिन्हि सति दक्षिणेनाहवनीयमुत्तरेण वा नयनं सम्भवति। तत्र दक्षिणेनानयने प्रदक्षिणोपचारात् स्मृत्यनुग्रहः। "उत्तरत उपचारो वै यज्ञ" इत्युत्तरेणाहरणे श्रुत्यनुग्रहः। बलीयस्त्वाच्चोत्तरेणैवेत्यवधार्यते ॥ ४ ॥

तृणेनावज्योत्याभिच्याप: पुनरवज्योत्य नि-
धायं त्रिरुद्वासयत्युदक् ॥ ५ ॥

तदधिश्रितं द्रव्यं तृणेनावज्योतयेत् (तृणज्योतिषाऽवद्योतयेत्)। अवज्योतनं च दृष्टार्थम्। "तदवज्योतयाति शृतं वेदानीति" इति श्रुतिः। अतश्चाधिश्रयणाभावे तण्डुलादावनवज्योतनम्। अवासेकोऽपि च दृष्टार्थः—उदकस्य हि क्षयो यथा स्यान्न पयस इति। पुनरवज्योतनं च उदकक्षयसंवित्यर्थम्। न च यवाग्वामुदकासेको, विरोधात्। अवज्योतनं तु तन्त्रेण भवति। घृते पुनरुदकासेको न भवत्येव, विरोधात्। निधायं त्रिरुद्वासयत्युदगिति। णमुलयम्। ततश्च मुक्त्वा मुक्त्वा त्रिरुद्वासयेत्। तथा च सूताग्निहोत्रे श्रूयते "न त्रिः प्रतिष्ठाय हराति यत्त्रिः प्रतिष्ठाय हरेद्देवत्रा कुर्यात्" इति ॥ ५ ॥

अस्तमिते जुहोति ॥ ६ ॥

प्रधानसन्निधेश्चोद्धरणादूर्ध्वम् (उत्तरकर्म) अस्तमिते एव कर्त्तव्यम्। उद्धरणमात्रे एव हि वचनम् "अनस्तमित उद्धरति" इति॥६॥

वैकङ्कतꣳ स्रुवस्रुतं प्रतप्य पाणिना सम्मार्ष्टि ॥ ७ ॥

होमार्थत्वाद्वैकङ्कती स्रुक् प्राप्नोत्येव, स्रुवार्थोऽयमारम्भः ॥ ७ ॥

पुनः प्रतप्योन्नेष्यामीत्याह ॥ ८ ॥

ओ३मुन्नयेति यजमानस्तिष्ठन् ॥ ९ ॥

प्रत्याह ॥ ८ ॥ ९ ॥

चतुरः स्रुवानुन्नयति ॥ १० ॥

चतुर्गृहीतं च होमद्वयार्थमुभयत्रोपयोगात्। अतश्च नाशे ऽन्यतरस्यापि प्रयोक्तृत्वम् (प्रयोजकत्वम्)। प्राशनं तु शेषसाध्यत्वादप्रयोजकम्। तथा च लिङ्गं "स यत्स्रुचि परिशिनष्टि तदग्निहोत्रोच्छिष्टम्" इति ॥ १० ॥

स्थाल्यां परिशिनष्टि तद् ब्राह्मणः पिबेत् ॥ ११ ॥

अब्राह्मणप्रतिषेधार्थोऽयमारम्भः । "तद्वै नाब्राह्मणः पिबेत्" (श० ब्रा० २ । ३ । १ । ३९ ) इति वचनात् ॥ ११ ॥

उपरि समिधं धारयन्वार्क्षींमध्यधि गार्हपत्या-
दाहवनीयं हरति मुखमात्रे धारयन् ॥ १२ ॥

स्रुचं उपरि समिधं धारयन्वार्क्षीम्, न गुच्छगुल्मलतासम्बन्धिनीम्। अध्याधिशब्दः सामीप्ये उपरिभावे च। गार्हपत्यादाहवनीयं हरति मुखमात्रे स्रुचं धारयन् (धारण-नयनोभयकर्मत्वं स्रुचः) ॥१२॥

मध्ये निगृह्योदगृह्योपविश्य समिधमादधात्यग्निज्यो-
तिषं त्वा वायुमतीं प्राणवतीᳬ स्वर्ग्याᳬ स्वर्गायो-
पदधामि भास्वतीमिति ॥ १३ ॥

गार्हपत्याहवनीययोर्मध्ये निगृह्य नीचैर्गृहीत्वा, पुनरुद्धृत्य मुखमात्रे एव, उपविश्य समिधमादधाति "अग्निज्योतिषम्" इत्यनेन मन्त्रेण। समिदाधानं दृष्टार्थम्। अतश्च नैमित्तिकेषु कुशस्तम्बादिषु न भवति ॥ १३ ॥

प्रदीप्तामभिजुहोत्यग्निर्ज्योतिरिति सजूरिति वा ॥ १४ ॥

विकल्पः। श्रुतेः ॥ १४ ॥

अग्निर्वर्च इति ब्रह्मवर्चसकामस्य ॥ १५ ॥

जुहुयादिति वाक्यशेषः ॥ १५ ॥

कूर्चे निधाय गार्हपत्यमवेक्षते होष्यन्नस्मिन् ॥ १६ ॥

कालद्वयोपादानसामर्थ्याद्विकल्पः—होष्यन्वा, अस्मिन्वा काले इति। होष्यतः अवेक्षणमनुपसाद्यैव स्रुचम्। "सोऽनुपसाद्य पूर्वामाहुतिम्" इति वचनात् ( श० ब्रा० २। ३। १। १७) ॥ १६ ॥

तूष्णीमुत्तरां भूयसीम् ॥ १७ ॥

"स वै कनीय इव पूर्वामाहुतिं जुहोति भूय इवोत्तराम्" इति। उत्तराशब्दश्च देशपरोऽपि द्रष्टव्यः। "अथ येोत्तरा स्विष्टकृद्भाजनमेव सा तस्मात्तामुत्तरार्द्धे जुहोति" इति ॥ १७ ॥

भूयिष्ठᳬस्रुचि ॥ १८ ॥

परिशेषयतीति वाक्यशेषः ॥ १८ ॥

द्विः प्रकम्प्य निदधाति ॥ १९ ॥

स्रुचं कूर्चे ॥ १९ ॥

उपमृज्य स्रुचं, कूर्चे निमार्ष्टि नमो देवेभ्यः, स्वधा पितृभ्य इति दक्षिणत उत्तानम् ॥ २० ॥

अप उपस्पृश्य ॥ २१ ॥

उपमार्जनं च स्रुगग्रस्य । मध्ये द्रव्यस्य विद्यमानत्वात् । स्रुगग्रमुपमृज्य कूर्चस्योत्तरे प्रदेशे निमार्ष्टि "नमो देवेभ्य इत्यनेन" मन्त्रेण । "स्वधा पितृभ्य" इति दक्षिणत उत्तानं निमार्ष्टि । अतश्चोत्तानेनैव पाणिनोपमार्जनम् । अपामुपस्पर्शनं पित्र्यत्वे सत्यपि प्राचीनावीत्यादिव्युदासार्थम् ॥ २० ॥ २१ ॥

इतरयोश्च पुष्टिकाम स्थाल्याः स्रुवेणह पुष्टिं पुष्टिपतिर्दधात्विह प्रजाँ रमयतु प्रजापतिः अग्नये गृहपतये रयिमते पुष्टिपतये स्वाहेति गार्हपत्ये ॥ २२ ॥

इतरयोरग्न्योः पुष्टिकामो जुहोति । चशब्दादपुष्टिकामश्च । स्थाल्याः स्रुवेण "इहपुष्टिम्" इत्यनेन मन्त्रेण गार्हपत्ये ॥ २२ ॥

तूष्णीं द्वितीयाम् ॥ २३ ॥

अग्नयेऽन्नादायान्नपतये स्वाहेति दक्षिणाग्नौ ॥ २४ ॥

जुहोति ॥ २३ ॥ २४ ॥

तूष्णीं द्वितीयाम् ॥ २५ ॥

अनामिकया द्विः प्राश्नाति ॥ २६ ॥

स्रौचं द्रव्यम् ॥ २५ ॥ २६ ॥

उत्सृप्य निर्लेढ्याचम्योत्सिञ्चति देवान् जिन्व पितॄन् जिन्व तृतीयामुदुक्षति सप्तऋषीन् जिन्वेति ॥ २७ ॥

उत्सृप्येति पात्रान्तरे नीत्वा । सृपिर्हि गत्यर्थः । चमु भक्षणे ।

भक्षयित्वा द्रव्यं, पात्रं निर्लेढि। लिह आस्वादने। जिह्वया आस्वादयति। तत उत्सिञ्चति "देवाञ्जिन्व" "पितॄञ्जिन्व" इति। तृतीयां "सप्तऋषीञ्जिन्व" इति। तृतीयामिति स्रुग्विषयम्(१)। ततश्च भेदेन द्विः (कृत्वः) पूर्वं तृतीयं पुनः उदुदस्योत्सिञ्चति ॥ २७ ॥

चतुर्थीं कूर्चस्थाने त्रिर्निषिञ्चत्यग्नये पृथिवीक्षिते स्वाहा, पृथिव्या अमृतं जुहोमि स्वाहा, ऽमृते ऽअमृतं जुहोमि स्वाहेति ॥ २८ ॥

चतुर्थीं स्रुचं पूरयित्वा कूर्चस्थाने त्रिः (कृत्वो) निषिञ्चति "अग्नये पृथिवीक्षिते" इत्येवमादिभिर्मन्त्रैः प्रतिमन्त्रम्। वाक्यभेदात् ॥२८॥

स्रुक्स्रुवमाहवनीये प्रतप्य निदधाति ॥२९॥

गार्हपत्ये संस्कारप्राप्तेः आहवनीय उच्यते ॥ २९ ॥

समिध आदधाति सर्वेषु यथापर्युक्षितꣳ समिदसि समिद्धो मेऽग्ने दीदिहि समेद्धा ते अग्ने दीद्यासमिति ॥ ३० ॥

सर्वेष्वग्निषु। यथापर्युक्षितमिति क्रमार्थम्। स चायं मन्त्रो ब्राह्मणहस्तादिषु समवेतवचनत्वाद्विपरिणम्यते। ननु च प्रकृतौ विपरिणामो न युज्यते। (ब्राह्मणहस्तादेः) यागसाधनभूताग्निविकारत्वाददोषः ॥ ३० ॥

वाग्यतो दोहप्रभृत्याहोमात् क्षीरहोता चेत् ॥३१॥

क्षीरहोता प्रत्यस्तमितावयवार्थवृत्तितया ऽध्वर्युरुच्यते। चेच्छब्दो यद्यर्थः। यदि वाग्यतो यद्यवाग्यत इति। अतश्चाध्वर्योर्दोहप्रभृति वाग्यमविकल्पः ॥ ३१ ॥

इति चतुर्थाध्याये चतुर्दशी कण्डिका।

---

(१) "सप्तऋषीन्जिन्व" इति मन्त्रेण जलपूर्णायाः स्रुचः उत्सिच्यमानायाः तृतीयात्वोक्त्या पूर्वं जलपूर्णस्रुचो द्विवारमुत्सेचनं गम्यते। एवंच "देवाञ्जिन्व" इत्यनेन दैवत्वादुत्तरत उत्सेचनं, ततः "पितॄञ्जिन्व" इत्यनेन पित्र्यत्वाद् दक्षिणत उत्सेचनम्। ततः पित्र्यत्वादुदकं स्पृष्ट्वा "सप्तऋषीन्" इत्यनेन तृतीयवारमैशान्यामुदुक्षति-ऊर्ध्वमुद्यम्योदकमूर्ध्वमुच्छालयति इति सूत्रार्थः।

( प्रातरग्निहोत्रे विशेषः )

प्रातर्जुहोत्यनुदिते ॥ १ ॥

सायंहोमोऽनुविहितः। इदानीं प्रातर्होमस्य विशेषानुकथनं क्रियते। प्रातर्जुहोत्यनुदिते एव। अत्र च यत्र यत्र प्रातर्ग्रहणं तदेव प्रातः, इतरत्सामान्यम, किञ्चिदधस्तादभिहितं किञ्चिदत्र, तच्चोभयोरपि होमयोर्द्रष्टव्यम् । तच्चैवमभिधीयते कर्मैकत्वज्ञापनार्थम्। सायारम्भं प्रातरपवर्गमिदमेकं कर्मेति। तत्कुतः। "अग्निहोत्रं जुहोति" इत्याभिधाय "सायं जुहोति प्रातर्जुहोति" इति कालविधानम्। तथा "दध्ना जुहोति पयसा जुहोति" इति होमानुवादेन दध्यादिविधानम्। तथा अग्निर्ज्योतिरिति सायम, सूर्यो ज्योतिरिति प्रातः। एवं सति सायंप्रातःसम्बद्धहोमविषयोऽग्निहोत्रशब्दः। तेन विशिष्टद्रव्यदेवताकालीनामिदमेकं कर्म। तदेतद्विनियुज्यते "अग्निहोत्रं जुहुयात्स्वर्गकाम" इति। आग्नेयी सायमाहुतिः सौरी प्रातराहुतिः। "सायं जुहोत्यग्निर्ज्योतिरिति अथ प्रातः सूर्यो ज्योतिः" इति वचनात् । अत्र च कालभेदादङ्गानां भेदेनानुष्ठानम्। तदेतत्सूत्रकारेणापि प्रदर्शितम्—"आवृत्तिर्वा प्रधानकालत्वात्" इति। एवं च सति कुण्डपायिनामयनादिषु प्रधानाहुती भेदेन, अङ्गानि तु तन्त्रेण। कालैकत्वात्। तथा च सूत्रकारेण केचिद्धर्माः सायंहोमसन्निधौ विहिताः, केचित्प्रातर्होमसन्निधाविति कर्मैकत्वज्ञापनायैव ॥ १ ॥

(१) अन्तरेणापराग्नी गत्वा दक्षिणेन वा प्रदक्षिणं गार्हपत्यं परीत्योपविशति यजमानः ॥ २ ॥

स चायं प्रवेशः साधारणः। प्रातरित्यविशेषितत्वात् ॥ २ ॥

पत्नी च यथादेशम् ॥ ३ ॥

योऽस्या देशः प्रदेशान्तरे विहितः "प्रत्यग्दक्षिणत उपविष्टां गार्हपत्यस्य" इति। पत्न्युपवेशनं च विधीयते अवाच्यमनावसरविधि-

---

(१) अपराग्नी गार्हपत्यदक्षिणाग्नी। यजमानः आहवनीयस्य पूर्वतः प्रदक्षिणमागत्य दक्षिणाग्नेरुत्तरेण गार्हपत्यदक्षिणाग्न्योर्मध्येन वा दक्षिणाग्नेर्दक्षिणेन वा पश्चिमतो गत्वा गार्हपत्यं प्रदक्षिणं परिक्रम्योपविशतीति सूत्रार्थः।

त्सया । अवाचमनञ्चोभयत्र ( प्रातरित्याविशेषितत्वात् ) ॥ ३ ॥

अप आचामति वृष्टिरसि वृश्च मे पाप्मान॑ँ सत्येन व्रतमुपैम्यापः सत्यं मयि व्रतमिति ॥ ४ ॥

अप आचामति यजमानो वृष्टिरसीत्यनेन मन्त्रेण ॥ ४ ॥

वाचं विसृज्य पुनराचामति विद्युदसि वृश्च मे पाप्मानं जह्यपो ऽवभृथमभ्युपैमि मयि सत्यं गोषु मे व्रतमिति ॥ ५ ॥

वाग्यमस्य च पदार्थधर्मत्वात् सर्वान्ते विसर्गः । अतश्च पूर्वेणाचमनेन वाग्यमनमुत्तरेण विसर्गः । विसर्गस्य ग्रहणपूर्वकत्वात् मन्त्रलिङ्गाच्च । सत्येन व्रतमुपैमीति व्रतशब्देन च वाङ्नियमोऽभिधीयते । तस्य च विसर्गः प्राग् अतीत्यनिष्क्रमणात् ॥ ५ ॥

उन्नयामीत्याह प्रातः ॥ ६ ॥

उन्नेष्यामीत्यस्य स्थाने उन्नयामीति ॥ ६ ॥

प्राक्सᳫँस्थ॑ँ समित्पर्युक्षणं धारा चोभयत्र वा ॥ ७ ॥

वेत्युक्तत्वात् उभयत्र वा प्राक्संस्थं समित्पर्युक्षणं धारा च भवति(१) ॥ ७ ॥

अग्निशब्दे सूर्यः ॥ ८ ॥

सायंहोममन्त्रेषु यत्राग्निशब्दस्तत्र सूर्यशब्दः प्रयोक्तव्यः । समाम्नायप्रदर्शनार्थं चैतत् । समाम्नाये यत्राग्निशब्दस्तत्र सूर्यशब्दः प्रयुज्यते । नापराग्निकयोरपि होममन्त्रयोः ( "इह पुष्टिम्" "अग्नयेऽन्नादाय" इत्यनयोः ) ॥ ८ ॥

रात्र्युषसाऽहेति वा ॥ ९ ॥

रात्रिशब्दे उषसेति वा प्रयोगः अहेति वा ॥ ९ ॥

ज्योतिः सूर्य इति वा प्रातः ॥ १० ॥

---

(१) समिदाधानं, पर्युक्षणं, धारानिनयनं च सायंप्रातः विकल्पेन भवति । भवति, नवा भवतीत्यर्थः ।

अनेन मन्त्रेण प्रातर्होमः। तत्र च यदि रात्रौ हुतम् "अग्निर्ज्योतिः" इति, तदा प्रातः "सूर्यो ज्योतिः," "ज्योतिः सूर्यः" इति वा जुहोति। एवं हि श्रूयते—"अथ प्रातः सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहेति", पुनश्चाह "अथ प्रातर्ज्योतिः सूर्यः सूर्यो ज्योतिः स्वाहेति"। अतश्च मन्त्रौ विकल्पितौ ॥ १० ॥

प्रथमास्तमिते पर्युदयं च स्वर्गकामस्य ॥११॥

अस्तमितमात्रे उदयसन्निकृष्टे च स्वर्गकामस्य जुहुयात्। सचायं गुणफलसम्बन्धो, न कर्मफलसम्बन्धः ॥ ११ ॥

तमोऽभ्यये सायं जुहुयाद्वियति प्रातरायुष्कामस्य ॥१२॥

तमोऽभ्यागमे सायमायुष्कामस्य जुहुयात्। विगच्छति च तमसि प्रातः ॥ १२ ॥

अन्तःपशौ पशुकामस्य सायंप्रातः ॥ १३ ॥

सायं प्रविष्टेषु पशुषु पशुकामो जुहोति, प्रातश्चानिष्क्रान्तेषु॥१३॥

शयाने श्रीकामस्य प्रातः ॥ १४ ॥

शयाने जनपदे श्रीकामस्य जुहुयात् ॥ १४ ॥

प्रथमसमिद्धे धूप्यमाने प्रजासु निहत्येव सहसाऽन्नमत्स्यतः ॥ १५ ॥

समिद्धमात्रे धूप्यमाने चाग्नौ यो नाम प्रजासु निहत्येवान्नमत्तुमिच्छति स एवंस्वरूपेऽग्नौ जुहोति। तच्चैतत् क्षत्रियविषयं, न ब्राह्मणवैश्ययोर्जनपदस्य सम्भवः ॥ १५ ॥

भूयिष्ठार्चिषि गृहीत्वेव सहसा ॥ १६ ॥

यो नाम गृहीत्वेव अधिष्ठायेवान्नमत्तुमिच्छति स एवंस्वरूपेऽग्नौ जुहुयात्। एतदपि क्षत्रियविषयमेवोक्तहेतुत्वात् ॥ १६ ॥

प्रदीप्ततमे श्रीयशस्कामस्य ॥ १७ ॥

अथ यत्रैतत्प्रदीप्तो भवति तत्र श्रीयशस्कामो जुहुयात्। तच्चैतद्वर्णत्रयविषयमपि भवति ॥ १७ ॥

अर्चिःप्रत्यवाये (ज्वालापसरणे) मैत्रेणान्नमत्स्यतः ॥१८॥

अथ यत्रार्चींषि प्रत्यवयन्ति तत्र मैत्रेणान्नमिच्छन् जुहोति । ए-तदपि सर्ववर्णविषयमेव ॥ १८ ॥

अङ्गारेषु चाकश्यमानेषु ब्रह्मवर्चसकामस्य ॥ १९ ॥

(अतिशयेन काशमानेषु अङ्गारेषु) जुहुयात् । तथैतद् ब्राह्मणवि-षयमेव । न हीतरयोर्ब्रह्मवर्चससंबन्धोऽस्ति ॥ १९ ॥

पयसा स्वर्गकामः पशुकामो वा ॥ २० ॥

जुहोति ॥ २० ॥

यवाग्वा ग्रामकामः॥ २१ ॥

तण्डुलैर्बलकामः ॥ २२ ॥

दध्नेन्द्रियकामः ॥ २३ ॥

अनधिश्रयणं च श्रुतिसामर्थ्याभ्याम् ॥ २४ ॥

"न दध्यधिश्रयेत्"इति श्रुतिः। सामर्थ्यं च दधित्वमेवापैति इति । श्रुत्युपादाने सति सामर्थ्यग्रहणं क्रियमाणं तण्डुलार्थं भवति । दध्यधि-श्रयणप्रतिषेधश्च लिङ्गम् । अनुवादो ह्ययम् ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥

घृतेन तेजस्कामः ॥ २५ ॥

जुहुयात् ॥ २५ ॥

संवत्सरं जुहुयादेतेषामेकैकेन कामसंयोगे ॥ २६ ॥

एतेषां द्रव्याणां कामसंयोगे सति संवत्सरं जुहुयात् । एवं कि-ल कामः समृध्यते । "संवत्सरसंम्मिता वै व्रतचर्या"इति श्रुत्वात् ॥२६॥

सायंप्रातर्वा ॥ २७ ॥

वाशब्दात्पक्षो विपरिवर्त्तते । सायंप्रातर्वा कामसंयोगेन जुहो-ति, न संवत्सरम् । अग्निहोत्रं हि सायंप्रातः परिसमाप्यते। तत्र चायं गुणफलसम्बन्धः । तस्मात्सायंप्रातरेवेति । "संवत्सरसंमिता वै व्रतच-र्या"इत्ययमन्यविषयोऽर्थवादः । अग्निकल्पेषु संवत्सर इष्यते । तत्र हि अग्निकल्पान्प्रकृत्याह "एतेषामेकं संवत्सरमुपेत्सेत्"इति ॥ २७ ॥

दक्षिणेन ( द्वारेण ) प्रवेशनमग्निहोत्रेष्टिषु ॥ २८ ॥

अयं च क्षारनियमः अग्निहोत्रे इष्ट्यां च । तत्रैव हि श्रूयत-इति ॥ २८ ॥

सायंप्रातराहवनीयस्यासनोपस्थाने ॥ २९ ॥

"यदेव सायंप्रातराहवनीयमुपचातिष्ठत उपचास्ते" इति वचनात् । पूर्वमुपस्थानं पश्चादासनम् । अल्पाचतरमिति कृत्वा पूर्वमासनमुक्तमाचार्येण । तच्चैतदुपस्थानं प्राक्पर्युक्षणाद्भवति । हुते हि पर्युक्षणमुक्तम्-"हुते च धारावर्जम्" इति । उपस्थाने च पूर्वमक्रियमाणे हुतशब्द औपचारिकः स्यात् । वात्सप्रोपस्थानं तस्मादपि पूर्वतरम् । काण्वानां हि समिदाधानमन्त्रसमनन्तरं वात्सप्रमन्त्राणां पाठः ॥२९॥

शय्याऽऽसनं वा गार्हपत्ये ॥ ३० ॥

"अथ यदेव प्रतिपरेत्य गार्हपत्यमास्ते वा शेते वा" इति वचनात् ॥ ३० ॥

संव्रजन्मनसोपस्मृत्य दक्षिणाग्निम् (उपतिष्ठते) ॥ ३१ ॥

"अथ यत्रैव संव्रजन्नन्वाहार्यपचनमुपस्मरेत्" इति । तच्चैतत्परिसमाप्योत्तरकालमतीत्य निष्क्रमणम् ॥ ३१ ॥

अनशित्वा प्रातर्मुहूर्त्तं सभासनं सभ्यस्य ॥ ३२ ॥

"अथ प्रातरनशित्वा मुहूर्त्तं सभायामासित्वाऽपि कामं पलययेत्" इति वचनात् ॥ ३२ ॥

भस्मोद्धृतमुपेयात् ॥ ३३ ॥

"अथ यत्रैव भस्मोद्धृतमुपनिगच्छेत् तदेव तस्योपस्थानम्" इति । एतच्च पाठानुपूर्व्यात्प्रातरेव ॥ ३३ ॥

स्वयं वा जुहुयात् ॥ ३४ ॥

अध्वर्युर्वेति विकल्पः ॥ ३४ ॥

उपवसथे नियमः ॥ ३५ ॥

स्वयंहोमित्वस्य । "स यो हैवं विद्वान् स्वयमुपवसथे जुहोति" इति वचनात् । स चायमुपवसथसंयोगेनैव नियम इति ॥ ३५ ॥

इत्युपाध्यायकर्ककृतौ कात्यायनसूत्रभाष्ये चतुर्थोऽध्यायःसमाप्तः ।

# पञ्चमोऽध्यायः ।

## चातुर्मास्ययागनिरूपणम् ।

अग्निहोत्रान्तानि कर्माण्यनुविहितानि । इदानीं श्रुतिमन्त्रपाठक्रमेण चातुर्मास्यानामनुविधानं क्रियते । श्रुतिक्रमः "प्रजापतिर्ह वा इदमग्र एक एवास" इति । मन्त्रक्रमः "प्रघासिनो हवामहे" इति । तत्रैतदादिसूत्रम्—(चातुर्मास्ययागारम्भकालः)

चातुर्मास्यप्रयोगः फाल्गुन्याम् ॥ १ ॥

इति । (१)चातुर्मास्यशब्दः कर्मणो नामधेयम् । स च "चातुर्मास्यैरयजत"इति यजतिशब्दसामानाधिकरण्यात् यजतिनामधेयम् । अतश्च दर्विहोमास्तदङ्गम् । तत्र चाग्नेयादीनि सौर्यान्तानि प्रधानानि । तेषामन्तराये प्रयोक्तृत्वं, न दर्विहोमानाम् । यद्यपि चानेककर्मसन्निधौ चातुर्मास्यशब्दः श्रूयते तथापि यजतिशब्दसामानाधिकरण्यादाग्नेयादिष्वेव वर्त्तते । तेषां प्रयोगः प्रारम्भः फाल्गुन्यां भवति । फाल्गुनीशब्देन च पौर्णमास्यभिधीयते । फाल्गुनी चैत्री वैशाख्याषाढीति च पौर्णमासीषु रूढाः शब्दाः । अतश्चातुर्मास्यानां प्रयोगः फाल्गुन्यां कर्त्तव्य इति सूत्रार्थः (२) ॥ १ ॥

---

(१) चातुर्मास्यशब्देन वक्ष्यमाणानि वैश्वदेव-वरुणप्रघास-साकमेध-शुनासीरीयसंज्ञानि चत्वारि पर्वाण्यभिधीयन्ते, चतुर्षु मासेषु भवन्तीति व्युत्पत्त्या । तत्रभवाधिकारे 'चतुर्मासाण्ण्यो यज्ञे तत्र भव' इति वार्त्तिकाद् ण्ये निष्पन्नस्य तस्य यागनामधेयत्वमेवोचितमिति भावः ।

(२) तथा च शाङ्खायनः 'फाल्गुन्यां पौर्णमास्यां प्रयोगश्चातुर्मास्यानां चैत्र्यां वा, वैश्वानरपार्जन्येष्टिः पूर्वस्याम् पौर्णमास्यामुत्तरस्यां वैश्वदेवम्' इति । आपस्तम्बः 'फाल्गुन्यां पौर्णमास्यां चैत्र्यां वा वैश्वदेवेन'इति ।

( चातुर्मास्यारम्भे कर्तव्या अन्वारम्भणीयास्थानीया
वैश्वानरपार्जन्येष्टिः )

## (१)वैश्वानरपार्जन्यौ निरुप्येच्छन् ॥ २ ॥

वैश्वानर इति च गुणात्तद्धितः । सौविष्टकृत इतिवत् । अत्र हि गुणिनी देवता अग्निः । सा हि याज्यानुवाक्यासु दृश्यते । "वैश्वानरोऽजीजनदग्निर्नो नव्यसीम्" इति । तथा "पृष्टो दिवि पृष्टो अग्निः पृथिव्याम्"इति । तथा च "वैश्वानरः पशुपुरोडाश" इति प्रकृत्याह "यदग्नय इति स्यादतितद्वेचयेत्"इति । तथा चाभ्युदृदृष्टेष्ट्यां पठ्यते। "अग्नये पथिकृतेऽष्टाकपालं पुरोडाशम् इन्द्राय वृत्रघ्न एकादशकपालमग्नये वैश्वानराय द्वादशकपालम्"(श.ब्रा. ११ । १ । ५ ।५) इति पठिते सूत्रकारेण गुणादेव तद्धितः प्रदर्शितः "इन्द्राय वृत्रघ्न एकादशकपालो वैश्वानरश्च" (का. श्रौ. २५ । ४ । ४६)इति । एवं च सति यत्र यत्र वैश्वानरश्रवणं तत्र तत्राग्निर्गुणिनी देवता द्रष्टव्या । यथा "यस्याग्निभिरन्यं याजयेयुर्यो वा यजेत वैश्वानरं निर्वपेत्"इति । वैश्वानरपार्जन्यौ निरुप्येच्छन्निति । अत्रेच्छया वैश्वानरपार्जन्याविच्छयाऽन्वारम्भणीया । यत्कारणं वैश्वानरपार्जन्यौ प्रकृत्य "द्विहविष्काऽन्वारम्भणीया" इत्यामनन्ति । अनन्वारम्भणीयायाम् ( वैश्वानरपार्जन्येष्टौ ) अन्वारम्भणायीशब्दः तत्कार्यलक्षणार्थः । तेनेच्छयाऽन्वारम्भणीयां करोति, इच्छया वैश्वानरपार्जन्याविति ॥ २ ॥

## वैश्वानरो द्वादशकपालश्चरुरुत्तरः ॥ ३ ॥

निगदव्याख्यातम् । सा चैषाऽन्वारम्भणीया सत्यपि यजतित्वे चातुर्मास्याङ्गभूता, न चातुर्मास्यशब्दवाच्येति । यथा पौर्णमासान्वारम्भणीया न पौर्णमासशब्दवाच्या एवमिहापि । तथा च सत्यन्तराये अप्रयोक्तृत्वमस्याः ॥ ३ ॥

( चातुर्मास्ययागस्यादिमं वैश्वदेवपर्व )

## आग्नेयः, सौम्यश्चरुः, सावित्रो द्वादशक-

---

(१) वैश्वानरपार्जन्यौ निरुप्य फाल्गुन्यां चातुर्मास्यारम्भः कर्तव्य इति पूर्वेण संबन्धः ।

पालो ऽष्टाकपालो वा, सारस्वतश्चरुः,
पौष्णश्चरुः प्रपिष्टानाम् ॥ ४ ॥

स च प्रपिष्टानां भवति । एवं हि श्रूयते "तस्माद्यं पूष्णे चरुं कुर्वन्ति प्रपिष्टानामेव कुर्वन्ति" इति । एतच्च दर्शपूर्णमासप्रकरणपरिपठितमपि वाक्येन प्रकरणमुल्लङ्घ्य यत्र पूषा तत्र नीयते पेषणम् ॥४॥

( द्विदेवतस्य न पिष्टचरुद्रव्यकत्वम् )

द्विदेवतोऽपि नियमसामर्थ्यात् ॥ ५ ॥

यत्रापि पूषा सद्वितीयस्तत्रापि पेषणं भवत्येव । कुतः । नियमसामर्थ्यात् । पूष्णो नियोगतः पिष्टता प्रतिपाद्यते इतरस्येन्द्रस्याग्नेर्वा अनियम इति ॥ ५ ॥

अर्द्धपिष्टं वोभयसामर्थ्यात् ॥ ६ ॥

वाशब्दात्पक्षो विपरिवर्त्तते । यत्र पूषा सद्वितीयस्तमर्द्धपिष्टं कुर्यात् । उभावपि ह्येवं सङ्गतार्थावुचितार्थौ भविष्यतः । पिष्टं पूष्ण इतरस्यापिष्टमिति ॥ ६ ॥

सौमापौष्णदर्शनाच्च ॥ ७ ॥

अपिच सौमापौष्णे नेमपिष्टतां दर्शयति "सौमापौष्णं चरुं निर्वपेन्नेमपिष्टानां पशुकाम" इति ॥ ७ ॥

अपिष्टो वा देवतान्यत्वात् ॥ ८ ॥

अपिष्टो वा भवति । द्विदेवत्यो न पिष्यते । कुत एतत् । देवतान्यत्वात् । न ह्याग्नापौष्णे ऐन्द्रापौष्णे वा पूष्णो देवतात्वम् । यत्र पूषपदात्तद्धित उत्पद्यते तत्रैव पूष्णो देवतात्वं न पदान्तरात् । न च पदान्तरसव्यपेक्षात्पूषपदात्तद्धितोत्पत्तिः । सापेक्षत्वात् । सापेक्षं ह्यसमर्थं भवति । समर्थानां प्रथमाद्वेति तद्धितोत्पत्तिरुक्ता । तस्माद्यत्र केवलः पूषा तत्रैव पेषणमिति ॥ ८ ॥

सौमापौष्णे वचनात् ॥ ९ ॥

यत्तु दर्शनमुक्तं तद् विशिष्टविधानम् । "सौमापौष्णदेवत्यश्चरुर्नेमपिष्टानां पशुकामस्य भवति" इति वचनं, तन्न दर्शनमिति ॥ ९ ॥

एतानि सर्वत्र ॥ १० ॥

एतानि पञ्च हवींषि सर्वत्र भवन्ति । सर्वशब्देन वरुणप्रघासा, महाहविः, शुनासीरीयं च ग्रहीतव्यम् । तत्र हि प्रतिपर्वं वचनं भवति "अथैतान्येव पञ्च हवीꣳषि भवन्ति" इति ॥ १० ॥

मरुद्भ्यः स्वतवद्भ्यः सप्तकपालः ॥ ११ ॥

स्वतवद्गुणविशिष्टानां मरुतां सप्तकपालः कर्तव्यः ॥ ११ ॥

मारुतो वा ॥ १२ ॥

वैश्वदेवी पयस्या ॥ १३ ॥

एतत्प्रकृतित्वं च कैश्चित्पयस्यान्तरे इष्यते । तत्पुनर्नातीव युक्तरूपमिव । येन प्रकृतितो विकृतौ धर्मप्रसव इष्यते, न विकृतितः प्रकृतौ । प्रकृतौ च दाक्षायणे धर्मवती पयस्या विद्यते "अथ प्रातराग्नेयः पुरोडाशो भवति मैत्रावरुणी पयस्या" इति । धर्माश्चास्या विहिताः—"शृते वा दध्यानयति" इति । तथा 'वाजिनमनाज्यालिप्तं निषिञ्चति उत्करे करोति' इति वाजिनयागश्च भक्षान्तः सधर्मको विहितः । एवं च सति प्राकृत्या एव पयस्यायाः सकाशात् वैकृत्यां धर्मप्रवृत्तिर्युक्तरूपेति । तथा च सूत्रकारप्रस्थानम् । अग्नौ पयस्याया उपांशुत्वं विहितम् उपांशुकाण्डे "वायव्योऽग्नौ मैत्रावरुणी च" इति । वैश्वदेविकपयस्याप्रकृतित्वे हि उपांशुत्वं प्राप्नोत्येव, न विधेयमिति ॥१२॥१३॥

द्यावापृथिवीय एककपालः ॥ १४ ॥

एतत्प्रकृतित्वं चैककपालानामित्युक्तमेव ॥ १४ ॥

एतद्वैश्वदेवम् ॥ १५ ॥

अस्य पर्वणो वैश्वदेवमितीयं संज्ञा । असौ च संव्यहारार्था "प्रजाकामस्यापि वैश्वदेवम्" इत्यादौ ॥ १५ ॥

( वैश्वदेवपर्वणोदेशविधानम् )

प्राचीनप्रवणे ॥ १६ ॥

तच्च प्राचीनप्रवणे कर्त्तव्यम् । दर्शपूर्णमासयागधर्मत्वेन सम(देश)प्राप्तौ प्राचीनप्रवणविधानम् ॥ १६ ॥

अहतवासाः पत्नी च ॥ १७ ॥

नियमार्थमेतदुक्तम् ॥ १७ ॥

ते एव वरुणप्रघासेष्वपि ॥ १८ ॥

एवकारकरणाच्च व्यक्तिविवक्षेयम् । एवं च सति वरुणप्रघासेषु तेषामेव प्रतिपत्तिः । तथा च नाशदोषादौ वैश्वदेवधर्मत्वेनाहतवासःपरिधानं भवति । प्रतिपत्तिस्तु न कर्त्तव्या ॥ १८ ॥

त्रेधा बर्हिः सन्नह्य पुनरेकधा ॥ १९ ॥

सन्नहनं कर्त्तव्यम् ॥ १९ ॥

(१)कुशप्रस्वः प्रस्तर उपसन्नद्धः ॥ २० ॥

(२)"प्रसूः प्रस्तरं गृह्णाति"इति वचनात् ॥ २० ॥

आसाद्याग्निमन्थनम् ॥ २१ ॥

आसाद्य हवींष्यग्निमन्थनं कर्त्तव्यम् । "आसाद्य हवीᳬंष्यग्निं मन्थन्ति"इति वचनात् । तच्चैवमभिहितेऽपि सम्मर्शनान्ते एव कर्त्तव्यम् । प्रकृतावपि हि श्रूयते "आसाद्य हवीᳬंषि सम्मृशति" इति । त्र्यबादिष्टप्राकृतवैकृतसान्निपाते, सन्निवेशे हि पूर्वं प्राकृतं कर्त्तव्यमित्युक्तमाचार्येण "प्राकृतं च विकृतौ"इति । तथा च पशुसमञ्जनमुक्तम् "उत्तराघारमाघार्य्य पशुं पूर्वᳬं समनक्ति"इति । "उत्तराघारमाघार्य्य जुह्वा ध्रुवाᳬंसमनक्ति"इति हि प्रकृतावुक्तम् । तन्मा भूदिति पशुसमञ्जनस्य पूर्वकालतोच्यते ॥ २१ ॥

अग्नेर्जनित्रमिति शकलमादाय वेद्यां करोति ॥२२॥

वृषणाविति कुशतरुणे तस्मिन् ॥ २३ ॥

शकले करोति ॥ २२ ॥ २३ ॥

---

(१) कुशप्रस्वः कुशप्रसूताः । पुष्पिताः कुशा इति यावत् । त एव बध्वा प्रस्तरः कर्तव्य इत्यर्थः ।

(२) प्रसूरिति द्वितीयाबहुवचनम् । छान्दसत्वाद्यणं बाधित्वा पूर्वसवर्णः ।

उर्वश्यसीत्यधरारणिं तयोः ॥ २४ ॥

"उर्वश्यसि" इत्यनेन मन्त्रेण कुशतरुणयोरुपर्यधरारणिं करोति ॥२४॥

आयुरसीत्युत्तरयाऽऽज्यस्थालीꣳ सꣳस्पृश्य पुरूरवा इत्यभिनिधानं तया ॥ २५ ॥

अधरारण्यामभिनिधानं करोति "पुरूरवा" इत्यनेन मन्त्रेण ॥२५॥

( इति पञ्चमाध्याये प्रथमा कण्डिका )

अग्नये मथ्यमानायानुवाचयति ॥ १ ॥

मथ्यमानायानुवाचनं कारयति । अनुवाचनं हि निर्ज्ञातकर्तृकम् । तेनाध्वर्योः प्रैषदानेऽधिकारः । अन्यत्र तु प्रैषार्थ इत्युक्तम ॥ १ ॥

मन्थति गायत्रेणेति प्रतिमन्त्रं त्रिः प्रदक्षिणम् ॥२॥

पुनः प्रदक्षिणं चाप्रदक्षिणं च ( अमन्त्रकम् ) ॥ २ ॥

जाते जातायेति ॥ ३ ॥

जाते ऽग्नौ जातायेत्यनुवाचयति । सापेक्षत्वादग्नय इत्यनुवर्त्तते ॥ ३ ॥

प्रह्रियमाणायेति प्रास्यन् ॥ ४ ॥

अग्नावग्निं प्रास्यन् अग्नये प्रह्रियमाणायेत्यनुवाचयति ॥ ४ ॥

भवतन्न इति प्रास्यति ॥ ५ ॥

अग्नावग्निम् ॥ ५ ॥

अग्नावग्निरिति जुहोति स्थाल्याः स्रुवेण ॥ ६ ॥

स्थालीग्रहणं च पूर्णाहुतिवदाज्यसंस्कारव्युदासार्थम् । स्रुवग्रहणं च प्रचरणीव्युदासार्थम् । ते हि सर्वहोमेष्वेव विहिते इति ॥६॥

नवप्रयाजं नवानुयाजम् ॥ ७ ॥

वैश्वदेवं भवति । "नवप्रयाजं भवति नवानुयाजम्" इति वचनात् । पञ्चमाभ्यासेन नवसंख्या प्रयाजानामित्युक्तमेव ॥ ७ ॥

वरुणप्रघासा महाहविश्च ॥ ८ ॥

ननु वैश्वदेवधर्मत्वेन नवप्रयाजानुयाजता प्राप्तैव । (स०) अधिकहविःसम्बन्धार्थमित्यदोषः । तथा च मारुत्या अपि नवप्रयाजता भवति । इतरेषामप्यन्तराये इति । अपरेत्वन्तराये अङ्गानुष्ठानं नेच्छन्ति । समुदायस्य ह्यङ्गसम्बन्ध इति । तेषामपि मारुत्यर्थं नवप्रयाजता वक्तव्या । तत्रोपसंहारो मा भूदिति वरुणप्रघासा महाहविश्चेत्युक्तम् ॥ ८ ॥

त्रीणि समिष्टयजूꣳषि जुहोति देवा गातुविदो, यज्ञ यज्ञ,मेष त इति ॥ ९ ॥

इहचोत्पन्नसंयोगात्संख्याया अभ्यासेन त्रित्वम् । वैश्वदेवधर्मित्वेन च वरुणप्रघासेषु महाहविषि च समिष्टयजुषां त्रित्वम् ॥ ९ ॥

पशौ च ॥ १० ॥

त्रीणि समिष्टयजूंषि भवन्ति ॥ १० ॥

याँ २॥ आवह इति वा पशौ ॥ ११ ॥

मन्त्रविकल्पश्चायम् । पशूद्देशेन समिष्टयजुषां त्रित्वमभिहितम् । अग्नीषोमीयस्य च दक्षिणाग्निहोमान्तता वाचनिकी । अतश्च त्रित्वमितरपश्वर्थं, मा भूत्त्रित्वविधानानर्थक्यमिति ॥ ११ ॥

एकं वा वैश्वदेवे ॥ १२ ॥

वचनाद्विकल्पः ॥ १२ ॥

पर्वसꣳस्थासु वपनं वा प्रागन्त्यात् ॥ १३ ॥

पर्वसंस्थासु वपनं वा भवति, भवेच्चेत्प्रागन्त्याद्भवति । न हि तत्र विहितमिति ॥ १३ ॥

(१)अपरेण दक्षिणाग्निं दक्षिणं गोदानमुन्दति सवित्रा प्रसूता दैव्या आप उन्दन्तु ते तनूं दीर्घायुत्वाय वर्चस इति ॥ १४ ॥

(१) दक्षिणाग्नेरपरस्यां दिशि प्राङ्मुखोपविष्टस्य यजमानस्य दक्षिणं गोदानं दक्षिणकर्णसमीपवर्तिनं शिरःप्रदेशमाद्भिः क्लेदयतीत्यर्थः ।

गवि क्षीयत इति पृथिव्यां दीयत इति शयनकाले। उन्दयति क्लेदयति तिम्मयतीत्यर्थः ॥ १४ ॥

त्र्येण्या शलल्या त्रिनीय त्रीणि कुशतरुणा-
न्यन्तर्दधात्योषध इति ॥ १५ ॥

त्र्येणी शलली प्रसिद्धा। तया केशविनयनं कृत्वा त्रीणि कुशतरुणान्यन्तर्दधाति "ओषधे" इत्यनेन मन्त्रेण ॥ १५ ॥

त्र्यायुषमिति यजमानो जपति ॥ १६ ॥

"त्र्यायुषम्" इत्यमुं मन्त्रं यजमानो जपति ॥ १६ ॥

शिवो नामेति लोहक्षुरमादाय निवर्त्तयामीति वपति॥१७॥

लोहशब्देन ताम्रमभिधीयते । "लोहित इव ह्यग्निः" इत्यर्थवादात् ॥ १७ ॥

एवं पश्चादुत्तरतश्च ॥ १८ ॥

उन्दनादि कर्त्तव्यम्। क्षुरादानं तु कृतत्वान्न (पुनः समन्त्रकं) भवति, जपश्च ॥ १८ ॥

गृहेषु पौर्णमासः समारूढ-निर्मथितयोस्तथा चेत् ॥१९॥

गृहेषु पौर्णमासं कर्त्तव्यं समारूढनिर्मथितयोरग्न्योः। तथा चेदिति। यदि समारोपनिर्मन्थने स्तः। न च वैश्वदेवे समारोपनिर्मन्थने विहिते। तस्माच्चेच्छब्दो यत्रार्थः। यत्र समारोपनिर्मन्थने विहिते। ते च वरुणप्रघासेषु साकमेधेषु च "अथ केशश्मश्रूप्त्वा समारोह्याग्नी उदवसायेव ह्येतेन यजते" (श. ब्रा २।५।२।४८) इति॥१९॥

प्रजाकामस्यापि वैश्वदेवम् ॥ २० ॥

भवतीति वाक्यशेषः ॥ २० ॥

एकेऽधः प्राङ्शायी मध्वाभ्यृतुजायोपायी ॥ २१ ॥

एके विकल्पमिच्छन्ति ॥ २१ ॥

मांसस्त्र्यनृतानि वर्जयेदुदकाभ्यवायं च
(उदकप्रवेशंच) प्रागवभृथात् ॥ २२ ॥

मांसादीनि नियोगतो वर्जयेत् ।
अधःशयनादीनां सर्वेषामेव विकल्प इति सम्प्रदायः ॥ २२ ॥

इति पञ्चमाध्याये द्वितीया कण्डिका ।

( चातुर्मास्ययागानां वरुणप्रघासाख्यं द्वितीयं पर्व )

आषाढ्यामयन्ते योनिरिति समारोह्योदवसाय निर्मथ्य वरुणप्रघासाः ॥ १ ॥

आषाढीशब्देन च चतुर्मासोपलक्षितकालविधानम् । "अथ यदेष एतैश्चतुर्थे मासि यजते" (श. ब्रा. २।५।२।४) इति श्रुतत्वात् । तथा च सहकारिवचनम् "पञ्चम्यां पौर्णमास्यां वरुणप्रघासा" इति । "अयन्तेयोनिः" इत्यनेनं मन्त्रेण समारोह्याग्नी । कुत एतत् । अन्यत्र दर्शनात् "समारोह्याग्नी शालास्तम्भम्" इति । क समारोह्य । अरण्योः । तत्कुतः । अन्यत्र दर्शनादेव । समारोपणं हि प्रकृत्योच्यते "ग्रामे वा विवत्सन्नरण्योः" इति । तेन सूत्रत्रयसिद्धः समारोपः —क्वचिन्मन्त्रः क्वचिदग्नी क्वचिच्चारणी इति । इह च गार्हपत्ये एव समारोपः । तत्र ह्याहवनीयोऽप्यन्तरागर्भिणीन्यायेनास्तीति द्विवचनमग्नी इति । अपरे तु भेदेन कुर्वन्ति । उत्पूर्वोऽवस्यतिः प्रदेशान्तरगमने वर्त्तते । निर्मथ्य वरुणप्रघासाः । कर्त्तव्या इति वाक्यशेषः । वरुणप्रघासा इति बहुवचनमवयवभेदापेक्षया ॥ १ ॥

पूर्वेद्युर्दक्षिणाग्नौ निस्तुषाम-भृष्टयवानां करम्भपात्रकरणम् ॥ २ ॥

पूर्वस्मिन्नहनि चतुर्दश्यां दक्षिणाग्नौ आमभृष्टयवानाम् ( ईषद्भृष्टयवानां ) करम्भपात्राणि कर्त्तव्यानि । दक्षिणाग्निग्रहणं च गार्हपत्यव्युदासार्थम् । निस्तुषग्रहणं च फलीकरणव्युदासार्थम् । एवं हि श्रूयते "अथ पूर्वेद्युरन्वाहार्यपचने ऽतुषानिव यवान्कृत्वा तानीषदिवोपतप्य तेषां करम्भपात्राणि कुर्वन्ति" (श. ब्रा. २।५।२।१४) इति । श्रपणमात्रमेव च दक्षिणाग्नौ । पर्यग्निकरणं तु गार्हपत्यादेव । "गार्हपत्ये संस्कारा" इति वचनात् ॥ २ ॥

यावन्तो यजमानगृह्या एकाधिकानि ॥ ३ ॥

"यावन्तो गृह्याः स्युः" इति वचनात् । एकाधिकानि । "एकेनाऽतिरिक्तानि भवन्ति" इति वचनात् ॥ ३ ॥

प्रजायां वा जातश्रुतेः ॥ ४ ॥

प्रजायां वा सम्माय कर्त्तव्यानीति । प्रजासम्मितानि कर्त्तव्यानीत्यर्थः । कुत एतत् । जातश्रुतेः "तद्याश्चैवास्य प्रजा जाता आसन्याश्चाजातास्ता उभयीर्वरुणपाशात्प्रमुञ्चति" इति । पूर्वं गृह्यशब्दाविशेषादभिहितम् । "तद्याश्चैवास्य प्रजा जाता आसन्याश्चाजातास्ता" इति विशेषावगतिः । तस्मात्प्रजासम्मितान्येव कर्त्तव्यानीति ॥ ४ ॥

अप्रजस्याकरणे प्राप्ते, द्विप्रजस्यैकप्रजस्य च प्रजासंख्यायां प्राप्तायामिदमाह—

त्रीणि वा नित्यत्वात् ॥ ५ ॥

द्विप्रजैकप्रजाप्रजानां त्रीणि कर्त्तव्यानि । बहुत्वविशिष्टानां हि श्रवणं "करम्भपात्राणि कुर्वन्ति" इति । नित्यं च त्रिषु बहुवचनम् । न चैष प्रजासंस्कारः । क्रत्वर्थानि ह्येतानि क्रतुं प्रकृत्याऽऽम्नायन्ते । अतश्च द्विप्रजैकप्रजाप्रजानां त्रीण्येकाधिकानि(चत्वारि)कर्त्तव्यानि ॥ ५ ॥

मेषमिथुनं च ॥ ६ ॥

"तत्रापि मेषं च मेषीं च कुर्वन्ति" इति वचनात् पूर्वेद्युरेव कुर्वन्तीति केचित् । तदयुक्तम् । तत्रापीत्ययमेकः शब्दः । स कालविषयो वा भवति द्रव्यविषयो वा । यदि कालविषयो न यवमयता प्राप्नोति, द्रव्यविषये न कालनियम इति । तत्र द्रव्यविषयता युक्ता । कालविषयं हि सत्यङ्गानां प्रधानकालताबाधः । तथाचानुवदति "यवमयौ भवत" इति । तस्मादुत्तरेद्युरेव मेषमिथुनकरणम् । तत्रापीति शब्दस्य द्रव्यविषयत्वात् (यवानाम्) अधिकृतत्वादिदमुच्यते ॥६॥

अनैडकीरूर्णाः प्रक्षाल्याश्लेषयेत्तयोः ॥ ७ ॥

द्विप्रकारा ह्यूर्णा भवन्ति ऐडक्यः ( मेषसंबन्धिन्यः ) अनैडक्यश्च । तत्र नियमार्थमिदमुक्तम् ॥ ७ ॥

कुशोर्णा वाऽभावे ॥ ८ ॥

कुशोर्णा वा भवन्ति । ताश्चानैडकीनामभावे । एवं हि श्रूयते- "यद्यनैडकीरूर्णा विन्देत्ताः प्रणिज्य निश्लेषयेद्यद्यु अनैडकीर्न विन्दे- दथो अपि कुशोर्णा एव स्युः" इति ॥ ८ ॥

आहवनीयस्य पुरस्ताद्वेदी करोति ॥ ९ ॥

आहवनीयदेशस्य पुरस्तादित्येके । तदयुक्तम् । अनियतदेश- त्वादाहवनीयस्य । आहवनीयमुद्धृत्य तस्य पुरस्तादित्यपरे । एत- दप्यनुपपन्नम् । न ह्याहवनीयोद्धरणमत्र कृतम् । वरुणप्रघाससाध- नभूतस्याहवनीयस्योत्तरवेदावभिनिधानमुक्तम् "उत्तरवेदावग्नि- र्निधीयते" इति । आचार्येणाप्युक्तम् "तस्यामग्निं निदधाति" इति । अथोत्तरवेदिकरणात्पूर्वं समुद्ध्रियते, तथा सत्यदृष्टार्थता स्यात् । तस्मादाहवनीयस्य पुरस्तादिति यावदाहवनीयो न भवति । गार्ह- पत्याच्च पृथग्भूतस्याहवनीयव्यपदेशः । तस्मादाहवनीयोद्धरणस्य पुरस्तादिति सूत्रार्थः । "तद्वै द्वे वेदी द्वावग्नी भवत" इति वचना- द्वेदी करोतीत्युक्तम् ॥ ९ ॥

(१) प्रादेशोऽन्तरा पृथो वा ॥ १० ॥

प्रादेशः प्रसिद्धः । प्रसृताङ्गुलिपाणिरामणिबन्धात्पृथ उच्यते । तथा च कथनम् "न पृथेन न मुष्टिना" इति ॥ १० ॥

रथमात्र्युत्तरा ॥ ११ ॥

रथप्रमाणं चाभिहितं परिशिष्टकारेण "तत्राष्टाशीतिशतमीषा" इत्येवमादि(२) ॥ ११ ॥

---

(१) प्रादेशमात्रं पृथमात्रं वा व्यवधानमुभयोर्वेद्योः कार्यमित्यर्थः ।

(२) "अङ्गुलै रथसंमितायाः प्रमाणम् । तत्राष्टाशीतिशतमीषा १८८ । चतुःशतमक्षः १०४ । षडशीतिर्युगम् ८६ । चत्वारोऽष्टकाः शम्या ३२ ।" इति शुल्बसूत्रम् । अस्यार्थः । "पञ्चारत्निः पुरुषः" इति प- रिभाषणात् प्रपदोत्क्षिप्तस्य कृतोर्ध्वहस्तस्य पुरुषस्य पञ्चमो भागः अरत्निः । स च चतुर्विंशत्यङ्गुलहस्ततुल्य एव भवतीति तच्चतुर्विं- शतितमो भागोऽङ्गुलम् । तथाच अष्टाशीत्याधिकं शतमङ्गुलानि ईषा- दण्डप्रमाणम् । चतुरधिकं शतमङ्गुलानि अक्षमानम् । चक्रनाभिर- न्ध्रप्रविष्टश्चक्रद्वयमध्यवर्ती दण्डोऽक्षः । रथपश्चाद्भागाद्युगदण्डप-

(१) चतुररत्निर्वा पश्चात्, सप्त प्राची षड्वा, त्रयः पुरस्तात् ॥ १२ ॥

इदमपरं वैकल्पिकं प्रमाणम् ॥ १२ ॥

तेषां मध्ये शङ्कुः ॥ १३ ॥

त्रयाणाम् (अरत्नीनां) मध्ये शङ्कुनिखननं कर्त्तव्यम् । तेषामिति चानेन पुरस्तात्प्रमाणमुपलक्ष्यते । तत्र हि शङ्कुना कार्यमस्ति पुरीषनिवपनाय ॥ १३ ॥

अपरिमिता वा ॥ १४ ॥

उक्तप्रमाणयोर्बहुतरा वा कार्या ॥ १४ ॥

स्फ्याद्यासम्मर्शनात्करोति ॥ १५ ॥

स्फ्यश्च प्रोक्षितोऽङ्गभावं प्रकृतौ प्रतिपन्नः । प्रोक्षणं च प्रणीतोदकेन । प्रणीता अपि ब्रह्मणा विना न भवन्ति । अतः सर्वमपकृष्यते । स्फ्यादीनां च पात्राणामासादनादि कर्त्तव्यम् ।

तत्र केचित् षट्कमासादयन्ति । तत्पुनर्विचारणीयम् । न ह्यत्र खननमपकृष्यते । अतः स्वकाले एव अभ्यासादनमिति । अथ वेदिरपकृष्यमाणा सर्वसाधनान्यपकर्षयति, तदाऽन्यैरवच्छादनान्यपकृष्येरन् । न चैतदुक्तरूपमिव सर्वम् । सम्मर्शनान्ते च ज्योतिष्टोमे उत्तरवेदिर्दृष्टा, इहापि सम्मर्शनान्ते एव कर्त्तव्या । ज्योतिष्टोमविहि-

---

र्यन्तगामि दण्डयुगलमीषा । बलीवर्दस्कन्धयोरासज्यमानं काष्ठं युगम् । प्रतियुगप्रान्तं छिद्रद्वयं कृत्वा निवेशिते काष्ठयुगले शम्यापदेनोच्येते । शम्यान्तरालवर्त्तियुगप्रदेशो धूः । तत्र षडशीत्यङ्गुलानि युगप्रमाणम् । द्वात्रिंशदङ्गुलानि च शम्याप्रमाणमिति ।

एवं च चतुःशतमङ्गुलानि वेदेः पश्चाद्भागे तिर्यक्प्रमाणम् । षडशीत्यङ्गुलानि पुरोभागे तिर्यक्प्रमाणम् । अष्टाशीतिशताङ्गुलानि वेदेः पूर्वापरदैर्घ्यप्रमाणम् इति ।

(१) चत्वारोऽरत्नयः पश्चात्तिर्यक्प्रमाणम् । त्रयोऽरत्नयः पुरस्तात् तिर्यक्प्रमाणम् । षट्सप्तरत्नयः पूर्वापरदैर्घ्यप्रमाणमित्यर्थः ।

ताया एव वाक्येन विनियोगः । अतः स्फ्याद्यासम्मर्शनात्करोतीत्युक्तम् ॥ १५ ॥

उभयोरेक उत्करः ॥ १६ ॥

उभयोरपि वेद्योरेक उत्करो भवति ॥ १६ ॥

अपरेण वेदिं प्रतिप्रस्थातुः सञ्चरः ॥ १७ ॥

स्तम्बयजुर्हरणाय सञ्चरनियमः ॥ १७ ॥

उत्तरवेदिं निवपत्युत्तरस्याम् ॥ १८ ॥

"स उत्तरस्यामेव वेदावुत्तरवेदिमुपकिरति" इति वचनात् ॥ १८ ॥

शम्यामादाय चात्वालं मिमीते पूर्वेणोत्करं सञ्चरं परिहाप्य ॥ १९ ॥

इह च शम्यादानमप्राकृतकार्यार्थम् । अतस्तस्या आसादनादि न भवति ॥ १९ ॥

उत्करं पूर्वेण सञ्चरं मुक्त्वा चात्वालमानम् । चात्वालश्च मानाद्यभिनिर्वर्त्योऽत आह—

(१) शम्यामुदीचीं निदधाति पुरस्ताच्च ॥ २० ॥

उदीचीमेव ॥ २० ॥

दक्षिणतः प्राचीमुत्तरतश्च ॥ २१ ॥

---

(१) उत्तरवेदिनिचयार्थं यत्र भूप्रदेशे मृदं खनति स चात्वाल उच्यते । तत्र उत्करात् पूर्वस्यां दिशि गमनागमनमार्गपरिहारेण उदगग्रां शम्यां निधाय शम्याप्रमाणां रेखां शम्यापूर्वपार्श्वे स्फ्येन "तप्तायनी मेऽसि" इति मन्त्रेण कृत्वा, तत्पूर्वतः शम्याप्रमाणं मध्यभागं त्यक्त्वा तथैव "वित्तायनी" इति मन्त्रेण द्वितीयां रेखां कृत्वा, पूर्वापररेखयोर्मध्ये दक्षिणतः प्रागग्रां शम्यां निधाय "अवतात्" इति मन्त्रेण तृतीयां रेखां कृत्वा, तयोर्मध्ये एव तदुत्तरतः "अवतात्" इति उत्तरमन्त्रेण चतुर्थीं रेखां कुर्यादिति सूत्रत्रयार्थः ।

प्राचीमेव ॥ २१ ॥

स्फ्येनान्तार्लिखति तत्तायनाति प्रतिमन्त्रम् ॥ २२ ॥

शम्यानिधानानन्तरमेव ( तत्र तत्र ) परिलेखः कर्त्तव्यः । लाघविकेन सता सर्वतः शम्यानिधानमुक्तम् ( युगपत् ) ॥ २२ ॥

विदेदग्निरिति चात्वाले प्रहरति स्फ्येनान्वारब्धे ॥ २३ ॥

"विदेदग्निः" इत्यनेन मन्त्रेण चात्वाले प्रहरत्यन्वारब्धे ( अन्वारब्धवति ) यजमाने ॥ २३ ॥

अग्ने अङ्गिर इति पुरीषꣳ हरति ॥ २४ ॥

पुरीषं यदुत्खातं तद् "अग्ने अङ्गिर" इति हरति ॥ २४ ॥

हस्तेन च ॥ २५ ॥

चशब्दात्स्फ्येन ॥ २५ ॥

योऽस्यामिति निवपति पूर्वार्द्धे शङ्कुसहितम् ॥ २६ ॥

"योऽस्याम्" इत्यनेन मन्त्रेण शङ्कुसंलग्नं पुरीषं निवपति (निक्षिपति उत्तरवेदिस्थाने ) ॥ २६ ॥

अग्नीदुत्करवत्तूष्णीꣳ हृतम् ॥ २७ ॥

तमग्नीदभिनिदधाति उत्करवत्पाणिद्वयेन मन्त्ररहितम् ॥ २७ ॥

एवं द्विरपरं द्वितीयस्यां तृतीयस्यामिति विशेषः ॥ २८ ॥

एवं द्विरपरं प्रहरणादि कर्त्तव्यम् । यो द्वितीयस्यां तृतीयस्यामिति निवपने विशेषः । अन्वारम्भस्तु प्रहरणमात्रे एव । तत्रैव श्रुतत्वात् ॥ २८ ॥

अनुत्वेति चतुर्थं यथार्थमाहृत्य सिꣳहासीति
व्यूहत्युत्तरवेदिम् ॥ २९ ॥

"अनुत्वा" इत्यनेन मन्त्रेण यथार्थं पुरीषमाहृत्य यथा अर्थो निर्वर्त्यते तथा पुरीषमाहृत्य "सिꣳहासि" इत्युत्तरवेदिं व्यूहति (समां करोति ) ॥ २९ ॥

शम्यामात्रीं त्रितृतीयामपरिमितां युगमात्रीं यजमानदशपद्यां वा ॥ ३० ॥

द्वात्रिंशदङ्गुला शम्या। त्रितृतीयामिति वेदेस्त्रिभागसम्मिताम्। अपरिमितां वा, प्रमाणद्वयस्यैव। तत्र हि श्रूयते "त्रितृतीयामपरिमितां वा" इति। युगमात्रीं यजमानदशपद्यां वोत्तरवेदिं व्यूहति ॥ ३० ॥

सोमे वोत्तरे व्यपस्फुरणश्रुतेरसम्भवाच्च ॥३१॥

सोमे एवोत्तरे द्वे प्रमाणे युगमात्रीं यजमानदशपद्यां वोत्तरवेदिं व्यूहति इति। अन्यान्यपि तत्र भवन्त्येव। तत्राविशेषश्रवणात् सोमे एवोत्तरे इति। कुत एतत्। व्यपस्फुरणश्रुतेः। "व्यपस्फुरेतं ह वा एते वेदिश्चोत्तरवेदिश्च" इति। व्यपस्फुरणं च स्पर्द्धोच्यते। सा चातिमहत्त्वादुत्तरवेदेः स्पर्द्धोपजायते। असम्भवाच्च ॥ ३१ ॥

मध्ये नाभिं करोति प्रादेशसमां चतुःस्रक्तिम् ॥३२॥

उत्तरवेदिमध्ये प्रादेशपरिमाणां चतुःस्रक्तिं नाभिं करोति ॥३२॥

प्रोक्षत्युत्तरवेदिꣳ सिकताश्च प्रकिरति सिꣳह्यसीति प्रतिमन्त्रम् ॥ ३३ ॥

आनन्तर्यान्नाभेरेव प्रोक्षणं मा भूदित्युत्तरवेदिग्रहणम् ॥ ३३ ॥

इति पञ्चमाध्याये तृतीया कण्डिका।

छन्ना वसति ॥ १ ॥

"अथैनां छादयति सा छन्नैताꣳ रात्रिं वसति" इति श्रुतत्वात्। छादनमुत्तरवेदिसंस्कारः। सोऽत्र प्रवर्त्तते। वसत्यर्थस्तु ज्योतिष्टोमे एव। ननु ज्योतिष्टोमे उत्तरवेदिरुत्पन्ना। सा चेह वचनेन विनियुक्ता—"स उत्तरस्यामेव वेदाउत्तरवेदिमुपकिरति" इति। तेन वसत्यर्थोऽपि प्राप्नोति। उच्यते। सद्यःकालत्वाद्विकृतीनां वसत्यर्थस्यात्राप्राप्तिः। छादनं तु संस्कारत्वाद्भवत्येव ॥ १ ॥

(सर्वस्याहवनीयस्यद्वयोर्वेद्योर्विभज्यप्रणयनंनेध्मेनेतिकर्कसिद्धान्तः)

प्रातः पञ्चगृहीतं गृहीत्वाऽग्नी प्रणयतीध्मा-
भ्यामुपयम्य ॥ २ ॥

प्रातर्ग्रहणमपि तदर्थमेव(ज्योतिष्टोमार्थमेव)। इहासम्भवात्। पञ्चगृहीतमाज्यं गृहीत्वाऽग्नी प्रणयति। "तद्वै द्वे वेदी द्वावग्नी भवत" इति अग्नी इति द्विवचनम्। इध्माभ्यामुपयम्य--उपयमनीभिर्गृहीत्वा। उत्तरवेदौ हीध्मेन अग्निप्रणयनं दृष्टं ज्योतिष्टोमे "इध्ममभ्यादधत्युपयमनीरुपकल्पयन्ति" इति। कृतानुकरत्वेन च दक्षिणविहारेऽपि प्राप्तिमाशङ्क्योच्यते 'इध्माभ्याम्'इति ॥ २ ॥

सर्वे वा विभज्य प्राकृतत्वात् ॥ ३ ॥

इध्मप्रणयनं हि सशेषस्याहवनीयस्य भवति। इह सर्वस्याहवनीयस्य विभज्य (द्वयोर्वेद्योः) प्रणयनं कर्त्तव्यम्। कुत एतत्। प्राकृतत्वात्प्रणयनस्य। प्राकृतमेवेदं प्रणयनम्। प्रकृतौच अशेषस्य प्रणयनं दृष्टम् ॥ ३ ॥

प्रणयनं सोमाद्वाच्यत्वात् ॥ ४ ॥

अथवा सौमिकमेतत्प्रणयनम्। कुत एतत्। वाच्यत्वाद्विधीयमानत्वादित्यर्थः। यच्च न प्राप्नोति तद्विधीयते। सौमिकं च न प्राप्नोति। अतस्तस्य विधानमिति ॥ ४ ॥

प्रकृतेर्वाऽनामत्वात् ॥ ५ ॥

अथवा प्रकृतेः सम्बन्ध्येतत्प्रणयनं, न सौमिकम्। कुत एतत्। अनामत्वात्। न ह्येतन्नामधेयम्। किं तर्हि प्रपूर्वो नयतिः क्रियावाचको गच्छति पठति पचतीतिवत्। नाम्ना च धर्मप्राप्तिर्भवति। न चैतन्नाम, तिङन्तत्वात्। अतः अनामत्वाच्च सौमिकस्य नातिदेशः ॥ ५ ॥

कथं तर्हीदमुच्यते द्वयोः प्रणयन्तीति—

ग्रहणं गुणार्थमुत्तरवेद्याग्निनिधानात् ॥ ६ ॥

प्रणयनग्रहणं गुणार्थम्। को गुण इति चेत्। द्वयोरुत्तरवेद्यग्नि-

निधानात्। द्वयोः पर्वणोरुत्तरवेदावग्निर्निधीयत इति। तस्मादसौमिकत्वान्नेहेध्मेन प्रणयनम्(१) ॥ ६ ॥

आज्यप्रोक्षणीरुद्यम्याग्नी चाहाग्निभ्यां प्रह्रियमाणाभ्यामनुब्रूह्येकस्फ्ययाऽनूदेहीति(२) ॥ ७ ॥

आज्यं पञ्चगृहीतं प्रोक्षणीरग्नी चोद्यम्य "अग्निभ्यां प्रह्रियमाणाभ्यामनुब्रूहि" इत्याह। अयं च प्राकृतेऽपि प्रणयनेऽधिको गुणो, यत्प्रणीयानुवाचनमिति ॥ ७ ॥

---

(१) अत्र सधर्मकं सौमिकमेवाग्न्योः प्रणयनं विधीयते। तच्चेध्मेन। "आहवनीयाच्चाग्नी प्रणयन्ति इळायास्त्वेति साद्यमानयोरिध्मयोः" इति शाङ्खायनाद्येकवाक्यत्वात्। सर्वस्यैवाहवनीयस्य द्वयोर्वेद्योर्विभज्य प्रणयने आहवनीयादिति इध्मयोरितिच नोपपद्येत। सूत्रकारस्यापि बहूनां सौमिकधर्माणामत्रोपदेशेन अत्रैव तात्पर्यम्। अत एव सौत्रामणीप्रकरणे सूत्रकारेण "स्फ्यादि करोति दक्षिणस्यां वरुणप्रघासवत्" (१९।२।५) इत्युक्तम्। सौत्रामण्यां हि "तद्यदेतावग्नी आहवनीयाद्विह्रियेते" इति श्रूयते। तच्च तत्र प्रतिप्रस्थातृकर्तृकम्। वरुणप्रघासवदित्यनेनच वरुणघासेऽपि तत्कर्तृकमवगम्यते। प्राकृतत्वे हि अध्वर्युकर्तृकं तत्स्यादिति तदुपमानानुपपत्तिरिति देवयाज्ञिकः।

भट्टमतेतु प्रणयनमपूर्वमेवात्र विधीयते। न प्राकृतं, न वा सौमिकम्। तथाच न पूर्वोक्ता काचिदनुपपत्तिः। कात्यायनस्यापि सौमिकत्वखण्डने एव तात्पर्यं, न तु दार्शपौर्णमासिकत्वस्थापने। "प्रकृतेर्वाऽनामत्वात्" इत्यत्र प्रकृतेः इत्यस्य अपूर्वमित्यर्थः। देवयाज्ञिकस्तु "प्रकृतेर्वा ऽनामत्वात्" इति सिद्धान्तसूत्रं सूत्रान्तरैकवाक्यतया पूर्वपक्षपरतया योजयन् कर्काचार्याशयानभिज्ञत्वादुपेक्षणीय एव कातीयानाम् इति सुधियो विभावयन्तु। विस्तरस्तु तन्त्रवार्तिके द्रष्टव्यः। सर्वथा इध्मेन प्रणयमत्रन भवतीति दिक्।

(२) एकः स्फ्यः साधनमस्याः सेयमेकस्फ्या रेखा। तया युक्तस्त्वं पश्चाद्गच्छ। यज्ञस्योर्ध्वभागं प्राचीं दिशं गच्छेत्यर्थः। इत्थम्भूतलक्षणे तृतीया। प्रतिप्रस्थाता स्फ्येन भूमौ रेखां कुर्वन्नग्निमनुगच्छतीति फलितोऽर्थः।

त्रिरुक्तायां यथावेदि हरणम् ॥ ८ ॥

त्रिरुक्तायां प्रथमायामृचि यथावेदि हरणम् । या यस्य वेदिरिति॥८॥

प्रतिप्रस्थाता स्फ्येन लिखत्यावेदिश्रोणेरुत्तरवेदेर्वा ॥९॥

प्रतिप्रस्थाता स्फ्येन विलिखति वेदिश्रोणिं यावत्, उत्तरवेदेर्वा(१)। अयं च पदार्थः सौमिको न वारुणप्रघासिकः। तत्रैव विधानात् "अनूदेति प्रतिप्रस्थातैकस्फ्ययैतस्मान्मध्यमाच्छङ्कोर्य्य एष वेदेर्जघनार्धे भवति तद्यदेवात्रान्तःपातेन गार्हपत्यस्य वेदेर्व्यवच्छिन्नं भवति तदेवैतदनुसन्तनोति" इति। अतश्च मर्यादामात्रमत्र द्रष्टव्यमावेदिश्रोणेरुत्तरवेदेर्वा । सौमिकस्यात्रोपदेशोऽतिदेशार्थः "अग्निं प्रणयत्यौपनिवपनात्कृत्वा"(का०श्रौ० ८।३।२०)इति॥९॥

वेद्यन्तरे स्थित्वोदङ्ङुत्तरवेदिं प्रोक्षतीन्द्रघोषस्त्वेति प्रतिमन्त्रं प्रतिदिशं यथालिङ्गम् ॥ १० ॥

छायोष्णन्यायेन च वेद्युत्तरवेद्योरन्तरे स्थित्वोदङ्ङुत्तरवेदिं प्रोक्षति"इन्द्रघोष"इत्येभिर्मन्त्रैः प्रतिमन्त्रं प्रतिदिशं यथालिङ्गम्॥१०॥

दक्षिणांसस‍हितं बहिर्वेदि शेषं निषिञ्चतीदमहं तप्तं वारित्यमुमित्यभिचरन् ॥ ११ ॥

दक्षिणांससंलग्नं प्रोक्षणीशेषं निषिञ्चति बहिर्वेदि "इदमहं तप्तम्"इत्यनेन मन्त्रेण। 'अमुम्'इत्यभिचरन्नामादिशेत्। स च "बहिर्धा यज्ञात्"इत्यतः (मन्त्रशेषात)पूर्वो भवति ॥ ११ ॥

---

(१) अत्र लाट्यायनः "अध्वर्युश्चेद् ब्रूयाद्ब्रह्मन्नेकस्फ्ययोपसम्भिन्धीति स्फ्येनाहवनीयात्पांसून् समुद्धृत्योत्तरस्या वेदेर्दक्षिणादन्तात्कर्षन्नियादावेदिमध्यादेका चेत्" इति । तेन वेदिद्वित्वे वरुणप्रघासेषु सौत्रामण्यां च दक्षिणवेदिश्रोणिं यावद्रेखाकरणम्। एकवेदिके महाहविःपशुबन्धसोमादौ तु वेदिमध्यस्थापरशङ्कुपर्यन्तमेव। तथा च श्रुतिः "एतस्मान्मध्यमाच्छङ्कोर्य एष वेदेर्जघनार्धे भवति" इति।

नाभ्याः श्रोण्य्ँसेषु पञ्चगृहीतं जुहोत्यक्ष्णया दक्षिणेऽ्ँसे श्रोण्याॅं श्रोण्याम्ँसे मध्ये च हिरण्यं पश्यन्सि्ँह्यसीति प्रतिमन्त्रम् ॥ १२ ॥

उत्तरवेदिनाभ्याः श्रोण्यंसेषु पञ्चगृहीतं जुहोति अक्ष्णया। दक्षिणे अंसे प्रथमं, तत उत्तरस्यां श्रोण्यां, पुनर्दक्षिणस्यां, तत उत्तरे अंसे, पुनर्मध्ये च हिरण्यं पश्यन् "सि्ँह्यसि" इत्येभिर्मन्त्रैः प्रतिमन्त्रम्॥१२॥

भूतेभ्यस्त्वेति स्रुचमुद्यच्छति ॥ १३ ॥

स्रुक् वैकङ्कती भवति। होमसम्बन्धात् ॥ १३ ॥

नाभिं पैतुदारवैः परिदधाति पूर्ववद् ध्रुवोऽसीति प्रतिमन्त्रम् ॥ १४ ॥

पूर्ववदिति मध्यमदक्षिणोत्तरैः "ध्रुवोऽसि" इत्येवमादिभिर्मन्त्रैः प्रतिमन्त्रम् ॥ १४ ॥

अग्नेः पुरीषमिति निवपति (१)गुग्गुलुसुगन्धितेजन—वृष्णेस्तुकाश्चोपरि शीर्षण्या अभावेऽन्याः ॥ १५ ॥

"अग्नेः पुरीषम्" इत्यनेन मन्त्रेण गुग्गुल्वादीनि नाभ्यां निवपति। वृष्णेस्तुका उपरि शीर्षण्याः। तदभावेऽन्याः ॥ १५ ॥

तेष्वग्निं निदधाति ॥ १६ ॥

तेषु सम्भारेषु अग्निं मुञ्चति ॥ १६ ॥

---

(१) गुग्गुलुः प्रसिद्धः, सुगन्धितेजनं रोहितकः, वृष्णेः स्तुकाः मेषरोमाणि, ताश्च शीर्षण्याः शीर्षणि भवाः शृङ्गयोरन्तराले भवानि मेषरोमाणि, अन्याः अन्यस्मिन्मेषस्य शरीरप्रदेशे जाता इति देवः॥ तत्र 'गुग्गुलुसुगन्धितेजनम्' इति व्यस्तपाठो युक्तः। वृष्णेरित्यस्य समस्तत्वकल्पने अलुक्कल्पमापत्तेः। उपरीत्यस्य वृष्णेः स्तुकाभिरेव संबन्धाच्च।

उद्धतावोक्षिते दक्षिणम् ॥ १७ ॥

अग्निं निदधातीति वाक्यशेषः। पैतुदारवादि च सम्भारनिवपनान्तमत्र न भवति। उत्तरवेदिमात्रविधानात्। पैतुदारवादीनां चाग्न्यर्थत्वात्। एते हि ज्योतिष्टोमिकस्याग्नेरङ्गम्। "शरीरं हैवास्य पीतुदारु" इत्यभिधायाह "तद्यदेवात्राग्नेर्यत्कं तदिहाध्यसत्" इति। न चेह ज्योतिष्टोमिकोऽग्निः। उत्तरवेदिमात्रविधानात्। किमिति तर्हि पैतुदारवादय उपन्यस्ताः। लाघवाय अतिदेशार्थम्। ज्योतिष्टोमे "अग्निं प्रणयत्यौपनिवपनात्कृत्वा" इत्यनेन कथं नामातिदेशः स्यादिति। तथाचेध्मेनोद्धरणं निराकृत्य "उपयमनीरुपनिवपति" इत्युक्तमाचार्येण ॥ १७ ॥

(१)उपयमनीरुपनिवपति ॥ १८ ॥

प्रणीताद्यतः ॥ १९ ॥

प्रणीताप्रणयनस्यापकृष्टत्वात् प्रणीताप्रणयनादि न भवति।

एवं चेत्प्रणीताप्रणयनं यस्यादौ तदादि भवति। तच्च परिस्तरणम्। एतदप्यनुपपन्नम्। अवसराभावात्। अद्याप्यग्न्यन्वाधानमकृतमास्ते। तेन परिस्तरणस्यानवसरः। अतः प्रणीताग्रहणेन प्रणीतानामग्रहणम्।

कथंतर्ह्येतत्। प्रणीत आहवनीयो यस्य कर्मण आदौ तदादि भवति। किं च तत्। अग्न्यन्वाधानम्। उद्धृत्य ह्याहवनीयमग्न्यन्वाधानस्यावसरः। तेन 'प्रणीताद्यत' इति अग्न्यन्वाधानमित्येतदेवोक्तं भवति। अथ वैकस्यादिशब्दस्य लोपेनोष्ट्रमुखन्यायेन प्रणीतादिमादौ कृत्वा भवतीत्यर्थः। एवं कृत्वा यत् कृतं तत्कृतमेव ब्रह्मवरणादि, शेषमग्न्यन्वाधानादि प्रतिप्रसूयते ॥ १८ ॥ १९ ॥

व्रतोपायनं वाऽकृतं चेत् ॥ २० ॥

अग्न्यन्वाधानसमनन्तरं व्रतोपयनीयस्य कालः। तदप्यत्र वा भवति। यदि न कृतं पूर्वम्। ननु च व्रतोपायनस्यायमेव प्रथमः

---

(१) अग्नेरुपयमने उपयुक्ता मृत्तिकाः सिकता वा उप समीपे अग्नेर्नीचैः प्रक्षिपतीत्यर्थः।

कालः, कथमिदमुक्तमकृतं चेदिति । उच्यते । व्रतोपायनं पदार्थाङ्गम् । तेषां चापकर्षात्तस्यापि पक्षे अपकर्षः प्राप्नोति । तेनाकृतं चेदित्युच्यते ।

यद्येवं, वा न भवत्येव व्रतोपायनम् । अत्र किं कारणम् । वैकल्पिकानामादावेवावधारणं कर्त्तव्यम्, 'मयाऽस्मिन्काले व्रतोपायनं कर्त्तव्यम्' इति । तस्य यद्यग्न्यन्वाधानोत्तरकालताऽवधार्यते तदा ब्रह्मवरणादीनामङ्गमिति तदपकर्षादपकृष्यते । एवं च कृत्वा नायं व्रतोपायनस्य काल इति । नन्वेवं सति अग्न्यन्वाधानोत्तरकालताऽपैति । किं क्रियताम् । ब्रह्मवरणादिष्वपकृष्यमाणेषु तदङ्गस्यापकर्ष एव । ब्रह्मवरणादयोऽपि हि अग्न्यन्वाधानादुत्तरकालीना एवासन् । तस्मादपरिचोदना एषा ॥ २० ॥

नित्येभ्योऽधिकान्यैन्द्राग्नः, पयस्ये वारुणी मारुती, काय एककपालः ॥ २१ ॥

आग्नेयादिभ्यो नित्येभ्योऽधिकान्येतानि हवींषि भवन्ति ॥ २१ ॥

नानाऽऽज्यनिर्वपणम् ॥ २२ ॥

साधारण्याद्गार्हपत्यस्य निर्वापाधिश्रयणयोः सह प्राप्ताविदमुच्यते ॥ २२ ॥

दक्षिणं प्रतिप्रस्थातुः ॥ २३ ॥

अपरकालत्वादुत्तरं मा भूदिति ॥ २३ ॥

ध्रुवायाः पुरस्तात्पृषदाज्यमाज्यं दधिमिश्रं पञ्चगृहीतं ज्योतिरसीति समिदन्तेन ॥ २४ ॥

ध्रौवादाज्यात्पूर्वं पृषदाज्यमाज्यं दधिमिश्रं पञ्चगृहीतं गृह्यते "ज्योतिरसि" इत्यनेन मन्त्रेण । विश्वरूपमित्यत्र समाप्तत्वाद्वाक्यस्य समिदन्तेनेत्युच्यते । न ह्यत्र परादिना पूर्वान्तन्यायः । प्रकरणान्तरपाठात् । मन्त्रस्त्वपूर्वोऽपि सन् सकृन्निर्वा प्राप्नोति । अनुयाजार्थस्य हि द्रव्यस्य प्रकृतौ एवमेव दृष्टत्वात् ॥ २४ ॥

अनुयाजार्थं सर्वत्र ॥ २५ ॥

यत्र पृषदाज्यग्रहणमुच्यते तत्रानुयाजार्थतोच्यते । एवं चासंस-

गात् पृथक्पात्रताऽस्य भवति। तच्चोपकल्पनीयम्। न ह्युपभृत्कार्यापत्तिरस्य। उपभृत उपभरणार्थत्वात्। तेनोपभृद्धर्माः स्वरूपप्रयुक्ताः, नानुयाजार्थद्रव्यधारणप्रयुक्ता इति ॥ २५ ॥

## औपभृतासादनम् ॥ २६ ॥

औपभृतमासादनं पृषदाज्यस्य भवति। अनुयाजार्थस्य ह्येवमेव दृष्टत्वात ॥ २६ ॥

## प्रियेण धाम्नेति वाऽविशेषोपदेशात् ॥ २७ ॥

अविशेषेण हि प्रियेण धाम्नेत्येतद्धविर्मात्रमुद्दिश्य विहितम्। न च प्रकृतावनुयाजार्थस्य द्रव्यस्य तदासादनम्। उपभृत एव तदिति ॥ २७ ॥

## उत्तरं वाऽपरकालत्वात् ॥ २८ ॥

उत्तरं वा गृह्यते। कुत एतत्। अपरकालत्वात्। अपरकालो हि तस्य विनियोग इति। एवं प्राप्ते पुनर्वाशब्देन व्यावर्त्यते। वा पूर्वं गृह्यते। उपभोगत्वात्। प्रकृतावपि ह्यपरकालीनेन सता पूर्वकालतैव उपभुक्ता। अतः प्रकृतिवत्पूर्वकालतैवेति ॥ २८ ॥

## प्रतिप्रस्थाता च ॥ २९॥

पृषदाज्यं गृह्णाति ॥ २९ ॥

## न वा ॥ ३० ॥

"अथ यदि प्रतिप्रस्थातुः पृषदाज्यं भवति" इति विकल्पेन श्रवणात् ॥ ३० ॥

## प्रणीतापत्नीसन्नहनाग्निमन्थनाश्रुतप्रत्याश्रुतप्रैषयजमानवाचनहोतृषदनवरणप्राशित्राङ्गुलिपर्वाञ्जनात्रान्तरेडाभागापराग्न्यवभृथान्न प्रतिप्रस्थाता ॥ ३१ ॥

प्रतिप्रस्थाता न करोति प्रणीतादीन्। प्रणीतास्तावद्विभवात्। विभवन्ति ह्यध्वर्युणा कृताः प्रतिप्रस्थातुरपि। पत्नीसन्नहनं कृतत्वात्। अग्निमन्थनं तु शास्त्रात्–आश्रुतप्रत्याश्रुते च, प्रैषाः यजेत्येवमादयः। वाचनं यजमानस्य। वाचनस्य का प्राप्तिः। पृषदाज्य-

स्कन्दने चतुस्त्रिंशद्धोमे इति केचित्। तत्र हि व्याहृतिहोमे वाचनं विहितम्। नेत्यपरे। एकैकस्या एव होमे तद्विहितमिति। "एकैकां यथाकालं हुत्वा यज्ञस्य दोह इति वाचयति" इत्युक्तत्वात्। कस्तर्ह्यत्र समाधिः। सपांशुकेषु यजमानवाचनं विहितम्। तदनुकरणात्प्रतिप्रस्थातुरपि मा भूदिति प्रतिषिध्यते। प्राशित्रं वचनात्। अङ्गुलिपर्वाञ्जनं कृतत्वात्। अवान्तरेडाभागाश्च कृतत्वादेव। अपराग्निहोमो वचनात्। "अथाध्वर्युरेव प्रतिपरेत्य पत्नीः संयाजयत्युपास्त एव प्रतिप्रस्थाता" इति वचनात्। अवभृथोऽपि वचनादेव न भवतीति॥३१॥

कृतानुकरोऽन्यत्र दक्षिणस्याम्॥ ३२ ॥

"कृतानुकर एव प्रतिप्रस्थाता" इति वचनात्॥ ३२॥

वाजिने निषिच्य ॥ ३३ ॥

इति पञ्चमाध्याये चतुर्थी कण्डिका।

उभयोः करीराण्यावपति शमीपलाशमिश्राणि ॥ १ ॥

तयोरुभयोरेव (पयस्ययोः) करीराण्यावपति। तथा तयोरुभयोरेव शमीपलाशान्यावपति। उभयोस्तुल्यत्वात् न मिश्रणं फलानाम्। प्रयोजनं अन्तरायेऽपि ओप्यन्त एव। तत्रस्थाभिघाराच्च पूर्वमावापः। वाजिने निषिच्य करीराण्यावपति। एतानि च संस्कारकाणि। न प्रदेयानि। अतः प्रदेयधर्मा न भवन्ति॥ १॥

मेषमिथुनं च ॥ २ ॥

आवपतीत्यनुवर्त्तते। यश्चायमावापस्तदुद्वासनं पात्र्यां प्राप्तं, वचनात्पयस्ययोः क्रियते॥ २॥

मारुत्यां मेषम्॥ ३ ॥

पारिशेष्याद्वारुण्यां मेषीम्। अस्य च मेषमिथुनस्य पौरोडाशिकविध्यन्तेन केचित्कपालेषु श्रपणमिच्छन्ति। तदयुक्तम्। पिष्टकृतानां हि उण्डेरकादीनां कुम्भ्यां श्रपणं प्रसिद्धम्। यथा पुरोडाशानां कपालेषु, चरूणां च स्थाल्यामिति। यथाप्रसिद्धि च श्रपणादौ मन्त्रवन्नियमादिविधानम्। अतश्च कुम्भ्योर्मेषमिथुनश्रपणम्। तयो-

श्चाकपालकार्योपपत्तेश्चरोरिवोपकल्पनमिति । उदकमपि तत्रोपसर्जनीकार्यस्य निर्वृत्तत्वादन्यदेव भवति । प्रदेयधर्मास्तु प्रदेयत्वान्मेषमिथुनस्य सम्भवन्त्येव । कथं प्रदेयतेति चेत् । "सोऽन्यतरेणावदानेन सह मेषमवदधाति" इति । प्रदानायैव चावधीयते । तथा च लिङ्गम् "एष वै प्रत्यक्षं वरुणस्य पशुर्यन्मेष" इति । वरुणसम्बन्धान्मेषस्य प्रदेयतेति ॥ ३ ॥

सर्वाणि हवींष्युत्तरस्यामासादयति मारुतीं सहाज्यां प्रतिप्रस्थाता दक्षिणस्याम् ॥ ४ ॥

सर्वग्रहणं करम्भपात्रार्थमिति केचित् । तदनुपपन्नम् । दक्षिणेऽग्नौ तेषां होमः । तत्रैवासादनं युक्तरूपमिति । सर्वग्रहणं किमर्थमिति चेत् । सह विधाने सति विभागार्थम् । मारुतीव्यतिरेकेण सर्वाण्युत्तरस्यां वेद्याम्, मारुती तु सहाज्या दक्षिणस्यामासाद्यत इति । एवं च सति मारुत्याः पयस्यायाः प्रतिप्रस्थातुरेव कर्तृत्वं, मेष्याश्च । एवं च सति यथास्वं प्राणदानमिति ॥ ४ ॥

सम्मार्जनाय प्रेषिते ऽसंमृष्टे प्रतिप्रस्थाता पत्नीमानेष्यन्नाह केन चरसीति ॥ ५ ॥

"असंमृष्टमेव भवति संप्रेषितमथ प्रतिप्रस्थाता प्रतिपरैति स पत्नीमुदानेष्यन्पृच्छति केन चरसि" इति ॥ ५ ॥

सꣳस्तुतानाचष्टे ॥ ६ ॥

ये संस्तुताः सङ्गता भर्तृव्यतिरेकेण तानाचष्टे ॥ ६ ॥

तृणानि वोद्गृह्णाति प्रतिसꣳस्तुतम् ॥ ७ ॥

अनाख्यातमहितं ज्ञातिभ्य इति श्रुतेः ॥ ८ ॥

आख्याते प्रघासिन इत्येनां वाचयति नयन् ॥ ९ ॥

आख्यानोत्तरकालं "प्रघासिन" इत्यमुं मन्त्रं वाचयति पत्नीम् । अत एव मन्त्रवर्णात्करम्भपात्रेषु मरुतां देवतात्वं गम्यते "प्रघासिनो हवामहे मरुतश्च रिशादस" इति । वाक्यशेषाच्च "यथा पुरोऽनु-

वाक्यैवमेषैतयैवैनानेतेभ्यः पात्रेभ्यो ह्वयति" इति ॥ ७ ॥ ८ ॥ ९ ॥

करम्भपात्राणि जुहोति शूर्पेण मूर्द्धनि कृत्वा दक्षिणेऽग्नौ प्रत्यङ्मुखी जायापती वा दक्षिणेनाहृत्य तीर्थेन पूर्वेण वेदिमपरेण वा यद्ग्राम इति ॥ १० ॥

करम्भपात्राणि ( यवपिष्टमयानि पात्राणि ) शूर्पेण पत्नी जुहोति दक्षिणेऽग्नौ ( दक्षिणवेदिस्थे आहवनीये ) प्रत्यङ्मुखी "यद्ग्रामे" इत्यनेन मन्त्रेण । ( करम्भपात्राणि ) मूर्द्धनि कृत्वा गच्छति । (१)दक्षिणेनाहरणं ब्रह्मयजमानयोश्चाग्नेश्चान्तरेण, तीर्थेन प्रविश्य, पूर्वेण वेदिमपरेण वा एत्य यथोक्तं जुहोति । जायापती वा जुहुतः । तदा च यजमानोऽन्वारम्भं करोति(२) ॥ १० ॥

---

(१)दक्षिणेनाहरणं विवृणोति—ब्रह्मयजमानयोरिति । ब्रह्मयजमानयोरुत्तरतः अग्नेर्दक्षिणेन पत्नी गच्छति, तां नयन् प्रतिप्रस्थाता तु ब्रह्मयजमानयोर्दक्षिणेनैव गच्छति । तस्य तदपेक्षया बहिरङ्गत्वेन तयोरग्नेश्च मध्ये गमनायोग्यत्वात् । ततो द्वावपि उभयोराहवनीययोः पूर्वतो गत्वा तीर्थेन चात्वालोत्करयोर्मध्येन उत्तरवेदिं प्रविश्य चात्वालोत्तरवेद्योर्मध्येन उत्तरवेदेः पूर्वतो गत्वा वा तीर्थेन प्रविश्योत्तरवेदेः पश्चिमतो गत्वा वा दक्षिणोत्तरवेद्योरन्तरालेन दक्षिणाहवनीयपूर्वदेशे आगच्छत इत्यर्थः । तत्र प्रत्यङ्मुखी पत्नी स्थित्वा जुहोति ।

( २ ) अत्रापस्तम्बः 'अन्तरा वेदी गत्वा यजमानः पत्नी चोत्तरेण वोत्तरां वेदिमैषीके शूर्पे करम्भपात्राण्योप्य शीर्षन्नाधिनिधाय पुरस्तात्प्रत्यञ्चौ तिष्ठन्तौ दक्षिणाग्नौ शूर्पेण जुहुतः मोषूण इन्द्रेति यजमानः पुरोऽनुवाक्यामन्वाह यद्ग्राम इत्युभौ याज्यामक्रन्कर्म कर्मकृत इति प्रतिपरायतो ऽपि वा ऽध्वर्युः प्रतिप्रस्थाता वा जुहुयादध्यग्रेण दक्षिणमग्निं पुरस्तात्प्रत्यञ्चाववतिष्ठेते शूर्पे शिरसोरवधाय मोषूण इन्द्रेति जपति यजमान उत्तरतस्तिष्ठन् यद्ग्रामे यदरण्ये इति जुहुतः शूर्पेण करम्भपात्राण्यक्रन्कर्म कर्मकृत इति व्युत्क्रामतः' इति ।

मोषूण इति यजमानो जपति ॥ ११ ॥

अक्रन्कर्मेत्येनां वाचयति प्रतिनयन् ॥ १२ ॥

प्रतिशब्दप्रयोगात्तेनैव मार्गेण(१)पत्नीं नयन् "अक्रन्कर्म" इति वाचयति ॥ ११ ॥ १२ ॥

वैकृतावसरे प्राकृतानुवृत्त्यर्थमाह ।

आगते सम्मार्जनाद्याज्यभागाभ्याम् ॥ १३ ॥

आगते प्रतिप्रस्थातरि संमार्जनाद्याज्यभागान्तं कर्म क्रियते ॥ १३ ॥

स्रुक्पाणिरास्ते प्रतिप्रस्थाता ॥ १४

तत ऊर्ध्वं स्रुक्पाणिरास्ते प्रतिप्रस्थाता ॥ १४ ॥

हविर्भिश्चरति ॥ १५

अध्वर्युः ॥ १५ ॥

पयस्याप्रचरणकाले मेषौ व्यतिहरतः ॥ १६ ॥

"स यो मेषो भवति मारुत्यां तं वारुण्यामवदधाति, या मेषी भवति वारुण्यां तां मारुत्यामवदधाति" इति वचनात् ॥ १६ ॥

अन्यतरेणावदानेन सह मेषम् ॥ १७ ॥

अन्यतरेण पयस्याऽवदानेन सह मेषमवदधातीति ॥ १७ ॥

---

(१) दक्षिणाहवनीयदेशाद्दक्षिणोत्तरवेद्योरन्तरालमार्गेण उत्तरवेदेः पूर्वतो गत्वा चात्वालोत्तरवेदिमध्येनोत्तरवेदिं प्रविश्य चात्वालोत्करयोर्मध्येन निष्क्रम्य वा उत्तरवेदेः पश्चिमत उत्तरवेदिं प्रविश्य चात्वालोत्करयोर्मध्येन निष्क्रम्य वा द्वयोरप्याहवनीययोः पूर्वतो गत्वा पत्नीं ब्रह्माग्न्योर्मध्येन यजमानस्यच दक्षिणतो नयति। स्वयंतु प्रतिप्रस्थाता अग्नेर्यजमानस्य ब्रह्मणश्च दक्षिणत एव गच्छति। बहिरङ्गत्वात्। होमार्थे गमने पत्न्या हविर्ग्राहित्वेन हविषश्च यजमानापेक्षयाऽन्तरङ्गत्वेन अग्नियजमानयोर्मध्येन गमनम्। परावर्तनेतु तदभावेन स्वरूपतो यजमानापेक्षया बहिरङ्गत्वेन च यजमानाद्बहिरेव गमनमिति विशेषः।

सव्येन स्रुचौ गृहीत्वा प्रतिप्रस्थातुर्वासो दक्षिणेन मरुद्भ्योऽनुवाचयति ॥ १८ ॥

"सव्ये पाणावध्वर्युः स्रुचौ कृत्वा दक्षिणेन प्रतिप्रस्थातुर्वासो-ऽन्वारभ्याह मरुद्भ्योऽनुब्रूहि" इति श्रुतत्वात् (१) ॥ १८ ॥

वारुणीवदवदानम् ॥ १९ ॥

मारुत्याः पयस्यायाः प्रतिप्रस्थाता करोति ॥ १९ ॥

हविर्भिश्चरित उभौ स्विष्टकृत्प्रभृति ॥ २० ॥

हविर्भिश्चरित इति 'कायेन प्रचर्य' इत्येतदुक्तं भवति । उभावेव स्विष्टकृत्प्रभृति कुर्वाते सर्वम् ॥ २० ॥

इडामवदाय प्रतिप्रस्थात्रे प्रयच्छति ॥ २१ ॥

तत्र प्रतिप्रस्थाता मारुत्याः ॥ २२ ॥

द्विरवद्यति ॥ २१ ॥ २२ ॥

स्रुचौ व्यूहतोऽध्वर्यू २३ ॥

अध्वर्युग्रहणं यजमानव्युदासार्थम् ॥ २३ ॥

समासिच्य वाजिनभक्षः ॥ २४ ॥

समासिच्य (एकत्र कृत्वा) वाजिनशेषौ, भक्षः कर्त्तव्यः (२) ॥२४॥

अध्वर्युविकारात्प्रतिप्रस्थाता भक्षेषु ॥ २५ ॥

अध्वर्युकर्म कुर्वन्नध्वर्युविकार इत्युच्यते । अतश्च कर्मनिमित्त-त्वाद्भक्षेष्वपि भवति ॥ २५ ॥

---

(१) वारुणपयस्यायागानन्तरं यजतिदेशस्थित एवाध्वर्युः वामे पाणौ स्रुचौ कृत्वा दक्षिणेन पाणिना प्रतिप्रस्थातुः स्कन्धस्थि-तैकप्रान्तस्य प्रसारितवस्त्रस्यापरं प्रान्तमन्वारभ्य 'मरुद्भ्योऽनुब्रूहि' इति होतारं प्रेषयेदित्यर्थः ।

(२) तथा चापस्तम्बः 'उभौ वाजिनाभ्यां प्रचरतः शेषौ सम-वनीयोत्तरे विहारे पूर्ववद्भक्षयन्ति' इति ।

मैत्रावरुणश्च होत्रध्वर्युविकारात् ॥ २६ ॥

यत्र मैत्रावरुणो विद्यते तत्र तस्यापि भक्षो भवति । कुत एतत् । होत्रध्वर्यू विकरोति । होतारं हि पुरोऽनुवाक्याऽनुवचनेन विकरोति, प्रैषेण चाध्वर्युम् । "मैत्रावरुणः प्रेष्यति चानुचाह" इति वचनात् । अतः सोऽपि तन्निमित्तैर्भक्षैर्युज्यते इति ॥ २६ ॥

समिष्टयजूꣳषि तूष्णीं दक्षिणस्याम् ॥ २७ ॥

वेद्यां भवन्तीति ॥ २७ ॥

( अवभृथेष्टिः )

वारुणीनिष्काषेणावभृथम् ॥ २८ ॥

'कर्तुम् अपः प्रतियन्ति'इति वाक्यशेषः । (१) निष्काषस्य करणत्वेन निर्देशात्पुरोडाशो निवर्त्तते ॥ २८ ॥

तूष्णीमेत्याभ्यवेत्य मज्जयत्यवभृथेति ॥ २९ ॥

तूष्णीमेत्येति सामगानप्रतिषेधः । अभ्यवेत्य च तूष्णीमिति ( नमोवरुणायेति ) अपोऽवक्रमणवाचनप्रतिषेधः । मज्जयति निष्काषस्थालीम् "अवभृथ" इत्यनेन मन्त्रेण ॥ २९ ॥

जायापती स्नातोऽमज्जन्तौ ॥ ३० ॥

(२)अमज्जन्तावेव स्नानमाचरतः ॥ ३० ॥

---

( १ ) पयस्यापचनकाले तापवशादधःस्थालीतललग्नः पयस्याशेषः निष्काष उच्यते । 'अथास्यै वारुण्यै पयस्यायै क्षामकर्षमिश्रमादाय' इति श्रुतेः । पात्रे संसक्तः कृष्यते विश्लिष्यते इति कर्षः, क्षामश्चासौ कर्षश्चेति क्षामकर्षः, स्थालीतललग्नः पयस्याशेष इति तदर्थः । अत्र च नाम्ना सौमिकादवभृथाद्धर्मप्राप्तिरतः सोमवदत्र सर्वं कर्तव्यम् । तेन प्रथमं चात्वालसमीपे एव "उरुꣳ हि"इति वाचनम् । ततो निष्काषाज्यस्थालीस्रुक्समिद्बर्हिःशृतावदानस्फ्यपरिधानवस्त्राद्युपयोक्ष्यमाणमादाय चात्वालोत्करावन्तरेण निष्क्रम्योदकसमीपं गच्छन्ति ।

( २ ) मज्जनप्रतिषेधेऽपि केनचित् पात्रेण अञ्जलिना वा जलमुद्धृत्य शिरः क्षालयत एवेति देवयाज्ञिकः ।

अन्योन्यस्य पृष्ठे धावतः ॥ ३१ ॥

धावु गतिशुद्ध्योः । शोधयतः प्रक्षालयत इत्यर्थः ॥ ३१ ॥

अन्ये वाससी परिदधाते ॥ ३२ ॥

जायापती ॥ ३२ ॥

पूर्वे दद्यादधिकृतेभ्यो यस्मा इच्छेत् ॥ ३३ ॥

पूर्वे वाससी दद्यादधिकृतेभ्य ऋत्विग्भ्यो यस्मा एवेच्छा भवति । "स यस्मै कामयेत तस्मै दद्यात्" इति वचनात् ॥ ३३ ॥

(१)यथेतमेत्याहवनीये समिदाधानं देवाना॰ँसमिदसीति ।३४।

यथेतमिति तूष्णीमेवेत्येतदुक्तं भवति । तथा चामहीयजपप्रतिषेधः । आहवनीये समिदाधानं "देवाना॰ँ समिदसि" इत्यनेन मन्त्रेण ॥ ३४ ॥

पत्नी च गार्हपत्ये तूष्णीम् ॥ ३५ ॥

समिधमादधातीति वाक्यशेषः ॥ ३५ ॥

धेनुर्दक्षिणा,ऽश्वः, षड्वा, दश वा ॥ ३६ ॥

(२) धेन्वादीनां विकल्पः ॥ ३६ ॥

इति पञ्चमाध्याये पञ्चमी काण्डिका ।

( साकमेधाख्यं तृतीयं पर्व )

कार्त्तिक्या॰ँ साकमेधा द्व्यहम् ॥ १ ॥

कार्तिकीति कार्त्तिकपौर्णमास्युच्यते । स च चतुर्मासोपलक्षितः कालोऽभिधीयते "अथ यदेष एतैश्चतुर्थे मासि यजते"इति । तथा च सूत्रान्तरम्-"पञ्चम्यां पौर्णमास्यां साकमेधा" इति । साकमेधा

---

(१) यथागतमेत्य चात्वालोत्करावन्तरेण तूष्णीमेव एत्य गृहमागत्याहवनीये "देवाना॰ँ समित्"इति मन्त्रेण समिधमादधातीति सूत्रार्थः ।

(२) सवत्सा दोग्ध्री गौर्धेनुर्वा, अश्वो वा, षड् गावो वा, द्वादश गावो वा इति चत्वारो विकल्पाः ।

इति च कर्मणो नामधेयम्। तदवयवभेदापेक्षया बहुवचनम्। नाम च व्यवहारार्थम् "मासं साकमेधैः" इति। द्व्यहमित्यवाच्यम्। उत्तरसूत्रादेव तत्प्राप्तेः "प्रातर्हुत्वा ऽहुत्वा वा" इति। वाच्यं वा। पूर्वेद्युः कर्त्तव्यस्यापि साकमेधसंज्ञा यथा स्यात्। इतरथा हि पौर्णमास्यामेव कर्त्तव्यस्य साकमेधसंज्ञा स्यात्। तन्माभूदिति द्व्यहग्रहणम्॥१॥

( आनीकवतीष्टिः )

**पूर्वेद्युः पूर्वाह्णेऽग्नये ऽनीकवते पुरोडाशः ॥ २ ॥**

पूर्वस्मिन्नहनि चतुर्दश्याम् अनीकवद्गुणविशिष्टायाग्नये पुरोडाशः। पुरोडाशग्रहणं च यजतिप्रतिपत्त्यर्थम्। इतरथा ह्याहुतिरप्याशङ्क्येत ॥ २ ॥

( सांतपनीयेष्टिः )

**मरुद्भ्यः सान्तपनेभ्यो मध्यन्दिने चरुः ॥ ३ ॥**

अल्पत्वाच्च कालस्य प्रधानमात्रं तत्र (१) ॥ ३ ॥

**समिष्टयजुरन्तं भवति ॥ ४ ॥**

सान्तपनीयं कर्म। कुत एतत्। "सैव स्तीर्णा वेदिर्भवति या मरुद्भ्यः सान्तपनेभ्य" इति गृहमेधीये वचनात् ॥ ४ ॥

**बर्हिरनुप्रहरणवर्जं वा ॥ ५ ॥**

अथ वा बर्हिर्मात्रमेव न प्रह्रियते। येन प्रतिपत्त्युत्कर्षे पदार्थानामुत्कर्षो न न्याय्यः, तस्माद् बर्हिर्मात्रमेवोत्कृष्यते। एवमपि सति गृहमेध्यन्ते संस्थासंयुक्तपदार्थविधानात् "सान्तपनीयाꣳ संस्थाप्य" इति ब्राह्मणतर्पणं विधीयते। तेनैव च कर्मापवर्गः। एवं च सति बर्हिः, ब्राह्मणतर्प्पणप्रैषः, ब्राह्मणतर्पणं, कर्मापवर्गो चेति पदार्थचतुष्टयमेवमुत्कृष्यते इति सम्प्रदायः।

अपरे तु "सैव स्तीर्णा वेदिर्भवति" इत्यनेन सर्वमेवोत्कर्षयन्ति। तथा "सान्तपनीयाꣳ संस्थाप्य" इत्येतदनुरूपतरं भवतीति।

अन्ये च पुनर्वचनसामर्थ्याद् बर्हिर्मात्रमेवोत्कर्षयन्ति। सान्तप-

(१) अथवा मध्यन्दिनशब्देन त्रिमुहूर्तात्मककालस्योक्तत्वात् सकलस्याप्यनुष्ठानम् इति देवयाज्ञिकः।

नीयासंस्था च बर्हिःप्रहरणेनैवाभिवीयत इति । स चायं पक्षः श्रेयस्करतर इवाभाति ॥ ५ ॥

[ गृहमेधीयेष्टिः ]

इध्मस्थाने शकलपरिधिं निधाय मरुद्भ्यो गृहमेधिभ्यः सायं चरुः पयसि ॥ ६ ॥

स्थानशब्दः कार्यवाची । कार्यं हि दृश्यते शकलानां ज्वालनम् । स्थाने निधायेति च प्रकृतिलिङ्गसंयोगात्प्राकृतमेव निधानम् । अस्ति हि प्रकृतौ "अपरेण प्रणीताःस्फ्यं निदधातीध्माबर्हिश्च" इति प्रकृतिलिङ्गम् । एवं च स्थानमपि लभ्यते । तच्च निधानं पक्षे प्रेषितेन कर्त्तव्यम् । तत्र वजूः प्रोक्षितोऽङ्गभावमुपयाति । तत्प्रोक्षणेन च ब्रह्मा प्रणीताद्यपकृष्यत इति ।

गृहमेधिगुणविशिष्टेभ्यो मरुद्भ्यः सायमपराह्णे चरुः कर्त्तव्यः । सायंशब्देन चापराह्णो लक्ष्यते । एवं हि श्रूयते "अथ मरुद्भ्यो गृहमेधिभ्यो ऽपराह्णे चरुः" इति । स च पयसि श्रप्यते ॥ ६ ॥

( चरुश्रपणसाधनपयसि न सर्वे सान्नाय्यधर्माः किंतु वाचनिका एव )

सान्नाय्यवत् ॥ ७ ॥

तच्च पयः सान्नाय्यधर्मवद्भवति । कुत एतत् । श्रुतेः । "शाखया वत्सानपाकृत्य पवित्रवति सन्दोह्य तं चरुँ श्रपयति" इति । अपि च "मेधो वै पयो मेधास्तण्डुला" इति तण्डुलैस्समुच्चारणात्प्राधान्यमवगम्यते । तथा चरुं प्रकृत्य श्रूयते "तस्य द्वय्यावृत्" इति । द्विप्रकारा क्रिया औषधक्रिया सान्नाय्यक्रिया चेति ॥ ७ ॥

एवं प्राप्ते इदमाह—

तूष्णीं वा ॥ ८ ॥

वाशब्दः पक्षं व्यावर्त्तयति । अथ वा न सान्नाय्यधर्मवत्तत्पयो भवति । किं कारणम् । अप्रदेयत्वात् । कथमप्रदेयत्वम् । उपसर्जनभावात् । उपसर्जनत्वं च अधिकरणविभक्त्या निर्देशात् 'पयसि श्रपयति' इति ॥ ८ ॥

एकचोदनाच्च ॥ ९ ॥

एका ह्येयं चोदना "मरुद्भ्यो गृहमेधिभ्यश्चरुः" इति । एका च चोदना नोभे विकर्तुमर्हतीति । अतश्चासान्नाय्ये सान्नाय्यधर्मा वाचनिकाः "शाखया वत्सानपाकृत्य" इत्येवमादयः । अत एव च मन्त्रोऽपि न प्रवर्त्तते । वत्सापाकरणमात्रस्य चोदितत्वात् । तथा च शाखान्तरे दर्शनम् "अयजुषा वत्सानपाकृत्य" इति । दर्शनं चैतन्न वचनम् । अप्रधानत्वात् ।

वत्सानपाकृत्येति बहुवचनोपदेशात् केचिद्यावत्स्वं दोहमिच्छन्ति । तथा च "यदि बहुरोदनः स्यात्" इत्युपपद्यते । गोबहुत्वे हि ओदनस्य बहुत्वं भवतीति । तत् पुनरयुक्तम् । बहुवचनोपदेशात्त्रय एवापाक्रियन्ते । ओदनबहुत्वं च तिसृणामपि गवां सम्भवत्येव । पयसो बहुत्वात् । तस्मात्त्रयाणामपाकरणम् । न च पयसोऽधिश्रयणमत्र । "पवित्रवति सन्दोह्य" इत्येतावन्मात्रश्रवणात् ॥ ९ ॥

श्रपयित्वाऽभिघार्योद्वास्य शरावयोरुद्धरति पात्र्योर्वा ॥ १० ॥

श्रपणाभिघारणे अनूद्येते (१)पिशीलकविधानार्थम् । केचित्पिशीलकोपस्तरणनिषेधार्थमाहुः । तदनुपपन्नम् । न ह्यस्यान्वयप्राप्तस्य निषेधकं वचनमस्ति । "शरावयोरुद्धरति पात्र्योर्वा" इति विकल्पः । "अथ द्वे पिशीले वा पात्र्यौ वा निर्णेनिजति" इति वचनात् । निर्णेजनं श्रुतावनूद्यते । सूत्रकारेणान्वयप्राप्तत्वान्नोपनिबद्धम् । निर्णेजनं च सम्मार्ग उच्यते । प्रकृतौ हि दृष्टं सम्मार्गं प्रकृत्य "पात्राणि निर्णेनिजति" इति । तच्च गृहमेधीपिशीलकस्यैव भवति, न सौविष्टकृतस्य । शेषकार्यार्थत्वादप्रयोजकत्वं हि तस्य । एवं च सति पश्चावपि ह्यङ्गानामभिघारणासादनालम्भा न भवन्ति ॥ १० ॥

आसेचने मध्ये कृत्वा सर्पिरासिञ्चत्याज्यार्थम् ॥ ११ ॥

ओदनस्य मध्ये सर्पिरासिञ्चत्याज्यकार्याय । आज्यकार्यं च आज्यभागाभिनिर्वृत्तिः ॥ ११ ॥

यावदुक्तमतः ॥ १२ ॥

अत ऊर्ध्वं यावदुक्तम्, अधस्ताद्यावदुक्तमिति केचित् । तदयुक्-

(१) पिशीलकः शराव उच्यते ।

म । प्रमाणाभावात् । तस्मादतःशब्दो हेत्वर्थे । अतो यावदुक्तम्— येनान्वयप्राप्तावप्याज्यभागौ विधीयेते । अत आज्यभागविधानेन यावदारादुपकारकं तत्सर्वमत्र न भवति ॥ १२ ॥

स्तरणयजुषा वेदिमभिमृश्य तूष्णीं वा कृतत्वात्परिधिपरिधानम् ॥ १३ ॥

पुनः संस्कारशङ्कया स्तरणयजुषेत्युच्यते । अत इदमाह तूष्णीं वा कृतत्वादिति । कृतत्वात्संस्कारस्य तूष्णीमेवाभिमर्शनं कर्त्तव्यम् । ततः परिधिपरिधानं भवति । पूर्वतरं चान्वयोक्त्याऽऽहवनीयकल्पनमिति ॥ १३ ॥

शकलान्याधाय मत्योद्धृतान्नासादयति ॥ १४ ॥

मतिग्रहणाच्च इध्मसंख्या न भवति । उद्धृतावोदनावासादयति । तत्र गृहमेध्योदने आज्यमोदनश्च द्वयमपि प्रयोजकम् । आसादनमन्त्रश्चातो विपरिणम्यते "प्रियाभ्यां धामभ्याम्" इति । सौविष्टकृते त्वाज्यमेव प्रयोजकम् । ओदनस्य च ध्रुवास्थानत्वात् "घृताच्यस्योदनो नाम्ना" इति प्रयोगः । आलम्भश्चाज्ययोर्दक्षिणस्य चौदनस्य ॥ १४ ॥

स्रुक्स्रुवं च सम्मार्ष्ट्यनुद्वास्य वा सम्मार्जनम् ॥ १५ ॥

चोदनाव्यावृत्तेरनुद्वास्यैव सम्मार्जनम् ॥ १५ ॥

आज्यभागाभ्यां चरत्याग्नेयं दक्षिणात् सौम्यमुत्तरात् ॥ १६ ॥

गृहमेधिस्विष्टकृतौ चाज्यभागवत्समावदानौ ॥ १७ ॥

आज्यभागवदिति दक्षिणादेकः, अपर उत्तरात । समावदानाविति उभयोर्द्यवदानं नैकप्रत्यवायं स्विष्टकृत इति ॥ १६ ॥ १७ ॥

अप्रत्यभिघारणं च ॥ १८ ॥

प्रत्यभिघारणं च क्षताभ्यङ्गो न भवति । सौविष्टकृते तु द्विरभिघारणमिति सम्प्रदायः । यच्चोक्तम् "उपरिष्टादाज्यस्याभिघारयति" इति, सोऽनुवादो यथाप्राप्तस्य ॥ १८ ॥

अनुद्धृत्य वा सहितमाज्यमधिश्रयति ॥ १९ ॥

वाशब्दो विकल्पार्थः । अनुदूधृत्य पिशीलकयोः स्थालीपक्षोऽय-मुच्यते । 'सहितमाज्यमधिश्रयति' इति आहवनीयश्राप्यर्थमुच्यते । "त-देव ( तदानीमेव ) प्रतिवेशमाज्यमधिश्रयति" इति वचनात् । अत्र च स्थाली ध्रुवार्थे वर्त्तते । तेनाज्यनिर्वापकाले तत्सम्मार्गः क्रियते ॥१९॥

उद्वास्योभयमासादयति ॥ २० ॥

स्थालीमोदनं च तस्मिन्नेवावसरे इति ॥ २० ॥

न प्राशित्रमिडान्तं भवति ॥ २१ ॥

"अथेडामेवावद्यति न प्राशित्रम्" इति वचनात् ॥ २१ ॥

पूर्वे मार्जनमुपहूय ॥ २२ ॥

पूर्वे पक्षे उपहूय मार्जनं, ततो भक्षणम् ॥ २२ ॥

प्राश्नन्ति युक्ताः ॥ २३ ॥

युक्तग्रहणं यजमानव्युदासार्थम् ॥ २३ ॥

यजमानगृह्या हविरुच्छिष्टाशा ऋत्विजो ब्रा-ह्मणाश्चान्ये बहुश्चेत् ॥ २४ ॥

बहुश्चेदोदनो हविरुच्छिष्टाशा उपनीताः ॥ २४ ॥

अरिक्ताᳬ स्थालीं निदधाति ॥ २५ ॥

"अथैतामनिरशितां ( शेषसहितां ) कुम्भीमपिधाय निदधति" इति वचनात् । अपिधानं च ( सूत्रकारेण ) सामर्थ्यप्राप्तत्वान्नोप-निबद्धम् ॥ २५ ॥

सान्तपनीयाᳬ सᳬस्थाप्य ॥ २६ ॥

संस्था च सम्प्रदाये पदार्थचतुष्टयेन । केषांचिद् बर्हिर्होममा-त्रेणैवेति । बर्हिश्च सान्तपनीयासक्तम् । तत्प्रतिपत्त्या च समाप्ति-र्भवत्येवेति ॥ २६ ॥

प्रातर्वा शेषभावात् ॥ २७ ॥

प्रातरेव वा परिसमाप्तिः कर्त्तव्या, न इदानीम् । कुत एतत् । शेषभावात् । गृहमेधीयशेषो हि विद्यते दर्विहोमः । तस्मात्प्रातः

परिसमाप्तिः ॥ २७ ॥

मातृभिर्वत्सान्त्सꣳसृज्य (१)निवान्यावत्सं बध्नाति ॥ २८ ॥

तस्यां रात्रौ ॥ २८ ॥

यवाग्वाऽग्निहोत्रहोमः ॥ २९ ॥

प्रातर्हुत्वाऽहुत्वा वा स्थाल्या दर्व्याऽऽदत्ते पूर्णादर्वीति ॥ ३० ॥

अग्निहोत्रं च हुत्वा अहुत्वा वा दर्विहोमः कर्त्तव्यः । तत्र गृहमेधयाज्यभागापूर्वस्य विद्यमानत्वात् आज्यभागयोरननुष्ठानम्॥२९॥३०॥

ऋषभमाह्वयितवै ब्रूयात् ॥ ३१ ॥

ऋषभो यथा रौति तथाऽऽह्वानं कुरुतेत्येतदुक्तं भवति ॥ ३१ ॥

रुते जुहोति ॥ ३२ ॥

ऋषभस्य ॥ ३२ ॥

अव्याहरति ब्रह्मा जुहुधीत्याह ॥ ३३ ॥

ऋषभे ( अव्याहरति ) ॥ ३३ ॥

देहि म इति जुहोत्यृषभो दक्षिणा ॥ ३४ ॥

गृहमेधविशेषत्वेऽपि वाचनिकी दक्षिणा । ज्योतिष्टोमोदवसानीयावत् । "यस्य रुते जुहोति तमेव ऋषभं पूर्णदर्वाय दक्षिणां ददाति" इति वचनात् ॥ ३४ ॥

इति पञ्चमाध्याये षष्ठी कण्डिका ।

---

१ स्वयं नष्टवत्सा परकीयेण वत्सेन या गौर्दुह्यते सा निवान्येत्युच्यते ।

( क्रीडिनीष्टिः समानतन्त्रा आदित्येष्टिश्च )

मरुद्भ्यः क्रीडिभ्यः सप्तकपालः ॥ १ ॥

अदित्यै चरुरन्यत्रापि ॥ २ ॥

यत्रादितिर्देवता श्रूयते तत्र चरुर्भवति। यथा राजसूये "अदित्यै महिष्या" इति।

यद्येवं "आदित्यै चरुस्तृतीया" इति चरुग्रहणं न कर्त्तव्यम्।

अतोऽन्यथा व्याख्यायते। यत्र आदित्य इति चरुः श्रूयते तत्र न ज्ञायते किमदितिर्देवता उतादित्य इति, तत्रादितेर्देवतात्वमुच्यते। यथा सौत्रामण्याम् "आदित्यश्चरुरन्ते च" इति। एवं चेत् "अदित्यै महिष्या" इति चरुर्न लभ्यते। लभ्यते वाक्योपलक्षणार्थतया "अथ श्वोभूते महिष्यै गृहान्परेत्यादित्यं चरुं निर्वपति" इति ॥ २ ॥

"अयमेवावाङ्प्राण आदित्येष्टिः" इति पृथगङ्गस्तुत्या, "आदित्येष्टिः" इति च व्यपदेशात्पृथक्तन्त्रत्वे प्राप्ते आह—

समानबर्हिषी वा कालकर्मैकत्वात् ॥ ३ ॥

समानतन्त्रे भवतः। कुतः। कालकर्मैकत्वात्। नात्र कालो भेदको, न च कर्मभेद इति। अतः समानतन्त्रे भवत इति ॥ ३ ॥

( महाहविरिष्टिः )

महाहविरुदवसाय निर्मथ्य ॥ ४ ॥

कर्त्तव्यमिति वाक्यशेषः। "उदवसायेव ह्येतेन यजते" इति वचनात्। एतेनेति पर्वणा। पर्वव्यपदेशश्च महाहविषः ॥ ४ ॥

पूर्वेद्युर्वा ॥ ५ ॥

न चैतदेवम्। पूर्वेद्युरेवोदवसानमन्थने कर्त्तव्ये। किं कारणम्। अनीकवत्यादि हि त्रैयम्बकान्तं साकमेधाख्यमेकं पर्वेति। तथोच्यते "उदवसायेव ह्येतेन यजते" इति। तस्मात्पूर्वेद्युरेव(१) ॥ ५ ॥

---

(१) अस्मिन्पक्षे केचिदेवमाहुः—समारोह्योदवसाय गार्हपत्यं निर्मथ्य साकमेधार्थमेव साधारणावग्नी विहृत्यानीकवतीयादतिप्रणयनम्। तावन्मात्रार्थत्वाच्च तदन्ते तस्यातिप्रणीतस्यैव लौकिकत्वम्। ततश्च पित्र्यादिषु पूर्वो मध्याहवनीय एवोपस्थानादौ

नित्येभ्यो ऽधिकान्यैन्द्राग्नो,

माहेन्द्रश्चरु, र्वैश्वकर्मण एककपालः ॥ ६ ॥

नित्येभ्यः पञ्चभ्योऽधिकान्यैन्द्राग्नादीनि भवन्ति ॥ ६ ॥

उत्तरवेद्याग्निप्रणयनमन्थनपृषदाज्यं च वरुणप्रघासवत् ॥७॥

उत्तरवेद्यग्निप्रणयनपृषदाज्यानि वरुणप्रघासवदिति युक्तम्। मन्थनं तु तत्रापि वैश्वदेविकं, चोदकेनेहापि। तत्किमिति वरुणप्रघासवदित्युच्यते। उभयत्राधिकहविःसम्बन्धविधानार्थतयेत्यदोषः। अन्तरायेऽपि ह्यधिकानां मन्थनं यथा स्यादिति ॥ ७ ॥

ऋषभो दक्षिणा ॥ ८ ॥

इति पञ्चमाध्याये सप्तमी कण्डिका।

( पित्र्येष्टिः )

पितृयज्ञ उपाꣳशु चरणम् ॥ १ ॥

पितृयज्ञ इति कर्मणो नामधेयम्। पितृसम्बन्धी यज्ञ इति। "पितरो वैत आसंस्तस्मात्पितृयज्ञो नाम" इति। तत्रोपांशुचरणम्। चरणशब्दात्सर्वमुपांशु भवति न देवतामात्रम् ॥ १ ॥

पुरस्तादुपचारः ॥ २ ॥

अन्वयादुत्तरोपचारत्वे प्राप्ते यदनियतस्थानं तस्य पुरस्तादुपचारः। अनेन च दिग्विपर्ययो ज्ञाप्यते। पित्र्यत्वात् दक्षिणामुखे कर्मणि प्राची उत्तरावदिति पुरस्तादुपचार इत्युक्तम् ॥ २ ॥

ब्रह्मयजमानयोश्च ॥ ३ ॥

इदमन्वयप्राप्तमेवोच्यते। ब्रह्मयजमानयोश्च पुरस्तादुपचारः ॥३॥

पूर्ववद्वा ॥ ४ ॥

वाशब्दो विकल्पार्थः। पूर्ववच्छब्देन च दिग्विपर्ययवशादपरा दिक् गृह्यते, न दक्षिणा। तथाचोपरिष्टाद्वक्ष्यति ( सूत्रकारः ) "प-

---

तस्य साधारणत्वात्। अयमपि पक्षो युक्ततर एव दृश्यते। अन्तेऽन्योः समारोपविधानात् "अग्नी समारोह" इति देवयाज्ञिकः।

श्चात्परीतो ब्रह्मयजमानौ पुरस्तादग्नीत्" इति । "इत्थाद्यजमानश्च ब्रह्मा च पश्चात्परीतः पुरस्तादग्नीत्" इति श्रुतेः । तथा "हविर्भिश्चरिष्यन्तः प्रतिविपर्यन्ति" इति (सूत्रम्) । तथा "एतैर्हविर्भिः प्रचरिष्यन्त इत्थाद्यमानश्च ब्रह्मा च पुरस्तात्परीतः पश्चादग्नीत्" इति (श्रुतिः) । अतः पूर्ववच्छब्देनापरा दिक्परिगृह्यते ॥ ४ ॥

अपत्नीकः ॥ ५ ॥

पत्नीकर्तृकपदार्थनिवृत्तिरित्येके । यत्पत्न्या कर्त्तव्यं तदत्र न भवति आज्यावेक्षणादि ।

पत्नीप्रतिषेधात्प्रतिनिधिः करोतीत्यपरे । पदार्थः प्रधानभूतः कर्त्ता गुणभूतः । पदार्थप्राधान्याच्च कर्त्रन्तरमाक्षिप्यते । तस्मात्प्रतिनिधिना कर्त्तव्यम् । तत् पुनर्विचारयितव्यम् । प्रतिनिधिरभावे प्रवर्त्तते । यत्र पुनः शास्त्रतः पर्युदासस्तत्र कथं प्रतिनिधिः प्रवर्त्तते । यं प्रति निधीयते स एव पर्युदस्त इति ॥ ५ ॥

दक्षिणाग्निराहवनीयवत् ॥ ६ ॥

वस्तुपदेशात्स्वकार्यापरित्यागेन दक्षिणाग्निराहवनीयकार्ये विधीयते ॥ ६ ॥

पूर्वेणाहवनीयं प्रणीताः परिहरति ॥ ७ ॥ अर्थवच्च ॥ ८ ॥

न्यायसूत्रे एते । गार्हपत्याहवनीययोरन्तरा गमनप्रतिषेधात् ॥ ७ ॥ ८ ॥

पितृभ्यः सोमवद्भ्यः षट्कपालः ॥ ९ ॥

सोमवद्गुणविशिष्टेभ्यः षट्कपालो भवति ॥ ९ ॥

सोमाय वा पितृमते ॥ १० ॥

विकल्पेन श्रवणात् ॥ १० ॥

पितृभ्यो बर्हिषद्भ्यो धानाः ॥ ११ ॥

भवन्ति ॥ ११ ॥

पितृभ्योऽग्निष्वात्तेभ्यो मन्थः ॥ १२ ॥

भवतीति वाक्यशेषः ॥ १२ ॥

चतुर्वा ग्रहणम् ॥ १३ ॥

पित्र्यत्वात्सकृद्ग्रहणे प्राप्ते अन्वयाच्चतुर्ग्रहणम् ॥ १३॥

गार्हपत्यस्य पुरस्तादवहननपेषणे ॥ १४ ॥

"उत्तरेणान्वाहार्यपचनं दक्षिणा तिष्ठन्नवहन्ति" इति वचनात्॥१४॥

दक्षिणार्द्धे कपालोपधानम् ॥ १५ ॥

"दक्षिणार्द्धे गार्हपत्यस्य षट्कपालान्युपदधाति" इति वचनात् ॥ १५ ॥

धानाभर्जनं दक्षिणाग्नौ ॥ १६ ॥

"अन्वाहार्यपचने धानाः कुर्वन्ति" इति वचनात् ॥ १६ ॥

श्रपणपेषणविपर्यासेऽपि धर्माः ॥ १७ ॥

धानानां श्रपणपेषणयोर्विपर्यासः । तस्मिंश्च सति तद्धर्मा न भवन्तीत्याशङ्कानिवृत्त्यर्थं सूत्रम् ॥ १७ ॥

अभिमृश्यार्धाः पिष्ट्वा निवान्यादुग्धे सकृन्माथित एकशलाकया(१)मन्थः ॥ १८ ॥

अभिमर्शनं शृताशृतसंवित्त्यर्थं प्रकृतावुक्तम् "तमभिमृशति शृतं वेदानि" इति । धानाऽभिमर्शनं न शक्यते कर्तुमित्यतोऽभिमर्शनं पुरोडाशविषयं द्रष्टव्यम् । अभिमृश्य पुरोडाशमर्धाः धानाः पिष्ट्वा निवान्यादुग्धे सकृदुपमाथिते एकशलाकया मन्थो भवति ॥ १८ ॥

अग्रहणं मन्थस्य ततोऽर्धाः पिंषन्तीति श्रुतेः ॥ १९ ॥

"अथ पितृभ्यो बर्हिषद्भ्योऽन्वाहार्यपचने धानाः कुर्वन्ति ततोऽर्धाः पिंषन्ति" इति श्रुतत्वात् ॥ १९ ॥

ग्रहणं वा चोदितत्वात् ॥ २० ॥

वाशब्दः पक्षव्यावृत्तौ । ग्रहणं वा मन्थस्य भवति । चोद्यते हि "अथ पितृभ्योऽग्निष्वात्तेभ्यो निवान्यायै दुग्धे सकृदुपमथित एक-

(१) मन्थ आलुवालिताः सक्तव उच्यन्ते ।

शलाकया मन्थो भवति। (१) अवहननश्रपणयोः सहसंयोगात् "ततो-ऽर्धाः पिंषन्ति" इत्युक्तम् ॥ २० ॥

दक्षिणेन दक्षिणाग्निं परिवृतमुदग्द्वारं, तन्मध्ये वेदिं करोत्यवान्तरदिक्स्रक्तिमाध्यान्ते ॥ २१ ॥

दक्षिणाग्नेर्दक्षिणत उदग्द्वारपरिवृतमध्ये वेदिं करोति अवान्तर-दिक्स्रक्तिम। दिक्स्रक्ति हि चतुरस्रं पित्र्ये कर्माणि स्मर्यते। अत उच्यते अवान्तरदिक्स्रक्तिमिति ॥ २१ ॥

दक्षिणाग्निं मध्ये ऽस्याः करोति ॥ २२ ॥

ततो ऽन्वाहार्याधिश्रयणम्। मध्यशब्दो गर्भवाची ॥ २२ ॥

प्रणीताऽनुहरणं ब्रह्मयजमानौ चानुगच्छतः ॥ २३ ॥

न्यायसूत्रमेतत्। अतो ऽन्यत्राप्यग्निप्रणयने प्रणीताऽनुहरणादि भवत्येव ॥ २३ ॥

वैकृतावसरे प्राकृतानुवृत्त्यर्थमिदमुच्यते–

स्फ्यादानादि करोति ॥ २४ ॥

यज्ञोपवीत्याज्यग्रहणे ॥ २५ ॥

पित्र्यत्वात्प्राचीनावीतिप्राप्ताविदमुच्यते ॥ २५ ॥

द्विर्वोपभृति ॥ २६ ॥

ग्रहीतव्यम्। "द्विरुपभृति गृह्णीयात्" इति विधाय प्रतिप्रसव-उच्यते "तद्द्वष्टावेवकृत्व उपभृति गृह्णीयात्" इति। अतो विकल्पः॥२६॥

---

(१) ततः–बार्हिषद्भ्यो गृहीताभ्योऽन्वाहार्यपचने भृष्टाभ्यो धानाभ्यः सकाशात् अर्धा धाना आदाय मन्थार्थं चूर्णयन्ति इति बार्हिषद्भ्यो गृहीतानामेव धानानामर्धात् मन्थार्थं पेषणस्य विधानात् अभिष्वात्तोद्देशेन मन्थार्थं चतुर्मुष्टिकयवग्रहणं न कर्तव्यमिति पूर्वपक्षिणोऽभिप्रायस्य निरासार्थमाह अवहननश्रपणयोरिति। अवहनन-श्रपणयोः सहैव क्रियमाणत्वात् तावत्पर्यन्तं न विभागः अनन्तरं मन्थसंपत्तये प्रकृतितः प्राप्तस्य समविभागस्यानुवादः 'अर्धाः पिंषन्ति'-इति। नत्वेतावता चोदकप्राप्तस्य पृथग्विहितहविषोऽर्थे ग्रहणस्याभावो भवितुमर्हति। तस्मान्मन्थार्थं ग्रहणं कर्तव्यमेवेति।

प्रागग्रन्थि बर्हिः ॥ २७ ॥

कर्त्तव्यमिति वाक्यशेषः ॥ २७ ॥

त्रिस्र७ंस्य यूनं चाग्रे गृहीत्वा त्रिस्तृणन्नग्निं पर्येति ॥२८॥

बर्हिर्विस्रंस्य यूनं चोभयमग्रे गृहीत्वा वेदिं स्तृणन् त्रिः पर्येति । तथा च स्तरणं कर्त्तव्यं यथोत्तरतोऽपवर्गो भवति ॥ २८ ॥

प्रस्तरमात्र७ं शिष्ट्वा तावत्प्रतिपर्येति ॥ २९ ॥

प्रस्तरमात्रं परिशिष्य त्रिरेव प्रतिपर्येति ॥ २९ ॥

त७ं स्तृणात्यविधृतिम् ॥ ३० ॥

तमिति प्रस्तरनिर्देशः ॥ ३० ॥

प्राक्स७ंस्थ७ं हविरासादनम् ॥ ३१ ॥

अवरोक्तमिति प्राप्तौ दिग्विपर्ययप्रज्ञप्तये प्राक्संस्थतोच्यते ॥ ३१ ॥

सामिधेनीप्रैषाद्याऽऽज्यभागाभ्यां यज्ञोपवीतिनः सर्वे ॥३२॥

भवन्तीति वाक्यशेषः ॥ ३२ ॥

पश्चात्परीतौ ब्रह्मयजमानौ पुरस्तादग्नीत् ॥ ३३ ॥

यदि पुरस्तादुपविष्टौ । नोचेत् स्थितावेवेति ॥ ३३ ॥

आश्राव्य सीद होतरित्येव ब्रूयात् ॥ ३४ ॥

एवकारकरणान्न होतृवरणम् । पितृयज्ञे "न होतारं वृणीते नार्षेयम्" इति वचनात् ॥ ३४ ॥

अपबर्हिषः प्रयाजा अनुयाजाश्च ॥ ३५ ॥

"प्रजा वै बर्हिर्नेत्प्रजाः पितृषु दधानि" इति निषेधात् ॥ ३५ ॥

असमानयनं वा बर्हिःसंयोगात् ॥ ३६ ॥

समानयनं चात्र न भवति । बर्हिःसंयोगात् "चतुर्थे प्रयाजे समानयति बर्हिषि" इति । वा समानयनं भवति । चतुर्थसंयोगात् "चतुर्थे प्रयाजे समानयति" इति । बर्हिषीत्यनुवाद एव । बर्हिःप्रयाजस्य चतुर्थत्वात् । तथाऽन्यत्रापि "चतुर्थे चतुर्थे समानयति" इत्युक्तम् ॥३६॥

( इति पञ्चमाध्याये अष्टमी कण्डिका । )

प्रत्यगतीत्य जुहोति ॥ १ ॥

एवमेव हि प्रयाजेषु श्रूयते "प्रसूतोऽध्वर्युः स्रुचावादाय प्रत्यङ्ङतिक्रामत्यनिक्रम्याश्राव्याह समिधो यजेति सोऽपबर्हिषश्चतुरः प्रयाजान्यजति"। तथाऽनुयाजेष्वपि "स्रुचावादाय प्रत्यङ्ङतिक्रामत्यतिक्रम्याश्राव्याह देवान्यजेति सोऽपबर्हिषौ द्वावनुयाजौ यजति"। एवं चोभयत्र चोदकानुग्रह एव भवति। प्रकृतौ हि दक्षिणां दिशं गत्वा होमः कृतः, इहापि दिग्विपर्ययेण प्रतीच्येव दक्षिणेति। प्रधाने तु चोदकप्राप्तस्य प्रत्यग्गमनस्य प्रत्यक्षः प्रतिषेधः "प्रत्यनक्त्यवदानानि नातिक्रामति" इति ॥ १ ॥

हविर्भिश्चारिष्यन्तः प्रतिविपर्य्यन्ति ॥ २ ॥

प्रतिशब्दप्रयोगाद्यदि सामिधेनीप्रैषादौ विपर्ययः कृतः। अथ पश्चादुपविष्टौ ततो व्यवस्थितावेवेति ॥ २ ॥

सर्वेभ्योऽवद्यति यथापूर्वं सोमवर्ज्यो मध्यात्सकृत्सकृत्सहावदधाति ॥ ३ ॥

एवं हि श्रूयते "स उपस्तृणीत आज्यमथास्य पुरोडाशस्यावद्यति स तेनैव सह धानानां तेन सह मन्थस्य तत्सकृदवदधाति" इति॥३॥

द्विरभिघारणमनतिक्रमणं च ॥ ४ ॥

वाचनिकम् ॥ ४ ॥

सोमवर्ज्य एवायं प्रकारो माभूदित्यत आह—

सोमाय वा पितृमते ॥ ५ ॥

इति ॥ ५ ॥

एवं बर्हिषद्भ्य उत्तरतो धाना—मन्थ—पुरोडाशानाम् ॥ ६ ॥

एवंशब्देन सर्वमतिदिश्यते ॥ ६ ॥

अग्निष्वात्तेभ्यो दक्षिणतो—मन्थ—पुरोडाशधानानाम् ॥ ७ ॥

अत्रैवंशब्दोऽनुवर्त्तते ॥ ७ ॥

पुरस्तादग्नये कव्यवाहनाय यथापूर्वं स स्विष्टकृत ॥ ८ ॥

कव्यवाहनगुणविधानेन गुणान्तरस्य निवृत्तिर्मा भूदिति 'स स्विष्टकृत्' इत्युच्यते । अस्तु तथेति चेत् । न । अदृष्टार्थत्वात् । हविषामवदानप्रदेशविधानं शाखान्तरात् । अत्र सोमवद्यागे यद्धानामन्थयोरवदानग्रहणं तद् गुणमात्रम् । न हि तयोस्तत्र देवतासम्बन्धः । अवदानमात्रश्रवणात् । उत्पत्तौ हि षट्कपालावरुद्धः सोमवद्याग उत्पन्नः । तेन धानानां मन्थस्य च न समुच्चयः शक्यते वक्तुम् । न हि विकल्पो, न वैपरीत्येन बाध्यबाधकभावः । एवमेव गुणभावेन श्रवणमिति । प्रयोजनं तद्ग्रहणे ( धाना-मन्थयोरवदानाग्रहणे ) यागस्यानावृत्तिरिति । एवं बर्हिषद्यागे अग्निष्वात्तयागे च ॥ ८ ॥

ओ३ँ स्वधेत्यस्तु स्वधेति वा ऽऽश्रुतप्रत्याश्रुते, स्वधा नम इति वषट्कारः ॥ ९ ॥

एतच्च प्रधानेषु कव्यवाहने च विकल्पेन श्रूयते । "एतैर्हविर्भिः प्रचरिष्यन्त" इति प्रकृत्य "तदुताश्रावयन्त्योँ३ँस्वधेति, अस्तुस्वधेति प्रत्याश्रवणँ३ँ, स्वधा नम इति वषट्कार" इत्याह । तस्मात्त सर्वत्रैतत् ॥ ९ ॥

मन्थमुपहूय होताऽध्वर्युर्ब्रह्माऽग्नीदवघ्रायं निदधाति ॥१०॥

एवमेव हि श्रूयते । "तदेते प्रयच्छन्ति" इति नोपनिबद्धं, सामर्थ्यपरिप्राप्तत्वात् ॥ १० ॥

प्राशित्रमवदायेडां वा सर्वे प्राश्नन्ति वा ॥ ११ ॥

प्राशित्रेडादि मन्थोपहवेन सह विकल्प्यते । इडां च सर्वे प्राश्नन्ति वा । अवजिघ्रन्ति वा । एवमेव हि श्रूयते "यथात्वेवेतरस्य यज्ञस्येडाप्राशित्रं समवद्यन्त्येवमेवैतस्यापि समवद्येयुस्तामुपहूयावैवजिघ्रन्ति न प्राश्नन्ति" इति प्रतिषिध्य प्रतिप्रसवः "प्राशितव्यं त्वेव वयं मन्यामहे" इति ॥ ११ ॥

वेदिं त्रिः परिषिञ्चत्युदपात्रेणाध्वर्युर्यजमानो वा ॥१२॥

वेति विकल्पः ॥ १२ ॥

स्रक्तिषु पित्र्यवनेजनं परिषिच्य परिषिच्य पूर्ववदु-
त्तरापरस्यां प्रथमम् ॥ १३ ॥

स्रक्तिषु कोणेषु पितृसम्बद्धमवनेजनम् । पूर्ववदिति 'असाववने-निक्ष्व' इति । उत्तरापरस्यां स्रक्त्यां (वायव्यां) प्रथमम् । तच्च परिषि-च्यपरिषिच्य क्रियते ॥ १३ ॥

सव्ये समवदाय सर्वेभ्यो यथाऽवनिक्तं पिण्डान्ददा-
त्यसावेतत्त इति ॥ १४ ॥

सव्ये पाणौ कृत्वा सर्वेभ्यो हविर्भ्यः समवदाय येषु प्रदेशेष्ववने-नेजनं कृतं तत्र पिण्डान्ददाति "असावेतत्ते" इत्यनेन मन्त्रेण ॥१४॥

उत्तरपूर्वस्यां पाणी निमृष्टे ऽत्र पितर इति ॥ १५ ॥

उत्तरपूर्वस्यां स्रक्त्यां पाणिनिमार्जनं करोति "अत्र पितर" इत्य-नेन मन्त्रेण ॥ १५ ॥

यज्ञोपवीतिनः सर्वे निष्क्रम्योदञ्चोऽक्षन्नमीमद-
न्तेत्याहवनीयमुपतिष्ठन्ते द्वाभ्याम् ॥ १६ ॥

"ते सर्व एव यज्ञोपवीतिनो भूत्वा" इति श्रुतत्वात् । उदग्द्वार-त्वात् परिवृतस्य 'उदञ्च' इत्यवाच्यम् प्राप्तत्वादेव । पृष्ठतोऽनवलो-कनार्थमुच्यते । अथ वा उपस्थानसम्बन्धः 'उदञ्च उपतिष्ठन्ते' इति । द्वाभ्यामिति न वक्तव्यं, परादिना पूर्वान्तप्राप्तेः । वक्तव्यं वा । प्रकरणाभावात् । प्रकरणस्थानां हि स न्यायः ॥ १६ ॥

मनोन्वाहुवामह इति गार्हपत्यं तिसृभिः ॥ १७ ॥

'उपतिष्ठन्ते' इत्यनुवर्त्तते ॥ १७ ॥

प्राचीनावीती प्रविश्यामीमदन्तेति दाता जपति ॥ १८ ॥

"अथ यतरो ददाति स पुनः प्राचीनावीती भूत्वाऽभिप्रपद्य जपति" इति श्रुतत्वात् । दातुः प्राचीनावीतित्वग्रहणेन सर्वे प्राचीनावीतिनो भवन्ति । येनोपरिष्टाद्यज्ञोपवीतित्वविधानम् "ते सर्व एव यज्ञोपवीतिनो भूत्वाऽनुयाजाभ्यां प्रचरिष्यन्त" इति ॥ १८ ॥

अवनेज्य पूर्ववत्प्रदक्षिणम् ॥ १९ ॥

परिषेकः प्रदक्षिणम् ॥ १९ ॥

नीवीं विस्रꣳस्य नमो व इत्यञ्जलिं करोति षड्वा नमस्कारान् ॥ २० ॥

प्रत्यञ्जलिकरणम् । "षट्कृत्वो नमस्करोति" इति वचनात् ॥२०॥

गृहान्नः पितरो दत्तेति च ॥ २१ ॥

जपति ॥ २१ ॥

ब्रह्मामन्त्रणादि प्राक् स्रुग्व्यूहनात्प्रयाजवत् ॥ २२ ॥

"ब्रह्मन्प्रस्थास्यामि" इति ब्रह्मामन्त्रणम् । तस्य यदादौ तदादि । उल्मुकसमासादीत्यर्थः । उल्मुकसमासस्य ह्यनुयाजाङ्गत्वात् । प्रयाजवदिति च यज्ञोपवीतं देशगमनं च ब्रह्मयजमानयोर्वर्तिनाऽतिदिश्यते । प्राक् स्रुग्व्यूहनात् ॥ २२ ॥

यज्ञोपवीतिविपर्ययम् ॥ २३ ॥

स्रुग्व्यूहनादारभ्य पित्र्यत्वात्कर्मणः प्राचीनावीतित्वमेव भवति । न देशविपर्ययोऽविहितत्वात् ॥ २३ ॥

न प्रस्तरमादत्ते ॥ २४ ॥

"नाध्वर्युः प्रस्तरꣳ समुल्लुम्पति" इति ॥ २४ ॥

अनुप्रहरेत्युक्ते न किञ्चनानुप्रहरति ॥ २५ ॥

"अथाग्नीदाहानुप्रहरेति स न किञ्चनानुप्रहरति" इति वचनात् ॥२५॥

तूष्णीमात्मानꣳ सꣳस्पृशति ॥ २६ ॥

उपस्पृश्य परिधीन्नानुप्रहरति ॥ २७ ॥

उपस्पर्शनं च केचिन्मन्त्रेण कुर्वन्ति । तत्पुनर्न । वचनाभावात् । अपूर्वत्वाच्च ॥ २६ ॥ २७ ॥

शंय्वन्तं भवति ॥ २८ ॥

"पितृकर्म शंय्वन्तं भवति" इति वचनात् ॥ २८ ॥

बर्हिः परिध्यग्नौ प्रास्यति ॥ २९ ॥

"अथैतद् बर्हिरनुसमस्यति परिधींश्च" इति श्रवणात् ॥ २९ ॥

हविरुच्छिष्टं च ॥ ३० ॥

अनुसमस्यति ( अग्नौ ) ॥ ३० ॥

अप्सु प्राश्यं वा ॥ ३१ ॥

अप्सु (प्रास्यति), (हविरुच्छिष्टं) प्राश्यं वेति विकल्पः । अस्य चागन्तुत्वादन्ते निवेशः ॥ ३१ ॥

इति पञ्चमाध्याये नवमी कण्डिका ।

( त्रैयम्बकहोमाः )

त्रैयम्बकान्निर्वपति रौद्रानेककपालान् यावन्तो यजमानगृह्या एकाधिकान् ॥ १ ॥

त्रैयम्बकानिति नामधेयम् "तस्मात्त्रैयम्बका नाम" इति । रुद्र-देवत्यान् एककपालान् यावन्तो यजमानगृह्या एकाधिकान् । गृह्य-शब्दोऽत्र प्रजाविषयः । करम्भपात्रवत्तुल्यश्रुतित्वात् । "एकेनातिरिक्ता भवन्ति" इत्येकाधिकान् ॥ १ ॥

चतुरो वा ॥ २ ॥

चतुःसंख्या वा द्विप्रजैकप्रजाप्रजानाम् ॥ २ ॥

उदङ्मुखः सर्वम् ॥ ३ ॥

"उदङ्ङासीन एतान् गृह्णाति" इत्युक्त्वा अवोचत् "स तत एवोपोत्थायोदङ् तिष्ठन्नवहन्त्युदीच्यौ दृषदुपले उपदधात्युत्तरार्द्धे गार्हपत्यस्य कपालान्युपदधाति" इति ॥ ३ ॥

देशांश्च ॥ ४ ॥

आखूत्कर-चतुष्पथ-स्थाणुवृक्ष-वंशादीन् उदङ् प्रतिपद्यते ॥४॥

जुहोतयोऽवषट्कारान् ॥ ५ ॥

जुहोतय इति कुतः । मन्त्रे स्वाहाकाराम्नानात् । "अन्वाहार्य-

पचनादुल्मुकमादायोदङ् परेत्य जुहोति" इति श्रवणात्। तथा "पलाशस्य पलाशेन मध्यमेन जुहोति" इति श्रवणात्। "चतुष्पथे जुहोति" इति च। अतो जुहोतय इत्युक्तम्। यद्येवमवषट्कारानिति किमुच्यते। "यत्त्रैयम्बकैरयजन्त" इति च यजत्याशङ्कानिवृत्त्यर्थम्। जुहोतिशब्दश्च वषट्काराधिकेऽपि दृश्यते "उभयतो यूपं प्रत्यङ्मुखौ जुहुत" इति। होममन्त्रश्च। अस्तु तथेति चेत्। न। तत्राहत्य विधानात् "तौ वै वषट्कृतौ सन्तौ मन्त्रेण हूयेते" इति। तस्माद-वषट्कारानित्युच्यते ॥ ५ ॥

अक्तान्त्वा ॥ ६ ॥

"ते वा अक्ताः स्युः" इत्युक्त्वा "त उ वा अनक्ता एव स्युः" इति विकल्पः ॥ ६ ॥

पात्र्यां कृत्वा दक्षिणाग्न्युल्मुकमादाय चतुष्पथे पलाशपत्रमध्यमेन होमः ॥ ७ ॥

"तान्सार्द्धं पात्र्या९ँ समुद्वास्य" इति वचनात् एका पात्री। दक्षिणाग्न्युल्मुकादानस्य दृष्टार्थत्वात् तत्रैव होमो भवति। यद्येवं "चतुष्पथे जुहोति" इति कथम्। तत्रैवोल्मुकं स्थापयित्वा हूयमाने चतुष्पथे हुतमेव भवति। द्व्यधिकरणा हि क्रियेयं श्रूयते इति। पलाशपत्राणां यन्मध्यमं तत्पलाशपत्रमध्यमम्। यद्वा पलाशपत्रं च तन्मध्यमं चेति पलाशपत्रमध्यमं तेन होमः ॥ ७ ॥

सर्वेषामवदानं सकृत्सकृदतिरिक्तवर्जम् ॥ ८ ॥

एककपालानां वाचनिकं सकृदवदानम्। "स सर्वेषामेवावद्यत्येकस्यैव नावद्यति य एषोऽतिरिक्तो भवति" इति 'अतिरिक्तवर्जम्' इत्युक्तम् ॥ ८ ॥

अक्तेषु मिश्रणम् ॥ ९ ॥

भवतीति सूत्रशेषः ॥ ९ ॥

एष त इति जुहोति ॥ १० ॥

अतिरिक्तमाखूत्कर उपकिरत्येष त इति ॥ ११ ॥

उपकिरणं च तिरःकरणम् । "तिर इव वै गर्भास्तिर इवैतद्यदु-पकीर्णम्" इति । आखूत्करस्य केचिदाहवनीयधर्मान् कुर्वन्ति । तदयुक्तम् । होमाश्रवणात् । उपाकिरणं ह्यत्र विहितमिति ॥ १० ॥ ११ ॥

आगम्यावरुद्र मदीमहीति जपन्ति ॥ १२ ॥

अग्निं त्रिः परियन्ति पितृवत्सव्योरूनाघ्नाना-स्त्र्यम्बकमिति ॥ १३ ॥

बहुवचनोपदेशात्सर्वेषां परिगमनम् । पितृवदिति वचनादपसव्यम् ॥ १२ ॥ १३ ॥

देववद्वा ॥ १४ ॥

प्रदक्षिणम् ॥ १४ ॥

एतेनैव दक्षिणानाघ्नानाः ॥ १५ ॥

एतेनैव मन्त्रेण दक्षिणानाघ्नानाः परियन्ति ॥ १५ ॥

कुमार्यश्चोत्तरेणोभयत पतिकामा भगकामा वा ॥ १६ ॥

उत्तरेण मन्त्रेणोभयत्र देववत्पितृवच्च पतिं कामयमानाः सौभाग्यं वेति ॥ १६ ॥

रौद्रान्यजमानोऽञ्जलिनोदस्यत्यगोः प्रापणम् ॥ १७ ॥

रौद्राः पुरोडाशाः, तान् रौद्रान् पुरोडाशान् यजमानोऽञ्जलिनोत्क्षिपति । अगोः प्रापणम्—यथा गौर्नोप्राप्नुयादिति ॥ १७ ॥

पततः—

प्रतिगृह्णात्येनानशक्य उपस्पर्शनम् ॥ १८ ॥

अशक्ये ग्रहणे पतितानामुपस्पर्शनम् ॥ १८ ॥

मूतयोः कृत्वा वेणुयष्ट्यां कुपे वाऽऽसज्योभयतः स्थाणुवृक्षवंशवल्मीकानामन्यतमस्मिन्नु-त्क्षेपणवदासजत्येतत्त इति ॥ १९ ॥

(१)मूतयोः कृत्वा वेणुयष्ट्यां वा (२)कुपे वाऽऽसज्योभयतः स्थाणवादीनामन्यतमस्मिन् उत्क्षेपणवत् अगोः प्रापणम् "एतत्ते" इत्यनेन मन्त्रेणासजति । आसञ्जनं चावलगनम् । आसजाति अवलगयति॥१९॥

कृत्तिवासा इति ॥ २० ॥

मन्त्रमात्रोपदेशात् क्रियाया अनिर्दिष्टत्वात्तन्निश्चलीकरणमात्रक्रियाऽत्र द्रष्टव्या । तथा च "निष्वापयत्येवैनमेतत्स्वपन्तु हि न कञ्चन हिनस्ति" इति वाक्यशेषः ॥ २० ॥

अनपेक्षमेत्योपस्पृशन्त्यपः ॥ २१ ॥

पृष्ठतोऽनवलोकयन्त एत्य अपामुपस्पर्शनं कुर्वन्ति सर्वे । बहुवचनोपदेशात् । अत्र च अग्निपरिगमनादि कर्मापवर्गसमिदाधानान्ते कर्त्तव्यम् । आगन्तुत्वात् । तथा च वाक्यशेषः "तेऽप्रतीक्षं पुनरायन्ति पुनरेत्याप उपस्पृशन्ति" । अनपेक्षमेत्याप उपस्पृशन्तीत्यतो "रुद्रियेणेव वा एतदचारिषुः" इति भूतकालनिर्देशात् निर्वृत्तं रुद्रियं कर्मेति गम्यते। अथ वा ( अथचेत् ) पाठानुपूर्व्या अवरुद्रमदीमहीतिजपसमनन्तरं (३)क्रियेत ततश्चाचारिषुरित्येतदनुपपन्नार्थं स्यादिति ॥२१॥

इति पञ्चमाध्याये दशमी कण्डिका ।

( शुनासीरीयाख्यं चतुर्थं पर्व )

शुनासीरीयमतः ॥ १ ॥

"स यत्रैव साकमेधैर्यजते तच्छुनासीर्येण यजेत"इति वचनात् ॥१॥

---

(१) यत्र तृणमये आवपने धान्यं बध्यते तन्मूतम् ।

(२) वेणुनिर्मितभाजनद्वययुक्तो दण्डविशेषो वीवधापरपर्यायः कुपः ।

(३) अवरुद्रमदीमहीतिजपसमनन्तरं कर्मापवर्गसमिदाधानात्पूर्वं यदि अग्निपरिगमनादि उपस्पर्शनान्तं क्रियेत तदा "तेऽप्रतीक्षं पुनरेत्याप उपस्पृशन्ति" इत्यनन्तरं "रुद्रियेणेववा एतदचारिषुः" इति रौद्रकर्मणः समाप्तत्वेन श्रवणमसंगतं स्यात् । कर्मशेषस्यासंपत्तेः । तस्मात् कर्मापवर्गसमिदाधानान्ते एव अग्निपरिगमनादि उदकोपस्पर्शनान्तं कर्तव्यमित्यर्थः ।

यदेच्छेत् ॥ २ ॥

यदा वा इच्छा भवति । "तस्माद्यदैव कदाचैतेन यजेत" इति श्रुतेः । "उत्तरेषु वा ज्यौत्स्नेषु" इति च शाखान्तरात् ॥ २ ॥

पौर्णमासधर्मा बर्हिर्वर्जम् ॥ ३ ॥

"अथैतान्येव पञ्च हवी ँषि भवन्ति" इत्यनेन प्राप्तानां निवृत्त्यर्थमुच्यते "पौर्णमासधर्मा बर्हिर्वर्जम्" इति । तच्चैतच्छाखान्तरवचनाद् द्रष्टव्यम् । अपरे तु वर्णयन्ति—"तस्यावृन्नोपकिरन्त्युत्तरवेदिं न गृह्णन्ति पृषदाज्यं न मन्थन्त्यग्निं पञ्च प्रयाजा भवन्ति त्रयोऽनुयाजा एकः समिष्टयजुः" इति । उत्तरवेदिपृषदाज्ययोः प्राप्त्यभावादनुवादः । एवं चेदनिषिद्धानां देशवासःप्रस्तरादीनां प्राप्तिर्भवत्येव । सूत्रकारेण च बर्हिर्वर्जे सर्वेषां निषेधः कृतः । तच्च शाखान्तरवचनादेवोपपद्यते ॥ ३ ॥

नित्येभ्योऽधिकानि शुनासीराभ्यां द्वादशकपाल इन्द्राय वा शुनासीराय ॥ ४ ॥

इति । देवताविकल्पः ॥ ४ ॥

वायव्यं पयः ॥ ५ ॥

"अथ वायव्यं पयो भवति" इति वचनात् ॥ ५ ॥

लौकिकम् ॥ ६ ॥

तच्च लौकिकं भवति धर्मरहितम् ॥ ६ ॥

कुत एतत्—

प्रतिधुक्श्रुतेः ॥ ७ ॥

प्रतिधुक्शब्देन च दुग्धमात्रं धारोष्णमभिधीयते । तथाप्याह—"गोर्वै प्रतिधुक् तस्यै शृतम्" इति । एवं च धर्मानुष्ठाने सति आज्यनिर्वापकाले दोहः प्राप्नोति श्रपणं च । तत्र प्रतिधुक्त्वं विरुध्येत इति ॥ ७ ॥

एवं प्राप्ते इदमुच्यते—

नाविरोधात् ॥ ८ ॥

न लौकिकं भवति । वैदिकमेव धर्मवद्भवति । कुत एतत् । अविरोधात् । यागकाल एव दोहः करिष्यते । धर्माः प्रधानभूताः, कालो गुणभूतः । अतो धर्मानुग्रहाय गुणभूतकालबाधेन तत्रैव धर्माः करिष्यन्ते । ये च विरुध्यन्ते ते एव न क्रियन्ते परिक्षालनश्रपणादयः । तस्मात्साधूक्तं "नाविरोधात्" इति ॥ ८ ॥

प्रकृतिदर्शनाच्च ॥ ९ ॥

यत्र प्रक्रियन्ते धर्माः सा प्रकृतिः । ऐन्द्रं पयो माहेन्द्रं पय इति तद्धिताम्तता व्यक्तता चेति । सा चेह दृश्यते वायव्यं पय इति ॥९॥

यवागूर्वा ॥ १० ॥

तण्डुलैः शिथिलपक्का यवागूरित्युच्यते । वेति विकल्पः । यवागूर्वा पयो वा भवति ॥ १० ॥

सौर्य एककपालः ॥ ११ ॥

भवतीति वाक्यशेषः ॥ ११ ॥

सीरꣳ षड्योगं दक्षिणा ॥ १२ ॥

सीरं लाङ्गलं षड्भिरनडुद्भिर्युक्तमित्यर्थः । इयं दक्षिणा ॥ १२ ॥

ओष्टारौ वा ॥ १३ ॥

वोढारौ महान्तौ बलीवर्दौ वेति विकल्पः ॥ १३ ॥

श्वेतोऽश्वः सौर्यस्य ॥ १४ ॥

दक्षिणा । सौर्ये प्रकृत्याह "तस्याश्वः श्वेतो दक्षिणा" इति १४॥

अभावे गौः ॥ १५ ॥

अश्वाभावे गौर्भवति । "यद्यश्वꣳ श्वेतं न विन्देदपि गौरेव श्वेतः स्यात्" इति ॥ १५ ॥

(१)साकमेधसमनन्तरम्, "उत्तरेषु वा ज्यौत्स्नेषु" इति शुनासीरी-

(१) साकमेधसमनन्तरमेव यजेत, कार्त्तिक्युत्तरेषु वा ज्यौत्स्नेषु शुक्लपक्षीयेषु पर्वसु मार्गशीर्ष्यादिषु पौर्णमासीषु यजेत इति काठकये अनुष्ठेयत्वेन शुनासीरीयमुक्तं निर्दिष्टम् । तत्र "शुनासीरीयमतः" इति सूत्रेण साकमेधसमनन्तरपक्ष उक्तः । "यदेच्छेत्" इत्यु-

यमुक्तम् । अन्यदपि पक्षान्तरमस्ति, तदर्थमाह—

संवत्सरेप्सोः फाल्गुन्युदृष्टे शुनासीरीयेणेष्ट्वा सोमेन पशुनेष्ट्या वा यजेत पौर्णमास्याम् ॥ १६ ॥

यो नाम चातुर्मास्ययागैरहोरात्रद्वारेण संवत्सरं व्याप्तुमिच्छति स संवत्सरेप्सुः । तथा चोक्तम् "तद्धके रात्रीरापिपयिषन्ति" इति । तस्य संवत्सरेप्सोः फाल्गुन्युदृष्टे शुनासीरीयम् । फाल्गुनपौर्णमास्याः पूर्वं यदुदृष्टं चन्द्रमसः शास्त्रतः प्रथमदर्शनं तत्फाल्गुन्युदृष्टम् । फाल्गुनावतारप्रतिपदित्यर्थः । तत्र शुनासीरीयेणेष्ट्वा सोमेन, पशुना,इष्ट्या वा पौर्णमास्यां यजते । सोमोऽग्निष्टोमः, पशुरग्नीषोमीयः, इष्टिराग्नेयीति विकल्पः ॥ १६ ॥

आवृत्तिरनीजानस्य ॥ १७ ॥

सोमपश्विष्टिभिरनीजानस्यावृत्तिर्भवति । एतदुक्तं भवति–उत्सर्गपक्षे एवैतैर्यजेतेति ॥ १७ ॥

आवृत्तौ कर्मविवेचनायाह—

फाल्गुन्युपवसथे शुनासीरीयं प्रातर्वैश्वदेवम् ॥ १८ ॥

फाल्गुन्या उपवसथः फाल्गुन्युपवसथः । उपवसथशब्देन प्राक्कालीनमहरुच्यते । चतुर्दशीत्येतदुक्तं भवति । तत्र शुनासीरीयम् । प्रातः पौर्णमास्यां वैश्वदेवमिति ॥ १८ ॥

सपाशुकान्यपि चातुर्मास्यानि सन्ति तदर्थमाह—

सपशुषु पशुतन्त्रं प्राधान्यात् ॥ १९ ॥

सपशुषु चातुर्मास्येषु एकतन्त्राभ्युपगमन्यायात्पशुतन्त्रमभ्युपेयम् । कुत एतत् । प्राधान्यात् । प्रधानशब्दो महत्त्ववाची, महत्त्वात्

---

त्तरसूत्रेण "तस्माद्यदैव" इति स्वशाखावचनासिद्धः, "उत्तरेषु वा ज्यौत्स्नेषु" इतिशाखान्तरवचनासिद्धश्च पक्षो निर्दिष्टः । इदं शाखान्तरवचनं च तस्मिन्नेव सूत्रे भाष्यकारेण निर्दिष्टमपि पुनरत्र कालद्वयसंकलनाय पक्षान्तरोपन्याससमये स्मारितम् । इदं कालद्वयमावृत्तिपक्षे एव । उत्सर्गपक्षेतु फाल्गुनशुक्लप्रतिपदि शुनासीरीयमनुष्ठेयमिति बोध्यम् ।

(एकादशप्रयाजादियुक्तत्वात्)पशुतन्त्रस्येत्यर्थः। न ह्यत्र गुणप्रधानभावः। "चातुर्मास्यैरयजन्त"इतियागाविशेषात्। तस्मात्प्रधानशब्दो महत्त्व-वाचकः। महति च तन्त्रे लघु प्रक्षेप्तुं शक्यते,न लघुनि महदिति॥१९

पूर्वेद्युर्वैश्वदेवे पाशुकम् ॥ २० ॥

कर्म भवतीति। एवमेव ह्यग्नीषोमीये दृष्टम्—"उत्तरवेदिश्छन्ना-वसति"इति। साऽपि ह्याहवनीयवदङ्गप्रधानार्था। तत्प्रकृतित्वा-च्चात्रापि तथैव भवितव्यम् ॥ २० ॥

सद्यो वा ॥ २१ ॥

वाशब्दः पक्षव्यावृत्तौ। सद्यो वा भवति। न द्व्यहकालतया। सद्यस्त्वं विकृतीनामित्येतदुक्तमेव। यत्तु पूर्वेद्युरुत्तरवेदिच्छादना-न्तमुक्तं, स सौमिको विप्रकर्षो न पाशुक इति। पशुः पदार्थमात्रं गृह्णाति, सद्यस्त्वविधानात् न सौमिकं विप्रकर्षमिति ॥ २१ ॥

वैश्वदेवः पशुः ॥ २२ ॥

वैश्वदेवे भवति ॥ २२ ॥

पशुपुरोडाशमनु हवीꣳषि निर्वपति ॥ २३ ॥

वचनसामर्थ्यात् ॥ २३ ॥

तेषाꣳ स्विष्टकृद् भूयस्त्वात् ॥ २४ ॥

तेषां हविषां सम्बन्धी यजप्रैषः स्विष्टकृद्यागो भवति। भूय-स्त्वाद् बहुत्वादित्यर्थः। बहूनां ह्यनुग्रहो युक्तो नैकस्येति ॥ २४ ॥

यथोक्तमविरुद्धम् ॥ २५ ॥

यदविरुद्धं तद्यथोक्तं च कर्त्तव्यम्। यथाऽश्ववालप्रस्तरस्य प्रस्तरता ॥ २५ ॥

हृदयशूलान्ते वपनम् ॥ २६ ॥

पुनर्वचनसामर्थ्यान्नियोगतः कर्त्तव्यम् ॥ २६ ॥

वरुणप्रघासेषु वारुणः ॥ २७ ॥

पशुः ॥ २७ ॥

महाहविषि माहेन्द्रः ॥ २८ ॥

पशुः ॥ २८ ॥

शुनासीराभ्यां चतुर्थः ॥ २९ ॥

कृतानुकरणतया प्रतिप्रस्थातुरपि पशुर्मा भूदिति चतुर्थग्रहणम् ॥ २९ ॥

पुरस्ताद्वा पर्वणः, पर्वणोऽन्ते वा ॥ ३० ॥

पशुर्भवति । "महाहविषि माहेन्द्र" इति वचनात् तस्यैव पुरस्तात्पशुरन्ते वा, न साकमेधानामिति ।

भेदेन पश्वनुष्ठाने पशुरपि पर्वशब्दवाच्य एवेत्यतस्तस्यापि पर्वदक्षिणेति सम्प्रदायः ।

नेत्यपरे । पशोर्हि स्वदक्षिणापरिप्राप्तेः । समानतन्त्रत्वे तु पर्व एव तादृगिति पर्वदक्षिणैव भवति ॥ ३० ॥

इति पञ्चमाध्याये एकादशी कण्डिका ।

श्रुत्यनुसारिणाऽऽचार्येण चातुर्मास्यान्यनुविहितानि । इदानीं श्रुतिमन्त्रपाठानुसारेण ज्योतिष्टोमः प्राप्तः । तं प्रोत्सार्य हविर्यज्ञत्वसामान्यान्मित्रविन्दाऽनुविधीयते—

( मित्रविन्देष्टिः )

मित्रविन्दा श्री—राष्ट्र—मित्रा—युष्कामस्य ॥ १ ॥

मित्रविन्देति कर्मणो नामधेयम् । अभिधायकत्वात् । श्रीराष्ट्रमित्रायुष्कामस्य । पर्यायेण च योगसिद्धिः ॥ १ ॥

दशहविः ॥ २ ॥

"सैतां दशहविषमिष्टिमपश्यत्" इति वचनात् । उपक्रमादेव तत्सिद्धेरवाच्यमेतदिति चेत् । उपहोमेष्वपि मित्रविन्दाशब्दो मा भूदिति दशग्रहणम् ॥ २ ॥

आग्नेयः, सौम्यश्चरु, र्वारुणो दशकपालश्चरुर्वा या-वो, मैत्रश्चरु, रैन्द्र एकादशकपालो, बार्हस्पत्यश्चरुः, सावित्रो द्वादशकपालोऽष्टाकपालो वा, पौष्णश्चरुः, सार-

स्वतश्चरुः, स्त्वाष्ट्रो दशकपाल एकं प्रदानम् ॥ ३ ॥

वचनादेकं प्रदानम् । याज्यानुवाक्ययोश्च ( 'हविषोऽनुवाक्या' इत्यादिना सूत्रे अग्रे पठिष्यमाणयोः ) सर्वदेवताभिधानात् ॥ ३ ॥

समस्यानुवाचनम् ॥ ४ ॥

अत्र चाविभक्तिलोपेन समासः। एवं हि पूर्वमभिहितम् "अनुवाचनप्रैषो यथादेवतममुष्मा अनुब्रूहीति"। अमुष्मा इति चतुर्थ्यन्तेनोक्तः। अपि च लुप्तसमासे सति द्वन्द्वे अजाद्यदन्तम् अल्पाच्तरमिति च पूर्वं निपतति । तत्र पाठक्रमो बाध्यते । तस्मादविभक्तिलोपेन समासः(१) ॥ ४ ॥

यजेति च ॥ ५ ॥

अविभक्तिलोपेनैव समस्यते ॥ ५ ॥

प्रैषाश्च ॥ ६ ॥

समासेन भवन्ति । अत्र च प्रैषशब्देन स्विष्टकृन्निगदाभिधानम् । निगदशब्दः स्विष्टकृति दृष्टः—"स्विष्टकृति निगदं ब्रूयात्" इति । निगदः प्रैष इति चानर्थान्तरम् । तस्मात्प्रैषाश्चेति सौविष्टकृतनिगदाभिधानम् । प्रैषाश्चेति बहुवचनं देवताभेदात् ।

अपरेऽन्यथा व्याचक्षते । प्रेषितेन यदुच्यते याज्यादौ देवताभिधानं तद् लक्षणया प्रैषशब्देनोच्यते ॥ ६ ॥

उत्तरे निगमा यथेष्टं जोषणाश्रुतेः॥ ७ ॥

उत्तराणि यानि सूक्तवाके निगमनानि तानि यथेष्टं कर्त्तव्यानि । कुत एतत् । जोषणाश्रुतेः । एवं या इष्टा देवता भवन्ति ताः सम्पश्यत्यसौ हविरजुषतासौ हविरजुषतेति । इष्टाश्च प्रातिलोम्येन याज्यायामभिधानात् "त्वष्टा रूपाणि दधती सरस्वती " इति ॥ ७ ॥

---

(१) 'अग्नये सोमाय वरुणाय मित्रायेन्द्राय बृहस्पतये सवित्रे पूष्णे सरस्वत्यै त्वष्ट्रे च अनुब्रूहि' इत्येवमनुवाचनप्रैषः, न तु 'अग्निसोमवरुणमित्रेन्द्रबृहस्पतिसवितृपूषसरस्वतीत्वष्टृभ्य' इति । एवम् 'अग्निसोमम्' इत्यादीनि द्वितीयान्तान्युच्चार्य यजेति वक्तव्यं, नतु 'अग्निसोम०त्वष्टॄन् यज' इति ।

अनुलोमा वा चोदनागुणत्वात् ॥ ८ ॥

अनुलोमा वा निगमा भवन्ति । न प्रातिलोम्येन । येन सर्वत्रैव निगमनेषूत्पत्तिचोदनाऽनुस्मर्त्तव्या । तन्मूलत्वात् । इतरथा निगमनान्येव न सम्भवन्तीति । तस्माच्चोदनापाठक्रमस्यैव सर्वत्र गुणभावः॥८॥

हौत्रमप्यत्राभिहितं, तदुच्यते—

पञ्चदश सामिधेन्यः ॥ ९ ॥

भवन्ति ॥ ९ ॥

पुष्टिमन्तावाज्यभागौ—अग्निना रयिमश्नवत् पोषमेव दिवे दिवे । यशसं वीरवत्तमम् ॥ गयस्फानो अमीवहा वसुवित्पुष्टिवर्धनः । सुमित्रः सोम नो भवेति ॥ १० ॥

हविषोऽनुवाक्या—अग्निः सोमो वरुणो मित्र इन्द्रो बृहस्पतिः सविता यः सहस्री । पूषा नो गोभिरवसा सरस्वती त्वष्टा रूपाणि समनक्तु यज्ञैरिति ॥ ११ ॥

याज्या—त्वष्टा रूपाणि ददती सरस्वती पूषा भगं सविता मे ददातु । बृहस्पतिर्ददिन्द्रो बलं मे मित्रः क्षत्रं वरुणः सोमो अग्निरिति ॥ १२ ॥

इति पञ्चमाध्याये द्वादशी कण्डिका ।

( उपहोमाः )

हुत्वा स्थाल्याः स्रुवेणोपजुहोत्यग्निरन्नादोऽन्नपतिरन्नाद्यमस्मिन्यज्ञे मयि दधातु स्वाहा, सोमो राजा राजपती राज्यमस्मिन्यज्ञे मयि दधातु स्वाहा, वरुणः सम्राट् सम्राट्पतिः साम्राज्यमस्मिन्यज्ञे मयि दधातु स्वा-

हा, मित्रः क्षत्रं क्षत्रपतिः क्षत्रमस्मिन्यज्ञे मयि दधातु स्वाहा, इन्द्रो बलं बलपतिर्बलमस्मिन्यज्ञे मयि दधातु स्वाहा, बृहस्पतिर्ब्रह्म ब्रह्मपतिर्ब्रह्मवर्चसमस्मिन्यज्ञे मयि दधातु स्वाहा, सविता राष्ट्रꣳ राष्ट्रपती राष्ट्रमस्मिन्यज्ञे मयि दधातु स्वाहा, पूषा भगं भगपतिर्भगमस्मिन्यज्ञे मयि दधातु स्वाहा, सरस्वती पुष्टिं पुष्टिपतिः पुष्टिमस्मिन्यज्ञे मयि दधातु स्वाहा, त्वष्टा रूपाणाꣳरूपकृद्रूपपती रूपेण पशूनस्मिन्यज्ञे मयि दधातु स्वाहेति ॥१॥

एवमादिभिर्मन्त्रैः प्रतिमन्त्रम् ॥ १ ॥

विराजौ संयाज्ये॥ २ ॥

संयाज्याशब्देन च स्विष्टकृद्यागस्य याज्याऽनुवाक्ये अभिधीयेते-प्रेद्धो अग्ने, इमो अग्ने इति ॥ २ ॥

सहस्रवत्यौ वा—नू नो रास्व सहस्रवत्तोकवत्पुष्टिमद्वसु । द्युमदग्ने सुवीर्यं वर्षिष्ठमनुपक्षितम् ॥ उत नो ब्रह्मन्नविष उक्थेषु देवहूतमः । शं नः शोचा मरुद्वृधोऽग्ने सहस्रसातम इति ॥ ३ ॥

नूनो रास्व सहस्रवदित्येवमादि ॥ ३ ॥

दश(गावो) दक्षिणा सहस्रं वा ॥ ४ ॥

सहस्रं वेति विकल्पः ॥ ४ ॥

इति कात्यायनसूत्रभाष्ये कर्कोपाध्यायविरचिते
पञ्चमो ऽध्यायः समाप्तः ।

# षष्ठोऽध्यायः ।

श्रुत्यनुकरणकारिणाऽऽचार्येण चातुर्मास्यान्यनुविहितानि । इदानीं श्रुतिमन्त्रपाठावसरप्राप्तो ज्योतिष्टोमः । तं प्रोत्सार्य हविर्यज्ञत्वसामान्यान्मित्रविन्दाऽनुविहिता । हविर्यज्ञत्वसामान्यादेव च इदानीं निरूढपशुबन्धोऽनुविधेयः । हविर्यज्ञत्वसामान्यं च "हविर्यज्ञविधो ह वा अन्यः पशुबन्धः सवविधोऽन्य" इति श्रुतत्वात् ।

अस्य च प्राणिसाधनकत्वसामान्यादग्नीषोमीयविध्यन्तग्राहकत्वम् । अग्नीषोमीये हि धर्माणां विशसनादीनां विहितत्वात् । इह चाविधानात् । तथा च विशसनादीनग्नीषोमीयात्प्राप्ताननुवदति—"तस्मादु पशुं संज्ञप्तं ब्रूयाच्छेतां नु मुहूर्त्तम्" इति । तथा च तत एव यूपपरिप्राप्तौ सत्यां जात्यन्तरविधानम्—"तस्मात्पालाशमेव यूपं कुर्वीत" इति । तेन निरूढपशुबन्धमूरीकृत्य अग्नीषोमीयधर्मानुकथनं क्रियते । अग्नीषोमीयधर्माणां हि सौमिकैर्धर्मैरत्यन्तव्यतिषङ्गादिह धर्मानुकथनं युक्तम् । तत्रातिदेशेन धर्मान्वक्ष्यति ।

अत्र च कैश्चित्सौत्रामणीपशुषु निरूढप्रकृतित्वमिष्यते । तत्पुनर्नातीव युक्तरूपम् । येन न हि निरूढः प्रकृतिभूतः । तेनापि ह्यग्नीषोमीयादेव धर्मा गृहीताः । न च भिक्षुको भिक्षुकाद्याचते इति । अतस्तेऽप्यग्नीषोमीयविध्यन्तग्राहका एव । न हि तेष्वानुमानिकवचनापवादत्वेन प्रत्यक्षशिष्टं वचनं नाम वा विद्यते । यथा "वैश्वदेवधर्माश्चातुर्मास्येषु," "सोमाच्चावभृथे" इति च । तस्मादग्नीषोमीयप्रकृतित्वमेव तेष्वपीति ।

अग्नीषोमीयप्रकृतित्वे च सति अन्वारम्भणीया न भवति । आरम्भनिमित्ता हि सा । न चाग्नीषोमीयस्यारम्भोऽस्ति । तेन पैतृकरिकथन्यायेन अग्नीषोमीयेऽभावादिहापि न भवति । ननु च दर्शपूर्णमासप्रकृतित्वेनान्वारम्भणीया प्राप्ता, तत्र (अग्नीषोमीये) पृथगारम्भाभावान्न क्रियते । निरूढादिषु तु पृथगारम्भस्य विद्यमानत्वादस्त्वन्वारम्भणीयेति । यथाऽन्वाहार्यो दर्शपौर्णमासप्रकृतित्वेनाग्नीषोमीये प्राप्तः

सौमिक्या दक्षिणया निवर्त्तितः। अतस्तद्विकारेषु यत्र दक्षिणाम्नानं नास्ति तत्र प्रवर्त्तते, एवमन्वारम्भणीयाऽपीति। नैतद्युक्तम्। अग्नीषोमीये हि आनत्यंशेन प्रवृत्तोऽन्वाहार्यो गवां शतेन निवर्तितः, तद्विकारेषु तु अनुवर्त्तमानः केन निवार्यते। अन्वारम्भणीया पुनर्न केन चिन्निवर्त्यते। आरम्भनिमित्तत्वात्। तदभावाच्चाग्नीषोमीयस्यानङ्गमन्वारम्भणीया। अतस्तद्विकारेष्वप्रवृत्तिरिष्यतइत्यलमतिप्रसङ्गेन।

प्रकृतमिदानीमभिधीयते।

( निरूढपशुबन्धकालः )

पशिवज्या संवत्सरे संवत्सरे प्रावृषि ॥ १ ॥

कर्त्तव्येति सूत्रशेषः। पशुना इज्या पशिवज्या। सा च प्रतिसंवत्सरं कर्त्तव्येति। तेन संवत्सरे संवत्सरे इत्युक्तम्। नित्यत्वं हि परिभाषायामुक्तमेव "दाक्षायणाग्रयणपशुषु प्रवृत्तेः" इति। अपि चाह—"तं वै संवत्सरो नानीजानमतीयात्" इति। सा च प्रावृषि। प्रावृट्शब्देन वर्षा उच्यन्ते। "तेन सुयवसे यजेत" इति श्रुतेः। सुयवसाश्च वर्षाः (१) ॥ १ ॥

आवृत्तिमुखयोर्वा ॥ २ ॥

पशिवज्या भवति, वा प्रावृषि। आवृत्तिशब्देन उदगयनदक्षिणायने उच्येते। तयोर्मुखमावृत्तिमुखम् प्रथममहस्तत्र कर्त्तव्या। न पौर्णमास्यमावास्ये अपेक्ष्येते। 'संवत्सरे संवत्सरे' इति चोक्तत्वादेकत्र क्रिया, नोभयोरपीति ॥ १ ॥

( निरूढपशुबन्धदेशः )

गृहेषु ॥ ३ ॥

देवयजनागारेऽग्नीषोमीयस्य दृष्टत्वादिहापि तन्मा भूदिति गृहेष्वित्युच्यते। "तेन गृहेषु यजेत" इति वचनात्।

अपरे त्वयमनुवाद इति मन्यन्ते। न ह्युदवसानमग्नीषोमीयार्थम्।

---

(१) स चर्तुः सर्वत्र चान्द्रमानेन ग्रहीतव्यः, तदभावे सौरः। तथाच स्मरणम्—"श्रौतस्मार्तक्रियाः सर्वाः कुर्याच्चान्द्रेषु चर्तुषु। तदलाभे तु सौरेषु" इति ॥

ज्योतिष्टोमप्रकरणे विधानात्। तादर्थ्याच्च प्रासङ्गिकमग्नीषोमीयस्य। एवं च सति न्यायसूत्रमेवैतद् गृहेष्विति।

यद्येवं समारोपोऽपि प्रकरणसमधीतत्वात् ज्योतिष्टोमार्थ एव, प्रासङ्गिकोऽग्नीषोमीये इति पश्वन्तरेषु न प्रवर्त्तते। नैतदेवम्। समारोपो ह्यग्निसंस्कारः। अग्नेश्चाङ्गप्रधानार्थता। "यदाहवनीये जुहोति" इति वचनात्। तस्मात्प्रवर्त्तते एव समारोपः। अत एव चोत्तरवेदिः सम्भाराश्च प्रवर्त्तन्ते ॥ ३ ॥

( यूपाहुतिः )

यूपाहुतिं जुहोति चतुर्गृहीतꣳस्रुवेण वोरु विष्णविति ॥४॥

"स यदि स्रुचा जुहोति चतुर्गृहीतमाज्यं गृहीत्वा जुहोति, यद्यु स्रुवेण स्रुवेणैवोपहत्य जुहोति" इति वचनाद्विकल्पः। इयं च यूपाहुतिरग्नीषोमीये यूपार्था दृष्टा(१)-"यूपं व्रश्चयन्वैष्णव्यर्चा जुहोति" इति। तत्र च ब्रह्मणा कृताकृतप्रत्यवेक्षणं कृतम्, इहापि ब्रह्मवरणोत्तरकालतैव गम्यते ॥ ४ ॥

( यूपच्छेदनार्थं गमनम् )

आज्यशेषमादाय सतक्षा गच्छति यूपम् ॥ ५ ॥

"यदाज्यं परिशिष्टं भवति" इति वचनात्। वक्ष्यत्युपरिष्टात्-"यूपान्ते वाऽग्निं मथित्वा" इति। अतश्च विकल्पोऽयम् ॥ ५ ॥

(यूपाभिमर्शनमभिमन्त्रणं वा)

अभिमृशत्यत्यन्यानिति ॥ ६ ॥

यूपमभिमृशत्यनेन मन्त्रेण ॥ ६ ॥

प्राङ्तिष्ठन्नभिमन्त्रयते वा ॥ ७ ॥

अनेनैव मन्त्रेणेति। स चायं तुल्यशास्त्रत्वाद्विकल्पः ॥ ७ ॥

( यूपस्वरूपविशेषः )

पालाशं बहुलपर्णमशुष्काग्रमूर्ध्वसकलशाखं

(१) तेन "खलेवाली यूपो भवति" इत्यत्र न भवति, लुप्तार्थत्वात्। यूपं छेत्स्यता होतव्यमिति च्छेदनार्थो होमः, न च खलेवाल्यां छेदनमस्तीति।

मध्याग्रोपनतमव्रणम् ॥ ८ ॥

निरूढे हि श्रूयते—"तस्मात्पालाशमेव यूपं कुर्वीत" इति । मध्याग्रोपनतत्वं च निरूढे एव । तत्रैव पाठात्—"अथ य एष आनत उपरिष्टादुपनतो मध्य" इति । अन्यत्रानियमः ॥ ८ ॥

अभावे खदिरबिल्वरौहितकान् ॥ ९ ॥

पलाशाभावे खदिरादयो भवन्ति ॥ ९ ॥

खदिराभावे सोम इतरान् ॥ १० ॥

ज्योतिष्टोमे खदिराभावे बैल्वान् रौहितकान्वा कुर्यात् । पालाशस्तु निरूढे एवेति सम्प्रदायः । खदिराभावे इतरानिति बहुवचनमुच्चारणार्थम्, यूपव्यक्तिभेदापेक्षं वा ॥ १० ॥

( छेदनस्थाने स्रुवेणोपस्पर्शनम् )

स्रुवेणोपस्पृशति विष्णवे त्वेति ॥ ११ ॥

दृष्टार्थत्वाद्यस्मिन्प्रदेशे च्छेदनं तत्रैवोपस्पर्शनम् ॥ ११ ॥

( प्रहृत्य यूपच्छेदनम् )

ओषध इति कुशतरुणं तिरस्कृत्य स्वधित-

इति परशुना प्रहरति ॥ १२ ॥

"ओषधे" इत्यनेन मन्त्रेण तृणमन्तर्द्धाय "स्वधिते" इत्यनेन मन्त्रेण परशुना प्रहरति ॥ १२ ॥

प्रथमशकलं निदधाति ॥ १३ ॥

कार्यार्थम् ॥ १३ ॥

अनक्षस्तम्भं वृश्चति ॥ १४ ॥

यथाऽक्षस्योपस्तम्भः स्थाणुर्न भवति तथा च्छिद्यते ॥ १४ ॥

एकजम् ॥ १५ ॥

एक एव यो जातः ॥ १५ ॥

( पततो यूपस्याभिमन्त्रणम् )

द्यां मालेखीरिति पतन्तमभिमन्त्रयते ॥ १६ ॥

यूपम् ॥ १६ ॥

न दक्षिणा पतेत् ॥ १७ ॥

स च न दक्षिणा पतेत् ॥ १७ ॥

अयं हि त्वेति शोधनम् ॥ १८ ॥

कुत एतत् । मन्त्रलिङ्गात्—"अयं हि त्वा स्वधितिस्तेतिजानः प्रणिनाय" इति ॥ १८ ॥

अभिमन्त्रणशेषो वा विशेषोपदेशात् ॥ १९ ॥

वाशब्दः पक्षव्यावृत्तौ । "अयं हि त्वा" इत्यभिमन्त्रणशेष एव भवति, न शोधने । कुत एतत् । विशेषोपदेशात् । "तं प्रच्यवमानमनुमन्त्रयते द्यां मा लेखीः" इति । मन्त्राणां चाविधायकत्वात् ॥१९॥

( स्थाणौ जुहोति )

अतस्त्वमित्याव्रश्चने जुहोति ॥ २० ॥

आव्रश्चनं चापादानसाधनत्वेन स्थाणुरभिप्रेतः । "अथाव्रश्चनमभिजुहोति" इति श्रुतत्वात् ॥ २० ॥

यूपे वा तत्संस्कारात् ॥ २१ ॥

यूपे वा जुहोति, न स्थाणौ । कुत एतत् । तत्संस्कारात् । यूपस्य हि संस्काराभिप्रवृत्तेः ॥ २१ ॥

स्थाणौ श्रुतेश्च ॥ २२ ॥

स्थाणौ वा जुहोति न यूपे । कुत एतत् । श्रुतेः । "अथाव्रश्चनमभिजुहोति" इति प्रकृत्याह "नेदतो नाष्ट्रा रक्षांऽस्यनूत्तिष्ठानिति वज्रो वा आज्यं तद्वज्रेणैवैतन्नाष्ट्रा रक्षांऽस्यवबाधते" इति श्रुतेः । चशब्दान्मन्त्रवर्णाच्च—"अतस्त्वं देव वनस्पते शतवल्शो विरोह" इति । यस्त्वं मया वृक्णः स शतशाखो विरोहेति मन्त्रवर्णेन स्थाणुरेवाभिधीयत इति । स्थाणावपि च होमे क्रियमाणे यूपीयः स्थाणुरिति भवत्येवादृष्टो यूपसंस्कारः । अतः स्थाणावेव होम इति ॥२२॥

परिवास्याच्छेदनं पुनः ॥ २३ ॥

परिपूर्वो वसिश्छेदनार्थः । परिवास्य छित्त्वा यूपाग्रं, पुनश्छेदनं

न कर्त्तव्यम् ॥ २३ ॥

( त्र्यरत्निश्चतुररत्निर्वा पशुबन्धयूपः )

त्र्यरत्निश्चतुररत्निर्वा ॥ २४ ॥

परिवास्यते । "स वा एष त्र्यरत्निर्वैव चतुररत्निर्वा पशुबन्धयूपो भवति" इति वचनात् ॥ २४ ॥

एकारत्निप्रभृतीनेके ॥ २५ ॥

एवमपि हि श्रूयते—"स यत्पशुना यक्ष्यमाण एकारत्निं यूपं कुरुत इममेवं तेन लोकं जयत्यथ यद् द्व्यरत्निमन्तरिक्षलोकमेव तेन जयति" इति । एके तन्नेच्छन्ति । न ह्येतौ विधी । किं तर्हि अवयुत्यानुवादेन संस्तवोऽयम् । येनोपसंहरति-"स वा एष त्र्यरत्निर्वैव चतुररत्निर्वा पशुबन्धयूपो भवति" इति(१) ॥ २५ ॥

( यूपस्याष्टाश्रिकरणादिकम् )

अष्टाश्रिं करोत्युपरवर्जम् ॥ २६ ॥

अत ऊर्ध्वन्तक्ष्णो व्यापारः । एवं हि तक्ष्ण आनयनं दृष्टार्थं भवति । उपरवर्जमिति । उपरशब्देन उपरार्हः (गर्तार्हः) प्रदेशोऽभिधीयते । उपरार्हप्रदेशावर्जमष्टाश्रिं करोति ॥ २६ ॥

अग्राच्चषालं पृथमात्रमष्टाश्रि मध्यसंगृहीतम् ॥ २७ ॥

करोतीत्यनुषङ्गः । पृथशब्देन असङ्कुचिताङ्गुलिः पाणिरामणिबन्धादुच्यते ॥ २७ ॥

ऊर्ध्वमग्रे प्रतिमुञ्चति द्व्यङ्गुलं त्र्यङ्गुलं वा तद्रूर्मातिक्रान्तं यूपस्य ॥ २८ ॥

स चायमुपदेशः । प्रतिमोकस्त्वञ्जनोत्तरकाले एव ॥ २८ ॥

( सोमे पञ्चारत्न्यादिपरिमाणो यूपः )

पञ्चारत्निः पञ्चदशपर्यन्तः सोमे दशसप्तच-

---

( १ ) तथा चापस्तम्बः—"त्र्यरत्निश्चतुररत्निर्वा पालाशो निरूढपशुबन्धस्यातोऽन्यः सौम्यस्याध्वरस्येति वाजसनेयिन" इति ।

तुर्दशवर्जमपरिमितो वा ॥ २९ ॥

भवति यूपः। एवमपि हि श्रूयते इति ॥ २९ ॥

( सप्तदशारत्निर्वाजपेयस्य यूपः )

सप्तदश वाजपेये ॥ ३० ॥

( एकविंशत्यरत्निरश्वमेधस्य यूपः )

एकविꣳशतिरश्वमेधे ॥ ३१ ॥

( यूपस्थौल्यं तक्षणेन यूपाग्रानुरोधेन न ह्रसनीयम् )

यथाकायꣳ स्थविमा ॥ ३२ ॥

स्थौल्यं च यथाकायमेव भवति। न च तक्षणेन अग्रतुल्यप्रमाणता ॥ ३२ ॥

( वेदिकरणात् पूर्वं पञ्चगृहीतहोमः )

वेदिं करिष्यन् षड्ढोतारं पञ्चगृहीतं मनसाऽनुद्रुत्य जुहोत्येकामाहुतिं पञ्च वा "द्यौष्पृष्ठमन्तरिक्षमात्माऽङ्गैर्यज्ञं पृथिवीꣳ शरीरैः वाचस्पतेऽच्छिद्रया वाचाऽच्छिद्रया जुह्वा दिवि देवतावृधꣳ होत्रामैरयन्स्वाहेति ॥ ३३ ॥

प्राग्वेदिकरणात् षड्ढोतारं मन्त्रं मनसाऽनुद्रुत्य पञ्चगृहीतं जुहोति, पञ्चभिर्वा विग्रहैः। स चायं होमो निरूढे एव भवति। तत्रैव पाठात्। नाग्निषोमीये इति ॥ ३३ ॥

इति षष्ठाध्याये प्रथमा कण्डिका।

( उत्तरवेद्यग्निनिधानार्थमपकृष्य वेदिकरणम् )

वेदिं करोति ॥ १ ॥

किमर्थमनवसरे वेदिकरणमुक्तम्, परिस्तरणादीनुपरिष्टाद्वक्ष्यत्याचार्य इति। उच्यते। ज्योतिष्टोमे ह्युत्तरवेदिर्विहिता। तत्र चाहवनीयनिधानमुक्तम् "अग्निं वा अस्यामाधास्यन् भवति" इत्यनेन।

स चायमग्निसंस्कारः। अङ्गप्रधानार्थत्वाच्चाग्नेरग्नीषोमीये प्राप्नोति। अग्नीषोमीयाच्च पश्वन्तरेषु। न च वेद्या विनोत्तरवेदिर्भवति। अतः स्वावसराद्वेदिरपकृष्यते। तेन "वेदिं करोति" इत्युक्तम्॥ १॥

वरुणप्रघासवत्स्फ्याद्याऽग्निनिधानात् ॥ २ ॥

वारुणप्रघासिकोपदेशोऽयम्, न धर्मपरिप्राप्तिः॥ २॥

( इध्मेन एकप्रणयनम् )

एकमिध्मेन प्रणयति ॥ ३ ॥

तत्र हि (वरुणप्रघासे हि) कर्परेण प्रणयनं द्वयोश्च। इह एकमिध्मेनोच्यते। तत्कुतः। (समाधत्ते) ज्योतिष्टोमेहीध्मेन प्रणयनं दृष्टम्। स चाहवनीयसंस्कारः। अङ्गप्रधानार्थत्वाच्च तस्याग्नीषोमीये प्राप्तिः। तत्प्रकृतित्वाच्च पश्वन्तरेषु। तेनैकमिध्मेनेत्युच्यते। एवं च कृत्वा समारोपोऽन्यत्र भवत्येव॥ ३॥

( व्रतोपायनादीनां विधानम् )

व्रतोपायन-प्रणीता-ऽऽज्यभाग-भागावदान-पूर्णपात्र-विष्णुक्रमान्कुर्याद्धविर्यज्ञविधे ॥ ४ ॥

व्रतोपायनप्रणीताज्यभागानामन्वयप्राप्तानां सवविधे प्रतिषेधार्थं, निरूढे च प्रतिप्रसवार्थं वचनम्। भागावदानानि तु "क्लोमं ब्रह्मणे प्लीहं यजमानाय पुरीततमध्वर्यवे" इत्येवमादीनि अग्नीषोमीयमाम्नातानि। तत्र शाखान्तरे प्रतिषेधात् विकारपशूनुपाच्छिन्दन्ति। तेनेह विधानमग्नीषोमीये निषेधार्थम्। तत्र च निषेधात् पश्वन्तरे प्रवृत्तौ निरूढे विकल्पं वक्ष्यति "क्लोमप्लीहाध्यूध्नीपुरीततश्चेच्छन्"इति। अतो भागावदानानामग्नीषोमीये अभाव एव, निरूढे विकल्पो,ऽन्यत्र नियम इति। पूर्णपात्रविष्णुक्रमयोस्तु निरूढे एव विधानम्। दक्षिणाग्निहोमान्तत्वादग्नीषोमीयस्यान्यत्राप्रवृत्तिरेव (पूर्णपात्रविष्णुक्रमयोः)। तथा चाह"हविर्यज्ञविधो ह वा अन्यः पशुबन्धः सवविधोऽन्य"इति प्रकृत्य"स हैष हविर्यज्ञविधो यस्मिन्व्रतमुपनयति यस्मिन्नपः प्रणयति यस्मिन्पूर्णपात्रन्निनयति यस्मिन्विष्णुक्रमान्क्रमयत्यथ हैष सवविधो यस्मिन्नेतानि न क्रियन्ते" इति॥ ४॥

( परिस्तरणादीनामुत्तरपरिग्रहादीनां च विधानम् )

परिस्तरणपात्रसादनप्रोक्षणाज्यनिर्वपणाधिश्रयणानि कृत्वोत्तरपरिग्रहादि करोत्याऽऽज्यासादनात् ॥५॥

परिस्तरणादीनामुपादानं वैकृतपदार्थोक्तिसमनन्तरं प्राकृतानुसन्धानार्थम्, खननावसरविधानार्थं च । "उत्तरपरिग्रहादि करोति" इत्यनेन च उत्तरपरिग्रहस्य यदादौ तदादि करोत्याऽऽज्यासादनादिति ॥ ५ ॥

अत्र विशेषः—

सपृषदाज्यमाज्यग्रहणम् ॥ ६ ॥

तस्य चानुयाजार्थतेत्युक्तमेव ॥ ६ ॥

बर्हिषि प्लक्षशाखा स्तृणाति ॥ ७ ॥

अवसरान्तराविधानाच्च स्तरणाधिकाराच्च बर्हिस्तरणसमनन्तरमेव प्लक्षशाखास्तरणम् ॥ ७ ॥

( यस्मिन् देशे मीयमानस्य यूपस्यार्धं वेद्यभ्यन्तरे, अर्धं च बहिर्भवेत् तस्मिन्देशे गर्तकरणार्थम् अभ्र्या परिलिखेत् )

देवस्य त्वेत्यभ्रिमादाय यूपावटं परिलिखतीदमहमित्याहवनीयस्य पुरस्तादन्तर्वेद्यर्धम् ॥ ८ ॥

अन्तर्वेदिश्च न यूपार्द्धस्याङ्गत्वेनोच्यते, किं तर्हि देशलक्षणेयम् । यूपमानं प्रकृत्य वचनं हि भवति "अर्द्धमन्तर्वेद्यर्द्धं बहिर्वेदि" इति । तत्र यूपार्द्धस्याङ्गत्वेन वेदिविधान 'अर्द्धं बहिर्वेदि' इत्येतदपि विधेयम् । तथा च वाक्यभेदप्रसङ्गः । देशलक्षणायां त्वेष दोषो न भवति । न चैकवाक्यत्वे सत्यनेकवाक्यता युक्तरूपा । अनेकादृष्टपरिकल्पनाप्रसङ्गात् । चिन्तायाः प्रयोजनं तीव्रसुति प्राची वेदिर्न कर्त्तव्येति । अनङ्गत्वात् ॥ ८ ॥

( यूपपञ्चमांशसंमितं खनेत् )

उपरसम्मितं खनति ॥ ९ ॥

उपरशब्देन चोपरार्हः (गर्तप्रवेशार्हः) प्रदेशो लक्ष्यते(१)। उपरार्हप्रदेशसम्मितं खनतीत्यर्थः ॥ ९ ॥

( गर्तात् पूर्वस्यामुत्खातधूलिनिःसारणम् )

प्राचः पाꣳसूनुद्वपति ॥ १० ॥

( गर्ताग्रात्पूर्वस्यां प्रागग्रयूपनिधानम् )

तदग्रेण यूपं प्राञ्चं निदधाति ॥ ११ ॥

तच्छब्देनावटः परामृश्यते ॥ ११ ॥

( यूपे कुशमुष्टिनिधानम् )

कुशमुष्टिमुपरि तस्मिन् ॥ १२ ॥

यूपे ॥ १२ ॥

( यूपच्छेदनसमये प्रथममपच्छिन्नं शकलं च यूपोपरि निदध्यात् )

प्रथमशकलं च ॥ १३ ॥

चशब्दादुपर्येव ॥ १३ ॥

अग्रमुत्तरेण चषालम् ॥ १४ ॥

निदधातीत्यनुवर्त्तते ॥ १४ ॥

( यवमतीभिरद्भिर्यूपाग्रमध्यमूलानि प्रोक्षेत )

यवोऽसीत्यप्सु यवानोप्य प्रोक्षत्यग्रमध्यमूलानि "दिवेत्वेति प्रतिमन्त्रम् ॥ १५ ॥

आपश्च सतीष्वपि प्रणीतासु लौकिका एव गृह्यन्ते। सान्नाय्ये ह्यङ्गार्थाः प्रणीताः। तद्विकारे च पशावङ्गार्थानामेव प्रतिप्रसवः। तेनापूर्वत्वाद् यूपकर्मादावप्रवृत्तिरिति ॥ १५ ॥

प्रोक्षामीति सर्वत्र साकाङ्क्षत्वात् ॥ १६ ॥

प्रयोगः ॥ १६ ॥

---

(१) पञ्चमांशं न्यसेद् भूमौ सर्वसाधारणो विधिः। इति वास्तुशास्त्रोक्तः अधस्तनो यूपपञ्चमांशो निखननार्हः गर्तवाचकेन उपरशब्देन लक्षणीय इत्यर्थः।

( प्रोक्षणशेषं गर्ते आसिञ्चेत् )

अवटे शेषमासिञ्चति "शुन्धन्तामिति ॥ १७ ॥

शेषप्रतिपत्तिरवटसंस्कारश्चायम् । अतः यूपैकादशिन्यां सर्वावटसंस्कारः कर्त्तव्यः ॥ १७ ॥

( प्रागग्रानुदगग्रांश्च कुशान् गर्ते प्रक्षिपेत् )

बर्हीᳪषि प्राञ्च्युदञ्चि च प्रास्यति "पितृषदनमसीति ॥ १८॥

अवटे बर्हींषि प्रागग्राण्युदगग्राणि च प्रास्यति "पितृषदनमसि" इत्यनेन मन्त्रेण ॥ १८ ॥

( यूपगर्ते प्रथमशकलप्रक्षेपः )

प्रथमशकलं चाग्रेणीरसीति ॥ १९ ॥

प्रास्यतीत्यनुवर्त्तते ॥ १९ ॥

( स्रुवेण यूपगर्ते स्थाल्याज्येन होमः )

स्रुवेणावटे जुहोति तूष्णीम् ॥ २० ॥

तूष्णीमित्युक्तत्वात् स्वाहाकारोऽपि न भवति ॥ २० ॥

( यूपस्य दक्षिणत उदङ्मुख उपविश्य यूपाञ्जनम् )

पुरस्तात्परिक्रम्याध्वर्युर्यजमानो वा यूपमनक्त्युदङ्ङुपविश्य ॥ २१ ॥

परिक्रमणं च यजमानस्योच्यते, मा भूत्सन्निधानात् अपरिक्रमणमिति ॥ २१ ॥

( इति षष्ठाध्याये द्वितीया कण्डिका ) ।

यूपायाज्यमानायानुवाचयति ॥ १ ॥

अज्यमानस्य यूपस्यानुवाचनं कारयतीत्यर्थः । तच्चैवं 'यूपायाज्यमानायानुब्रूहि" इति ॥ १ ॥

देवस्त्वेत्यनक्ति ॥ २ ॥

यूपम् ॥ २ ॥

( अन्तर्बहिश्च चषालाञ्जनम् )

चषालमुभयतः ॥ ३ ॥

अनक्तीति वर्त्तते । देशभेदाच्चोभयत्र मन्त्र इत्युक्तमग्निसंमार्गे॥३॥

( अक्तं चषालं यूपचूडायां प्रतिमुञ्चेत )

अक्तं प्रतिमुञ्चति "सुपिप्पलाभ्य" इति ॥ ४ ॥

अक्ते एव पुनरक्तवचनं चषालनिर्देशार्थम् । चषालं प्रतिमुञ्चतीत्यर्थः । प्रतिमुञ्चामीति चात्र मन्त्रशेषः ॥ ४ ॥

( उपरस्य अग्निसंमुखयूपप्रदेशस्यच पुनरञ्जनं, नाभिमात्रस्य यूपदेशस्य रशनासंवरणीयस्य समन्ततः परिमर्शनंच )

सोपरमग्निष्ठादेशमक्त्वा परिव्ययणदेशं समन्तं परिमृश्याध्वर्युर्नावसृजेदापरिव्ययणात् ॥ ५ ॥

सहोपरेणाग्निष्ठादेशं पुनरक्त्वा परिव्ययणदेशं समन्तं परिमृश्य यूपमध्वर्युर्नावसृजेदापरिव्ययणात् । सोपराग्निष्ठादेशाञ्जनं च क्त्वाप्रत्ययोपदेशादध्वर्योरिति केचित् । अभिप्रवृत्तत्वाद् यजमानस्येति सम्प्रदायः ॥ ५ ॥

उच्छ्रीयमाणायानुवाचयति ॥ ६ ॥

यूपायेत्यत्रानुवर्त्तते ॥ ६ ॥

( यूपोच्छ्रयणम् )

"द्यामग्रेणेत्युच्छ्रयति ॥ ७ ॥

यूपम् ॥ ७ ॥

( पूर्वं सोपराक्ताग्निमाहवनीयसंमुखां कुर्वन् यूपं गर्ते प्रक्षिपेत )

"या त" इति मिनोत्यग्निष्ठा सम्प्रत्याहवनीयम् ॥ ८ ॥

"या ते" इत्यनेन मन्त्रेण अवटे प्रक्षिपति यथाऽग्निष्ठा सम्प्रत्याहवनीयं भवति । एवं च सति यूपैकादशिन्यां सर्वाग्निष्ठाः सम्प्रत्याहवनीयं कर्त्तव्याः ॥ ८ ॥

( पांसुभिर्यूपगर्तपूरणम् )

"ब्रह्मवनित्वेति पांसुभिः पर्यूहति ॥९॥

पांसुभिः पूरयति गर्त्तम् ॥ ९ ॥

( पांसूनां गर्ताधः प्रवेशनेन दृढीकरणम् )

"ब्रह्म दृꣳहेति मैत्रावरुणदण्डेन समन्तं त्रिः पर्यृषति ॥ १० ॥

मैत्रावरुणदण्डेन दृढीकरोति ॥ १० ॥

( गर्तस्याद्भिरुपसेचनं यजमानवाचनं च )

समं भूमिकृत्वाऽद्भिरुपसिच्य "विष्णोः कर्माणीति वाचयति यूपमन्वारब्धम् ॥ ११ ॥

समं भूमिकृत्वाऽद्भिरुपसिच्य गर्त्तम् "विष्णोः कर्माणि" इति वाचयति यजमानं यूपमन्वारब्धम् । सचायमुभयसंस्कार इति सम्प्रदायः । यूपसंस्कार एवेत्यपरे । उभयसंस्कारपक्षे च बहुयजमानके सर्वेषां वाचनमेकस्यान्वारम्भः ॥ ११ ॥

"तद्विष्णोरिति चषालमीक्षमाणम् ॥ १२ ॥

वाचयतीत्यनुवर्त्तते ॥ १२ ॥

( कौश्या रशनया यूपस्य त्रिवृत्परिव्याणम् )

परिवीयमाणायानुवाचयति त्रिगुणा त्रिव्यामा कौशी रशना तया नाभिमात्रे त्रिवृतं परिव्ययति "परिवीरसीति ॥ १३ ॥

त्रिगुणया त्रिव्यामया कौश्या रशनया नाभिमात्रे त्रिवृतं परिव्ययति "परिवीरसि" इति । नाभिमात्रं च प्रमाणत्वाद्यजमानविषयम् ॥ १३ ॥

( रशनाप्रान्तं रशनाप्रान्तेन संसृज्य गोपायेत् )

सꣳसृज्यान्यतरस्यामन्तं प्रवेशयति ॥ १४ ॥

संसृज्य रशनामन्यतरस्यां रशनायाम् अन्तं गोपायति ॥ १४ ॥

( अग्निसंमुखकोणस्योत्तरतः यूपरशनान्तराले यूपशकलप्रवेशः )

यूपशकलमस्यामवगूहत्युत्तरेणाग्निष्ठां "दिवः सूनुरसीति ॥ १५ ॥

यूपशकलमस्यां रशनायामवगूहत्युत्तरेणाग्निष्ठां "दिवः सूनुर-सि"इति ॥ १५ ॥

बहुषु यथास्वम् ॥ १६ ॥

बहुषु यूपेषु यथास्वमवगूहनम् ॥ १६ ॥

( कुशेन प्रत्यङ्मुखस्य पशोरुपस्पर्शनम् )

"उपावीरसीति तृणमादाय तेन पशुमुपस्पृशत्युपदेवा-निति (१)॥ १७ ॥

पशुमात्रप्राप्ताविदमुच्यते—

( छाग एव पशुर्ग्राह्यः )

छागं मन्त्राम्नानात् ॥ १८ ॥

स च पशुश्छागो ग्रहीतव्यः। कुत एतत्। मन्त्राम्नानात्—"अ-ग्नीषोमौ च्छागस्य हविष आत्तम्" इति। तेन पशुशब्दश्छागविष-य इति गम्यते ॥ १८ ॥

पञ्चदमव्यङ्गम् ॥ १९ ॥

उपस्पृशति। पञ्चदो निगमेषु जातदशन उक्तः। अव्यङ्गश्चानू-नाङ्गः ॥ १९ ॥

( मन्त्रवर्णोक्तमातृमत्त्वपितृमत्त्वादिगुणविशिष्ट एव पशुर्ग्रही-तव्य इति न नियमः )

यथामन्त्रवर्णं प्रोक्षणे ॥ २० ॥

प्रोक्षणमन्त्रे यादृशोऽभिहितः "अनु त्वा माता मन्यतामनु पि-ताऽनु भ्राता" इत्येवमादि। मातृमान्पितृमानिति। मन्त्राभिधान-सामर्थ्यात् ॥ २० ॥

नाचोदितत्वात् ॥ २१ ॥

नैतदेवम्। न ह्येवंविधा चोदनेति। मन्त्राणां चाविधायक-त्वात् ॥ २१ ॥

---

(१) कुशेन पशोरुपस्पर्शनमेव उपाकरणमुच्यते।

( वैश्वदेवपर्वोक्तशकलादानाद्यग्नावग्निरित्याहुतिहोमा-
न्तधर्मकं मन्थनं कर्तव्यम् )

अग्निं मन्थत्याहोमात्करोति ॥ २२ ॥

गुणविधित्वाच्चास्य ( नामत्वाभावात् ) धर्माभावे ( धर्मातिदेशाभावे ) धर्मपरिप्राप्त्यर्थमाहोमादित्युच्यते ॥ २२ ॥

( संनियुक्तयोरुपाकरणमन्थनयोर्विकल्पः )

उपाकरणमन्थने वा ॥ २३ ॥

उपाकरणं तृणेनोपस्पर्शनमुक्तम् । तस्य पुनरुच्चारणं मन्थनसन्नियोगशिष्टार्थम् । (१) सन्नियुक्तयोर्विकल्पो यथा स्यादिति ॥ २३ ॥

( दर्भमय्या द्विगुणरज्ज्वा दक्षिणशृङ्गाभिमुखं पाशं प्रतिमुच्य
पशुं बध्नीयात् )

द्विगुणरशनया द्विव्यामया कौश्या पाशं कृत्वा ऽन्तरा शृङ्गमभिदक्षिणं बध्नात्यृतस्य त्वेति ॥ २४ ॥

"पाशं कृत्वा प्रतिमुञ्चति" इति वचनात् ॥ २४ ॥

( रज्जुबद्धं पशुं यूपे बध्नाति )

"देवस्य त्वेति यूपे ॥ २५ ॥

बध्नातीत्यनुवर्त्तते ॥ २५ ॥

( पशौ देवताविकल्पः )

ऐन्द्राग्नः सौर्यः प्राजापत्यो वा यमिच्छेत ॥ २६ ॥

त्रयोऽपि हि देवताविशेषा विकल्पेन श्रूयन्ते । वाशब्दाद्विकल्पपरिप्राप्तौ यमिच्छेदित्यादिविकल्पार्थमुक्तम् । यमिच्छेत्तं सर्वदैव कुर्यात् ॥ २६ ॥

( संस्कृताभिरद्भिः पशुं प्रोक्षेत् )

अद्भ्यस्त्वेति पशुं प्रोक्षणीभिः प्रोक्षति ॥ २७ ॥

प्रोक्षणीशब्दश्च यौगिकोऽपि संस्कृतप्रोक्षणीविषयः । प्रोक्षण्युपादानसामर्थ्यात् ॥ २७ ॥

---

(१) यदि भवतस्तदा उभे भवतः, नतु द्वयोरेकं भवतीत्यर्थः ।

( पशोर्जलपायनम् )

अपां पेरुरित्यास्यउपगृह्णाति ॥ २८ ॥

आस्योपग्रहणं च पानाय । नादृष्टार्थम् । दृष्टार्थत्वात् । तथा चाश्वमेधे श्रूयते "तर्पयित्वाऽश्वं पुनः संस्कृत्य प्रोक्षणीभिरितरान्पशून्प्रोक्षति" इति ॥ २८ ॥

( हृदयादिदेशे पशोः प्रोक्षणम् )

आपो देवीरित्यधस्तादुपोक्षति ॥ २९ ॥

"अथाधस्तादुपोक्षति" इति वचनात् ॥ २९ ॥

इति षष्ठाध्याये तृतीया कण्डिका ।

( इध्मप्रैषादिप्राकृतकार्यकरणम् )

इध्मप्रैषादि करोत्याप्रयाजेभ्यः ॥ १ ॥

वैकृतसमनन्तरं प्राकृतानुवृत्त्यर्थमिदमुक्तम् । आदिग्रहणेन च होतृषदनादि द्रष्टव्यम् । तदेव हि पूर्वं न कृतमिति ॥ १ ॥

( उत्तराघारानन्तरं पशोः पूर्वं समञ्जनम् )

उत्तराघारमाघार्य पशुं पूर्वं समनक्ति ललाटाँसश्रोणिषु सन्त इति प्रतिमन्त्रम् ॥ २ ॥

प्रकृतौ हि उत्तराघारसमनन्तरं ध्रुवासमञ्जनमुक्तम् । तेनेहोच्यते 'पशुं पूर्वं समनक्ति' इति । अनेन च ज्ञापकेन यत्र प्राकृतवैकृतयोः समावेशस्तत्र पूर्वं प्राकृतमिति । यथा "आसाद्य हवींषि सम्मृशत्यासाद्य हवीँष्यग्निं मन्थाति" इति । यथा च "प्रहृत्य तृणमात्मानमालभेत प्रहृत्य तृणं वाजिनेन चरति" इति । "समङ्गानि यजत्रैः" इत्यत्र गच्छन्तामित्यध्याहारो नानुषङ्गः । एकवाक्यताऽभावात् । एवं च सति "संयज्ञपतिराशिषा" इत्यत्रापि गच्छतामित्यध्याहार एव, नानुषङ्गः । पूर्वेण व्यवहितत्वात् । अतश्चोभयत्र संहितावत्प्रयोगो न भवति । प्रायश्चित्तगतश्च विशेषः । अनुषङ्गविनाशे श्रौतं प्रायश्चित्तम्, अध्याहारे त्ववैदिकत्वात्स्मार्त्तमिति । यज्ञपतिशब्दश्च अनेकयजमानके विपरिणम्यते यूपाहुत्यां, परिव्ययणे, ऽग्निमन्थने ( मन्थनान्तर्गतप्रहरणे ) च ॥ २ ॥

प्रवृत्य होतारमाश्राव्याहाग्निर्हि दैवीनां विशां पुर एताऽयं यजमानो मनुष्याणाᳪ सुन्वन्निति सुत्ये तयोरस्थूरि गार्हपत्यं दीदयच्छतᳪ हिमा द्वा यू राधाᳪसीत्सम्पृञ्चानात्रसम्पृञ्चानौ तन्व इति ॥ ३ ॥

आश्रावणं च मैत्रावरुणार्थम्। "स मैत्रावरुणायाहैवाश्रावयति" (श. ब्रा. ३।७।४।१०)इति वचनात्। "अग्निर्हि दैवीनां विशां पुर एताऽयं यजमान"इति चानेकयजमानके यथाऽर्थं विपरिणम्यते। सुन्वन्निति सुत्ये इति। ऋतुयाज्यार्थवरणे सुन्वन्यजमान इति प्रयोगः॥ ३॥

( मैत्रावरुणाय दण्डदानम् )

मैत्रावरुणाय दण्डं प्रयच्छति मित्रावरुणयोस्त्वा प्रशास्त्रोः प्रशिषा प्रयच्छामीत्यौदुम्बरं यजमानमुखमात्रम् ॥ ४ ॥

मैत्रावरुणसन्निधानात्तस्यैव मुखमात्रो मा भूदिति यजमानमुखमात्रमित्युक्तम् ॥ ४ ॥

दीक्षितदण्डᳪ सोमे ॥ ५ ॥

दीक्षितः सोमे दण्डं समर्पयति ॥ ५ ॥

क्रीते वा ॥ ६ ॥

अस्मिन्वाऽवसरे इति ॥ ६ ॥

( पशौ एकादश प्रयाजा अनुयाजाश्च अन्त्याभ्यासेन संपादनीयाः )

एकादश प्रयाजा अनुयाजाश्च ॥ ७ ॥

इयं चैकादशसंख्योत्पन्नसंयोगिनी चोदकप्राप्तेषु प्रयाजेषु श्रूयते। साऽभ्यासेन पूर्यते। या पुनरुत्पत्तौ संख्या श्रूयते सा पृथक्त्वनिवेशाद्भेत्त्री भवति। यथा प्रकृतौ "पञ्च प्रयाजान्यजति" इति। अभ्यासे च सति अन्त्यस्यैवाभ्यासो न्याय्यः। एवं च सति अभ्यासविनाशे अन्त्य एवावर्त्यत इति। अनेकदेवताकोऽनेकयाज्यावांश्च पञ्चम एवावमिति। एवं च यत्र यत्रोत्पन्नसंयोगिनी

संख्या तत्र तत्राभ्यासेन पूर्यते । यथा "त्रीणि समिष्टयजूंषि जुहोति" इति कर्माभ्यासः, "तिस्रोऽनूबन्ध्याः, एकविंशतिरग्नीषोमीयाः पशवः" इति द्रव्याभ्यासः । कार्यं तु सर्वत्रैकमेवेति ॥ ७ ॥

( मैत्रावरुणसंयुक्ते कर्मणि यजेत्यस्य स्थाने प्रेष्येति वक्तव्यम् )

समैत्रावरुणे प्रेष्येत्याह यजस्थाने वचने ॥ ८ ॥

समैत्रावरुणे कर्मणि यजेत्यस्य स्थाने प्रेष्येति वक्तव्यम्, यत्र मैत्रावरुणस्य प्रैषवचनमस्ति । एवं च सति पशौ पत्नीसंयाजेषु प्रैषवचनाभावाद्यजेत्येव वक्तव्यम् ॥ ८ ॥

( अध्वर्योर्विशसितारं प्रति अस्याहरणप्रैषः )

दशेष्ट्वा प्रयाजानाह शासमाहरेति ॥ ९ ॥

"यूपशकलमाहर" इति च काण्वानां पठ्यते । माध्यन्दिनीयायां तु शासमाहरेत्येव ॥ ९ ॥

( अक्ताभ्यां स्वर्वसिभ्यां पशुललाटस्पर्शः )

स्वरुमादायाक्त्वोभौ जुह्वग्रे ताभ्यां पशोर्ललाटमुपस्पृशति "घृतेनाक्तावि"ति ॥ १० ॥

स्वरुं गृहीत्वोभावपि स्वर्वसी जुह्वग्रे ( प्रणालिकायाम ) अक्त्वा ताभ्यामेव ( स्वर्वसिभ्यामेव ) पशोर्ललाटमुपस्पृशति "घृतेनाक्तौ" इत्यनेन मन्त्रेण ॥ १० ॥

स्वरुं यूपे यथास्थानेऽवगुह्य विशसित्रेऽसिदानम् )

स्वरुमवगुह्यासिं प्रयच्छन्नाहैषा ते प्रज्ञाताऽश्रिरस्त्विति ॥ ११ ॥

स्वरुं यूपे प्रत्यवगुह्य शमित्रेऽसिं प्रयच्छन्नाह "एषा ते प्रज्ञाताऽश्रिरस्तु" इति ॥ ११ ॥

( शामित्राग्निस्थापनार्थं चात्वालोत्तरतः पञ्च भूसंस्काराः )

सादयित्वा स्रुचौ चात्वालमुत्तरेण शामित्रायोल्लिखति ॥ १२ ॥

स्रुक्सादनं च वचनात्। उल्लेखनोपलक्षिताश्च परिसमूहनादयः सर्वे भवन्तीति सम्प्रदायः॥ १२॥

( इति षष्ठाध्याये चतुर्थी कण्डिका )

( अध्वर्योर्मैत्रावरुणं प्रति अनुवचनप्रैषः )

पर्यग्नयेऽनुवाचयति ॥ १ ॥

पर्यग्निकरणे क्रियमाणे यदनुवचनं तत्कारयति। कथं च तत्कारयति। 'पर्यग्नयेऽनुब्रूहि'इत्येवम्। तथाच श्रुतिः"अथाह पर्यग्नयेऽनुब्रूहि"इति। पर्यग्निकरणं चाग्नीत्कर्तृकं, प्रैषश्च तदङ्गत्वादग्नीध एवेति सम्प्रदायः। तथा च श्रूयते "यो वाव कर्म करोति स एव तस्योपचारं वेद" इति। अपरे त्वध्वर्योरेव प्रैषदानमिच्छन्ति। पर्यग्निकरणमात्रे एव वचनमिति॥ १॥

( उल्मुकमादायाग्नीध्रः पश्वादीन् षड्, आज्यादींस्त्रीनेव वा परितस्त्रिर्गच्छति प्रदक्षिणम् )

आहवनीयोल्मुकमादायाग्नीत्त्रिः समन्तं पर्येति पश्वाज्यशामित्रदेशयूपचात्वालाहवनीयान्॥ २ ॥

आहवनीयोल्मुकं गृहीत्वा पश्वादीनग्नीत्त्रिः पर्येति॥ २॥

आज्यपशुशामित्रान्वा ॥ ३ ॥

पर्येति, न सर्वानिति। वाशब्दो विकल्पार्थः॥ ३॥

( उल्मुकमाहवनीये प्रक्षिप्य त्रिरेवाप्रदक्षिणं तानेव परितो गच्छति )

प्रतिप्रास्योल्मुकं तावत्प्रतिपर्येति ॥ ४ ॥

आहवनीये प्रक्षिप्योल्मुकं त्रिरेव प्रतिपर्येति। प्रतिशब्दप्रयोगाच्चाप्रदक्षिणम्॥ ४॥

( तमेवोल्मुकमादायोदङ्मुखो गच्छति )

पुनरादायोदङ् प्रतिपद्यते ॥ ५ ॥

पुनरग्नीदाहवनीयोल्मुकमादायोदङ् प्रतिपद्यते॥ ५॥

( उल्मुकहस्तमाग्नीध्रं पशुरनुनीयते )

पशुश्चान्वक् ॥ ६ ॥

पशुश्च उल्मुकमनुनीयते। एवं हि श्रूयते "शमितैनं कण्ठे बध्वा नयति" इति ॥ ६ ॥

( नीयमानं पशुं प्रतिप्रस्थाताऽन्वारभते )

प्रतिप्रस्थाताऽन्वारभत एनं वपाश्रपणीभ्यां काष्मर्यमयीभ्यां विशाखाऽविशाखाभ्याम् ॥ ७ ॥

"तं वपाश्रपणीभ्यां प्रतिप्रस्थाताऽन्वारभते" इति वचनात् ॥ ७ ॥

( प्रतिप्रस्थातारमध्वर्युस्तंच यजमानोऽन्वा० )

तमध्वर्युर्यजमानोऽध्वर्युम् ॥ ८ ॥

अन्वारभत इत्यनुवर्त्तते ॥ ८ ॥

( होतृप्रैषार्थं मैत्रावरुणस्याध्वर्युणा प्रैषः )

वेदितृणे अध्वर्युरादायाश्राव्याहोपप्रेष्य होतर्हव्या देवेभ्य इति ॥ ९ ॥

अनन्तरं यजमानस्याभिहितत्वादध्वर्युग्रहणम् ॥ ९ ॥

( यजमानवाचनम् )

"रेवति यजमान" इति वाचयति ॥ १० ॥

"रेवति यजमान" इत्यमुं मन्त्रं यजमानं वाचयति ॥ १० ॥

( प्रतिप्रस्थातारमन्वारभमाणः पशुमनुगच्छन्नध्वर्युः शामित्राग्निस्थानं नातिक्रामेत् )

शामित्रं नातीयात् ॥ ११ ॥

शामित्रमतीत्य न गच्छेत् ॥ ११ ॥

( आहवनीयोल्मुकमाग्नीध्रहस्तस्थं शामित्रे निदध्यात् )

शामित्रेऽग्निं निदधाति ॥ १२ ॥

यतो गृहीतोऽग्निस्तत्र निधानं मा भूदिति पुनः शामित्रग्रहणम् ॥ १२ ॥

( अचिरनिर्मथिताग्नेर्निधानं केचिदाहुः )

निर्मन्थ्यमेके ॥ १३ ॥

अग्निं निदधति । तुल्यश्रुतित्वाद्विकल्पः ॥ १३ ॥

( शामित्रस्य पश्चात् तृणप्रक्षेपः )

पश्चात्तृणमुपास्यति "वर्षो वर्षीयसीति ॥ १४ ॥

शामित्रस्य पश्चात् । मन्त्रश्चानेकयजमानके विपरिणम्यते ॥१४॥

( पशोर्विशसनम् )

तस्मिन्नेनन्निघ्नन्ति प्रत्यक्शिरसमुदक्पादम् ॥१५॥

तस्मिन् तृणे पशुं प्रत्यक्शिरसमुदक्पादं निघ्नन्ति ॥ १५ ॥

प्राक्शिरसं वा ॥ १६ ॥

उदक्पादमिति वर्त्तत एव । शिरसो दिङ्नियमेऽपि सति पुरुषस्योदक्पादता वाचनिकी कर्त्तव्या चोदकानुग्रहाय ॥ १६ ॥

संगृह्य मुखं तमयन्त्यवाश्यमानम् ॥ १७ ॥

मुखसंग्रहणपूर्वकं तमनं, यथा शब्दं न करोति ॥ १७ ॥

वेष्केण वा ॥ १८ ॥

तमयन्ति । (१)वेष्कश्चावलक उच्यते ॥ १८ ॥

एत्याहवनीयमावृत्यासते ॥ १९ ॥

अध्वर्य्वादयः ॥ १९ ॥

संज्ञपयान्वगन्नित्येव ब्रूयात् ॥ २० ॥

अनेन मन्त्रेण शमितोच्यते। संज्ञपय संज्ञपनं कुरु। अन्वगन्निति देवान्प्रत्यनुगच्छत्वित्यर्थः। तथा च श्रुतिः"स यदाहान्वगन्नित्येतर्हि ह्येष देवाननुगच्छति" इति । एवं च कृत्वाऽनेकपशुकेऽस्य पदस्य विपरिणामः ॥ २० ॥

"स्वाहा देवेभ्य" इति जुहोति ॥ २१ ॥

पूर्णाहुतिविकारत्वात्सकृद्गृहीतेन तद्धर्मवत् ॥ २१ ॥

संज्ञप्तः पशुरिति प्रोक्ते शेतां नु मुहूर्त्तमित्याहासोमे ॥ २२ ॥

"संज्ञप्तः पशुः" इति शमित्रा प्रोक्ते "शेतां नु मुहूर्त्तम" इत्या-

(१) वेष्को गलावेष्टक इति देवयाज्ञिकः ।

द्वासोमे। असोमग्रहणेन च निरूढोऽभिधीयते। तमेव हि प्रकृत्यैत-त्पठ्यते। "तस्मादु पशुꣳ संज्ञप्तं ब्रूयाच्छेतां नु मुहूर्त्तम्" इति ॥२२॥

"देवेभ्यः स्वाहेति जुहोति ॥ २३ ॥

पूर्णाहुतिसंस्कृतेनैवाज्येन ॥ २३ ॥

न वैते जुहुयात् ॥ २४ ॥

वाशब्दो विकल्पार्थः। एवं हि श्रूयते "ते वा एते परिपशव्ये इत्याहुती स यदि कामयेत जुहुयादेते यद्यु कामयेतापि नाद्रियेत" इति ॥ २४ ॥

( पशुबन्धनरज्जुं वपाश्रपणीभ्यां चात्वाले प्रास्येत् )

वपाश्रपणीभ्यां नियोजनीं चात्वाले प्रास्यति "माऽहिर्भूरिति ॥ २५ ॥

रशनाबहुत्वेऽपि विकारे अहिपृदाकुशब्दौ उपमानार्थत्वान्न विप-रिणंस्येते। उपमायाश्चानङ्गत्वादविपरिणामः। अङ्गभूतं हि प्रकाशयि-तव्यम्। न चोपमाऽङ्गभूतेति। भूरिति तु पदं रशनापरत्वाद्विपरिण-स्यते एव ॥ २५ ॥

(पत्न्यानयनार्थं प्रतिप्रस्थातुः प्रैषः सोमबाह्यपशुषु, नेष्टुः सोमपशौ)

प्रतिप्रस्थातः पत्नीमुदानयेत्याह नेष्ट-रिति सोमे ॥ २६ ॥

सोमग्रहणं च सोमविषयमेव। तत्र हि नेष्टा विद्यते। एवं च सति सोमबाह्येषु पशुषु प्रतिप्रस्थातरिति वक्तव्यम् ॥ २६ ॥

इति षष्ठाध्याये पञ्चमी कण्डिका।

( पादादिशोधनार्थजलकलशहस्तायाः पत्न्या वाचनम् )

पान्नेजनहस्तां वाचयति नयन्नमस्तआतानेति॥ १॥

पान्नेजनहस्तां पत्नीं नयन् वाचयति "नमस्त आताना" इति। पत्नीबहुत्वे च क्रत्वर्थत्वादेकैव पान्नेजनहस्ता। संस्कारार्थत्वात्सर्वा-सां वाचनमिति ॥ १ ॥

( इन्द्रियाधिष्ठानानां वागादीनां पत्न्या शोधनम् )

पशोः प्राणाञ्छुन्धति पत्नी ॥ २ ॥

प्राणशब्देन प्राणायतनान्यभिधीयन्ते । तानि पान्नेजनीभिरद्भिः पत्नी शोधयतीत्यर्थः ॥ २ ॥

तानीदानीमाह—

मुखं नासिके चक्षुषी कर्णौ नाभिं मेढ्रं पायुं पादान्त्संहृत्य "वाचं ते शुन्धामीति प्रतिमन्त्रम् ॥ ३ ॥

मेढ्रं प्रजननमुच्यते । शेषं प्रसिद्धमेव ॥ ३ ॥

( यजमानाध्वर्युकर्तृकं शिरःप्रभृत्यङ्गानामनुषेचनम् )

शेषेण यजमानश्च शिरःप्रभृत्यनुषिञ्चतो "मनस्त" इति शिरः ॥ ४ ॥

पान्नेजनीशेषेण यजमानः, चशब्दादध्वर्युश्च । अध्वर्युः काण्वीयायां पठ्यते "अध्वर्युश्च यजमानश्च" इति । विलिङ्गत्वादाभिधीयते "मनस्त इति शिरः" । शेषमन्त्रा यथाऽर्थं विनियुज्यन्ते ॥ ४ ॥

"यत्ते क्रूरमित्यङ्गानि ॥ ५ ॥

अनुषिञ्चत इत्यनुवर्त्तते ॥ ५ ॥

"शमहोभ्य" इति पश्चात्पशोर्निषिञ्चतः ॥ ६ ॥

(१) संस्कारत्वाच्चाव्यतिरिक्ते ( पशावेव ) । निषिञ्चामीति च मन्त्रेऽध्याहारः ॥ ६ ॥

( नाभ्यग्रे तृणनिधानादिपूर्वकं वपोत्खेदनम )

उत्तानं पशुं कृत्वाऽग्रेण नाभिं तृणं निदधात्योषध" इति ॥ ७ ॥

नाभ्यग्रे हि वपायाः स्थानम् ॥ ७ ॥

"स्वधित" इति प्रज्ञातयाऽभिनिधाय च्छित्वा-

---

( १ ) पश्चाद्भागनिषेकान्तस्य पशुसंस्कारत्वात् अनेकपशुषु प्रतिपशु निषेकः ।

ऽग्रं सव्ये कृत्वा दक्षिणेन मूलमुभयतोऽनक्ति लोहितेन "रक्षसामिति ॥ ८ ॥

प्रज्ञाता च घृताक्ता धारा उच्यते । यया पशुलमञ्जनं कृतम् । छित्वा सतृणं चर्म, तृणाग्रं सव्ये पाणौ कृत्वा, दक्षिणेन ( तृण ) मूलं द्विगुणीकृत्योभयतोऽनाक्ति लोहितेन "रक्षसाम्" इत्यनेन मन्त्रेण ॥ ८ ॥

"निरस्तमित्यपास्यति ॥ ९ ॥

अक्तं मूलम् ॥ ९ ॥

इदमहमित्यभितिष्ठति यजमानः ॥ १० ॥

रक्षोऽभिधायकत्वादुदकोपस्पर्शनम् । अत्र च बहुयजमानके एक एवाभितिष्ठति । क्रत्वर्थत्वात् ॥ १० ॥

( वपया वपाश्रपण्यौ वेष्टयति )

वपामुत्खिद्य वपाश्रपण्यौ प्रोर्णौति "घृतेन द्यावापृथिवी" इति ॥ ११ ॥

प्रोर्णौति वपया वेष्टयति वपाश्रपण्यौ । तयोश्च उखाकार्यापत्त्या तन्मन्त्रेणोहितेनादानं "द्यौ स्थः पृथिवी स्थ" इति ( १ ) ॥ ११ ॥

( वपाछेदनादिकम् )

परिवास्य चात्वालेऽवसिच्य शामित्रे प्रतपति ॥ १२ ॥

परिवासनं च च्छेदनमुच्यते ॥ १२ ॥

शामित्रैकदेशमाहवनीये प्रास्यत्यग्नीत् ॥ १३ ॥

तच्च "पुनरुल्मुकमग्नीदादत्ते" ( श० ब्रा० ३।८।२।१८ ) इति पुनःशब्दोपादानान्निर्मन्थ्यपक्षे शामित्रैकदेशस्य न प्रासनमिति । काण्वा-

---

( १ ) "द्यौरसि पृथिव्यसि" इति उखाऽऽदानमन्त्रः । वपाश्रपण्योर्द्वित्वात् तदभिधानाय असीत्यस्योहेन स्थ इति द्विवचनान्तत्वम् । द्यौरित्यस्य पृथिवीत्यस्य च उपमात्वेनानङ्गत्वात् न द्विवचनान्तत्वेन विपरिणामः ।

नामपि च "तत्पुनरण्यर्जति" इति पठ्यते । पुनःशब्दस्य कृतार्थवृत्तित्वात् ॥ १३ ॥

तृणाग्रं चाध्वर्युर्त्रीयो वेरिति ॥ १४ ॥

आहवनीये प्रास्यतीत्यनुवर्त्तते । अधस्तनपदार्थेऽग्नीदुक्तः । चशब्देन तस्यानुकर्षणं मा भूदित्यध्वर्युग्रहणम् । एवं चानेनैव ज्ञापकेन ज्योतिष्टोमे "नेष्टा तोत इत्येनां वाचयति" इत्युक्त्वा "सोमक्रयण्या च समीक्षमाणाम्" (का० श्रौ० ७।६।२३-२४) इत्यत्र चशब्देन नेष्टुरेवानुकर्षणं युक्तम् । तथा च ब्राह्मणम् "तं नेष्टा वाचयति" इति प्रकृत्य "अथैनाॅं सोमक्रयण्या संख्यापयति" इत्याह ॥ १४ ॥

( वपाश्रपणम् )

उत्तरतस्तिष्ठन्प्रतप्य वपामन्तरा यूपाग्नी हृत्वा दक्षिणतः प्रतिप्रस्थाता श्रपयति परीत्य ॥ १५ ॥

उत्तरतस्तिष्ठन्नाहवनीये प्रतप्य वपामन्तरेण यूपाग्नी हृत्वा पूर्वेण यूपं परीत्य दक्षिणतो व्यवस्थितः प्रतिप्रस्थाता श्रपयति । सम्प्रदाये तु चात्वालावसेकादि प्रतिप्रस्थाता। "चात्वालेऽवसिच्य शामित्रे प्रतपति" इति । प्रतपनं च श्रपणैकदेशः । "तां पशुश्रपणे प्रतपति तथो हास्यात्रापि शृता भवति" ( श० ब्रा० ३।८।२।१८ ) इति हि श्रूयते । श्रपणं च प्रतिप्रस्थातृकर्तृकमिति सम्प्रदायः ॥ १५ ॥

( वपाभिघारणम् )

वपाॅं स्रुवेणाभिघारयत्यग्निराज्यस्येति ॥१६॥

अभिघारणं तु प्राकृतमेव । प्रकृतिलिङ्गसंयोगात् । अतश्च स्थाल्याज्यमिति ॥ १६ ॥

( उत्तमप्रयाजैप्रषः )

स्तोकेभ्योऽनुवाचयति । शृतायाॅं शृता प्रचरेत्याह प्रतिप्रस्थाता । स्वाहाकृतिभ्यः प्रेष्येति ॥ १७ ॥

स्वाहाकृतिशब्देनोत्तमः प्रयाज उच्यते ॥ १७ ॥

( निरूढपशौ आज्यभागकरणपक्षे उत्तमप्रयाजानन्तरं प्रथमं ध्रुवामभिघार्य वपापृषदाज्ययोरभिघारणम् । आज्यभागाननुष्ठान-पक्षे वपामभिघार्य ध्रुवापृषदाज्ययोरभिघारणम् )

हुत्वा वपामभिघारयति पृषदाज्यं, ध्रुवां प्रथममाज्य-भागौ चेत् ॥ १८ ॥

चेच्छब्दो यद्यर्थः, यद्याज्यभागावत्र क्रियेते इति । निरूढे ह्याज्यभागयोर्विकल्पः ॥ १८ ॥

तेनोच्यते—

अत्राज्यभागौ कुर्वन् ॥ १९ ॥

आज्यभागौ कुर्वन्नत्रावसरे करोति इति । अग्नीषोमीये पुनराज्यभागौ न स्त एवेत्युक्तमेव ॥ १९ ॥

(आज्योपस्तारः, हिरण्यशकलावधानं, वपानिधानं, पुनर्हिरण्यशकलावधानं, तदुपरि सकृदभिघारणम् इत्येवं पञ्चावत्ता वपा कार्या)

वपया चरिष्यन्नुपस्तीर्य हिरण्यमवधाय वपामवद्यन्नाहेन्द्राग्निभ्यां छागस्य वपायै मेदसोऽनुब्रूहीति ॥ २० ॥

उपस्तीर्य जुह्वामाज्यं, हिरण्यशकलमवधाय । "अवद्यन्नाह" इति च सहानुवाचनार्थम् । "इन्द्राग्निभ्यां छागस्य" इति च प्रयोगोपदर्शनार्थम्, न सौर्यादिव्युदासार्थम् । विकल्पेन ह्यत्र देवताः श्रूयन्ते इति ॥ २० ॥

हिरण्यमवधाय द्विरभिघारणं सोमे ॥ २१ ॥

निरूढे तु सकृदभिघारणम् । "सा वा एषा पञ्चावत्ता वपा भवति" इति वचनात् । सोमशब्दनं चाग्नीषोमीयोपलक्षणम् । अतस्तद्विकारेषु निरूढवर्जं सर्वत्र द्विरभिघारणमिति ॥ २१ ॥

( वपायागप्रैषः )

आश्राव्याहेन्द्राग्निभ्यां छागस्य वपां मेदः प्रेष्येति ॥ २२ ॥

एतदपि प्रयोगोपदर्शनार्थमेव ॥ २२ ॥

प्रस्थितमिति च प्रसुते ॥ २३ ॥

प्रसुतशब्देन सवनीयोऽभिधीयते। तद्विकारेषु च प्रस्थितशब्दे प्राप्ते सौत्रामण्यामुपसंहारादन्यत्र न भवतीति। उपसंहृतो हि प्रस्थितशब्दः सौत्रामण्यां "प्रस्थितमिति च त्रिपशोः सर्वम्" इति ॥ २३ ॥

( वपाश्रपण्योराहवनीये प्रासनम् )

हुत्वा वपाश्रपण्यावनुप्रास्यति प्राचीं विशाखां प्रतीचीमितराँ "स्वाहाकृते" इति ॥ २४ ॥

वपाश्रपणीबहुत्वे मन्त्रस्य विपरिणामः ॥ २४ ॥

( चात्वाले सर्वेषां मार्जनम् )

चात्वाले मार्जयन्ते सपत्नीका इदमापः प्रवहतेति ॥२५॥

मन्त्रलिङ्गाद्भिर्मार्जनमिति ॥ २५ ॥

इति षष्ठाध्याये षष्ठी कण्डिका।

( ऋत्विजामेवैकः शामित्रे इति जैमिन्यादिसंमतः पक्षः । अन्य इति कर्कसिद्धान्तः )

त्रिशास्ति पशुमन्यः ॥ १ ॥

शसु हिंसायाम । अन्यः पशुं हिनस्ति मारयतीत्यर्थः । कुत एतदन्य इति । संज्ञाभेदात् । अन्या हि संज्ञा शमितेति । संज्ञाभेदाच्च संज्ञ्यन्तरे प्रतीतिर्भवति । देवदत्तो यज्ञदत्त इति यथा ॥ १ ॥

एवं प्राप्ते उच्यते—

ऋत्विजां वैको ऽप्रक्लृप्तत्वाच्छामित्रे ॥ २ ॥

ऋत्विजां वैकः करोति संज्ञपनं नान्यः । कुत एतत् । अप्रक्लृप्तत्वाच्छामित्रे । शमनकर्मणि संज्ञपने नैव कश्चित्प्रकल्पितो दृश्यते वेदे । ननु "शमितैनं कण्ठे बध्वा नयति" इत्यस्ति प्रकल्पनम् । उच्यते । ऋत्विजामेवैकः शमनक्रियायोगाच्छमितेति । तस्मादृत्विजामेवैकः करोति ॥ २ ॥

किं च—

उपगादर्शनाच्च ॥ ३ ॥

दृश्यते चायमर्थो यथा ऋत्विग्व्यतिरिक्तस्याप्रकल्पने ऋत्विजामेव कर्तृत्वमिति । "हो इत्यृत्विज उपगायन्त्योमिति यजमान" इत्यृत्विजामुपगानं दर्शयति । विधिरिति चेत् । नैवम् । हो इत्येवंपरत्वाद्वाक्यस्य । न्यायप्राप्तान् ऋत्विजोऽनुवदति । तद्विधाने हि वाक्यभेदप्रसङ्गः । तथा "नाध्वर्युरुपगायति" इत्यध्वर्योः प्रतिषेधं ब्रुवन्नृत्विजामुपगानं दर्शयति । एवं तावत्केषांचिदयमेव सिद्धान्तः ।

अत्रोच्यते । यदुक्तमप्रक्लृप्तत्वाच्छामित्रे इति । तन्नैवम् । येन ऋत्विग्व्यतिरिक्तस्य शमितुः प्रकल्पनं दृश्यते "शमितैनं कण्ठे बध्वा नयति" इति । तथा "शृतꣳ हविः शमित३ः" इति तत्र तत्र शमितारं दर्शयति । ननु च ऋत्विजामेवैकः शमनं कुर्वन् शमिता भविष्यति । तस्यैतद्दर्शनमिति । नेत्युच्यते । व्यापृतेषु ऋत्विक्षु शमितृशब्दश्रवणादन्य इति गम्यते । प्रतिप्रस्थाता पशुमन्वारभते, तमध्वर्युः, मैत्रावरुणो ऽग्निमुप्रैषे, अग्निगौ होता, ऽग्नाविदुल्मुकमादायाग्रतो

गच्छति, ब्रह्मा कृताकृतप्रत्यवेक्षणे। एवं सर्वर्त्विक्षु व्यापृतेषु शमिता श्रूयते। अतस्तेभ्यो ऽन्य इति गम्यते।

यच्चोपगादर्शनमुक्तम्, तदप्रकल्पितविषयम्।

अपि च संज्ञपने ऋत्विक्कर्तृके समाख्ययाऽध्वर्युः प्राप्नोति। तत्र "अध्वर्युशमितृसंवादे" इदमनुपपन्नार्थं भवति "अनेना अध्वर्युर्भवति शमितरि तदेनो भवति" इति। तस्मादन्यः शमितेति।

अथवाऽनेन सूत्रेण विकर्त्तनमेव चिन्त्यते—विशास्ति पशुमन्यः। अन्यः पशुविकर्त्तनं करोति, न ऋत्विगिति। कुत एतत्। अभिप्रवृत्तत्वाद्विकर्त्तनेऽपि स एवेति। एवं प्राप्ते उच्यते। ऋत्विजां वैकोऽप्रक्लृतत्वाच्छामित्रे। ऋत्विजामेवैकः पशुविकर्त्तनं करोति। कुत एतत्। अप्रक्लृतत्वाच्छामित्रे। शामित्रशब्देन विकर्त्तनमभिधीयते। तत्र नान्यः प्रकल्पितः। यत्र नाम नान्यः प्रकल्प्यते तत्रर्त्विजां कर्तृत्वम्। उपगादर्शनाच्चेति व्याख्यातम्॥ ३॥

( सोमविक्रयी ऋत्विगन्य एव )

विक्रयी त्वन्यः शूद्रसंयोगात्॥ ४॥

विक्रयी पुनरन्यो भवति। कुतः। शूद्रसंयोगात्॥ ४॥

( अखण्डयन् हृदयादीनि पृथक् कुर्यात् )

अङ्गान्यवद्यत्यभञ्जन्॥ ५॥

अनवखण्डयन्॥ ५॥

हृदयं जिह्वां क्रोडं सव्यसक्थिपूर्वनडकं पार्श्वे यकृद्वृक्कौ गुदमध्यं दक्षिणा श्रोणिरिति जौहवानि॥ ६॥

क्रोडशब्देन वक्षोऽभिधीयते । यकृच्छब्देन च कालेयम् । गुदं पक्वाशयस्थानं, तन्मध्यम् । दक्षिणा च श्रोणिः । एतानि जौहवानि जुह्वामवदेयानि ॥ ६ ॥

दक्षिणसक्थिपूर्वनडकं गुदतृतीयाणिष्ठं सव्या च श्रोणिरित्यौपभृतानि ॥ ७ ॥

सक्थि सचतेः । आसक्तोऽस्मिन्काय इति सचकोऽभिधीयते । तस्य यः पूर्वः प्रथमो नडकः सोऽवदेयः । गुदतृतीयाणिष्ठं गुदतृतीयस्य लघुतरम्, सव्या श्रोणिः इत्यौपभृतानि उपभृत्यवदेयानि ॥ ७ ॥

वर्षिष्ठमुपयड्भ्यः ॥ ८ ॥

यद्वर्षिष्ठं महत्तरं गुदतृतीयं तदुपयड्ढोमार्थम् । एवमेव हि विभागश्रवणात् ॥ ८ ॥

अत्रदानकाले प्रभागः ॥ ९ ॥

गुदस्य नेदानीमेव । जौहवौपभृद्विवेकार्थं ह्येतद्वचनम् ॥ ९ ॥

वनिष्ठुजाघनी चावद्यति ॥ १० ॥

वनिष्ठु स्थूलान्त्रम् । जघनप्रदेशभवा जाघनी प्रसिद्धैव ॥१०॥

क्लोमप्लीहाध्यूध्नीपुरीततं चेच्छन् ॥ ११ ॥

क्लोमा गलनाडी । प्लीहा प्रसिद्धः । अध्यूध्नी ऊधःप्रदेशस्योपरि भवति । पुरीतच्छब्देन हृदयमवच्छादितं येन तदुच्यते । "पुरीतत्पुरीषं हृदयं तत्पुरीतता प्रच्छादयति" इति श्रुतत्वात् । एतानि भागावदानानि । एषामत्र विकल्पः । अन्यत्र नियमः । अग्नीषोमीये त्वभाव एवेत्युक्तमेव ॥ ११ ॥

उदरमेदोऽत्रशिष्टं गुदे प्रास्यति कृशश्चेत् ॥ १२ ॥

उदरे यन्मेदः अङ्गग्रहणेनागृहीतं तदवशिष्टं गुदे प्रास्येद्यदि कृशः पशुर्भवति । कृशो दुर्बल उच्यते ॥ १२ ॥

( गर्ते पशुपुरीषं निधाय तस्मिन् लोहितनिरसनम् )

अथ ऊवध्यमवधाय तस्मिँल्लोहितं "रक्षसामिति ॥१३॥

इवध्ये गर्ते ऊवध्यमवधाय तस्मिन् लोहितं "रक्षसाम" इत्यनेन मन्त्रेणावदधाति । प्रतिपत्तिश्चेयम् । अतश्च बहुषु पशुषु सर्वेषां प्रतिपत्तिः॥१३

( वारणकाष्ठमये शूले हृदयं प्रोतं कृत्वा शामित्रे श्रपणम् )

शूले हृदयं प्रतृद्य शामित्रे श्रपयति ॥ १४ ॥

साम्नाय्यविकारादुखायां श्रपणे प्राप्ते वचनात् शूले प्रतृद्य श्रपणम् । शूलस्य चोखाकार्यापत्त्या तन्मन्त्रेण(घोरसीत्यनेन)आदानम्॥१४॥

( हृदयातिरिक्तानि अवदानानि उखायां श्रपयेत् )

पशुं चोखायाम् ॥ १५ ॥

चशब्दाच्छामित्रे एव श्रपयति । अत्र हि वचनं भवति "अथ यमेतमुदञ्चं पशुश्रपणायाहरन्ति" इति ॥ १५ ॥

( निरूढपशुपुरोडाशे एकदेवतत्वादिभिः कपालसंख्या )

पशुदेवतायै पुरोडाश एकादशकपालः ॥ १६ ॥

"अग्नीषोमीयोऽतः पशुः" "तद्देवत्यः पशुपुरोडाशः"(का० श्रौ० अध्या० ८ । ७ । २४-२५ ) इति तद्देवत्यता विहिता । इह कपालार्थोऽयमारम्भः । अग्नीषोमीये एकादशकपालः पशुपुरोडाशोऽन्वयप्राप्त्या, तदन्वयाच्चेहैकादशकपालता युक्ता भवतीत्युक्तम् ॥ १६ ॥

अग्नीषोमीयो वा विशेषोपदेशात् ॥ १७ ॥

वाशब्दः पक्षव्यावृत्तौ । न वैकादशकपालता कर्त्तव्या । किं कारणम् । येनाग्नीषोमीये देवताद्वित्वसामान्यविशेषेणैकादशकपालता भवति । तथा चाभिषेचनीयेऽनूद्यते "अग्नीषोमीयमेकादशकपालं पुरोडाशं निर्वपति तदनु देवस्वाँ हवीँषि निरुप्यन्ते"( श० ब्रा० कां० ५ । ३ । ३ । १ ) इति । न चाग्नीषोमीयपशुपुरोडाशविकारः पश्वन्तरेषु पशुपुरोडाशः । पशुपुरोडाशविकार एवायम् । तस्मादेकद्विशब्दपरिमाणादिभिरिह कपालसंख्या, नैकादशकपाल इति॥१७॥

( हविष्कृदाह्वानमेवास्मिन्नवसरे, दृषदुपलसमाहननं तु पशुपात्रप्रोक्षणोत्तरकालमेव )

अत्रैव हविष्कृदाह्वानमिज्यैकत्वात् ॥ १८ ॥

हविष्कृदाह्वानाहननयोरेककालत्वमुक्तं "स यत्रैष हविष्कृतमुद्वादयति तदेको दृषदुपले समाहन्ति" इति । हविष्कृदाह्वानं च हविर्निष्पत्त्यर्थम् । हविष्करोतीति हविष्कृत् । तेनौषधे प्राप्नोति । आह्वानकालत्वाच्चाहननमपि अत्रैवाशङ्क्यते । तेनोच्यते हविष्कृदाह्वानमेवात्र भवति । आहननं तु पशुपात्रप्रोक्षणोत्तरकालमेव । तस्य हि पशिवज्यया सहैकवाक्यत्वम् । आह्वानस्य च पुरोडाशेज्ययेति ॥ १८ ॥

( द्रव्यनिर्देशेन सहानुवाचनं वचनात् )

अवघ्नाहैन्द्राग्निभ्यां पुरोडाशस्यानुब्रूहीति ॥ १९ ॥

सहानुवाचनं द्रव्योच्चारणं च वचनात् । इन्द्राग्निग्रहणं तु प्रयोगप्रदर्शनार्थम् । सूर्यप्रजापत्योरपि पक्षे भावात् ॥ १९ ॥

( उपभृति स्विष्टकृदवदानम् )

उपभृति चावद्यति स्विष्टकृद्वत् ॥ २० ॥

चशब्दादनन्तरमेव । स्विष्टकृदर्थस्यैव स्विष्टकृद्वदित्युच्यते । स्विष्टकृदवदानस्याकालत्वात् । अपि च स्विष्टकृदवदानं जुह्वां प्राप्तं तदिहोपभृतीति वत्करणम् ॥ २० ॥

( पशुपुरोडाशप्रैषः )

इन्द्राग्निभ्यां पुरोडाशमिति प्रेष्यति ॥ २१ ॥

प्रयोगप्रदर्शनार्थमेवेदमुक्तम् ॥ २१ ॥

( याज्यादौ निर्गुणाभिधानेऽपि स्विष्टगुणसहितस्याग्नेरेव अनुवाचनादावभिधानम् )

हुत्वा समानीयाग्नये प्रदाय(१) ॥ २२ ॥

हुत्वा जौहवमौपभृतं समानीय अग्नये प्रदानं करोति ॥ २२ ॥

---

(१) इडामवद्यतीति वक्ष्यमाणेन सम्बन्धः ।

सगुणस्थाने ऽगुणः ॥ २३ ॥

स्विष्टकृद्गुणरहितायाग्नये ॥ २३ ॥

कुत एतत्—

सर्वविकार एकत्वात् ॥ २४ ॥

सर्वस्मिन्विकारे एकत्वं निर्गुणाभिधायकत्वं दृश्यते । अनुवाक्यायाम् "इडामग्ने पुरुदंसं सनिं गोः" इति निर्गुणमभिधानम् । तथा मैत्रावरुणप्रैषे "होता यक्षदग्निं पुरोडाशस्य जुषताम्" इति । याज्यायामपि च "स्वदस्व हव्या समिषो दिदीह्यस्मद्र्यक्सं-मिमीहि श्रवांꣳसि विश्वाँ अग्ने" इति । एवं सर्वत्र निर्गुणमभिधानम् । यदि चाध्वर्युरपि अनुवाचनप्रैषयोर्निर्गुणमाभिधानमास्विष्टकृच्छब्दकं करोति तदा याज्याऽनुवाक्याप्रैषैः सहैकवाक्यता भवति । इतरथा क्वचित्सगुणं क्वचिन्निर्गुणमभिधानमित्यसामञ्जस्यं स्यात्॥२४॥

यथाऽऽम्नातं वा वचिभेदात् ॥ २५ ॥

यत्र यथाऽऽम्नातं तत्र तथैव कर्त्तव्यम् । भिन्नैर्वाक्यैर्याज्यापुरोऽनुवाक्याप्रैषविकाराणां विधानम् । यथावचनं सर्वत्र कर्त्तव्यता युक्ता । तेन वाशब्दात्पक्षो विपरिवर्त्तते (१) ॥ २५ ॥

( पशुपुरोडाशे पश्वर्थमनुष्ठितैः प्रयाजादिभिरेवोपकारः, नातिरिक्तप्रयाजाद्यनुष्ठानम् )

इडामन्त्रवत्याक्रियाऽन्यस्य समानार्थत्वात् ॥ २६ ॥

इडाग्रहणं शेषकार्योपदर्शनार्थम् । न्यायस्य तुल्यत्वात् । न तद्व्युदासार्थम् । इडादीन्येवावद्यति । पशुपुरोडाशे चोदकप्राप्तस्याग्न्यन्वाधानादेरदृष्टोपकारकस्याक्रिया । कुत एतत् । समानार्थत्वात् ।

---

( १ ) अपरे त्वेवमाहुः-अत्र शाखान्तरे श्रूयते "अग्निं यजति" इति । तेन यागे एव निर्गुणोऽग्निर्विहितः,अतो यो यागे निर्गुणोऽग्निर्विहितः स सर्वविकारो भवति, सर्वेषां होतॄणामध्वर्यूणां च विकारो भवति । कुतः, एकत्वात् , यतोऽनुवाचनप्रैषयाज्यादिष्वेक एवायमग्निर्न भिन्नः । एकश्च क्वचित्सगुणः क्वचिदगुण इति न विरुद्धरूपतामर्हति, तस्मात्सर्वत्र निर्गुण एवेति सिद्धान्तः ।

यमेवोपकारं पशौ प्रयाजादीनि कुर्वन्ति पशुपुरोडाशेऽपि तमेव। अतः पश्वर्थमनुष्ठितानां पुरोडाशेऽप्युपकारप्रसङ्ग इति ॥ २६ ॥

न चोदनाभेदात् ॥ २७ ॥

नैतदस्ति यदुक्तम्। किं कारणम्। चोदनाभेदात्। भिन्ने ह्येते चोदने—"अग्नीषोमीयमजमालभेत" "अग्नीषोमीयमेकादशकपालं पुरोडाशं निर्वपति" इति। यत्र ह्येकेन शब्देनोपादाय फले विधानम्, यथा "वैश्वदेवेन प्रजाकामं याजयेत्" इति तत्रोपादेयत्वेन विधानात् साहित्यविवक्षायां युगपदङ्गोपकारापेक्षा, तेनागृह्यमाणविशेषात्सन्निधानाविशेषाच्च तन्त्रेणाङ्गोपकारसम्बन्धः। इह पुनश्चोदनाभेदादेतन्न सम्भवति ॥ २७ ॥

कालगुणभेदाच्च ॥ २८ ॥

अन्यस्मिन्काले पशोः प्रयाजाः कृताः अन्यकालीनस्य कथं पुरोडाशस्योपकुर्युरिति। तथा गुणभेदाच्च। एकादशसंख्यागुणका हि पशोः प्रयाजाः, पञ्चसंख्यागुणकाः पुरोडाशस्य। अतोऽपि न तन्त्रेणोपकारसम्बन्धः।

एवमाचार्येण पक्षद्वयोपन्यासः कृतः। अत्र य एव न्याय्यतरः स एवाङ्गीकर्त्तव्यः। कश्चासौ। अक्रियाऽन्यस्य समानार्थत्वादिति। अङ्गोपकारस्य हि आम्नानसामर्थ्यादन्त्येऽवयवे चाङ्गानामपूर्वसम्बन्ध इष्यते। इतरथाऽङ्गप्रधानयोरसम्बन्ध एव भवति। यदाऽङ्गानि न तदा प्रधानानि, प्रधानकाले च नाङ्गानीति। एवं च सति यद्यप्यत्र चोदनाभेदस्तथापि प्रयाजकृतापूर्वे विद्यमानत्वात् पशुपुरोडाशेऽपि प्रसज्यत एव। चोदनाभेदोऽत्राकारणमिति। तथा कालभेदो गुणभेदश्च। तस्मात्साध्वभिहितमिडामवद्यत्यक्रियाऽन्यस्य समानार्थत्वादिति ॥ २८ ॥

(निरूढपशौ पश्वाद्यन्यतमदक्षिणा)

पशुर्दक्षिणा धेनुर्वरो वा मार्जिते ॥ २९ ॥

पशुरेव पशोर्दक्षिणेति पुंपशुर्गृह्यते। वरशब्देन स्वाधीनं द्रव्यमभिरुचितमुच्यते। मार्जितग्रहणाच्च सन्निधानात्पशुपुरोडाशेडामार्जनं गृह्यते। तथा च श्रुतिः "पशुपुरोडाशेडायामेवोपहूतायां द-

क्षिणा नयेत्" इति ।

आचार्येण संज्ञपनवपोत्खेदनप्रसङ्गेन पशुविकर्त्तनाद्युखाप्रक्षेपणान्तमभिहितम् । अवसरः पुनरयम् । येनैवं श्रूयते "अथ यद्वपया प्रचर्यैतेन पुरोडाशेन प्रचरति" इति प्रकृत्य "तस्माद्वपया प्रचर्यैतेन पुरोडाशेन प्रचरत्येष न्वेवैतस्य बन्धुर्यत्र क्वचैष पशुं पुरोडाशोऽनुनिरुप्यतेऽथ पशुं विशास्ति" इति । तथा शाखान्तरे "अग्नीषोमीयस्य वपया प्रचर्याग्नीषोमीयं पशुपुरोडाशमनुनिर्वपति" इति । अतोऽत्रैव पशुविकर्त्तनाद्युखाप्रक्षेपणान्तम् ॥ २९ ॥

इति षष्ठाध्याये सप्तमी कण्डिका ।

ततः—

(शमित्रनुशासनम्)

(१) शमितारं शास्ति त्रिः प्रच्यावयतात्रिः प्रच्युतस्य हृदयमुत्तमं कुरुताद्यत्त्वा पृच्छाच्छृत३ँ हविः शमिता३रिति शृतमित्येव ब्रूतान्न शृतं भगवो न शृत३ँ हीति ॥ १ ॥

हृदयमुत्तमं कुरुतादित्यनेकपशुके विपरिणम्यते । "यत्त्वा पृच्छात्" इत्येवमादि द्वितीयमनुशासनम् । अतस्तृतीयसवने "शमित्रनुशासनप्रभृति" इति यदुक्तं तदेवमादि प्रत्येतव्यम् । पूर्वानुशासनस्य त्वर्थो निर्वृत्त एव ॥ १ ॥

(शमिता यथाऽनुशासनं करोति)

त्रिः प्रच्युते हृदयं प्रवृह्योत्तमं करोति ॥ २ ॥

---

(१) अयमर्थः—हे शमितस्त्वं पशुं त्रिः प्रच्यावयतात् प्रच्यावय उत्कालय त्रिःप्रच्युतस्य ऊर्ध्वमावृत्तस्य हृदयमुपरि स्थापयेति । यत् यदा त्वां कश्चित्पृच्छात्पृच्छेत् "शृत३ँ हविः शमित३ः" इति तदा त्वं शृतमित्येव ब्रूतात् ब्रूहि । नहि पुनरेवं ब्रूयात् 'शृतं भगव' इति । तथा एवमपि न ब्रूयात्'शृत३ँ हि'इति । एतदुक्तं भवति, शृतमित्येतावदेव प्रतिवक्तव्यम्, भगवच्छब्दो वा हिशब्दो वा न परत उच्चारणीय इति ।

प्रच्यावनं चोत्सेचनमुच्यते। वृह निष्कर्षणे। शूलान्निष्कृष्य हृदयमुत्तममवदानोत्तमं ( सर्वेषामुपरि ) करोति ॥ २ ॥

शूलं चाभूमौ ॥ ३ ॥

करोतीति अनुवर्त्तते ॥ ३ ॥

( शृतहविषः प्रश्नोत्तरे )

जुह्वा पृषदाज्यस्यादायोपनिष्क्रम्य पृच्छति-शृतꣳ हविः शमिता ३ रिति त्रिरभिक्रामम् ॥ ४ ॥

जुह्वा पृषदाज्यं गृहीत्वा चात्वालोत्करावन्तरेणोपनिष्क्रम्य त्रिः पृच्छति—"शृतं हविः शमिता३ः" इति अभिक्रम्याभिक्रम्य ॥ ४ ॥

प्रोक्ते तद्देवानामित्याहोपाꣳशु ॥ ५ ॥

शृतमिति प्रोक्ते शमित्रा प्रतिप्रश्ने, "तद्देवानाम्" इत्याहाध्वर्युरुपांशु ॥ ५ ॥

( हृदयाद्यभिघारणम् )

"सन्ते मन" इति हृदयमभिघार्य सर्वम् ॥ ६ ॥

पशुमभिघारयतीति सूत्रशेषः। पृथक्त्वेन हृदयग्रहणात् पृषदाज्येनाभिघारणं तस्यैव। इतरस्येतरेणाज्येन तूष्णीमेव प्राकृतत्वादभिघारणं स्यात्। मन्त्रस्तु वचनात् हृदये एव ॥ ६ ॥

( वेद्यां प्लक्षशाखासु हृदयादीनां प्रतिप्रस्थात्राऽवदानम् )

पश्चसी वपावदुधृत्वा दक्षिणतः प्रतिप्रस्थाता वेद्यां प्लक्षशाखास्ववद्यति ॥ ७ ॥

वपावदित्यन्तरा यूपाग्न्योर्हृत्वा दक्षिणतो वेद्यामासादयति। उत्तरत आसादने प्राप्ते वचनाद्दक्षिणत इत्युच्यते। उखास्थस्य ( एव पशोः ) सान्नाय्यविकारत्वादासादने प्राप्ते वचनाद्वेद्यामित्युच्यते। प्रतिप्रस्थाता तु प्लक्षशाखास्ववद्यति। वचनात्। आलम्भनानन्तरमध्वर्योरेव ॥ ७ ॥

( जुह्वादिषु घृतेनोपस्तीर्य मनोताऽनुवाक्याप्रैषदानानन्तरं जुहूप-
भृतोर्हृदयादीनां गुदादीनां चावदानम् )

जुहूपभृतोरुपस्तृणीते वसाहोमहवन्यां पात्र्यां च मनोतायै हविषोऽवदीयमानस्यानुब्रूहीत्युक्ते स्रुचोरवद्यति यथोक्तं द्विर्द्विः ॥ ८ ॥

यथोक्तग्रहणाज्जौहवानि जुह्वामौपभृतान्युपभृति । द्विरवदानं वचनात् "तानि द्विर्द्विरवद्यति" इति ॥ ८ ॥

अशेषे गुदतृतीये ॥ ९ ॥

गुदतृतीये पुनरशेषे गृह्येते ॥ ९ ॥

( अधस्तादुपरिष्टाच्च हिरण्यावदानम् )

वपावद्धिरण्यम् ॥ १० ॥

अधस्ताच्चोपरिष्टाच्च । मनोताप्रैषस्तु प्रतिप्रस्थातुरेवेति सम्प्रदायः ॥ १० ॥

( उपस्तीर्णवसाहोमहवन्यां वसाग्रहणादिकम् )

"रेडसीति वसां गृहीत्वा द्विरभिघार्य "प्रयुतमिति पार्श्वेन संसृजत्यसिना वा ॥ ११ ॥

"रेडसि" इत्यनेन मन्त्रेण वसाहोमहवन्यां वसां (मांसपाकरसं) गृहीत्वा द्विरभिघार्य "प्रयुतम्" इत्यनेन मन्त्रेण पार्श्वेनासिना वाऽऽड्वालयति ॥ ११ ॥

( वसाशेषमिडापात्र्यामासिच्य क्रोडादीनि प्रक्षिपेत् )

शेषमिडापात्र्यामासिच्य क्रोडमनस्थीनि च प्रास्यति श्रोणिवर्जम् ॥ १२ ॥

चोदकपरिप्राप्त्या च अतः पूर्वं प्राशित्रग्रहणम् । तत आसेचनादि ॥ १२ ॥

( सुगुते स्थाने जाघनीगुदं स्थापयित्वा मैत्रावरुणप्रैषः )

जाघनीगुदन्निधायाहेन्द्राग्निभ्यां छागस्य ह-

त्रिषोऽनुब्रूहीति ॥ १३ ॥

आग्नेयीगुदयोर्निधानमुच्यते पशुसम्मर्शनाभावप्रज्ञप्त्यर्थम् । प्रतिपत्तिर्हि पशुसम्मर्शनम् । न चैते प्रतिपाद्ये । कार्यार्थत्वात् । इन्द्राग्निभ्यां छागस्य हविषोऽनुब्रूहीति प्रयोगप्रदर्शनार्थमुक्तमेव ॥ १३ ॥

आश्राव्याहेन्द्राग्निभ्यां छागस्य हविः प्रेष्येति ॥ १४ ॥

एतदपि प्रयोगोपप्रदर्शनार्थमेव ॥ १४ ॥

प्रस्थितमिति च प्रसुते ॥ १५ ॥

प्रसुतशब्देन सवनीयो लक्ष्यते नानुबन्ध्योऽपि । येन सवनीयविकारे त्रिपशौ प्रस्थितशब्दमुपसंहरति "प्रस्थितमिति च त्रिपशोः सर्वम्" इति ॥ १५ ॥

( वसाहोमः )

अर्धर्चान्तरे याज्यायै वसैकदेशं जुहोति "घृतं घृतपावान" इति ॥ १६ ॥

याज्यायै इति षष्ठ्यर्थे चतुर्थी ॥ १६ ॥

( पृषदाज्यं गृह्णन् अनुवाक्याप्रैषं दत्त्वा याज्याप्रैषार्थं प्रैषं दद्यात् )

दैवतं हुत्वा प्रदक्षिणमावृत्य जुह्वा पृषदाज्यस्योपघ्नन्नाह वनस्पतयेऽनुब्रूहीति ॥ १७ ॥

प्रदक्षिणग्रहणमितरथावृत्तिव्युदासार्थम् । उपपूर्वो हन्तिश्च ग्रहणार्थोऽन्यत्रापि दृष्टः "अथ स्रुवेणोपहत्याज्यम्" इति । "समिधाऽऽज्यस्योपहत्य" इति च ॥ १७ ॥

आश्राव्याह वनस्पतये प्रेष्येति ॥ १८ ॥

अस्य च स्विष्टकृद्विकारत्वं सङ्कर्षे उक्तम् । देवतासङ्कीर्तनानि चात्र स्विष्टकृद्वदुपलभ्यन्ते । प्रयोजनं नोपांशुयाजविध्यन्तः । स्वरश्चात्र सौविष्टकृत इति ॥ १८ ॥

( स्विष्टकृद्यागः )

हुत्वा समानीय सौविष्टकृतम् ॥ १९ ॥

हुत्वा वानस्पत्यं, समानीय सौविष्टकृतं द्रव्यमौपभृतं, स्विष्टकृद्यागं करोतीति सूत्रशेषः। समानयमानेन च स्विष्टकृदनुवाचनं कर्त्तव्यम्। "अथ यान्युपभृत्यवदानानि भवन्ति तानि समानयमान आह" इति वचनात् ॥ १९ ॥

( वसाशेषेण वाजिनवद्दिशां व्याघारणं निःशेषम् )

प्रत्येत्य वा दिशो व्याघारयति वसाशेषेण वाजिनवत् ॥ २० ॥

न्यायात्तत्रस्थस्यैव व्याघारणे प्राप्ते वाशब्देन पक्षं व्यावर्त्य जुहोतित्वात् जुहोतिस्थानमुच्यते। वाजिनवत् व्याघारयति ॥ २० ॥

इयांस्तु विशेषः—

सर्वं जुहोति ॥ २१ ॥

इति षष्ठाध्याये अष्टमी कण्डिका।

( उपयुक्तातिरिक्तानां पश्वङ्गानां संमर्शनम् )

"ऐन्द्रः प्राण" इति पशुꣳ सम्मृशति ॥ १ ॥

पशुशब्दश्च मांसोपलक्षणार्थः। तानि चोपयुक्तव्यतिरिक्तानि ग्रहीतव्यानि। तत्संस्काराद्विमाथाशङ्कादर्शनाच्च। विमाथाशङ्का हि तत्रैव भवति नोपयुक्तेषु। "अथ पशुꣳ संमृशति" इति प्रकृत्याह "अथ यत्पुरा संमृशति य इम उपतिष्ठन्ते विमथिष्यन्ते (बलादपहरिष्यन्ते) इति शङ्कमान" इति। तस्मात्प्राशित्रेडाजाघनीगुदव्यतिरिक्तानां सम्मर्शनम् ॥ १ ॥

अवदाय वेडां प्राक् प्रदानात् ॥ २ ॥

पशुसम्मर्शनम्। वाशब्दो विकल्पार्थः। तच्च जाघनीगुदनिधानोत्तरकालं, प्राक्प्रदानादित्युक्तत्वात् ॥ २ ॥

( इडाधानम् )

इडामादधाति ॥ ३ ॥

वैकृतावसरे प्राकृतानुवृत्त्यर्थम् । अतश्च प्राशित्रप्रदानं पूर्वम् ॥ ३ ॥

उपहूतायां वानिष्ठुमग्नीधे ॥ ४ ॥

प्रयच्छति ॥ ४ ॥

अध्यूध्नीᳬं होत्रे ॥ ५ ॥

समर्पयति ॥ ५ ॥

अवान्तरेडा वा ॥ ६ ॥

अध्यूध्नी भवति । अवान्तरेडाकार्येऽध्यूध्नी भवतीत्यर्थः । अस्मिंश्च पक्षेऽवान्तरेडा न दीयते । क्लोमादीनामप्यस्मिन्नेवावसरे समर्पणम् । शाखान्तरात्–"क्लोमं ब्रह्मणे प्लीहं यजमानाय पुरीततमध्वर्यवे" इति । एषां चात्र विकल्प इत्युक्तमेव ॥ ६ ॥

( अध्वर्योः आग्नीध्रादीन्प्रति प्रैषः )

मार्जिते प्रैष्यत्यग्नीदौपयजानङ्गारानाहरो,पयष्टरुपसीद,ब्रह्मन्प्रस्थास्यामि, समिधमाधायाग्निमग्नीत्सम्मृड्ढीति ॥ ७ ॥

मार्जितग्रहणं च पवित्रप्रतिपत्त्युल्मुकसमासोपलक्षणार्थमपि । येन वैकृतप्रैषसमनन्तरं ब्रह्मन्प्रस्थास्यामीति प्राकृतमाह ॥ ७ ॥

( यथाप्रैषमाग्नीध्रोऽनुतिष्ठति )

शामित्रादङ्गारानाहृत्य वेदिश्रोण्यां निवपत्युत्तरस्याम् ॥ ८ ॥

अग्नीदुपयड्ढोमार्थम् ॥ ८ ॥

आग्नीध्रीयाद्वा सोमे होतृधिष्ण्ये ॥ ९ ॥

आग्नीध्रीयाद्वा अङ्गारानाहरति सोमे, शामित्राद्वेति विकल्पः । इयांस्तु विशेषो होतृधिष्ण्ये निवापः ॥ ९ ॥

( अनुयाजेषु हूयमानेषु वेदिश्रोण्यां होतृधिष्ण्ये वा न्युप्तेषु अङ्गारेषु प्रतिप्रस्थाता प्रच्छिद्य प्रच्छिद्य एकादशधा हस्तेन गुदकाण्डं तृतीयं जुहोति )

प्रतिप्रस्थातोपयजति गुदतृतीयस्य प्रच्छेद–

मनुयाजेषु "समुद्रं गच्छेति प्रतिमन्त्रम्॥ १० ॥

अङ्गाराहरणस्य दृष्टार्थत्वात् अङ्गारेषु जुहोति। हस्तेनैव। "हस्तेन गुदकाण्डं जुहोति" इति वचनात्॥ १० ॥

( मुखोपस्पर्शनं करोति प्रतिप्रस्थाता )

प्रतिवषट्कारꣳ हुत्वा "मनो म" इति मुखोपस्पर्शनम् ॥ ११ ॥

प्रतिप्रस्थाता करोतीति वाक्यशेषः ॥ ११ ॥

( धारानुयाजान्ते स्वरुहोमः )

अनुयाजान्ते स्वरुं जुहोति "दिवं ते धूम" इति ॥ १२ ॥

अन्तग्रहणाच्च धारानुयाजान्ते स्वरुहोमः। चोदितार्थाभिधानाच्च मन्त्रस्य स्वरुबहुत्वे विपरिणामः॥ १२ ॥

( स्रुग्व्यूहनम् )

पशुदेवतावनस्पतिभ्याꣳ स्रुग्व्यूहनम् ॥ १३ ॥

स्विष्टकृद्विकारत्वात् वनस्पतेरप्राप्तं सङ्कीर्त्तनं वचनादभिधीयते। पशुदेवतायाश्च गुणार्थमुच्चारणम् ॥ १३ ॥

( पशुपुच्छेन चत्वारोऽपि पत्नीसंयाजाः )

जाघन्या पत्नीसंयाजनम् ॥ १४ ॥

आज्यकार्यापत्तेश्च आसादनालम्भने अस्याः (जाघन्याः) क्रियेते। जाघनीबहुत्वे चासादनमन्त्रे विपरिणामः ॥ १४ ॥

(१)उत्तानाया देवानां पत्नीभ्यो ऽवद्यति ॥ १५ ॥

वचनात् ॥ १५ ॥

इडां च ॥ १६ ॥

उत्तानाया एव ॥ १६ ॥

---

(१) उत्तानाया जाघन्या मध्यवर्तिपार्श्वात् देवानां पत्नीभ्योऽवद्यतीत्यर्थः।

(१)परिवर्त्याग्नये गृहपतयेऽग्नीधे च ॥ १७ ॥

अवद्यति । वचनादेव ॥ १७ ॥

आज्येन पूर्वे ॥ १८ ॥

द्वे कर्मणी कर्त्तव्ये । पत्नीसाधनके एव हि यागे जाघनी विहिता "अथ जाघन्या पत्नीः संयाजयन्ति" इति ॥ १८ ॥

सर्वा वा जाघन्याऽविशेषात् ॥ १९ ॥

सर्वा एव वा जाघन्या कर्त्तव्याः । कुत एतत् । पत्नीसंयाजत्वाविशेषात् । "ते वै पत्नीः संयाजयिष्यन्तः प्रतिपरायन्ति" इति प्रकृत्य "चतस्रो देवता यजति" इति ॥ १९ ॥

इति षष्ठाध्याये नवमी कण्डिका ।

( हविर्यज्ञविधे बर्हिर्होमानन्तरमाहवनीयोपस्थानानन्तरं वोदकं गत्वा शुष्कार्द्रसंधौ हृदयशूलमुपगूहति सवविधे तु बर्हिर्होमानन्तरमेव )

बर्हिर्हुत्वाऽपो गच्छन्ति हृदयशूलमादाय ॥ १ ॥

"अथ हृदयशूलेनावभृथं यन्ति" श्रुतेः । अवभृथशब्दश्चात्रौपचारिकः । अपोगमनसम्बन्धात् । अतश्च यागो न भवति । तथाच सूत्रकारः—"बर्हिर्हुत्वाऽपो गच्छन्ति हृदयशूलमादाय" इति शूलस्यादानमात्रम् (आह) न शूलेनावभृथमिति । प्रतिपत्तित्वाच्चानेकशूले सर्वेषां प्रतिपत्तिः ॥ १ ॥

आहवनीयं वोपस्थाय व्रतादीनि चेत् ॥ २ ॥

वाशब्दो विकल्पार्थः यत्र व्रतादीनि । तानि च हविर्यज्ञविधे इति ॥ २ ॥

अभ्यवेत्य शुष्कार्द्रसन्धौ हृदयशूलमुपगूहति "शुगसि तमभिशोच यो ऽस्मान्द्वेष्टि यं च वयं द्विष्मो, माऽपो मौषधीरिति च ॥ ३ ॥

अभ्यवेत्येत्यवतीर्योदके शुष्कार्द्रसंधौ हृदयशूलमुपगूहति "शुग-

---

(१) जाघनीं परिवर्त्य उत्तानविपरीतां कृत्वा अग्नये गृहपतयेऽवद्यति । अग्नीधे तु पूर्वसूत्रोक्ताद्भागादेवावद्यतीति देवयाज्ञिकः ।

सि" इत्यनेन मन्त्रेण । चोदितार्थाभिधानाच्चास्यानेकशूले विपरिणामः ॥ ३ ॥

( उदकगमनमनुत्सहन् यूपाग्रे निषिच्य पूर्ववदुपगूहति )

ग्लायन्नुदपात्रं निषिच्य पूर्वेण यूपं यथोक्तमुपगूहति ॥ ४ ॥

ग्लै हर्षक्षये । ग्लायन्निति उदकं प्रति गमनमनुत्सहन्नग्रेण यूपमुदपात्रं निषिच्य शुष्कार्द्रसन्धौ यथोक्तं शूलमुपगूहेत् ॥ ४ ॥

(अथ उपस्पर्शनमभिमन्त्रणं वा सर्वेषाम्)

"धाम्नो धाम्नः" "सुमित्रिया न" इत्युपस्पृशन्त्यपः ॥ ५ ॥

मन्त्राभिधानसामर्थ्यात् (उपस्पृशन्ति)। वरुणशब्देन हि आपोऽभिधीयन्ते ॥ ५ ॥

उपगूहनशेषो वा पूर्वः ॥ ६ ॥

पूर्वो मन्त्र उपगूहनशेष एव भवति । विशेषेणोपगूहने एव पठ्यते इति ॥ ६ ॥

अभिमन्त्रणं वोत्तरेण ॥ ७ ॥

"सुमित्रया न" इत्यनेनाभिमन्त्रणं वा भवति अपामुपस्पर्शनं वा । माध्यन्दिनीयायां ह्यभिमन्त्रणं पठ्यते "अथाभिमन्त्रयते सुमित्रिया न" इति । काण्वीयायां चोपस्पर्शनम् "अथाप उपस्पृशन्ति सुमित्रिया न" इति । अतो विकल्पः ॥ ७ ॥

( अग्नीषोमीयसवनीयव्यतिरिक्तेषु शूलावभृथः )

न सोमेऽनूबन्ध्यावर्जम् ॥ ८ ॥

स चायं शूलावभृथः सोमेऽनूबन्ध्यावर्जं न भवति । एवं हि श्रूयते "स वै नाग्नीषोमीयस्य पशोः करोति नाग्नेयस्य वशाया एवानूबन्ध्यायाः" इति । नञश्चात्र न प्रतिषेधार्थता । अतुल्यप्रमाणशिष्टत्वात् । प्रकरणेन ह्यग्नीषोमीयस्य प्राप्नोति, वाक्येन प्रतिषेधः । विकल्पस्य चान्याय्यत्वात् । अन्याय्यो हि विकल्पः । पक्षे बाधात् । अतः पर्युदासरूपेण नाग्नीषोमीयस्य करोति नाग्नेयस्येति अनग्नीषो-

मीयस्य पशोः करोति अनाग्नेयस्येति । अग्नीषोमीयलवनीयव्यति-रिक्तेषु शूलावभृथ इति । वशाया एवानूबन्ध्याया इति नित्यानुवादः॥८॥

वरुणप्रघासव्रत्समिदाधानम् ॥ ९ ॥

भवतीति सूत्रशेषः ॥ ९ ॥

( व्रतविसर्गान्ते अपराग्नीनां पूर्वं समारूढनिर्मथिते वा चतुर्गृहीतहोमः )

व्रतं विसृज्यापराग्नीनां पूर्वं चतुर्गृहीतं यूपाहुतिवत् ॥ १० ॥

व्रतविसर्गोपदेशाच्च यत्रैव व्रतं तत्रैव भवति नाग्नीषोमीये इति ॥१०॥

स विहारोऽतः ॥ ११ ॥

अतः परमयं विहारः । अत्र कर्मापवर्गा ( समित् ) दीयते इति केचित् । तदयुक्तम् । अतिप्रणीतस्य पश्वङ्गाभिनिर्वृत्त्यर्थत्वात् । तदङ्गत्वाच्च कर्मापवर्गाथाः ।

नित्यधार्यर्थमित्यपरे । अतिप्रणीतो हि पश्वर्थमुद्धृतस्तदपवर्गे च स एव विहारो न्याय्य इति ।

सम्प्रदाये तु स विहार इत्यग्निहोत्रार्थमुच्यते । अग्नीषोमीयविकारत्वादस्तमिते परिसमाप्तिरस्य । तत्र चाग्निहोत्रं विहारस्य धारकमतः स विहार इत्यग्निहोत्रार्थमुक्तम् ।

गताश्रियः पक्षस्त्वत्र न्याय्यतर इवाभाति । अग्निहोत्रार्थत्वे हि विहारस्यासम्भव एव । इदमग्निहोत्रं पशुयागान्ते वा हूयेत तन्त्रमध्ये वा । यदि तन्त्रमध्ये प्रसङ्गादतिप्रणीत एव प्राप्नोति । अथान्ते ततः "अपवृत्तकर्मा लौकिक" इति पुनरुद्धरणं प्रयोजयति । यत्पुनरुच्यते अग्निहोत्रं विहारस्य धारकमिति । तदनुपपन्नम् । अन्यार्थे हि विहारे तत्परिसमाप्तौ कर्मान्तरं विहारस्य धारकमिति दुःशकं वक्तुम् ॥११॥

समारूढनिर्मथिते वा ॥ १२ ॥

अपराग्नीनां पूर्वं एव समारूढनिर्मथिते वा इयमाहुतिर्भवति ॥ १२ ॥

( अस्यामाहुतौ यथोत्साहं दक्षिणादानम् )

यथोत्साहं दद्यादस्याम् ॥ १३ ॥

"तन्नो यच्छक्नुयात्तद्दद्यात" इति वचनात् ॥ १३ ॥

[ निरूढपशौ सदोहविर्धानादिकं न कर्तव्यम् ]

अग्निं प्रणीय सदोहविर्द्धानाग्नीध्रहोतृधि-
ष्ण्यान्यथोक्तं गृहीत्वाऽऽज्यान्याग्नीध्रप्रणयनम-
ग्नीषोमीयदर्शनात ॥ १४ ॥

सदआदीनि ह्यग्नीषोमीये दृश्यन्ते। सदसि स्थितेन होत्रा वषट्कारः कृतः।"उत यत्सुन्वन्ति तत्सामिधेनीरन्वाह" इति हविर्द्धाने सामिधेन्यनुवचनम्। आग्नीध्रे प्रत्याश्रावणम्। होतृधिष्ण्ये उपयड्ढोमः। गृहीत्वाऽज्यान्याग्नीध्रप्रणयनम्। आग्नीध्रीयादङ्गाराहरणम्। एतानि ह्यग्नीषोमीये दृष्टानि। तद्विकाराच्चात्रापि भवन्तीति ॥ १४ ॥

न सोमार्थत्वात् ॥ १५ ॥

सोमार्थानि हि सदआदीनि। सोमं प्रकृत्य श्रूयते-"उदरमेवास्य सदः, शिर एवास्य हविर्द्धानं, बाहू एवास्याग्नीध्रीयश्च मार्जालीयश्च" इत्येवमादि ॥ १५ ॥

प्रसङ्गादर्शनम् ॥ १६ ॥

सोमप्रयुक्तानामेषां प्रासङ्गिकमग्नीषोमीये दर्शनम् ॥ १६ ॥

दर्विहोमेष्विदानीं चिन्त्यते। किमपूर्वा दर्विहोमाः उत पूर्ववन्त इति। तत्रेदमुच्यते—

[ दर्विहोमेषु प्रयाजादिव्यतिरिक्ता अनर्थलुप्ता दर्शपूर्णमासधर्माः ]

दर्विहोमाः पौर्णमासधर्मा जुहोत्यविशेषात ॥ १७ ॥

दर्विहोमास्त्रैयम्बकादयः। ते पौर्णमासधर्मा भवन्ति। पौर्णमासशब्देन दर्शस्याप्युपलक्षणम्। पयःसाधनकेषु हि द्रव्यसामान्यात् सान्नाय्यधर्मा इष्यन्ते। कुत एतत् पौर्णमासधर्मा इति। जुहोत्यविशेषात्। जुहोतियजत्योर्यतो ऽविशेषः। उभयत्र हि द्रव्यदेवतावत्त्वम्। "त्रैयम्बकान्निर्वपति रौद्रान्" इति निर्वपतिशब्देनौषधमवगम्यते। सौर्यादिषु दृष्टत्वात्। तथाऽन्यत्र "धानाभिर्जुहोति सक्तुभिर्जुहोति लाजैर्जुहोति" इति द्रव्यविधानम्। मान्त्रवर्णिकी देवता। तेनोभयत्र द्रव्यदेवतावत्त्वाद्यजतिजुहोत्योरविशेषः। अधर्मकाश्च दर्विहोमाः। धर्मापेक्षायां च सत्यां द्रव्यदेवतावत्त्वसामान्यात्पौ-

र्णमासधर्मा इति युक्तरूपता ॥ १७ ॥

किं च—

जुहूदर्शनाच्च ॥ १८ ॥

मारुतान् हि प्रकृत्य श्रूयते। "कथमस्यैते पुरोऽनुवाक्यावन्तो याज्यावन्तो वषट्कृते स्रुचा हुता भवन्ति" इति प्रश्नपूर्वकमाह "एतेषां वै सप्तपदानां मारुतानां यानि त्रीणि प्रथमानि पदानि सा त्रिपदा गायत्री पुरोऽनुवाक्या,अथ यानि चत्वार्युत्तमानि सा चतुष्पदा त्रिष्टुब्याज्येदेमव कपुच्छलमयं दण्ड" स्रुगनुग्रहः। एतेषां च पौर्णमासे दृष्टानामनुग्रहं ब्रुवन्पौर्णमासधर्मत्वं दर्शयति ॥ १८ ॥

एवं सर्वधर्मपरिप्राप्ताविदमाह—

तूष्णीमनर्थलुप्ताः ॥ १९ ॥

वचनान्मन्त्रनिवृत्तिः। अनर्थलुप्ता इति दृष्टेनार्थेनालुप्ता इत्यनर्थलुप्ताः। यथैकाग्नित्वेऽपि गार्हपत्य श्रपणादीति ॥ १९ ॥

एकाग्नयः ॥ २० ॥

एकाग्निसाध्या एव पदार्था भवन्ति ॥ २० ॥

अप्रयाजा अननुयाजा असामिधेनीकाः ॥ २१ ॥

तूष्णीमित्युक्तत्वात्सामिधेनीसहचरितकाष्ठानिवृत्तिः ॥ २१ ॥

अनिगदाः ॥ २२ ॥

निगदशब्देन स्विष्टकृल्लक्ष्यते। अस्विष्टकृत इत्यर्थः॥ २२ ॥

प्रतिनिगद्य होमाः ॥ २३ ॥

तूष्णीमित्युक्तत्वाद्देवतां प्रतिनिगद्य होम उच्यते ॥ २३ ॥

वषट्कारनिवृत्त्यर्थमुच्यते—

स्वाहाकारप्रदानाः ॥ २४ ॥

परतन्त्रोत्पत्तयो जुहोतिमात्राः ॥ २५ ॥

परतन्त्रोत्पत्तयः। यथा वाजपेये ऽन्नहोमः, सर्वमेधे च। तन्त्रस्य विद्यमानत्वादिति न्यायसूत्रमेतत् ॥ २५ ॥

पाकयज्ञपशुष्वग्नीषोमीयविध्यन्त इष्यते। तत्प्रसङ्गेन पाकयज्ञविषयमिदमाह—

[ स्मार्तहोमेषु होमार्थमवत्तस्य सशेषस्य होमः ]

पाकयज्ञेष्ववत्तस्यासर्वहोमः ॥ २६ ॥

पाकयज्ञशब्देन च स्मार्त्ता होमा उच्यन्ते । तत्र होमाय यदवत्तं तस्य असर्वस्य होमः कर्त्तव्यः ॥ २६ ॥

हुत्वा शेषप्राशनम् ॥ २७ ॥

कुत एतत्—

अग्निहोत्रे तदस्य पाकयज्ञस्येवेति श्रुतेः ॥ २८ ॥

अग्निहोत्रे हि शेषप्राशनं विहितम् "अथैतदग्नौ हुत्वोत्सृप्या-चामति निर्लेढि" इति । तस्य पाकयज्ञेन संस्तवं करोति "तदस्य पशव्यꣳ रूपं पशव्यो हि पाकयज्ञ" इति । यदि पाकयज्ञे प्राशनमुचितं तत एतदुपपद्यते नान्यथेति ॥ २८ ॥

( स्मार्तपशुषु अग्नीषोमीयाद्धर्माः )

अग्नीषोमीयात्पशुषु ॥ २९ ॥

प्राणिसाधनकत्वसामान्याद्विध्यन्तप्रवृत्ताविदमाह ॥ २९ ॥

( स्मार्तपशुषु शाखायां पशुनियोजनम् )

शाखानियोजनम् ॥ ३० ॥

शाखायां पशुनियोगः कर्त्तव्यो न यूपे ॥ ३० ॥

(हृदयादीनां त्रयाणां, पञ्चानां, सर्वेषां वाऽवदानमिति त्रयो विकल्पाः)

वपाꣳहुत्वा त्रीणि पञ्च सर्वाणि वाऽवद्यति ॥ ३१ ॥

न सर्वाण्येवेति ॥ ३१ ॥

( सर्वावदानाभावे शेषात्स्विष्टकृदवदानम् )

सर्वाभावे शेषात्स्विष्टकृतः ॥ ३२ ॥

प्रधानावदानशेषात्स्विष्टकृदर्थं ग्रहीतव्यम् ॥ ३२ ॥

स्थालीपाकेन सह प्रदानम् ॥ ३३ ॥

"सहयुक्तेऽप्रधाने" इति तृतीयाविभक्तिर्भवति । तथा च सहत्वमात्रं स्थालीपाकस्य नावदानैस्तुल्यता । प्रयोजनमन्तरायेऽप्रयोक्तृत्वमिति ॥ ३३ ॥

( पूर्णपात्रो दक्षिणा वरो वा )

पूर्णपात्रो दक्षिणा वरो वा वरो वा ॥ ३४ ॥

औषधस्य मानपात्रं पूर्णपात्रः । स्वाधीनं द्रव्यमभिरुचितं च वरशब्दवाच्यमिति ॥ ३४ ॥

इति कातीयश्रौतसूत्रभाष्ये कर्कोपाध्यायविरचिते षष्ठो निरूढपशुबन्धाध्यायः समाप्तः ।



# सप्तमोऽध्यायः ।

इतः परं पञ्चाध्याय्या सोमयागनिरूपणम् ।

श्रुत्यर्थमनुविदधताऽऽचार्येण हविर्यज्ञा अनुविहिताः। इदानीं श्रुतिमन्त्रपाठावसरप्राप्तो ज्योतिष्टोमोऽनुविधेयः। श्रुतिपाठो हि "देवयजनं जोषयन्त" इति। मन्त्रपाठश्च "एदमगन्म देवयजनम्" इति। अत्र च क्रमनिरूपणायाधिकरणमारब्धवानाचार्यः।

( अन्ययागानां दर्शपूर्णमासपूर्वकत्वम् )

दर्शपूर्णमासाभ्यामिष्ट्वाऽन्येन यजेतेति श्रुतेः ॥१॥

फलवत्सु क्रमं प्रत्यनियमोऽभिहितः "अनियमः फलसंयुक्तेषु"(का. श्रौ.१।५।१६) इति । इह पुनर्वाचनिकः क्रम इष्यते-दर्शपूर्णमासाभ्यामिष्ट्वाऽन्येन यजेतेति। एवं हि श्रुतिर्भवति "देवरथो वा एतौ यज्ञस्य यद्दर्शपूर्णमासौ स य एताभ्यामिष्ट्वाऽथान्येन यजते यथा ह वा रथस्पृष्ट एवावसाने देवानामवस्यति" इत्यनेन दर्शपूर्णमासपूर्विकाऽन्यत्र प्रवृत्तिरुच्यते।

अपरे तु वर्णयन्ति। दर्शपूर्णमासाभ्यामिष्ट्वाऽन्येन यजेतेति श्रुतेरिति इयमेव इतिकरणपरिच्छिन्ना श्रुतिः। अस्या एव च "देवरथो वा एतौ यज्ञस्य यद्दर्शपूर्णमासावित्ययमर्थवाद इति।

अन्यशब्देन च यजतेरेवाभिधानं न जुहोतेरपि। अन्येन यजेतेति वचनात्। तथा च प्रागप्यग्निहोत्रं न निवार्यते। न्यायप्राप्तानियमव्युदासार्थं च श्रुतिग्रहणम् ॥ १ ॥

किमेष एवोत्सर्गः,

नेत्युच्यते—

( उपक्लृप्तसोमस्य अग्निष्टोमपूर्वकत्वम् )

सोमेन वोपक्लृप्तसोमः ॥ २ ॥

सोमेन वा इष्ट्वाऽन्येन यजेत, य उपक्लृप्तसोमोऽग्निमाधत्ते। उपकल्पितं द्रव्यं येन सोमयागाय स उपक्लृप्तसोमः। तस्याधानसमनन्तरमेव सोमे प्रवृत्तिः ॥ २ ॥

कुत एतत्—

आधानस्य सोमप्राधान्यात् ॥ ३ ॥

सोमप्रधानं ह्याधानं सोमप्रयुक्तम्। एवं हि श्रूयते "सोमेन यक्ष्यमाणो नर्तुम्पृच्छेन्न नक्षत्रम्"इति। यक्ष्यमाण इत्यद्यतने लृङ्विभक्तिः। भविष्यत्यद्यतने लृट् स्मर्यते। यक्ष्यमाण इति च विशेषणोपादानसामर्थ्यादपि चायमर्थोऽवगम्यते। न हि कश्चिदयक्ष्यमाणः। सर्वस्य विहितत्वात्। तेनानन्तरं यक्ष्यमाण इति गम्यते। वाशब्दश्च व्यवस्थितविभाषार्थः। उपक्लृप्तसोमस्य सोमपूर्वत्वम्, इतरस्येष्टिपूर्वत्वमिति। सोमपूर्वत्वेऽपि चान्येषां यागानां दर्शपूर्णमासपूर्वतैव वाचनिकीति ॥३॥

यक्ष्यमाण आदधीतेति सोमप्रयुक्ते आधाने सोमापवर्गेऽस्याप्यपवर्ग इति परिचोदिते उत्तरसूत्रम्—

( सोमापवर्गेऽपि अन्ययागार्थं न पुनराधानम् )

नाविशेषात् ॥ ४ ॥

नैतदेवम्, सोमापवर्गेऽप्यपवृज्यत इति। कुत एतत्। अविशेषात्। सर्वकर्मार्था ह्यग्नयः। आधानं चाग्न्यर्थम्। सोमेन यक्ष्यमाण इत्यनेनाधानस्य कालान्तरतोच्यते नतु सर्वार्थताऽपनीयत इति ॥ ४ ॥

( प्रतिवसन्तम् अग्निष्टोमानुष्ठानम् )

वसन्तेऽग्निष्टोमः ॥ ५ ॥

अग्निष्टोमग्रहणं ज्योतिष्टोमोपलक्षणार्थं नोक्थ्यादिनिवृत्त्यर्थम्। वसन्ते ज्योतिष्टोम इत्येतदेवोक्तं भवति। यद्वा यद्वसन्तेवसन्ते ज्योतिषा यजेतेति, तदग्निष्टोमसंस्थेन। प्राथम्यान्नित्यत्वाच्च। चतुःसंस्थेऽपि ज्योतिष्टोमे उक्थ्यादीनामनित्यत्वं श्रूयते। "पशुकाम उक्थ्यं गृह्णीयात् षोडशिना वीर्यकाम स्तुवीतातिरात्रेण प्रजाकामं याजयेत्"इति। प्रकृतिभूताऽग्निष्टोमसंस्था। तां हि प्रकृत्य धर्माम्नानम्। नित्यानित्यसंयोगविरोधात् इतरासु तद्धर्मप्रसव इति(१)। तस्मात्साधूक्तं वसन्तेऽग्निष्टोम इति ॥ ५ ॥

---

(१) अत एव हरिस्वामिभिरप्युक्तम् 'संस्कारमध्यपाठात्त्वग्निष्टोमाद्याः सप्तसंस्थाः निष्कामैरपि कार्या' इति।

'चतुःसंस्थस्यापि ज्योतिष्टोमत्वात् अविशेषाच्च येन केनापीष्टे प्र-

( अपीतसोमपितृकस्य अपीतसोमपितामहकस्य च
ऐन्द्राग्नपशुयागपूर्वकोऽग्निष्टोमः )

ऐन्द्राग्नं पुनरुत्सृष्टमालभ्य द्विपुरुषासोमपीथिनः ॥ ६ ॥

पुनरुत्सृष्टो गौर्गृह्यते। तस्य हि वाहनेन दौर्बल्यादुत्सर्गः सम्भवति। क्वचिच्च दृश्यते—"पुनरुत्सृष्टो गौरग्नीषोमीय"इति।

छागो वा स्यादन्वयात्। तस्यापि हि हिमवत्प्रदेशे वाह्यमानस्योत्सर्गः सम्भवति। पुनरुत्सृष्टगुणरहिते देशे प्रायश्चित्तपूर्वकोऽन्यपशुरुपादेयः। अतश्चोदकानुग्रहाय छाग एवेति सम्प्रदायः। यत्तु श्रूयते "पुनरुत्सृष्टो गौः" इति, तत्र गोग्रहणादन्यत्रागौरिति भवति।

द्विपुरुषासोमपीथिन इति। यस्य पित्रा पितामहेन वा सोमो न पीतः तस्यैन्द्राग्नो भवति। एवं श्रूयते "यस्य पिता पितामहः सोमं न पिबेदथ स पिपासेत्स ऐन्द्राग्नं पुनरुत्सृष्टमालभेत" इति। अत्र च निमित्तवाक्यत्वात्प्रत्येकं वाक्यपरिसमाप्तिः। तथा चान्यतरस्यापि सोमापाने भवत्यैवैन्द्राग्न इति। अयं च न अन्वारम्भणीयावत् आरम्भे श्रूयते, न च दीक्षणीयावत्तन्त्रमध्ये। अतः पुरुषसंस्कारकत्वात्पूर्वतरयजनीये ऽहनि कर्त्तव्यः। पुरुषसंस्कारकता चास्य "यस्य पिता पितामहः सोमं न पिबेत्स दुर्ब्राह्मण" इति श्रवणात्। दौर्ब्राह्मण्यनिरासार्थं च श्रुत्या विधानमस्यातः पुरुषसंस्कारोऽयमिति सत्कृतिक्रिया ॥ ६ ॥

( अग्निष्टोमे षोडशानाम् ऋत्विजां वरणम् )

षोडशर्त्विजो ब्रह्मोद्गातृहोत्रध्वर्युब्राह्मणाच्छंसिप्रस्तोतृमैत्रावरुणप्रतिप्रस्थातृपोतृप्रतिहर्त्रच्छावाकनेष्टृग्नीत्सुब्रह्मण्यग्रावस्तुदुन्नेतॄन्वृणीते(१) ॥ ७ ॥

---

तिवसन्तं ज्योतिष्टोमेनेष्टमेव भवतीति नाग्निष्टोम एवेत्ययं नियम' इत्यपरे। युक्तं चैतत्, वचनं विना सङ्कोचस्यायुक्तत्वादिति। अथवाऽग्निष्टोमसंस्थस्योक्थ्यादीन्प्रति प्रकृतित्वज्ञापनार्थमग्निष्टोम इत्युक्तम्। अतोऽग्निष्टोमसंस्था प्रकृतिभूता। तामेव प्रकृत्य धर्माणामाम्नानात्। इतरासु च संस्थासु ततो धर्मप्राप्तिरिति।

(१) वरणं नाम करिष्यमाणकर्मस्वरूपदक्षिणाद्रव्यतत्परिमाणश्रा-

उपक्रमादेव तत्सिद्धेः षोडशग्रहणं न कर्त्तव्यम् । वा कर्त्तव्यं चमसाध्वर्युव्युदासार्थम् । तेषामपि हि ऋतौ यजतामृत्विगाख्या मा भूदिति । अस्त्विति चेत् , न । संख्यातत्वात् "ज्योतिष्टोमस्य यज्ञक्रतोः षोडशर्त्विज" इति । अतश्च तेषामृत्विगूनिबन्धनं कार्यं न भवति ॥७॥

( चतुर्णामेववा ब्रह्मादीनां वरणम् )

चतुरो(१) वाऽऽद्यांस्तत्पुरुषा इतरे यथावेदम् ॥८॥

आद्यांश्चतुरो वर्त्विजो वृणीते यस्मात्तत्पुरुषा इतरे यथावेदम् । ये ये यद्वेदविहितस्य कर्त्तारः ते तेषामाद्यर्त्विजां पुरुषाः । प्रधानपुरुषवरणेन च तेऽपि वृता भवन्तीत्यभिप्रायः । तथा च लिङ्गमश्वमेधे "यन्महर्त्विजो ब्रह्मौदनं प्राश्नन्ति तदेव होतृका अन्वाभक्ता" इति । वा सर्वान्वृणीते, न चतुर एव । वरणं ह्यानत्यर्थम् , भृतिश्च । न चान्यस्मिन्नृते भृते वाऽन्यो वृतो भृतो वा भवति । दर्शयति च पृथग्भृतिं दक्षिणादानं प्रकृत्य, "अथ पोत्रेऽथ नेष्ट्रेऽथाच्छावाकायाथोन्नेत्र" इत्येवमादि ॥ ८ ॥

ब्राह्मणाच्छंस्यग्नीत्पोतारो ब्रह्मणः ॥ ९ ॥

समासलक्षणेन पूर्वं पोतुरग्नीध उच्चारणम् ॥ ९ ॥

---

वणपूर्वकं स्वयमप्रवृत्तानां ब्रह्मत्वादिषु कर्मसु कर्तृत्वेनाभ्यर्थना । तद्यथा हिरण्यशतगवदक्षिणेन वासोऽश्वदक्षिणेन च रथन्तरपृष्ठेन चतुष्टोमेनाग्निष्टोमसंस्थज्योतिष्टोमेनाहं यक्ष्ये तत्र मे त्वं ब्रह्मा भवेति । अतोऽपि पूर्वं षड्विंशब्राह्मणोक्तं दैवर्त्विग्वरणम् । तद्यथा अग्निर्मे होताऽऽदित्यो मेऽध्वर्युश्चन्द्रमा मे ब्रह्मा पर्जन्यो म उद्गाता आपो मे होत्राशंसिन इति । होत्राशंसिपदेन च ब्राह्मणाच्छंसिप्रभृतिद्वादशर्त्विग्ग्रहणम् । ततो रश्मयो मे चमसाध्वर्यव इति च ।

(१) आपस्तम्बः "सोमेन यक्ष्यमाणो ब्राह्मणानार्षेयानृत्विजो वृणीते यूनः स्थविरान्वानूचानानूर्ध्ववाचोऽनङ्गहीनान्"इति प्रकृत्य "तान् वृणीते चतुरः सर्वान्वैकैकशोऽध्वर्युं प्रतिप्रस्थातारं नेष्टारमुन्नेतारमित्यध्वर्यून् ब्रह्माणं ब्राह्मणाच्छंसिनमाग्नीध्रं पोतारमिति ब्रह्मणो होतारं मैत्रावरुणमच्छावाकं ग्रावस्तुतमिति होतॄन् उद्गातारं प्रस्तोतारं प्रतिहर्तारं सुब्रह्मण्यमित्युद्गातॄन् सदस्यं सप्तदशं कौषीतकिनः समामनन्ति स सर्वकर्मणामुपद्रष्टा भवति" इति ।

( अग्निष्टोमयागदेशनिरूपणम् )

देवयजनं जोषयन्ते ॥ १० ॥

जुषिरीक्षणार्थः । "तद्वै देवयजनमीक्षन्त" इति वचनात् ॥ १० ॥

उन्नतꣳ सममविभ्रꣳशि ॥ ११ ॥

"तद्वर्ष्म सत्समꣳस्यात्" इति वचनात् ( श० ब्रा० ३।१।१।२ ) । अविभ्रꣳशीति अविनश्वरम् । भ्रश्यते हि भूमिर्गर्तैः । यत्रौषधयो न भ्रश्यन्त इत्यपरे ॥ ११ ॥

अभितो देवयजनमात्रदेशं पुरस्ताद्वर्जम् ॥ १२ ॥

"न पुरस्ताद्देवयजनमात्रमतिरिच्येत" इति वचनात् ( श० ब्रा० ३।१।१।३ ) ॥ १२ ॥

प्राक्प्रवणमुदक्प्रवणं वा यत्किञ्चानूचानर्त्विजः(१) ॥ १३ ॥

अनूचानाः अनुवचनसमर्था ऋत्विजो यद्देवाध्यवस्यन्ति तदेव शोभनं देवयजनमिति ॥ १३ ॥

उद्धतौषधिमूलेऽपरेऽन्ते विमितं कुर्वन्ति ॥ १४ ॥

उद्धता ओषधयो मूलानि च यस्मिंस्तदुद्धतौषधिमूलं देवयजनं, तस्यापरेऽन्ते विमितं कुर्वन्ति । विमितशब्दः समचतुरस्रवाची(२) ॥१४॥

तच्च—

प्राग्वꣳशम् ॥ १५ ॥

यस्य पूर्वापरायतः पृष्ठवंशः ॥ १५ ॥

पुरस्तादुच्चम् ॥ १६ ॥

---

(१) आपस्तम्बः "दक्षिणत उन्नतमुदीचीनावनतं प्राक्प्रवणमुदक्प्रवणं वा देवयजनं यत्र वा बहवो ब्राह्मणा न सꣳराधयेयुरग्नयो वाव देवयजनं यत्र क्वचनाग्नीनाधाय यजते देवयजन एव यजत इति विज्ञायते दक्षिणा वाव देवयजनं दक्षिणाश्चेत्कल्याणीर्ददाति देवयजन एव यजत इत्येके ।

(२) 'विमितं चतुरश्रꣳ स्याद्दशारत्निप्रमाणत' इति परिशिष्टकारप्रामाण्यात् ।

वचनात् ॥ १६ ॥

प्रतिदिग्द्वारम् ॥ १७ ॥

"दिक्ष्वतीकाशान् करोति" इति वचनात् ॥ १७ ॥

उदग्वर्जं वा ॥ १८ ॥

वाशब्दः पक्षव्यावृत्तौ । न ह्युदग्द्वारविधायकं वाक्यमस्ति । पूर्वापरद्वारे तु विहिते । "तद्वा उभयतोद्वारꣳ हविर्द्धानं भवति उभयतो द्वारꣳ सदः" । तथा शालाया दक्षिणमपि द्वारमवगम्यते । घर्मदुघां हि प्रकृत्याह "यथैनाꣳ होताऽभिष्टुवन्परापश्येत्" इति । होतुर्हि नियतं स्थानम् । न च दक्षिणद्वारमन्तरेण तत्सन्दर्शनं भवति । तथा च सूत्रकारः–"दक्षिणतो निखनति होतुः सन्दर्शने" इति । अतो द्वारत्रयमेव सप्रमाणमित्युदग्वर्जमेवेत्युक्तम् । यत्तु दिक्ष्वतीकाशान्करोतीति, तद् दिक्त्रित्वेऽप्युपपद्यत एव ॥ १८ ॥

शालां(१) वा ॥ १९ ॥

करोति । विमितं वेति विकल्पः । शाला दीर्घचतुरस्रा ॥ १९ ॥

परिवृते(२) चोत्तरापरे ॥ २० ॥

क्रियेते इति वाक्यशेषः ॥ २० ॥

( शुक्लपक्षे दीक्षारम्भः तद्दिनादारभ्य पञ्चमे सप्तमे वा सुत्यायागः )

दीक्षाप्रभृति शुक्लपक्षे पञ्चमीꣳ सप्तमीं वा प्रसुतः ॥ २१ ॥

शुक्लपक्षे दीक्षेतेति वचनात् तत्प्रभृति पञ्चमीं सप्तमीं वा प्रसुतो भवति सौत्यमहर्भवतीति । एतेन 'एका दीक्षा' 'तिस्रो दीक्षा' इति वाक्यद्वयमुपनिबद्धम् । दीक्षैकत्वपक्षे पञ्चमीं प्रसुतः, त्रित्वे च सप्तमीमिति । एका दीक्षा तिस्रो दीक्षा इति वक्तव्ये यत्पञ्चमीꣳ सप्तमीं वा प्रसुत

---

(१) शालाप्रमाणं चोक्तं परिशिष्टे 'विंशत्यरत्निः शाला स्यात्तदर्धेन तु विस्तृता' इति । तत्साधनं च 'प्रमाणार्धं चाभ्यस्याभ्यासषष्ठे लक्षणं करोति तन्निरुञ्छनम्' इति शुल्बोक्तम् । अत्र विंशत्यरत्निर्मूलरज्जुः दशारत्निरभ्यासरज्जुः तस्याः प्रथमे षष्ठे भागे निरुञ्छनम् । तस्या अर्धे पञ्चारत्निमिते श्रोण्यन्ताङ्कनार्थमिति ।

(२) परि समन्तात् कटादिना वृतं परिवृतं, ते ।

इत्युक्तं तद् दीक्षाशब्दवाच्यार्थव्याचिख्यासया। दीक्षाशब्दो ह्यलौकिकस्तस्य किं वाच्यमित्यत उक्तं पञ्चमीं सप्तमीं वा प्रस्तुत इति। कृष्णाजिनादिभिर्दीक्षितः सन्थावन्त्यहानि प्राक्प्रायणीयायाः दीक्षितधर्मैरास्ते तानि दीक्षाशब्दवाच्यानि, तेषामियं संख्या एका दीक्षा तिस्र इत्येवमादि। तथा चाहीनेषु मासापवर्गतामभिधाय 'दीक्षाः सुत्योपसच्छ्लेषेण' इत्युक्तम्। तथा दीक्षाणामुत्तमेऽहनि 'वेद्यग्निमानम्' इति। अहःशब्देन रात्रिरप्युपलक्ष्यते। तेनाहोरात्रपरिच्छिन्ना दीक्षेति ज्ञापयति। तासु दीक्षासु तेष्वहोरात्रेषु यूपच्छेदन–महावीरकरण–वनीवाहनानि ॥२१॥

(दैवादिना सुत्याकालातिक्रमे नित्यानाम् अग्निहोत्रादीनामननुष्ठानमेव)

कालातिक्रमे नियतक्रिया प्राप्तकालत्वात् ॥ २२ ॥

मानुषादिप्रतिबलात्कालव्यतिक्रमे नित्यानि कर्त्तव्यानि। प्राप्तो हि तेषां काल इति ॥ २२ ॥

न समत्वात् ॥ २३ ॥

समं ह्यत्र कारणम्। दीक्षितस्य सतो नित्यानामक्रिया। सोऽद्यापि दीक्षित एवेति ॥ २३ ॥

द्वादश दीक्षा अपरिमिता वा(१) ॥२४॥

भवन्तीति वाक्यशेषः ॥ २४ ॥

( श्रुतिविरोधे पुण्याहनियमो नाश्रयणीयः )

पुण्याहे दीक्षा क्रयः प्रसव उत्थानम् ॥ २५ ॥

शिष्टानुस्मरणात् ॥ २५ ॥

प्रक्रमोत्थाने विरोधे ॥ २६ ॥

---

(१) अत्र चत्वारो दीक्षापक्षाः। एका दीक्षा, तिस्रो दीक्षा, द्वादशदीक्षा, अपरिमिता वा दीक्षा इति। अत्रापस्तम्बः 'दशाहमवरार्ध्यं दीक्षितो भवति मासꣳ संवत्सरं वा यदा कृशः स्यादित्यपरं विज्ञायते च यदा वै दीक्षितः कृशो भवत्यथ मेध्यो भवति यदाऽस्मिन्नन्तर्न किञ्चन भवत्यथ मेध्यो भवति यदाऽस्य कृष्णं चक्षुषोर्नश्यत्यथ मेध्यो भवति यदाऽस्य त्वचाऽस्थि सन्धीयतेऽथ मेध्यो भवति पीवा दीक्षेत कृशो यजेत यदाऽस्याङ्गानाꣳ हीयते जुहोत्येव तदिति विज्ञायत इति।

प्रक्रमोत्थाने वा पुण्येऽहनि भवतः। इतरत्र तु श्रुतिविरोधो नियतकालत्वात् ॥ २६ ॥

न वाऽचोदितत्वात् ॥ २७ ॥

न चैतदङ्गीकर्त्तव्यम्। कुतः। अचोदितत्वात्। न ह्यत्र चोदना। स्मृतिस्त्वियम्। तेन यत्र श्रुतिविरोधो नास्ति तत्रास्याः प्रामाण्यमेव। विरोधे त्वप्रामाण्यमिति ॥ २७ ॥

( यूपच्छेदनात्प्राक् यूपाहुतिहोमः )

दीक्षासु यूपच्छेदनं यूपाहुतिं प्राग्घुत्वा यूपान्ते वाऽग्निं मथित्वा दीक्षितस्याग्निहोमप्रतिषेधश्रुतेः ॥ २८ ॥

दीक्षासु यूपच्छेदनं कर्त्तव्यम्, दीक्षाणामेव पूर्वं यूपाहुतिं हुत्वा यूपान्ते वाऽग्निं मथित्वा। कुत एतत्। दीक्षितस्याग्निहोत्रहोमप्रतिषेधश्रुतेः—"न दीक्षितस्याग्नावेतामाहुतिं जुहोत्याज्यं चारणी चादाय यूपान्तेऽग्निं मथित्वा यूपाहुतिं जुहोति" इति। सम्प्रदाये विकल्पः।

दीक्षासु यूपच्छेदनमित्यस्य सूत्रस्यापरा व्याख्या। यूपच्छेदात्प्राग्यूपाहुतिंहुत्वा। 'यूपं व्रश्च्यन्वैष्णव्यर्चा जुहोति'इति श्रुतत्वात्। यूपान्तिके वाऽग्निं मथित्वेति। वाशब्दो विकल्पार्थः। यत्पुनरुक्तं "न हि दीक्षितस्याग्नावेतामाहुतिं जुहोति"इति स यूपान्तिकमन्थनविधिशेषभूतोऽर्थवादो न प्रतिषेधविधिरिति। अपि च यूपाहुतिसमनन्तरमेव श्रूयते "यदाज्यं परिशिष्टं भवति तदादत्ते यत्तक्ष्णः शस्त्रं भवति तत्तक्ष्णाऽऽदत्ते त आयन्ति स यं यूपं जोषयन्त" इति। अतश्च दीक्षाणां प्राग्यूपाहुतिं हुत्वेत्यपव्याख्या ॥ २८ ॥

उच्छ्रयणकाले वोभयोः होमच्छेदने सन्निधेः ॥ २९ ॥

उच्छ्रयणकाले वा होमच्छेदने भवतः। कुतः?। तत्सन्निधौ हि शिष्येते—"यूपं व्रश्च्यन्वैष्णव्यर्चा जुहोति"इति। दीक्षास्वेव वा। दीक्षासु यूपं छिनत्तीति वचनात्। सन्निधिर्वचनेन बाध्यते ॥ २९ ॥

(अरण्योः अग्नी समारोप्य अरणिपाणिः शालायाः पूर्वार्धभवं स्तम्भमालभ्य एदमगन्मेति यजमानः पठेत् )

समारोह्याग्नी शालास्तम्भं पूर्वार्ध्यं गृहीत्वा

ऽरणिपाणिराहेदमगन्मेति ॥ ३० ॥

समारोपः सूत्रत्रयसिद्ध इत्युक्तम् (का०श्रौ०५।३।१)। स च नित्यधारिपक्षे सर्वार्थत्वान्न भवति सर्वार्थं हि धारणमिति। सोमाधानेऽपि अग्निर्नित्यधारीति न समारोप इति सम्प्रदायः। अत्र पुनः शक्यते वक्तुम्। 'पुरुषधर्मोऽग्निनित्यधारिता। क्रतुधर्मश्च समारोपः। तदकरणे च क्रतोर्वैगुण्यमितरत्र पुरुषस्य। क्रतोश्च साद्गुण्यं कर्त्तव्यं विरोधे, न पुरुषस्य। गतश्रियः पक्षेऽपि तथैवेति चेत् न। सर्वकर्मार्थत्वाद्धारणस्य। अरण्योरभावात्। अरण्यभावेपि च न भवति। तथा च मन्त्रलिङ्गम्। "अयं ते योनिर्ऋत्वियो यतो जातो अरोचथा" इति। ये पुनरत्रापि समारोपमिच्छन्ति त एव प्रष्टव्याः। अरण्योरभावे च शालास्तम्भप्रपादने लौकिकारणिपाणिर्भवत्येव यजमानसंस्कारात्—"अथारणी पाणौ कृत्वा शालामध्यवस्यति" इति। तच्चैतद्याजमानम्। "स वै न सर्वेणैव संवदेत" इति याजमानं हि प्रकृत्याह "अथारणी पाणौ कृत्वा" इति। द्वादशाहे च सर्वे अरणिपाणयो गृहपतिमन्वारभन्ते शालास्तम्भप्रपादनं कुर्वाणम्। तदुक्तम् "अविभवति गृहपत्यन्वारम्भ" इति (का०श्रौ०अ०१२।१।१२) ॥ ३० ॥

इति सप्तमाध्याये प्रथमा कण्डिका ॥ १ ॥

---

( शालायां सोमनिधानम् )

शालायाᳫं राजानं निदधात्याहृतश्चेत् ॥ १ ॥

यद्यरण्यादाहृतः ॥ १ ॥

( सोमक्रयात्प्राक् यजमानाय हविष्यान्नोपहारः )

प्राक् क्रयादन्नमुपहरन्त्यस्मै हविष्यममाᳫंसम ॥ २ ॥

हविष्यं व्रीहियवादि। हविष्यत्वेऽपि च मांसप्रतिषेधः ॥ २ ॥

(गार्हपत्यं मथित्वा तन्मध्यात्सप्तसु प्रक्रमेषु अर्धव्यामे च आहवनीयव्याहरणं साग्निचयने )

अग्निं विहृत्य सप्तसु प्रक्रमेष्वर्द्धव्यामे च साग्निचित्ये ॥ ३ ॥

विहरणेन च मन्थनमर्थाक्षिप्तमिति । "गार्हपत्यस्योद्धतात्सप्त प्राचः प्रक्रमान्प्रक्रामति ततः प्राञ्चं व्यामं विमिमीते तस्य मध्ये आहवनीयायोद्धत्यावोक्षति" इति वचनात् सप्तसु प्रक्रमेष्वर्द्धव्यामे चेत्युक्तम् । अनग्निचित्ये तु अनियम इति ॥ ३ ॥

अपराह्णेऽश्नातीष्टमुपपन्नं वा, न वा ॥ ४ ॥

अश्नाति ॥ ४ ॥

( क्रत्वर्थहिरण्यादिकं गोपायेत्येवमन्यस्मै उक्तवतः उत्तरे परिवृते अपराह्णे दीक्षा )

क्रत्वर्थमपदिश्यान्यस्मा उत्तरे परिवृत उदकुम्भवत्यप्सु दीक्षा ॥ ५ ॥

क्रत्वर्थापदेशश्च तदर्थद्रव्यसंस्कारः, विधानसामर्थ्यात् । अधस्तनसूत्रेऽपराह्णग्रहणम् 'उत्तरे परिवृत उदकुम्भवत्यप्सुदीक्षा' इत्यनेन सम्बध्यते । "'अपराह्णे दीक्षेत' इति वचनात्(१) ॥ ५ ॥

( नखच्छेदादयो दीक्षाधर्माः )

नापित उपतिष्ठते नखानि निकृन्तत्यङ्गुष्ठ्यप्रभृतीनि दक्षिणहस्तस्य प्रथमम् ॥ ६ ॥

"स वै नखान्येवाग्रे निकृन्तत" इति प्रकृत्य सर्वं श्रूयत इति ॥ ६ ॥

दक्षिणं गोदानं वितार्योनत्तीमा आप इति ॥ ७ ॥

---

(१) अथवैवं योजना—अपराह्णेऽश्नातीष्टमुपपन्नं वा न वा क्रत्वर्थमपदिश्यान्यस्मै । यजमानोऽन्यस्मै क्रत्वर्थमपदिश्य अपराह्णे इष्टमश्नाति, अथवा उपपन्नमश्नाति, नवाऽश्नाति । पत्न्यप्येवमेवाश्नाति । समानन्यायात् । इयं योजना साधीयसी, अन्यथा पत्न्यन्वयानुपपत्तेः । तथाच मानवे—"इदं दास्यामीति निर्दिश्य दैक्षमशनमश्नीतो दध्ना मधुमिश्रेण यजमानः पत्नीच" इति । काठके च–'पत्नी यजमानश्चाश्नीत' इति । आपस्तम्बसूत्रे च 'अन्नमश्नाति सर्पिर्मधुमिश्रं दधि मधु वा यदस्य मनसः प्रियं तदश्नाति तदेवास्यामुष्मिँल्लोके भवतीति विज्ञायते तथाशितः स्याद्यथाऽतो दीक्षासु कनीयः कनीयो व्रतमुपेयात्पुरस्ताद्वा केशवपनाद्वाससो वा परिधानाद्भोजनमेके समामनन्ति' इति ।

वितारणं च केशोन्मोचनं कङ्कतादिना। उनत्ति। उन्दी क्लेदने। क्लेदयति तिम्मयतीति-'इमा आप' इत्यनेन मन्त्रेण। गोदानं च दक्षिणं शिरसः पार्श्वं, गवि पृथिव्यां दीयत इति गोदानम् ॥ ७ ॥

यूपवत्कुशतरुणम् ॥ ८ ॥

अन्तर्दधाति ॥ ८ ॥

क्षुरेण चाभिनिधाय ॥ ९ ॥

यूपवदेव ॥ ९ ॥

छित्त्वा ॥ १० ॥

केशान् ॥ १० ॥

उदपात्रे प्रास्यति ॥ ११ ॥

एवमुत्तरं तूष्णीम् ॥ १२ ॥

उन्दनादिना गोदानं संस्करोति ॥ १२ ॥

नापिताय क्षुरं प्रयच्छति ॥ १३ ॥

तेन केशश्मश्रु वपति ॥ १४ ॥

श्मश्रुणश्च क्षुरान्यत्वं प्रसिद्धम्। अतस्तेनेत्युच्यते ॥ १४ ॥

( स्नानादिकम् )

आपो अस्मानिति स्नात्वोदिदाभ्य इत्युत्क्रामत्युत्तर-पूर्वार्द्धम् ॥ १५ ॥

दृष्टार्थत्वाच्चोदकुम्भोदकेनैव(१) स्नानम्। 'उदिदाभ्य' इत्यनेन मन्त्रेण उत्क्रामत्युत्तरपूर्वार्द्धम् ॥ १५ ॥

क्षौमं वस्ते निष्पेष्टवै ब्रूयादहतम् ॥ १६ ॥

क्षौममातसम्। अहतमधौतम्। निष्पेष्टवै ब्रूयादितिप्रैषपूर्वकं प्रक्षालनं कृत्वा परिधत्ते ॥ १६ ॥

---

( १ ) तड़ागादिष्वित्यन्ये। अत्र 'स्थावरास्वप्सु स्नाति' इत्याद्याः सूत्रकारोक्तयः शरणम्।

चेदद्भिरभ्युक्ष्य ॥ १७ ॥

अद्भिरभ्युक्ष्य वा परिधत्ते ॥ १७ ॥

स्नातवस्यं वाऽमौलधौतं त्रिचितकेशं प्रसारितदशं दीक्षातपसोरिति ॥ १८ ॥

स्नातवस्यं वा अरजकशौचितं विचितकेशं प्रसारितदशमित्यहतमपि 'दीक्षातपसोः' इत्यनेन मन्त्रेण ॥ १८ ॥

न नीविं कुरुते ॥ १९ ॥

अनीविकं परिधत्ते। समाचारपरिप्राप्तमुत्तरीयम्(१) ॥ १९ ॥

एवं प्रतिप्रस्थाताऽपरस्मिन्परिवृते पत्नीं तूष्णीम् ॥ २० ॥

दीक्षयतीति वाक्यशेषः ॥ २० ॥

वपनं वा ॥ २१ ॥

वपनं च वा भवति, वा न भवति। वपनाभावे च वितारणोन्दनादि न भवति, वपनार्थत्वात् ॥ २१ ॥

( धेन्वादिमांसप्रतिषेधः पुरुषार्थः )

धेन्वनडुह्योर्नाश्नीयात् ॥ २२ ॥

धेन्वनडुन्मांसं नाशितव्यम्। 'स धेन्वै चानडुहश्च नाश्नीयात्' इति वचनात् ॥ २२ ॥

क्रतुमध्ये समाम्नानात् क्रतुधर्मोऽयमिति प्राप्ते आह—

पुरुषधर्मो वाऽसम्भवात् ॥ २३ ॥

पुरुषधर्म एवायं क्रतावसम्भवात्। प्राप्तिपूर्वको हि प्रतिषेधो भवति। न चेह प्राप्तिरस्ति। कथम्। येन दीक्षितस्य पयोव्रतता विहिता, निवृत्ते च पयसि हविःशेषभक्षतोक्ता। अतः प्रतिषेधस्यासम्भवात्

---

(१) 'तत उत्तरीयं च धारयति' इति काण्वपाठात्। एकमेवेति हरिस्वामी, सर्वत्र तथैव दर्शनात् उपादेयगतैकत्वस्याविवक्षायां प्रमाणाभावात्। द्वयोर्विवक्षायां 'तावन्ये वाससी' इति द्विवचनदर्शनाच्च। एकं चाधोवासो नीविदर्शनात्।

पुरुषधर्म एवायमिति सम्प्रदायः। इष्टाशनविषयोऽयं प्रतिषेध इत्यपरे। तथा च प्रकरणस्याबाध इति ॥ २३ ॥

अꣳसलभोजनं वा ॥ २४ ॥

अꣳसलः पीवा स्थूल उच्यते। तस्य वा भोजनं भवति। अश्नाम्येवाहमꣳसलं चेद्भवतीति ॥ २४ ॥

( शालांप्रविश्य दीक्षणीयेष्टिः )

प्रपाद्याग्नावैष्णव एकादशकपालः ॥ २५ ॥

प्रपाद्य बाहुगृहीतं ( यजमानं ) विमिते प्रवेश्याग्नावैष्णव एकादशकपालः कर्त्तव्यः। एकादशकपाल इति श्रुतिरनुक्तता एकद्विशब्दपरिमाणादिभिः प्राप्नोति कपालसंख्येति ज्ञापनाय ॥ २५ ॥

आदित्येभ्यो वा चरुः ॥ २६ ॥

सा चेयं स्वपदगतविभाषा "तद्धैक आदित्येभ्यश्चरुं निर्वपन्ति" इति वचनात् ॥ २६ ॥

प्राक्समिष्टयजुषः करोति ॥ २७ ॥

दीक्षणीयां हि प्रकृत्य श्रूयते "तस्मात्तस्य यज्ञस्य समिष्टयजुर्न जुह्वति" इति ॥ २७ ॥

समिष्टयजुर्वर्जं वा ॥ २८ ॥

समिष्टयजुरेव वा न जुहोति। 'सर्वत्वायैव समिष्टयजुरेव न जुहोति'इति वचमात्। अतश्च बर्हिर्होमादयः प्रवर्त्तन्त एव। ध्रौवाज्यस्यौदुग्रभणेषु विनियोग उक्तः "पञ्चमं जुह्वां ध्रौवमासिच्य" इति। तद्विनियोगोत्तरं बर्हिर्होमादय इति न्याय्यम् ॥ २८ ॥

( अग्नीषोमीयपशुयागात्प्राक् उपांशुस्वरः )

उपाꣳशु चरन्ति प्रागग्नीषोमीयात् ॥ २९ ॥

"तस्माद्यत्किञ्चित्प्राचीनमग्नीषोमीयात्तेनोपांशु चरन्ति" इति वचनात् ॥ २९ ॥

( दीक्षणीयायामुच्चैस्त्वम्प्रायणीयायाम्मन्दत्वमातिथ्यायाम्मन्दतरत्वं वा )

वागन्तेन वा दीक्षणीयां नीचैस्तरां नीचैस्तरामितरे ॥ ३० ॥

यावत्या वाचा कामयेत तावत्या दीक्षणीयायामनुब्रूयान् मन्द्रं प्रायणीयायाम् मन्द्रतरमातिथ्यायाम् ॥ ३० ॥

( उपसदाम् उपांशुत्वम् )

उपाꣳशूपसदः(१) ॥ ३१ ॥

'उपांशूपसत्सु' इत्युपांशूपसदो भवन्ति । उपसदामुपांशुत्वविधानात्प्रागग्नीषोमीयादुपांशुपक्षादिदमन्यत्पक्षान्तरं, तत्रैव दीक्षणीयादिषु स्वरविकल्प इति । तथा च वागन्तपक्षे एव "तन्नौ सहेत्यध्वर्युरुपांशु" इत्युपांशुत्वमुच्यते । प्रागग्नीषोमीयादुपांशुपक्षे च "दीक्षितोऽयं ब्राह्मण इत्याह त्रिरुच्चैः" इत्युच्चैस्त्वमुच्यते ॥ ३१ ॥

( यजमानस्य अभ्यञ्जनादिकम् )

शालां पूर्वेण तिष्ठन्नभ्यङ्क्ते कुशेषु नवनीतेन शीर्ष्णोऽध्यनुलोमꣳ सपादको महीनां पयोऽसीति ॥ ३२ ॥

शालायाः पुरस्तात्कुशेषु व्यवस्थितं यजमानमध्वर्युरभ्यङ्क्ते । "तमभ्यनक्ति" इति वचनात् । नवनीतेन शिरस आरभ्य अनुलोमं 'महीनां पयोऽसि' इत्यनेन मन्त्रेण । सपादकश्चाभ्यज्यत इति ॥ ३२ ॥

वृत्रस्येत्यक्ष्यावनक्ति त्रैककुदाञ्जनेन ॥ ३३ ॥

'वृत्रस्य' इत्यनेन मन्त्रेण अक्षिणी अनक्ति । त्रिककुत्पर्वतः । तदीयमञ्जनं त्रैककुदाञ्जनम् । यत्सौवीरकमिति प्रसिद्धम् । तेनाञ्जनेन स्वयमेव यजमानः ॥ ३३ ॥

अभावे ऽन्यत ॥ ३४ ॥

त्रैककुदाभावेऽन्येनाञ्जनेन ॥ ३४ ॥

---

(१) 'धारयति ध्रौवमाज्यं यत्प्राचीनमग्नीषोमीयात्तेनोपाꣳशु चरन्त्यथैकेषां यावत्यस्य वाग्भवति तावतीं दीक्षणीयायामन्वाह ततो नीचैस्तरां प्रायणीयायां ततो नीचैस्तरामातिथ्यायामुपाꣳशूपसत्सूच्चैरग्नीषोमीये, मन्द्रेण वा दीक्षणीयायां मन्द्रतरेण प्रायणीयायां मन्द्रतमेनातिथ्यायामुपाꣳशूपसत्सूच्चैरग्नीषोमीये, उपाꣳशु वा दीक्षणीयायामुपाꣳशुतरं प्रायणीयायामुपाꣳशुतममातिथ्यायामुपाꣳशूपसत्सूच्चैरग्नीषोमीये' इत्यापस्तम्बसूत्रमप्यत्र गमकम् ।

द्विर्दक्षिणं त्रिरुत्तरं पराक् ॥ ३५ ॥

'परागुपानक्ति'इति वचनात् परागज्यते, नेतश्चामुतश्च ॥ ३५ ॥

सकृत्सकृन्मन्त्रः ॥ ३६ ॥

द्रव्यान्तरत्वाच्च प्रत्यञ्जनं मन्त्रप्राप्तौ वचनात् सकृन्मन्त्रवचनम्॥३६॥

शरेषीकया साग्रया ॥ ३७ ॥

सतूलयाक्ष्यावनक्तीति ॥ ३७ ॥

इति सप्तमाध्याये द्वितीया कण्डिका ॥ २ ॥

---

( कुशपवित्रैर्यजमानमार्जनम् )

कुशपवित्रैश्चित्पतिर्मेति पावयति सप्तभिः सप्तभिः प्रतिमन्त्रमच्छिद्रेणेति सर्वत्र द्विरुपरिनाभ्युन्मृज्य प्रदक्षिणꣳ सकृदवाङ् ॥ १ ॥

कुशा एव पवित्राणि कुशपवित्राणि। तैर्यजमानं पावयति सप्तभिः सप्तभिश्चित्पतिर्मेति प्रतिमन्त्रम्। अच्छिद्रेणेति सर्वत्र अनुषङ्गः। द्विरुपरिनाभ्युन्मार्जनम् प्रदक्षिणꣳ सप्तभिः सप्तभिः। सकृच्चावाङ् नाभेः सप्तभिरेव। एवं च "सप्तभिः सप्तभिः पावयति"इत्युपक्रम्य "एकविꣳशतिरेषैव सम्पत्" (श० ब्रा० ३।१।३।२१) इत्युपपद्यते॥ १ ॥

एकेन त्रिभिः सप्तभिर्वा ॥ २ ॥

एवमपि हि श्रूयते (श० ब्रा० ३।१।३।१९-२०-२१) पवित्रं प्रकृत्य "तद्वा एकꣳ स्यात्" "अथो अपि त्रीणि स्युः" "अथो अपि सप्त स्युः" इति एता एवोभयत्र पवित्रव्यक्तयोऽवाङ्नाभेरुपरिष्टाच्चेति। काण्वीयायां तु "नवकृत्वः पावयति" इति श्रूयते। तत्कथमुपपद्यते। चित्पतिर्मेत्येवमादिभिर्मन्त्रैः साभ्यासमेकं पावनमुपरि नाभि, तथा द्वितीयम्। एवमेव सकृदवाङिति। एवं चाभ्यासापेक्षया नवकृत्वः पावयतीत्युपपन्नार्थं भवति। अभ्याससमुदायापेक्षया च "द्विरुपरिनाभि सकृदवाङ्" इति च सूत्रं नेयम् ॥ २ ॥

एकशतेन वा राजसूये ॥ ३ ॥

पावयति । वाशब्दो विकल्पार्थः ॥ ३ ॥

आवोदेवास इति वाचयति ॥ ४ ॥

बहुयजमानके सर्वेषां वाचनम् । ब्रूतेति च प्रयोगः ॥ ४ ॥

( यजमानाङ्गुलिसङ्कोचनम् )

स्वाहा यज्ञमित्यङ्गुली अचते नानाहस्तयोः ॥ ५ ॥

नाना पृथक् हस्तयोः । द्वे अपि कनिष्ठिके सङ्कोचयति 'स्वाहा यज्ञम्' इत्यनेन मन्त्रेण ॥ ५ ॥

एवꣳ शेषं प्रतिमन्त्रम् ॥ ६ ॥

एवमेवाङ्गुल्यचनं शेषं प्रतिमन्त्रम् ॥ ६ ॥

( मुष्टिकरणवाग्यमने )

उत्तमेन मुष्टी कृत्वा स्वाहेत्युक्त्वा वाग्यतः ॥ ७ ॥

उत्तमेन मन्त्रेण मुष्टी कृत्वा स्वाहेत्युक्त्वा वाग्यतो भवति ॥ ७ ॥

अङ्गुष्ठौ तत्सहिते चोत्सृजति ॥ ८ ॥

अङ्गुली उत्सृजति ॥ ८ ॥

( आहवनीयगार्हपत्यावन्तरेण यजमानस्य शालायां प्रवेशः )

वाग्यतं प्रवेशयत्याहवनीयगार्हपत्यावन्तरेण ॥ ९ ॥

वाग्विसर्गकालस्यानुक्तत्वादेवमन्त एव वाग्यम इति । एवं मुष्टिकरणवाग्यमनोत्कर्षे प्रवेशने न वाग्यम इति । वचनाच्चाहवनीयगार्हपत्यावन्तरेण प्रवेशनम् ॥ ९ ॥

सोऽस्य सञ्चर आ प्रसवात् ॥ १० ॥

सोऽस्य यजमानस्य सञ्चरो भवत्यासुत्यायाः । आङ्प्रयोगसामर्थ्याच्च मर्यादा द्रष्टव्या नाभिविधिरिति ॥ १० ॥

( पत्नीदीक्षा )

एवं प्रतिप्रस्थाता पत्नीमभ्यञ्जनादि तूष्णीम् ॥ ११ ॥

दीक्षयतीति वाक्यशेषः ॥ ११ ॥

( आहवनीयगार्हपत्यावन्तरेण पश्चिमेन वा पत्न्याः शालायां प्रवेशः )

अपरेण वा प्रवेशयति ॥ १२ ॥

प्रकृतत्वाद्गार्हपत्याहवनीयौ वा अन्तरेणेति विकल्पः । बहुयजमानके अभ्यञ्जनादि बाहुगृहीतप्रपादनान्तम् एकैकस्य । संस्कारस्यैतावत्त्वात् । अप्सुदीक्षायामपि प्रपादनान्तमेकैकस्यैव ॥ १२ ॥

( औद्ग्रभणहोमाः )

औद्ग्रभणानि जुहोति स्थाल्याः स्रुवेणाकूत्या इति प्रतिमन्त्रम् ॥ १३ ॥

औद्ग्रभणानीति वैदिकी सञ्ज्ञा । तया हि व्यवहारो दृश्यते "प्राकृतान्यौद्ग्रभणानि हुत्वा" इति । स्थाल्याः सकाशात् स्रुवेण "आकूत्या" इति प्रतिमन्त्रम् ॥ १३ ॥

तृतीयं जपत्येव ॥ १४ ॥

तृतीयं मन्त्रं जपत्येव न जुहोति । एवकारकरणाच्च स्वस्थानावस्थितस्यैव जपः ॥ १४ ॥

पञ्चमं जुह्वां ध्रौवमासिच्य द्विश्च स्थाल्याः स्रुवेण तृतीयꣳ स्रुवमभिपूरयति विश्वोदेवस्येति ॥ १५ ॥

पञ्चमं होमं प्रति ध्रौवमाज्यं जुह्वामासिच्य द्विश्च स्थाल्याः स्रुवेणासिच्य तृतीयꣳ स्रुवमभिपूरयति ( जुहूपुष्करस्योपरिनिधाय ) । अधिकारात् स्थालीत एव । अभिपूरणस्य दृष्टार्थत्वात् जुह्वामासिच्य । ( जुहोति ) ॥ १५ ॥

एतामेव वा पूर्णां जुहुयात् ॥ १६ ॥

एतामेवैकामाहुतिं पूर्णां जुहुयात् । "तां वै यद्येकां जुहुयात्पूर्णां जुहुयात्" इति श्रुतेः ( श०ब्रा०३।१।४।२२ ) दीक्षणीयाद्रव्यशेषसाध्यत्वाद्दीक्षणीयाङ्गमौद्ग्रभणानि । एवं सति दीक्षणीयाऽभावे अस्थियज्ञे न भवन्ति। अत ऊर्ध्वं बर्हिर्होमादय इति ॥ १६ ॥

( आहवनीयस्य दक्षिणतः अवलगनरज्जुयुक्ते द्वे कृष्णाजिने निदधाति )

आहवनीयं दक्षिणेन कृष्णाजिने माꣳससहिते स्यूतान्ते

तद्दर्भसु पश्चादासञ्जनवती निदधाति ॥ १७ ॥

"दक्षिणेनाहवनीयं प्राचीनग्रीवे कृष्णाजिने उपस्तृणाति" इति वचनात् ( श०ब्रा०३।२।१।१ )। मांससहिते मांसोपलक्षितप्रदेशसम्बद्धे। स्यूतान्ते–षिवु तन्तुसन्ताने। तस्य कृतसम्प्रसारणस्यैतद्रूपं स्यूतान्ते इति। परिस्यूता अन्ता ययोस्ते स्यूतान्ते। तर्ह्मसु पश्चात्–चर्म्मणो हि विकर्त्तनकाल एव कीलकैर्वितननं क्रियते। तेन पश्चात् कीलकच्छिद्रेषु परिसेवनम् अन्यत्रानियमः। आसञ्जनवती–नागदन्तकादौ येनासज्यते तदासञ्जनम्। अवलगनमित्यर्थः। उक्तलक्षणे कृष्णाजिने निदधाति ॥ १७ ॥

एकं चेत्पश्चात्पादद्द्विगुणम् ॥ १८ ॥

एकं चेन्निदधाति पश्चात्पादौ गृहीत्वा द्विगुणं क्रियते। 'तत्पश्चादन्तं प्रत्यवस्यति' इति वचनात् ॥ १८ ॥

( कृष्णाजिनयोः पश्चात् यजमान उपविश्य शुक्लकृष्णसन्धि स्पृष्ट्वाऽऽरुह्य दक्षिणजानुनाऽऽस्ते )

दक्षिणं जान्वाच्यास्ते पश्चादेनयोः ॥ १९ ॥

यजमानः। स हि दीक्षित इति। जान्वाच्य भूमिं गमयित्वाऽऽस्ते। 'प्राङ्जान्वाक्न उपविशति' इति श्रुतेः ( श०ब्रा०३।२।१।५ ) ॥ १९ ॥

शुक्लकृष्णसन्धिमालभत ऋक्सामयोरिति ॥ २० ॥

कृष्णाजिनयोः ॥ २० ॥

दक्षिणजानुनाऽऽरोहति शर्म्मासीति तेनास्तेऽपरेन्ते ॥ २१ ॥

तेनैव दक्षिणजानूपलक्षितप्रदेशेन अपरेऽन्ते कृष्णाजिनस्याऽऽस्ते ॥ २१ ॥

( अध्वर्युः यजमानवस्त्रस्यान्तरा मेखलाम्बध्नीते )

मेखलां बध्नीते वेणिं त्रिवृतं शणमुञ्जमिश्रामन्तरां वासस ऊर्गसीति ॥ २२ ॥

मेखलां बध्नीते 'ऊर्गसि' इत्यनेन मन्त्रेण। वेणिं ग्रथितां न रज्जुवद्वलिताम्। त्रिवृतम् त्रिग्रथिताम्। 'सा वै त्रिवृद्भवति' इति

(श०ब्रा०३।२।१।१२)। शणमुञ्जमिश्राम्। "सा वै शाणी भवति" "मुञ्जवल्शेनान्वस्ता भवति" इति वचनात् (श०ब्रा०३।२।१।११-१३)। अन्तरां वाससः। "तस्मादेषाऽन्तरा वाससो भवति" इति श०ब्रा०३।२।१।११)। मेखलाबन्धनमध्वर्योः "मेखलया यजमानं दीक्षयति" इति श्रुतेः ॥२२॥

( अत्र नीविकरणम् )

नीविं कुरुते सोमस्य नीविरिति ॥ २३ ॥

नीविरपवर्त्तिकोच्यते ॥ २३ ॥

( उष्णीषेण शिरस आच्छादनम् )

शिरः प्रोर्णुते विष्णोः शर्म्मेति ॥ २४ ॥

यजमान उष्णीषेणाच्छादयतीत्यर्थः ॥ २४ ॥

( कृष्णविषाणायाः दशायाम्बन्धनम् )

कृष्णविषाणां त्रिवलिं पञ्चवलिं वोत्तानां दशायां बध्नीते ॥ २५ ॥

सामर्थ्यपरिप्रापितत्वान्नोत्तरे सिचि बध्नीत इति नोक्तम्। तां चाध्वर्युर्बध्नाति। 'कृष्णविषाणया यजमानं दीक्षयति' इति वचनात् २५॥

तया कण्डूयनम् ॥ २६ ॥

क्रियते ॥ २६ ॥

उपस्पृशत्येनया दक्षिणस्या भ्रुव उपरीन्द्रस्य योनिरिति ॥ २७ ॥

एनया कृष्णविषाणया। स च कृष्णविषाणासंस्कार इति सम्प्रदायः। मन्त्रलिङ्गाद् "इन्द्रस्य योनिरसि" इति। एवं च नाशेऽन्याऽपि संस्कर्त्तव्येति।

नेत्यपरे। दीक्षितसंस्काराभिप्रवृत्तेस्तत्संस्कारोऽयमिति गम्यते। मन्त्रस्य च क्रियासाधनभूतद्रव्याभिधानमुचितमेव। क्रिया च यजमानार्थेति ॥ २७ ॥

भूमौ चोल्लिखति सुसस्या इति ॥ २८ ॥

अदृष्टोपकाराय ॥ २८ ॥

इति सप्तमाध्याये तृतीया कण्डिका ॥ ३ ॥

( अध्वर्युसमर्पितं दण्डं गृहीत्वोच्छ्रित्य दक्षिणस्कन्धे यजमानो निदधाति )

मुखसम्मितमौदुम्बरं दण्डं प्रयच्छति ॥ १ ॥

अध्वर्युर्यजमानाय ॥ १ ॥

उच्छ्रयस्वेत्येनमुच्छ्रयति ॥ २ ॥

'तमुच्छ्रयति' इति वचनात् ( श०ब्रा०३।२।१।३५) ॥ २ ॥

तं दक्षिणत उपधत्ते ॥ ३ ॥

तन्निर्देशाच्चार्थलक्षणमुपधानम् , न पदार्थतया ॥ ३ ॥

अत्र वा मुष्टिकरणवाग्यमने ॥ ४ ॥

"अत्र हैकेऽङ्गुलीश्च न्यचन्ति वाचं च यच्छन्ति" इति वचनात् । (श०ब्रा०३।२।१।३६) वाशब्दो विकल्पार्थः ॥ ४ ॥

( एवं प्रतिप्रस्थाता तूष्णीं पत्नीं युगपन्मेखलादिना दीक्षयति )

एवं प्रतिप्रस्थाता पत्नीं तूष्णीं युगपन्मेखलादि ॥ ५ ॥

दीक्षयतीति वाक्यशेषः ॥ ५ ॥

योक्त्रेण वा ॥ ६ ॥

सन्नह्यति । वा न सन्नह्यति । 'योक्त्रेण पत्नीं दीक्षयति' इति वचनात् दीक्षार्थमेतत् । प्रसङ्गात् "पत्नीसन्नहनं च सयोक्त्राया" इति (का० श्रौ०अ०८।१।७) योक्त्रनिवृत्तिरुक्ता । एवं च यत्कैश्चिदैष्टिकयोक्त्रधर्माः क्रियन्ते इति, तदयुक्तम् ॥ ६ ॥

जालं वा शिरसि त्रिपर्यायम् ॥ ७ ॥

जालं शिरसि पत्न्या भवति । त्रिपर्यायमेकपर्यायं वा ॥ ७ ॥

पृथुमुखो यज्ञियवृक्षशङ्कुः कण्डूयने । ओल्लेखनात्करोति मेखलादि चेत् ॥ ८ ॥

कर्म भवति तत आ उल्लेखनात्करोतीत्यर्थः ॥ ८ ॥

( कृष्णाजिनादिदण्डान्तैः दीक्षासंस्कारो नाग्नावैष्णवेष्ट्या )

कृष्णाजिनादि चेद्दण्डान्तम् ॥ ९ ॥

अथ कृष्णाजिनादि दण्डान्तम्। इदं श्रूयते "आग्नावैष्णवमेकादशकपालं निर्वपेद्दीक्षिष्यमाणः"। तथा कृष्णाजिनेन दीक्षयति मेखलया दीक्षयति कृष्णविषाणया दीक्षयति दण्डेन दीक्षयति"। तत्रैतत्सन्दिह्यते। किमाग्नावैष्णवेन दीक्षासंस्कारः क्रियते उत कृष्णाजिनादिभिः अथवा सर्वैरिति। किं तावत्प्राप्तम्। आग्नावैष्णवेनेति। कुत एतत्। एवं हि श्रूयते, 'आग्नावैष्णवमेकादशकपालन्निर्वपेद्दीक्षिष्यमाण' इति (श०ब्रा० ३।१।३।१) दीक्षासंस्कारेण व्याप्यमानो गृह्यमाण आग्नावैष्णवं निर्वपतीति। एतच्चैवमुपपद्यते यद्यनेन दीक्षासंस्कार उपजन्यत इति। एवं च सति कृष्णजिनादीनां सम्पत्त्यर्थता भवति। कृष्णाजिनेन दीक्षयति। कृष्णाजिनमस्य सम्पादयति। कृष्णाजिनवन्तं करोतीत्यर्थः। तथा कृष्णविषाणया सम्पन्नं करोति, दण्डेन चेति। अथ प्रयोजनमेषां कृष्णाजिनस्यासनम्। कृष्णविषाणायाः कण्डूयनम्। दण्डस्य गवादिनिवारणम्। किं चिदर्थात् किञ्चिद्वाक्यादतः सम्पत्त्यर्थतैषामित्येवं प्राप्त उच्यते।

नैतदेवम्। न हि दीक्षिष्यमाण आग्नावैष्णवं निर्वपतीत्यनेन दीक्षासंस्कारः क्रियत इत्युच्यते। किं तर्हि भविष्यन्ती दीक्षा आग्नावैष्णवानुष्ठानाय निर्दिश्यते। अयं हि लृडन्तः शब्दः। लृड्विभक्तिश्चाद्यतने भविष्यति भवति। भविष्यत्यद्य कृष्णाजिनादिभिर्दीक्षेत्याग्नावैष्णवं निर्वपेदित्यस्यार्थः। नाग्नावैष्णवेन दीक्षा क्रियत इति। यथा भोक्ष्यमाण आचामेदिति भविष्यन्ती भुजिक्रिया आचमनविधानाय निर्दिश्यते, नाचमनेन भुजिर्निष्पाद्यते। एवमिहापि दीक्षिष्यमाण आग्नावैष्णवं निर्वपेन्न तेन दीक्षितः क्रियत इत्युच्यते। यथा सोमेन यक्ष्यमाण आदधीतेत्यनया लृड्विभक्त्या सोमयाग आधानं प्रति निर्दिश्यते। एवमिहापीति।

अपि च कृष्णाजिनादीनि साक्षात्कारेण दीक्षासंस्कारं प्रति विधीयन्ते कृष्णाजिनेन दीक्षयतीत्येवमादिना। तेषां सम्पत्त्यर्थत्वे लक्षणाऽऽश्रिता भवति श्रुतिश्च बाधिता भवतीति। अतश्च कृष्णाजिनादीन्येव दीक्षाकरणानि नाग्नावैष्णव इति। यद्येवमेककार्यत्वाद्विकल्पः कस्मान्न भवति। नात्र विकल्पः, अदृष्टसंस्कारोपजनकत्वात्। अदृष्टो हि दीक्षासंस्कार एभिरुपजन्यते। अत एककार्यत्वेऽपि न विकल्पः। यथाऽऽघारे ऋज्वादीनामिति। यथा च पाके कर्त्रादीनाम्। कर्ता तावत्क-

रङ्गानि समाधत्ते, स्थाली संयवनसम्प्रधारणं करोति, काष्ठानि ज्वलनमभिनिर्वर्त्तयन्ति, दर्वी च घट्टनमिति, एकप्रयोजनत्वेऽप्यवान्तरकार्यभेदान्न विकल्पः। एवमिहाप्याम्नानसामर्थ्यादेवावान्तरकार्याणि कृष्णाजिनादीनां कल्प्यन्ते, तस्मान्न विकल्पः । ननु च कृष्णविषाणया कण्डूयतीति कण्डूयनार्थता कृष्णविषाणाया इति । सत्यमेवम्, तत्परिग्रहकाले निर्दिष्टकार्यं तु न निवार्यते । तस्माद्दीक्षार्थमेवोत्पन्नायाः कण्डूयनार्थताऽपीति ।

अपि च भगवतः कात्यायनाचार्यस्याप्ययमेवाभिप्रायो, येनास्थियज्ञे "दीक्षणीयापुरुषसंस्काराशीर्वर्जम्" (का.श्रौ.२५।१३।४३) इति हि सूत्रितम् । यदि दीक्षणीया पुरुषसंस्कारार्था स्यात् भेदेनोपादानं नाकरिष्यत् । करोति च । तस्मादपुरुषसंस्कारार्थताऽऽग्नावैष्णवस्य, क्रतूपकाराय ह्याम्नानमस्येति ।स च देवतापरिग्रहद्वारेणेत्युक्तमेवाचार्येण ।

अभ्युपगम्यापि ब्रमः । यद्यपि चाग्नावैष्णवस्य दीक्षार्थता भवेत् तथापि दण्डान्तैरेव दीक्षितो भवति न तावन्मात्रेणेति । चिन्तायाः प्रयोजनं यदि नाम मानुषादेः प्रतिबलात्प्राग्दण्डप्रदानादग्निहोत्रकाल आपतेत् प्राप्तनिमित्तत्वाददीक्षितत्वाच्च होतव्यमेवाग्निहोत्रमिति । एवं तावदाग्नावैष्णवस्य दीक्षासंस्कारकरणे ऽनुप्रवेशो नास्तीत्युक्तम् ।

यथाऽनुप्रवेशो भवति तथोच्यते । लृड्विभक्तिः क्रियार्थत्वेऽपि स्मर्यते ।'तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्' इत्यनुवर्त्तमाने 'लृट्शेषे च'इति सूत्रितम् । चशब्दात् क्रियायां क्रियार्थायामिति । अत्रोदाहरणं करिष्यामीति व्रजति हरिष्यामीति व्रजतीति । एवमिहापि दीक्षिष्यमाणो निर्वपेदित्याग्नावैष्णवस्य दीक्षासंस्कारकरणेऽनुप्रवेशः शक्यो वक्तुम् । एवमपि हि दण्डान्तैरेव दीक्षितो भवति, नाग्नावैष्णवेनेति ॥ ९ ॥

अन्यो दीक्षितोऽयं ब्राह्मण इत्याह त्रिरुच्चैः ॥१०॥

अन्यशब्देन चाध्वर्युसन्निकर्षात्प्रतिप्रस्थाता गृह्यते । स ह्यन्यश्च भवति । समाख्यानुग्रहश्च । उच्चैरिति चोपांशुपक्षे उच्यते ॥ १० ॥

ब्राह्मण इत्येव वैश्यराजन्ययोरपि श्रुतेः ॥ ११ ॥

'तस्मादपि राजन्यं वा वैश्यं वा ब्राह्मण इत्येव ब्रूयात्' इति वचनात् (श०ब्रा० ३।२।१।४०) ॥ ११ ॥

आऽस्तमयाद्वाचं यच्छति ॥ १२ ॥

"स वाचंयम आस्त आऽस्तमयात्" इति(श०ब्रा०३।२।२।१) ॥१२॥

अस्तमिते दीक्षित वाचं विसृजस्व पत्नि वाचं विसृजस्वेति त्रिराह ॥ १३ ॥

दीक्षित वाचं विसृजस्वेति त्रिरुक्त्वा पत्नि वाचं विसृजस्वेति त्रिरुच्यते। लाघवाय समासेनोक्तम्। अनेकयजमानके विपरिणामः ॥१३॥

(यजमानपत्न्योर्वाग्विसर्गः)

अग्निमभ्यावृत्य व्रतं कृणुतेति वाग्विसर्जनं त्रिरुक्त्वाऽग्निर्ब्रह्मेति च सकृत् ॥ १४ ॥

व्रतं कृणुतेत्यस्य व्रतकरणार्थता सामर्थ्यात्। अग्निर्ब्रह्मेति तु वाग्विसर्गार्थम्। यच्चोच्यते, "अनेनैव वाचं विसर्जयेद् व्रतं कृणुत व्रतं कृणुत" (श०ब्रा०३।२।२।७) इति, तद् वाग्विसर्गस्य कालोपलक्षणार्थम् ॥ १४ ॥

भूर्भुवः स्वरिति वा ॥ १५ ॥

वाचं विसृजते, वा अग्निर्ब्रह्मेति विकल्पः ॥ १५ ॥

अत ऊर्ध्वमामुष्टिविसर्गादनस्तमितेऽनुदिते च त्रिराह दीक्षित वाचं यच्छ पत्नि वाचं यच्छेति ॥ १६ ॥

पूर्ववत्त्रिसंख्याऽभ्यावृत्तिः ॥ १६ ॥

यथोक्तं विसर्जनम् ॥ १७ ॥

इह वाग्विसर्जनकाल उक्त एव 'अस्तमिते वाचं विसृजस्व'इति। उदिते त्वन्नावाचार्येण वाग्विसर्गोऽभिहितः। स यथोक्तग्रहणेन गृह्यते। तत्र ह्युक्तम् "उखाया भस्मोद्वपनमस्तमिते पात्रे। वाचं विसृज्य समिदाधानम्" (का०श्रौ०१६।६।१-२) इत्युपक्रम्य "एवमुदिते भस्मोद्वपनादि" (का०श्रौ०१६।६।३) इत्युक्तम् ॥ १७ ॥

(व्रतदुघयोर्गवोर्दोहनादिकम्)

व्रतदुघे दोहयति ॥ १८ ॥

कारितत्वादध्येषणा गावौ धुक्ष्वेति ॥ १८ ॥

तत्क्षीरव्रतौ भवतः ॥ १९ ॥

तयोः क्षीरं तत्क्षीरम् । तद्व्रतौ भवतो दम्पती । तच्च विभागेनैकैकस्या गोरेकैकस्य । वक्ष्यति हि "दक्षिणाग्नौ पत्न्या ( व्रतश्रपणम् )" इति ॥ १९ ॥

प्रथमे व्रते व्रीहियवयोरन्यतरमात्रपत्युभात्रेके ॥ २० ॥

"तद्धैके प्रथमे व्रत उभौ व्रीहियवावावपन्ति" इति प्रकृत्य "तस्मादन्यतरमेवावपेत्" इत्युक्तम् । (श०ब्रा०३।२।२।१४) अतो विकल्पः ॥ २० ॥

तद्व्रतमदोहे ॥ २१ ॥

अदोहे व्रतदुहः तद्व्रतं भवति । तच्च प्रथम एव । अन्यत्र प्रतिनिधिरित्युक्तमेव "व्रते प्रसङ्गो न नियमशब्दात्" ( का०श्रौ०१।४।८ ) इति ॥ २१ ॥

सर्वौषधं सर्वसुरभि चैके ॥ २२ ॥

सर्वौषधं सर्वा ओषधयः । सर्वसुरभिः पिप्पल्यादिः ॥ २२ ॥

गार्हपत्ये दीक्षितस्य श्रपणं दक्षिणाग्नौ पत्न्याः ॥ २३ ॥

दीक्षितव्रतस्य पत्नीव्रतस्य च ॥ २३ ॥

यवागू राजन्यस्यामिक्षा वैश्यस्य (१) ॥ २४ ॥

व्रतं भवति। ते च तद्व्रते उपादेये, नेह श्रप्येते । अन्नावधिश्रितस्य भक्षणप्रतिषेधात् ॥ २४ ॥

व्रतं प्रयच्छत्यनुत्सिक्तमपररात्रे सायंदोहमपराह्णे प्रातर्दोहम् ॥ २५ ॥

"अथास्मै व्रतं प्रयच्छति"(श०ब्रा०३।२।२।१६) इति विहितत्वादध्वर्युः । ऊर्ध्वमसिक्तमनुत्सिक्तम् । सायंदोहमपररात्रे, प्रातर्दोहमपराह्णे ॥ २५ ॥

---

(१) तण्डुलानां शिथिलः पाको यवागूः उच्यते । पयस्तप्तं कृत्वोपरि दध्यासिच्योदकमवस्राव्य यद् घनीभूतं दधिसदृशं द्रव्यं स्थाल्यां तिष्ठति साऽऽमिक्षोच्यते ।

दैवीं धियमिति व्रतायोपस्पर्शनꣳ स्वासने ॥ २६ ॥

उपस्पर्शनमाचमनम्(१)। कुत एतत्। लिङ्गात्। "मानुषाय वा एष पुराऽशनायावनेनिक्तेऽथात्र दैव्ये धिये" (श.ब्रा.३।२।२।१७) इति यत्पूर्वं मानुषाशनकालेऽवनेजनं तदेवेदमिति ज्ञापयति तत्र च मन्त्र-विधानम्। उदकोपस्पर्शनमात्रमेवेति सम्प्रदायः। स्वासनशब्देन च कृष्णाजिने अभिधीयेते ॥ २६ ॥

( व्रताशनं यजमानस्य )

ये देवा इति व्रतयत्यमृन्मये ॥ २७ ॥

पात्रे ॥ २७ ॥

( पत्न्या व्रताशनम् )

पत्नी लौहे ॥ २८ ॥

ताम्रमये। तस्याश्च भक्षणमात्रमेव भवति नेतिकर्त्तव्यता। आव-हितत्वात् ॥ २८ ॥

श्वात्राः पीता इति नाभिमालभते ॥ २९ ॥

यजमानः ॥ २९ ॥

( दीक्षितस्य मूत्रपुरीषोत्सर्गप्रकारः )

मेक्ष्यन्कृष्णविषाणया लोष्टं किञ्चिद्वा-

ऽऽदत्त इयं त इति ॥ ३० ॥

मिह सेचने। मूत्रपुरीषे कुर्वन्नित्यर्थः। लोष्टं किञ्चिद्वाऽऽदत्ते। कि-ञ्चिच्छब्देन च काष्ठपाषाणाद्यपि गृह्यते। वाशब्दो विकल्पार्थः॥ ३० ॥

अपो मुञ्चामीति मेहति ॥ ३१ ॥

पृथिव्या सम्भवेत्यात्तं निदधाति ॥ ३२ ॥

यद् गृहीतं लोष्टादि तत्प्रतिमुञ्चति ॥ ३२ ॥

---

(१) हरिस्वामिनस्तूपस्पर्शनपदेन स्पर्शमात्रं स्वीकुर्वन्ति। शतपथे सर्वत्रोपस्पृशतेस्तदर्थे प्रयोगात्।

अग्ने त्वमित्युक्त्वा स्वपित्यधः प्राङ् दक्षिणतः ॥ ३३ ॥

दक्षिणतः वितानस्य प्राक्शिराः शयीत ॥ ३३ ॥

अग्निमभ्यावृत्तं त्रिबुद्धमस्वपस्यन्तम्, ॥ ३४ ॥

इति सप्तमाध्याये चतुर्थी कण्डिका ॥ ४ ॥

---

पुनर्मन इति वाचयति ॥ १ ॥

"अथ यत्र सुप्त्वा पुनर्नावद्रास्यन् भवति तद्वाचयति" इति वचनात् (श.ब्रा.३।२।२।२३) ॥ १ ॥

( दीक्षितस्य क्रोधादौ कर्तव्यम् )

त्वमग्न इत्याह क्रुध्वा ऽव्रत्यं वा व्याहृत्य ॥ २ ॥

अव्रत्यम् अश्लीलम् ॥ २ ॥

लब्धमालभ्य वाचयति रास्वेयदिति ॥ ३ ॥

रास्वेयदित्यमुं मन्त्रम् । आलभ्येति च कारितत्वादध्येषणा 'गामालभस्व'इत्येवमादि ॥ ३ ॥

अशक्येऽभिमन्त्रणम् ॥ ४ ॥

आलम्भनाशक्तावनेनैव मन्त्रेणाभिमन्त्रणं करोति ॥ ४ ॥

( दीक्षितस्य शूद्रसंभाषणादिकं वर्ज्यम् )

शूद्रसम्प्रवेशसम्भाषाप्रत्युत्थानाभिवादनोदकान्नायवर्षाणि वर्जयेत्प्रागवभृथात् ॥ ५ ॥

दीक्षितधर्मा एते इति प्रागवभृथादित्युक्तम् ॥ ५ ॥

परिह्वालं वदति ॥ ६ ॥

परिह्वालं मृदूच्यते ॥ ६ ॥

विचक्षणचनसितवतीं वाचम् ॥ ७ ॥

विचक्षणा संस्कृतोच्यते । चनवती--चन इत्यन्ननाम, अन्नवती अविद्राणा । सितवतीं सत्यवतीं वाचं वदति इति ॥ ७ ॥

शालासनास्वप्नौ सन्धिवेलयोः ॥ ८ ॥

सन्धिवेलयोः शालायामासितव्यम् । न च स्वप्यात् ॥ ८ ॥

वेद्याᳬ सुत्यासु ॥ ९ ॥

सुत्यासु वर्त्तमानासु वेद्यामासितव्यम्, सन्धिवेलयोरेव ॥ ९ ॥

( एतन्नियमातिक्रमे प्रायश्चित्तं नास्ति )

अप्रायश्चित्तमपराधे ॥ १० ॥

"नात्र प्रायश्चित्तिरस्ति प्रतिगुप्यमेवैतस्मात्"इति वचनात् ( श. ब्रा.३।२।२।२७) ॥ १० ॥

इतरेतरस्मिन्वोपह्वमिच्छेरन् ॥ ११ ॥

इतरेतरोपह्वो वा भवति । स च बहुयजमानके ॥ ११ ॥

पत्न्यामेकदीक्षी ॥ १२ ॥

एकदीक्षी तु पत्न्यामेवोपह्वमिच्छति ॥ १२ ॥

(दीक्षान्ते प्रायणीयेष्टिः)

दीक्षान्ते प्रायणीयमादित्यै चरुं निर्वपति ॥ १३ ॥

चरुग्रहणं न कर्त्तव्यम् । "अदित्यै चरुरन्यत्रापि" इत्युक्तत्वात् । (का० श्रौ०५।७।२) । कर्त्तव्यं वा, चरोः प्रायणीयत्वज्ञापनार्थम् । "आदित्यं चरुं प्रायणीयं निर्वपति"इति (श.ब्रा.३।२।३।१) वचनात् । एवं च पथ्यास्वस्त्यादीनां तदङ्गत्वादन्तराये सत्यप्रयोक्तृत्वम् ॥ १३ ॥

आज्यभागाविष्ट्वाऽऽज्येन देवताश्चतस्रो यजति पथ्याᳬ स्वस्तिमग्निᳬ सोमᳬ सवितारं च ॥ १४ ॥

चशब्दाददितिंचौदनेनेति । पथ्यास्वस्त्योरभेदज्ञापनार्थं चतस्र इति ग्रहणम् ॥ १४ ॥

( प्रायणीयोच्छिष्टचर्वादिनिधानमुदयनीयार्थम् )

चरुमेक्षणबर्हिर्निदधात्युदयनीयायै ॥ १५ ॥

उद्यनीयार्थं चर्वादीनां निधानम् ॥ १५ ॥

सलेपं चरुं प्रमृष्टं मेक्षणम् ॥ १६ ॥

"ताꣳ स्थालीꣳ सक्षामकषा प्रमृज्य मेक्षणं निदधाति" इति वचनात् (श.ब्रा.३।२।३।२१) ॥ १६ ॥

प्रक्षालयति वा चरुम् ॥ १७ ॥

अनुप्रहरतीतरे ॥ १८ ॥

मेक्षणबर्हिषी ॥ १८ ॥

त एवर्त्विजः ॥ १९ ॥

विप्रेतेष्वन्येऽपि ॥ २० ॥

प्रायश्चित्तव्युदासार्थमित्युक्तम् ॥ २० ॥

(प्रायणीयं कर्म पूर्वशंय्वन्तं भवति)

शंय्वन्तं भवति ॥ २१ ॥

शंयुद्वये प्राप्ते इडाद्वये च किं पूर्वेण शंयुना शंय्वन्तं पूर्वया वेडयेडान्तमुत्तरेण वेति । किं तावत्प्राप्तम्—

अन्तवचने पूर्वं प्राप्तेः ॥ २२ ॥

अन्तवचने पूर्वमेव ग्रहीतव्यम् । कुत एतत् । प्राप्ता ह्रीडान्तता शंय्वन्तता चेति । कृते च शास्त्रार्थे किमित्युत्तरं यावद्गम्यत इति ॥ २२ ॥

किं च—

अविशेषश्रुतेः ॥ २३ ॥

न चात्र विशेषः श्रूयते । अतः प्राप्तत्वात्पूर्वमेव शंय्विडान्तं ग्रहीतव्यमिति ॥ २३ ॥

उत्तरं वा प्रकृत्यनुग्रहानुयाजप्रतिषेधाभ्याम् ॥ २४ ॥

उत्तरं वा शंय्विडं ग्रहीतव्यम् , न पूर्वम् । कुत एतत् । प्रकृत्यनुग्रहात् । एवं बहवः प्राकृताः पदार्था अनुगृहीता भवन्ति । वृद्धौ च फलभूयस्त्वं भवतीत्यभिप्रायः । अनुयाजप्रतिषेधश्च भवति "तदिडान्तं भवति नानुयाजान्यजति" (श.ब्रा.३।४।१।२६) इति । तथा

"तच्छंय्वन्तं भवति न पत्नीः संयाजयन्ति" (श.ब्रा.३।२।३।२३) इति। एतच्चोत्तरे शंय्वन्ते इडान्ते चोपपद्यते, न पूर्वे इति ॥ २४ ॥

एवं प्राप्त आह—

ग्रहणादप्रवृत्तिः ॥ २५ ॥

शंय्वन्तग्रहणादिडान्तग्रहणाच्चोत्तरत्राप्रवृत्तिः। कुतः। कृत एव शास्त्रार्थ इति ॥ २५ ॥

संत्वराश्रुतेश्च ॥ २६ ॥

"आतिथ्यꣳ हविर्निरवपन्" इति प्रकृत्याह "तस्येडोपहूताऽऽसाथाजग्मुस्तस्मात्स यज्ञ इडान्त" (श०ब्रा०९।५।१।२१) इति। असुरेभ्यो बिभ्यद्भिर्देवैः त्वरमाणैरिडान्ते एव परित्यक्तमिति। एतच्च पूर्व एवोपपद्यते नोत्तर इति॥२६॥

अनुयाजप्रतिषेधस्य तर्हि समाधिर्वक्तव्यः। सोऽभिधीयते—

नित्यानुवादोऽनुयाजप्रतिषेधः ॥ २७ ॥

अनुयाजप्रतिषेधः स इडान्तसंस्तवार्थः। एवं प्रशस्तमिडान्तं येनात्रानुयाजा अपि नेज्यन्त इति ॥ २७ ॥

इति सप्तमाध्याये पञ्चमी कण्डिका ॥ ५ ॥

---

( क्रयार्थं सोमस्योपरवदेशे आनडुहचर्मणि स्थापनम् )

उपरवदेशे प्रतिप्रस्थाता रोहिते चर्मण्यानडुहे सोमं निवपति ॥ १ ॥

स्थापयति ॥ १ ॥

विक्रय्येनं विचिनोति कौत्सः शूद्रो वा ॥ २ ॥

कुत्सितं कर्म करोतीति कौत्सः। विचयनं च पर्वशोऽवखण्डनम्॥२॥

ब्राह्मण उपास्ते ॥ ३ ॥

स च प्रकृत एव ऋत्विग्विशेषः ब्रह्मपुरुषो ब्राह्मणाच्छंसी। कृताकृतप्रत्यवेक्षणाय ब्रह्मा हि व्यापृतः प्रायणीये ॥ ३ ॥

उदकुम्भश्च पुरस्तात् ॥ ४ ॥

भवति । शाखान्तरात् । स्वशाखायामपि च दृश्यते "अथ यद्पामन्ते क्रीणाति"इति । क्रयार्थश्च निवापः ॥ ४ ॥

( सोमक्रयार्था चतुर्गृहीताहुतिः )

शालाद्वाराण्यपिधाय ध्रौवं जुह्वां चतुर्विगृह्णाति ॥ ५ ॥

उपरिष्टाद् द्वारापावरणविधानादिहापिधानम् । ध्रौवं जुह्वां चतुः कृत्वो विगृह्णाति ॥ ५ ॥

तत्र च—

बर्हिस्तृणेन हिरण्यं बध्वाऽवदधात्येषात इति ॥ ६ ॥

अनेन मन्त्रेण (जुह्वाम्)। बर्हिर्ग्रहणाच्च विनियुक्तमेव ग्रहीतव्यम् ॥६॥

जूरसीति जुहोति ॥ ७ ॥

चतुर्गृहीतम् ॥ ७ ॥

शुक्रमसीति हिरण्यमुद्धृत्य वेद्यां तृणं निदधाति ॥ ८ ॥

शुक्रमसीत्यनेन मन्त्रेण हिरण्यमुद्धृत्य वेद्यां तृणं निदधाति ॥८॥

सूत्रबद्धं हिरण्यं कुरुते ॥ ९ ॥

यज्जुह्वां प्रास्तं तदेव । अत्र प्रायणीयाप्रतिपत्तिसमाप्तिः । तच्छेषभूतद्रव्यं हि विनियुक्तमिति । प्रायणीयाशेषभूतद्रव्यसाध्याऽपि सतीयमाहुतिः सोमक्रयार्था । एवं हि श्रूयते "वाग्वै सोमक्रयणी निदानेन तामेतयाऽऽहुत्या प्रीणाति प्रीतया सोमं क्रीणाति" (श०ब्रा०३।२।४।१०) इति। एवं च सत्युदयनीयायां न भवति ॥ ९ ॥

( पदहोमार्थं चतुर्ग्रहणम् )

चतुर्गृहीतं गृहीत्वाऽन्वारभस्व यजमानेत्याह ॥ १० ॥

अध्वर्युः । तं च यजमानोऽन्वारभते(१) ॥ १० ॥

( सोमक्रयार्थम् अध्वर्युयजमानयोर्विमिताग्निष्क्रमणम् )

अपावृतद्वारे निष्क्रामतः ॥ ११ ॥

---

(१) अन्वारम्भस्तु होमान्तः ।

अपावृतद्वारमुद्घाटितद्वारम्। द्विवचनोपदेशाच्चाध्वर्युयजमानौ निष्क्रामतः। प्रतिप्रस्थाता द्वितीय इति सम्प्रदायः(१) ॥ ११ ॥

( सोमक्रयण्या गोर्लक्षणम् )

दक्षिणेन द्वारꣳ सोमक्रयणी तिष्ठत्यलक्षिताऽव्यङ्गाऽप्रवीताऽरज्जुबद्धा बभ्रुः पिङ्गला पिङ्गलाभावेऽरुणाऽरुणाभावे रोहिण्यश्येताक्षी ॥ १२ ॥

अलक्षिता अनङ्किता। अव्यङ्गा अनङ्गहीना। अप्रवीता अकामिता। अबद्धैवारज्जुबद्धा। बभ्रुः पिङ्गला बभ्रुवर्णा पिङ्गाक्षी। तदभावेऽरुणा। तस्या अप्यभावे रोहिण्यश्येताक्षी। रोहिणी रक्तवर्णा। अश्येताक्षी अरक्ताक्षी। दक्षिणेन द्वारं तिष्ठति ॥ १२ ॥

( गोरभिमन्त्रणम् )

चिदसीत्येनामभिमन्त्रयते ॥ १३ ॥

सोमक्रयणीम्। मन्त्रश्च साण्डे विपरिणम्यते ॥ १३ ॥

( अध्वर्युयजमानयोर्गोरनुगमनम् )

उदीचीन्नीयमानामनुगच्छतो वस्व्यसीति ॥ १४ ॥

द्विवचनोपदेशात् द्वयोरपि मन्त्रः। चोदितार्थाभिधानाच्च साण्डे विपरिणामः ॥ १४ ॥

षट् पदान्यतीत्य सप्तमं पर्युपविशन्ति ॥ १५ ॥

सोमक्रयण्याः। "अथ सप्तमं पदं पर्युपविशन्ति" (श०ब्रा०३।३।१।३) इति वचनात्। पर्युपवेशनं च ब्रह्मयजमानाध्वर्युप्रतिप्रस्थातॄणाम् ॥१५॥

हिरण्यमस्मिन्निधायाभिजुहोत्यादित्यास्त्वेति ॥ १६ ॥

( गोः सप्तमे पदे हिरण्यं निधाय चतुर्गृहीतहोमः )

हिरण्यमस्मिन्सप्तमे पदे निधायाभिजुहोति "अदित्यास्त्वेत्यनेन मन्त्रेण ॥ १६ ॥

---

(१) स्वमतमेतत् 'अन्यशब्देन प्रतिप्रस्थातोच्यते इत्युक्तमेव' इति उत्तरग्रन्थात्।

( सप्तमपदपरिलेखादिकम् )

स्फ्येन पदं त्रिः परिलिखत्यस्मेरमस्त्रेति ॥ १७ ॥

अनेन मन्त्रेण ॥ १७ ॥

समुद्धृत्य पदᳬं स्थाल्यामावपत्यस्मेतेबन्धुरिति ॥ १८ ॥

उद्धरणं हिरण्यस्य । "समुद्धृत्य हिरण्यम्" (श०ब्रा०काण्व०३।२।४।६) इति वचनात्(१) । पदᳬं स्थाल्यामावपति "अस्मे ते बन्धुरिति ॥ १८ ॥

अपः स्थाने निषिच्य यजमानाय पदं प्रयच्छति 'त्वे राय' इति ॥ १९ ॥

बहुयजमानकेऽस्य मन्त्रस्य विपरिणामः ॥ १९ ॥

'मेराय' इति यजमानः प्रतिगृह्णाति ॥ २० ॥

पदम् । अयमपि अनेकयजमानके विपरिणस्यते । मन्त्रद्वयेऽप्यध्याहारः साकाङ्क्षत्वात् । रैशब्दस्य पशुविषयत्वाद् बहुवचनान्तता । "त्वे राय इति त्वयि पशव इत्येवैतदाह मे राय इति मयि पशव" (श०ब्रा०३।३।१।८) इति श्रुतत्वात् ॥ २० ॥

मात्रयमित्यध्वर्युरात्मानᳬं सᳬंस्पृशति ॥ २१ ॥

आनन्तर्याद्यजमानो मा भूदित्यध्वर्युग्रहणम् ॥ २१ ॥

हृत्वा पत्न्यै पदं प्रयच्छति ॥ २२ ॥

हृत्वेत्युक्तत्वादध्वर्युः प्रयच्छति ॥ २२ ॥

नेष्टा तोत इत्येनां वाचयति ॥ २३ ॥

पत्नीम् ॥ २३ ॥

सोमक्रयण्या च समीक्षमाणाᳬं समख्य इति ॥ २४ ॥

चशब्दान्नेष्टैव पत्नीं वाचयति ॥ २४ ॥

---

(१) उपोद्धृत्य हिरण्यमिति काण्वशाखायां पाठः । समानार्थत्वात् भाष्यकारेण समुद्धृत्येत्युक्तम् । मध्यन्दिनशाखायां तु अथ समुल्लिख्य पदᳬं स्थाल्यामिति (श०ब्रा०३।३।१।६) पाठो दृश्यते ।

( पाणिप्रक्षालनपूर्वकमनामिकायां हिरण्यबन्धनम् )

प्रक्षाल्य पाणी हिरण्यं बध्नीतेऽनामिकायाम् ॥ २५ ॥

हिरण्यबन्धनस्य क्रयार्थता । येन "अग्निरेतसं वै हिरण्यम्" इत्युपक्रम्याह "सत्येनाᳪंशूनुपस्पृशानि सत्येन सोमं पराहणानि" (श०ब्रा० ३।३।२।२) इति ॥ २५ ॥

अधिकारमुपजीवन्नाह—

आप्यायनाभिषवाᳪंश्वदाभ्येषु च ॥ २६ ॥

पाणिप्रक्षालनहिरण्यबन्धने भवतः ॥ २६ ॥

इति सप्तमाध्याये षष्ठी कण्डिका ॥ ६ ॥

---

( सोमोपनहनाहरणादिप्रैषः )

प्रेष्यति च सोमोपनहनमाहर सोमपर्याणहनमाहरोष्णीषमाहरेति ॥ १ ॥

चशब्दादध्वर्युरेव प्रेष्यति ॥ १ ॥

अत्र वा निर्वपनम् ॥ २ ॥

अस्मिन्वा अवसरे सोमनिर्वापः । तुल्यशास्त्रत्वात् ॥ २ ॥

शोभनᳪं सोमोपनहनम् ॥ ३ ॥

भवतीति वाक्यशेषः ॥ ३ ॥

उष्णीषाभावे सोमपर्याणहनाद् द्व्यङ्गुलं त्र्यङ्गुलं वोष्णीषायावकृन्तति ॥ ४ ॥

"यद्युष्णीषं न विन्देत् सोमपर्याणहनस्यैव द्व्यङ्गुलं वा त्र्यङ्गुलं वाऽवकृन्तेत्" इति (श०ब्रा०३।३।२।४) वचनात् ॥ ४ ॥

( सोमोपनहनाहरणादिकम् )

अध्वर्युर्यजमानो वा सोमोपनहनᳪं हरत्यन्य इतरे ॥५॥

अध्वर्युर्यजमानो वा सोमोपनहनमादत्ते । "य एव कश्च सोम-

पर्याणहनम्" (श०ब्रा०३।३।२।४) इति वचनात् । अन्यशब्देन च प्रतिप्रस्थातोच्यत इत्युक्तमेव ॥ ५ ॥

सोमं गच्छन्ति । एषत इति वाचयति ॥ ६ ॥

गमनाभिप्रवृत्तम् । चोदितार्थाभिधायकत्वात् न्यग्रोधे विपरिणामः ॥ ६ ॥

प्राङुपविश्यास्माकोऽसीति सोममालभते ॥ ७ ॥

अयमपि चोदितार्थाभिधायी । दिङ्नियमश्च श्रौतप्रज्ञापनार्थः ॥ ७ ॥

न विचिनोत्यतः । तृणकाष्ठापासनमेके ॥ ८ ॥

"अत्र हैके तृणं वा काष्ठं वा विस्त्वा ऽपास्यन्ति" (श०ब्रा०३।३।२।८) इति वचनात् ॥ ८ ॥

सोमोपनहनं द्विगुणं चतुर्गुणं वा स्तृणाति प्राग्दशमुदग्वा ॥ ९ ॥

एवमेव हि श्रूयते इति "अथ वासो द्विगुणं वा चतुर्गुणं वा प्राग्दशं वोदग्दशं वोपस्तृणाति" (श०ब्रा०३।३।२।९) इति ॥ ९ ॥

तस्मिन्त्सोमं मिमीते दशकृत्वोऽभित्यामिति ॥ १० ॥

सोमोपनहने सोमं प्रक्षिपति दशकृत्वः "अभित्यमित्यनेन मन्त्रेण ॥ १० ॥

सर्वाभिः प्रथमम् ॥ ११ ॥

सर्वाभिरङ्गुलीभिः प्रथमः प्रक्षेपः ॥ ११ ॥

अङ्गुष्ठप्रभृति चैकोत्सर्गम् ॥ १२ ॥

एकैकाङ्गुलिरुत्सृज्यते प्रक्षेपे प्रक्षेपे ॥ १२ ॥

द्विः कनिष्ठिकया ॥ १३ ॥

कनिष्ठिकया द्विः प्रक्षिपति ॥ १३ ॥

एकोपचयं च ॥ १४ ॥

एकैकोपचीयतेऽङ्गुलिः प्रक्षेपे प्रक्षेपे । एवं दशकृत्वो मितो भवति ॥ १४ ॥

अञ्जलिना दशमम् ॥ १५ ॥

दशमं प्रक्षेपमञ्जलिना । "दशकृत्वो मिमीत" इति (श०ब्रा०३।३।२।१७) वचनात् । "समस्याञ्जलिनाऽध्यावपति" (श०ब्रा०३।३।२।१३) इति श्रवणात् ॥ १५ ॥

अन्यद्वाऽध्यावापश्रुतेः ॥ १६ ॥

अथवाऽन्यदेकादशमञ्जलिना कर्त्तव्यम् । येन "एतया सर्वाभिः" इत्युक्त्वा "समस्याञ्जलिनाऽध्यावपति" इत्याह । यत्पुनरुक्तं "दशकृत्वोऽभित्यम्" इति तद् मन्त्रेणाभिसम्बध्यते—दशकृत्वोऽभित्यमित्यनेन मन्त्रेण । तस्मादेकादशोऽध्यावापः ॥ १६ ॥

अन्तान्त्संगृह्योष्णीषेण बध्नाति प्रजाभ्यस्त्वेति ॥ १७ ॥

"अथ सोमोपनहनस्य समुत्पार्यान्तानुष्णीषेण विग्रथ्नाति" इति (श०ब्रा०३।३।२।१८) वचनात् । बध्नामीति चाध्याहारः साकाङ्क्षत्वात् ॥ १७ ॥

अङ्गुल्या मध्ये विवृणोति प्रजास्त्वाऽनुप्राणन्त्विति ॥ १८ ॥

"अथ मध्येऽङ्गुल्याऽऽकाशं करोति" (श०ब्रा०३।३।२।१९) इति श्रुतेः ॥ १८ ॥

तं विक्रयिणे प्रयच्छति ॥ १९ ॥

सोमम् ॥ १९ ॥

इति सप्तमाध्याये सप्तमी कण्डिका ॥ ७ ॥

( सोमस्यान्यमूल्येन पणनपूर्वकं गवा क्रयः )

पञ्चकृत्वः सोमं पणते ॥ १ ॥

पण व्यवहारे । पञ्चकृत्वः संव्यवहारं करोति ॥ १ ॥

स आह सोमविक्रयिन्क्रय्यस्ते सोमो राजा३ इति ॥ २ ॥

क्रय्य इत्याह सोमविक्रयी ॥ ३ ॥

तं वै ते क्रीणानीति ॥ ४ ॥

मन्त्रत्रयमपि चोदितार्थाभिधायि ॥ २-३-४ ॥

क्रीणीहीत्याह सोमविक्रयी ॥ ५ ॥

कलया ते क्रीणानीति ॥ ६ ॥

अध्वर्युः ॥ ६ ॥

भूयो वा अतः सोमो राजाऽर्हतीत्याह सोमविक्रयी ॥७॥

भूय एवातः सोमो राजाऽर्हति महाँस्त्वेव गोर्महिमेत्यध्वर्युर्गोत्रै प्रतिधुक् तस्यै शृतं तस्यै शरस्तस्यै दधि तस्यै मस्तु तस्या आतञ्चनं तस्यै नवनीतं तस्यै घृतं तस्या आमिक्षा तस्यै वाजिनमिति ॥८॥

'भूयो वा अतः सोमो राजाऽर्हति' इति 'भूय एवातः सोमो राजाऽर्हति' इति च चोदितार्थाभिधायिनौ ॥ ७ ॥ ८ ॥

भूय एवेत्यतः प्रभृति चतुरावर्त्तयति ॥ ९ ॥

अध्वर्युरेव ॥ ९ ॥

एकैकेनान्ते पणते शफेन, पदा, ऽर्द्धेन, गवा ॥ १० ॥

ते क्रीणामीत्यन्ततः ॥ ११ ॥

प्रश्नान्ते प्रश्नान्ते ॥ १२ ॥

भूय एवेत्यतः प्रभृति आवर्त्तयति। प्रश्नशब्देन चाध्वर्युसोमविक्रयिणोरुक्तिप्रत्युक्ती लक्ष्येते। मन्त्रान्ते शफादीनामेकैकेन पणतेऽध्वर्युः। उक्तिप्रत्युक्त्यन्ते च भूय एवेत्यतः प्रभृत्यावृत्तिः। अन्ते च पणने गवा ते क्रीणामीति। "गवाते क्रीणामि" (श०ब्रा०३।३।३।३) इत्युक्तेः ॥ १२ ॥

क्रीतः सोमो राजेत्यन्ते वयाᳩंसि प्रब्रूहीत्याह सोमविक्रयी(१) ॥ १३ ॥

अयमपि चोदितार्थाभिधायी ॥ १३ ॥

स आह चन्द्रं ते वस्त्रं ते च्छागा ते धेनुस्ते मिथुनौ ते गावौ तिस्रस्तेऽन्या इति ॥ १४ ॥

तच्छब्देनाध्वर्युरभिधीयते ॥ १४ ॥

शुक्रं त्वेति हिरण्यमालभ्भ्य वाचयति ॥ १५ ॥

चोदितार्थाभिधायी ॥ १५ ॥

( हिरण्यदर्शनेन सोमविक्रयिणः प्रलोभनम् )

सग्मे त इति सोमविक्रयिणᳬ हिरण्येनाभिकम्पयति ॥ १६ ॥

अभिकम्पयति उपप्रलोभयति सन्दर्शनेन । "अथ सोमविक्रयिणमभिप्रकम्पयति" इति श्रुतेः ( श० ब्रा० ३।३।३।७ ) ॥ १६ ॥

अस्मे त इति यजमानसहितं निदधाति ॥ १७ ॥

हिरण्यम् ॥ १७ ॥

सोमविक्रय्येतदादत्ते ॥ १८ ॥

एतद्धिरण्यम् ॥ १८ ॥

अजां प्रत्यङ्मुखीमालभ्भ्य वाचयति तपसस्तनूरिति ॥ १९ ॥

"अथाजायां प्रतीचीनमुख्यां वाचयति" इति (श०ब्रा० ३।३।३।८) वचनात् । कारितत्वादध्येषणाऽत्र । चोदितार्थाभिधायी च मन्त्रः ॥१९॥

---

(१) वैश्यराजन्ययोः सोमयागे न्यग्रोधस्य सोमवत् क्रयणादिसंस्कारकरणम् ।

सव्येनाजां प्रयच्छन्मित्रो न इति दक्षिणेन सोम-

मादायागत उत्तिष्ठति वा ॥ २० ॥

आगते सोमे, उत्तिष्ठति वा यजमानः, न वोत्तिष्ठति । मन्त्रश्चोदितार्थाभिधायी । उपमार्थत्वान्मित्रशब्दस्याविपरिणामः ॥ २० ॥

( दीक्षितदक्षिणोरौ सोमनिधानम् )

दीक्षितोरौ दक्षिणे प्रत्युह्य वासो निदधाती-

न्द्रस्योरुमिति ॥ २१ ॥

अयमपि चोदितार्थाभिधायी ॥ २१ ॥

स्वानभ्राजेति जपति सोमविक्रयिणमी-

क्षमाणः ॥ २२ ॥

"अथ सोमक्रयणाननुदिशति"इति ( श० ब्रा० ३।३।३।११ ).वचनात् । अत एव यजमानः ॥ २२ ॥

( स्वानभ्राजेति जपित्वा शिरःप्रावरणापसारणम् )

अपोर्णुते दीक्षितः शिरः ॥ २३ ॥

स्वयमेव ॥ २३ ॥

पत्नी च ॥ २४ ॥

( सोमविक्रयिहस्ताद्धिरण्यस्याच्छेदनम् )

हिरण्यं सहसाऽऽच्छिद्य पृषता वरत्राकाण्डेना-

हन्ति वा ॥ २५ ॥

हिरण्यं झटिति कृत्वा सोमविक्रयिहस्तादाच्छिद्य पृषता चित्रेण वरत्राकाण्डेनाहन्ति सोमक्रयिणं, न वाऽऽहन्तीति विकल्पः ॥ २५ ॥

इति सप्तमाध्याये अष्टमी कण्डिका ॥ ८ ॥

( गृहीतसोमस्य यजमानस्य मन्त्रवाचनमुत्थानमनः प्रति गमनं च )

गृहीतसोमं परिमाऽग्न इति वाचयति ॥ १ ॥

गृहीतसोमग्रहणाद् गृहीतेनैव सोमेन वाच्यत इति ॥ १ ॥

उत्तरे च ॥ २ ॥

उत्तरे च द्वे कर्मणी यजमानकर्तृके ॥ २ ॥

उदायुषेत्युत्थान॑ (१)शीर्ष्णि सोमं कृत्वा पाणिमन्तर्द्धाय ॥ ३ ॥

पाणिनाऽन्तर्हितेन शिरसि सोमं कृत्वा "उदायुषेत्यनेन मन्त्रेणोत्तिष्ठति ॥ ३ ॥

प्रतिपन्थामित्यनोऽभ्येति दक्षिणतस्तिष्ठच्छन्न॑ समङ्गि धौतं प्रउगाच्चोद्धते फलके ॥ ४ ॥

समङ्गि सर्वाङ्गोपेतं दक्षिणतो व्यवस्थितं क्रयदेशस्थानः तत्प्रतिगच्छति 'प्रतिपन्थामित्यनेन मन्त्रेण । तस्य चेषान्तरालादुद्धते फलके भवतः । 'उद्धते प्रउग्ये फलके' इति (श० ब्रा० ३।३।४।६) वचनात् ॥ ४ ॥

( अनसि कृष्णाजिनमास्तीर्य सोमनिधानम् )

कृष्णाजिनमस्मिन्नास्तृणात्यदित्यास्त्वगिति ॥ ५ ॥

अस्मिन्नित्यनोऽभिधीयते ॥ ५ ॥

तस्मिन्सोमं निदधात्यदित्यै सद इति ॥ ६ ॥

तस्मिन्कृष्णाजिने । मन्त्रश्चोदितार्थाभिधायी ॥ ६ ॥

अस्तभ्नाद्द्यामिति सोममालभ्य वाचयति ॥ ७ ॥

आलभ्येति कारितः । कारिते चाध्येषणा । न्यग्रोधे च सोमन्यग्रोधाविति । "अस्तभ्नाद्द्यामिति चोदितार्थाभिधायी ॥ ७ ॥

---

(१) आपस्तम्बः 'अपि पन्थामगन्महीत्युद्धतपूर्वफलकेनानसा परिलिखितेन छदिष्मता प्राञ्चः सोममच्छ यान्ति शीर्ष्णा गिरौ क्रीत॑ हरन्त्यपरेणोत्तरेण वा राजानं प्राङीषमुदङीषं वा नद्धयुग॑ शकटम्' इति।

( सोमं वाससा संवेष्ट्य द्वितीयकृष्णाजिनमनसः पुरस्ता द्रुच्छ्रिते दण्डे ध्वजस्थानीयमासजति )

वनेषु व्यन्तरिक्षमिति सोमपर्याणहनेन परितत्य कृष्णाजिनं पुरस्तादासजति सूर्यस्य चक्षु-रित्यासनयोरन्यतरत् ॥ ८ ॥

"वनेषु व्यन्तरिक्षमित्यनेन मन्त्रेण सोमपर्याणहनेन परितत्य कृष्णाजिनमनसः पुरस्तादासजत्यवलगयति "सूर्यस्य चक्षुरित्यनेन मन्त्रेण(१) ॥ ८ ॥

एकं चेद् ग्रीवा(२) अवकृत्य ॥ ९ ॥

एकं चेदासनं कृष्णाजिनं ग्रीवा अवकृत्यासजति ॥ ९ ॥

( अनडुहोरनसि भेदेन योजनम् )

अनड्वाहौ युनक्त्युस्रावेतमिति(३) युग-पत्तद्वचनात् ॥ १० ॥

अनस्यनड्वाहौ युनक्ति 'उस्रावेतमित्यनेन मन्त्रेण युगपत्। यौ-गपद्याभिधायकत्वान्मन्त्रस्य ॥ १० ॥

(४)भेदे मन्त्रावृत्तिः सान्निपातित्वात् ॥ ११ ॥

भेदेन वा योजनमशक्यत्वात्। न हि शक्यते दक्षिणेनैकेन पाणिना द्वयोर्योजनं कर्तुम्। योजनं च योक्त्रपरिग्रहणं, न युगस्कन्धसन्नि-

---

(१) अत्रानसो वाससो वेष्टनमिति केचित्। तत्रापष्टम्भकं च 'वनेषु व्यन्तरिक्षमिति वाससा पर्याणह्यन्ति' इति सूत्रान्तरम्। वस्तुतः परि समन्तादानह्यते सोमो येन तत्सोमपर्याणहनमिति व्युत्पत्त्या शब्दत एव पटकुटीकरणं प्रतीयत इति।

(२) ग्रीवाशब्दो वेदे प्रायेण बहुवचनान्तः।

(३) अत्रैवं विचार्यते, किं युगपदनडुहोर्योजनं भेदेन वेति। तत्र सूत्रेणैव पूर्वपक्षः 'युगपत्'।

(४) सिद्धान्तमाह 'भेदे' इति।

पातः। अतो भेदेन। भेदे च मन्त्रावृत्त्या भवितव्यम्। सन्निपतितो हि मन्त्रः क्रियामुपकरोति। तथा च श्रुतिः "स दक्षिणायुग्यमेवाग्रे युनक्ति" "अथ सव्यायुग्यम्" इति (श०ब्रा०५।१।४।७-९) ॥ ११ ॥

( सुब्रह्मण्यः पलाशशाखयाऽनड्वाहौ प्रेरयति )

ईषान्तरे भूमिष्ठः सुब्रह्मण्यः पलाशशाखया प्राजति ॥ १२ ॥

यत उद्धृते फलके तत्र भूमिष्ठः सुब्रह्मण्यः पलाशशाखया प्राजति गमयत्यनड्वाहौ ॥ १२ ॥

( अनसः पश्चात्काष्ठं गृहीत्वाऽध्वर्युः क्रीताय सोमायानुवाचयति )

पश्चात्परीत्यापालम्बं गृहीत्वा सोमाय क्रीतायानुवाचयति पर्युह्यमाणायेति वा ॥ १३ ॥

अनः परीत्य पश्चाद्यवस्थितः ( अध्वर्युः ) अपालम्बं गृहीत्वा—अपालम्बशब्देन पश्चादाबद्धा रज्जुरभिधीयते(१) । ययाऽवतारेऽनः प्रवर्त्तमानं निवार्यते। तं गृहीत्वा सोमाय क्रीतायानुवाचयति। पर्युह्यमाणायेति वेति विकल्पः। मन्त्रश्चोदितार्थाभिधायी। क्रयोत्तरकालं चाभिषेचनीये बहुवचनान्तेनोहः ॥ १३ ॥

दीक्षितश्चान्वारभते ॥ १४ ॥

सोमम्। "पर्युह्यमाणं वै यजमानोऽन्वारभत" (श०ब्रा०३।४।१।६) इति वचनात् ॥ १४ ॥

( प्रथमायामृचि होत्रा पठितायाम् अध्वर्य्वादीनां शालागमनम्, यजमानस्य वाचनं च )

त्रिरुक्तायां प्राङ् यात्वा दक्षिणाऽऽवृत्य शालां गच्छन्ति ॥ १५ ॥

त्रिरुक्तायां प्रथमायां सोमपरिवहनर्चि पदार्थतया प्राङ् यात्वा प्रदक्षिणमावृत्य शालां गच्छन्ति ॥ १५ ॥

---

(१) पश्चाद्भागे लम्बमानं काष्ठमपालम्बशब्देनोच्यते, येनोर्ध्वप्रदेशे प्रचलतः शकटस्य पर्यावर्त्तनं वार्यत इति हरिस्वामिनोऽन्ये च याज्ञिकाः।

भद्रो म इति वाचयति ॥ १६ ॥

वाचनं च गमनाभिप्रवृत्तस्य। मन्त्रश्चोदितार्थाभिधायी ॥ १६ ॥

( सुब्रह्मण्याह्वानम् )

सुब्रह्मण्यां चाह्वयति सुब्रह्मण्यो३ं सुब्रह्मण्यो३मिति त्रिरुक्त्वा सकृन्निगदं यावदहे सुत्या भवति तथाऽऽह ॥ १७ ॥

सुब्रह्मण्यां चाह्वयति। चशब्दादध्वर्युः स्वयमेव। अध्वर्युवेदे हि विधानमस्या इति। सुब्रह्मण्योमिति त्रिरुक्त्वा इन्द्र आगच्छेति सकृन्निगदं ब्रूयात्। यावद्भिरहोभिः सौत्यमहर्भवति तावन्त्युच्चारयेत्। सुब्रह्मण्यः पुनः शकटसुब्रह्मण्यां निगदवर्जितां त्रिःकृत्वः प्राचि वर्तमाने अनसि, षट्कृत्वः प्रतीचीति ॥ १७ ॥

( अग्नीषोमीयपशूपस्थापनं प्रतिप्रस्थातुः )

शालां पूर्वेण प्रतिप्रस्थाताऽग्नीषोमीयं पशुमादाय तिष्ठति कृष्णसारङ्गं मेध्यमभावे लोहितसारङ्गम् ॥ १८ ॥

शालायाः पुरस्तात् प्रतिप्रस्थाताऽग्नीषोमीयं पशुमादाय तिष्ठति—अन्यवर्णं कृष्णवर्णेन सहितं(१) मेध्यं(२) मेदुरम्। तदभावे लोहितसारङ्गम् ॥ १८ ॥

( पश्वालम्भपूर्वकं यजमानस्य वाचनम् )

नमो मित्रस्येत्येनमालभ्य वाचयति ॥ १९ ॥

एनं पशुम् ॥ १९ ॥

चरति पशौ वाचनमेव ॥ २० ॥

अटवीं गच्छति पशौ वाचनमेव भवति ॥ २० ॥

आहवनीयाच्चोल्मुकमाहृत्यैके ॥ २१ ॥

---

(१) कृष्णेन सारङ्गं कृष्णसारङ्गम्। अथवा कृष्णश्चासौ सारङ्गश्च कृष्णसारङ्गः तम्। सारङ्गः कर्बुरः वर्णान्तराऽनुविद्धः शुक्ल इत्यर्थः।

(२) मेध्यम् मत्तमिति देवभाष्ये।

वाचनं कुर्वन्ति । उल्मुकाहरणं च पशुसन्निधान एव, न चरति पशौ । एवं हि श्रूयते "तद्धैक आहवनीयादुल्मुकमाहरन्त्य· यमग्निरय; सोमस्ताभ्याᳬं सह सद्भ्यां निष्क्रेष्यामह" इति (श० ब्रा०३।३।४।२२) ॥ २१ ॥

( शालासमीपे उत्तम्भककाष्ठेनानसोऽवरोधनम् )

समीपेऽन उपस्थाप्योत्तम्भनेनोपस्तभ्नाति वरुणस्योत्तम्भनमिति ॥ २२ ॥

शालायाः समीपेऽन उपस्थाप्योत्तम्भकेनोपस्तभ्नाति "वरुणस्यो- त्तम्भनमित्यनेन मन्त्रेण ॥ २२ ॥

शम्ये चोद्बृहति "वरुणस्य स्कम्भसर्जनी" इति ॥ २३ ॥

अनेन मन्त्रेण ॥ २३ ॥

( आसन्द्याहरणमध्वर्य्वादीनाम् )

औदुम्बरीमासन्दीं (१)नाभिदघ्नामरत्निमात्राङ्गीमूतामाहरन्ति चत्वारः ॥ २४ ॥

नाभिप्रमाणामरत्निमात्रैरङ्गैरीषोपलादिभिः निर्मिताम् । ऊतां मुञ्जरज्ज्वा । सौत्रामण्यां हि श्रुतौ पठ्यते "मुञ्जविवयना भवति" इति (श०ब्रा०१२।८।३।६) । तत्र चाचार्येणोक्तम् "सोमासन्दीवदिति (का० श्रौ०१९।४।७) । चत्वार आहरन्त्यध्वर्यवः । 'अथ चत्वारो राजासन्दी- माददत' इति (श०ब्रा०३।३।४।२६) श्रुतत्वात् ॥ २४ ॥

( आसन्दीमभिमृश्य तत्र कृष्णाजिनमास्तीर्य सोमं निधाय शालाप्रवेशनम् )

अभिमृशत्येनां वरुणस्य ऋतसदन्यसीति ॥ २५ ॥

एनामासन्दीम् ॥ २५ ॥

कृष्णाजिनमस्यामास्तृणाति "वरुणस्य ऋत- सदनमसीति ॥ २६ ॥

---

(१) नाभिदघ्नाम्, नाभिः प्रमाणं यस्याः सा नाभिदघ्नी इति प्राप्ते छान्दसष्टाप्प्रत्ययः ।

अस्यामासन्द्याम् ॥ २६ ॥

तस्मिन्सोमं निदधाति "वरुणस्य ऋतसदनमासीदेति ॥२७॥

तस्मिन्कृष्णाजिने सोमं निदधाति "वरुणस्य ऋतसदनमासीदेति । मन्त्रश्च चोदितार्थाभिधायी ॥ २७ ॥

शालां प्रवेशयन्ति दीक्षितसञ्चरेण ॥ २८ ॥

अधिकाराच्चत्वार एव ॥ २८ ॥

या त इति वाचयति ॥ २९ ॥

चोदितार्थाभिधायी मन्त्रः ॥ २९ ॥

आहवनीयं दक्षिणेन स्थापयन्ति ॥ ३० ॥

( आहवनीयस्य दक्षिणतः सोमासन्दीस्थापनम् )

सह सोमेनासन्दीम् ॥ ३० ॥

उदपात्रमुपनिनयन्त्येक उदपात्रमुपनिनयन्त्येके ॥ ३१ ॥

"अत्रहैक उदपात्रमुपनिनयन्ति" इत्यभिधाय "तस्मान्नोपनिनयेत्" इत्युक्तम् (श०ब्रा०३।३।४।२१) । अतो विकल्प इति ॥ ३१ ॥

इति नवमी कण्डिका ।

इति कर्कोपाध्यायविरचिते कात्यायनसूत्रभाष्ये सप्तमोऽध्यायः ।

# अष्टमोऽध्यायः ।

( आतिथ्येष्टिः )

आतिथ्यं निर्वपति वैष्णवं नवकपालम् ॥ १ ॥

आतिथ्यमिति कर्मणो नामधेयम्। "तस्मादातिथ्यं नामेति। (श० ब्रा०३।४।१।१) शब्दस्य चाभिधायकत्वात् संव्यवहारार्थत्वम्। संव्यवहारश्चात्र दृश्यते—आऽऽतिथ्यहविः कृतः कृत्वेत्येवमादि। तत्र च वैष्णवो नवकपालो भवति ॥ १ ॥

पत्न्यन्वारब्धस्तूर्णमेकविमुक्ते वा निर्वपेदग्ने-

स्तनूरिति पञ्चकृत्वः प्रतिमन्त्रम् ॥ २ ॥

"तत् पत्न्यन्वारभत" इति (श०ब्रा०३।४।१।६) वचनात्। "स वै संत्वरमाण इव गृह्णीयात्" इति (श०ब्रा०३।४।१।६) तूर्णमित्युक्तम्। "तद्वा अन्यतर एव विमुक्तः स्यादन्यतरोऽविमुक्तोऽथ गृह्णीयात्" (श०ब्रा०३।४।१।४) इत्येकविमुक्त इत्युक्तम्। वाशब्दो विकल्पार्थः। एवमपि हि श्रूयते "विमुच्यैव प्रपाद्य गृह्णीयात्" (श०ब्रा०३।४।१।५) इति। पूर्वं निर्वपतिग्रहणं कर्मोत्पत्त्यर्थम्, द्वितीयं निर्वापार्थम्। "अग्नेस्तनूरित्येभिर्मन्त्रैः पञ्चकृत्वः प्रतिमन्त्रं निर्वपेत्। "स गृह्णात्यग्नेस्तनूरसि विष्णवे त्वा" इति (श०ब्रा०३।४।१।९) श्रुतत्वात् ॥ २ ॥

निर्वापे चोदकेन सवितृपदोपलक्षितो मन्त्रः प्राप्नोति। अत आह-

सावित्रनिवृत्तिः श्रुतिविरोधाभ्याम् ॥ ३ ॥

सावित्रस्य सवितृपदोपलक्षितस्य मन्त्रस्य निवृत्तिः। कुत एतत्। श्रुत्या मन्त्रान्तरस्य विहितत्वात् "स गृह्णात्यग्नेस्तनूरसि विष्णवे त्वा" इति। उभयत्र च द्रव्याभिधायकस्त्वाशब्दः स विरुध्यत इति।

केषाञ्चिदयमेव सिद्धान्तः(१)।

परे तु व्यावर्णयन्ति। येनात्र श्रुतिर्भवति "स वा अन्येनैव ततो यजुषा गृह्णीयाद्येनो चान्यानि हवीꣳषि" इति (श०ब्रा०३ ४।१।७), चोदकप्राप्तप्रत्यक्षशिष्टयोर्मन्त्रयोः समुच्चयो वाचनिकः। अत उभाभ्यामपि ग्रहणमिति।

अपरे तु चोदकपरिप्राप्ते मन्त्रे त्वाशब्दमेवापनयन्ति। स एव विरुध्यते। "अग्नेस्तनूरसि विष्णवे त्वा" इति त्वाशब्देन द्रव्यमभिधीयते। सावित्रेऽपि त्वाशब्दो द्रव्यपर एव। अतः प्रत्यक्षशिष्टेन चोदकप्राप्तस्त्वाशब्दो निवर्त्यत इति।

तत्पुनर्विचारणीयम्। यदा वचनेन प्रत्यक्षशिष्टचोदकप्राप्तयोः समुच्चयो भवति तदा तदवयवभूतस्य त्वाशब्दस्यैकस्य निवृत्तिरित्यशक्यं वक्तुम्। अपि च प्रत्यक्षशिष्टेऽपि त्वाशब्दसमुच्चयो दृश्यते "श्येनाय त्वा सोमभृते विष्णवे त्वेति। "अग्नये त्वा रायस्पोषदे विष्णवे त्वेति च। अतः प्रत्यक्षशिष्टचोदकप्राप्तयोराम्नानसामर्थ्यात् समुच्चयः। पूर्वं चोदकप्राप्तः पश्चात्प्रत्यक्षशिष्ट इति। जुष्टशब्दस्तु चोदकप्राप्तोऽपि देवतादेशादुत्तर एव भवति। प्रकृतावेवमेव दृष्टत्वात्। सावित्रस्य तु ग्रहणत्रय एव प्रयोगः। प्रकृतौ दृष्टत्वात्। नोत्तरयोर्जुष्टशब्दस्य च ॥ ३ ॥

( उदवसानीयायाः प्राक् सौमिकदीक्षणीयादिषु अन्वाधानादीनां निवृत्तिः)

(२)अग्न्यन्वाधानव्रतोपायनारण्यभोजनदानब्रह्मवरणानि दीक्षणीयाप्रभृति प्रागुदवसानीयायाः सोमे कृतत्वात् ॥ ४ ॥

---

(१) अत एव बैजवापेन सूत्रितम् 'न सावित्रमाह' इति। आपस्तम्बः, पञ्चसु सावित्रं जुष्टं चानुषजति नोत्तरयोरित्येके वैष्णवो नवकपालः पुरोडाशो भवति विष्णुवदेवात ऊर्ध्वꣳ संस्कारा हविष्कृता वाचं विसृज्योत्तरमनड्वाहं विमुच्य वारुणमसि" इत्यादि।

(२) सोमान्तस्तन्त्रभूतासु दीक्षणीयादिष्विष्टिषु चोदकेन प्राकृतेषु समस्तेष्वङ्गेषु प्राप्तेष्वाह—

निवर्त्तन्त इति शेषः। अग्न्यन्वाधानं तावत् देवतापरिग्रहार्थम्। स च देवतापरिग्रहः सौमिकेन कृतः। "आग्नावैष्णवं निर्वपति" इति प्रकृत्य येनैतदाह "अग्निर्वै यज्ञस्यावराध्यो विष्णुः परार्ध्यस्तत्सर्वाश्चैवैतद्देवताः परिगृह्य सर्वं च यज्ञं परिगृह्य दीक्षा" इति (श०ब्रा०३।१।३।१) आग्नावैष्णवस्य च देवतापरिग्रहार्थतोच्यते। यद्येवं, कृतत्वादिति अत्र न सम्भवतीत्यतः (१)प्रभृतिशब्दः प्रायणीयादिविषयो द्रष्टव्यः।

व्रतोपायनमपि सौमिकेन व्याप्तत्वान्निवर्त्तते। दीक्षितस्य हि सत्यवदननियम उक्तः "तस्मादपि दीक्षितमाहुः सत्यं वदेति। अत्रापि प्रभृतिशब्दो नाञ्जस एव, दण्डान्ते हि दीक्षितो भवति। अत ऊर्ध्वं व्रतोपायननिवृत्तिः अस्यां कृतत्वाभावात्।

आरण्यभोजनमपि निवर्त्तते। सोमे द्रव्यविशेषनियमात्। निवृत्ते हि पयोव्रते हविःशेषभक्षतोच्यते। अस्ति चारण्यभोजनस्य प्राप्तिरतिरात्रआश्विने प्रक्रान्ते। तन्निवृत्त्यर्थमिदमुक्तम्। उपवसथे पुनरहनि वचनमेव "तस्मादुपवसथे नाश्नीयादिति। अथवा आरण्यभोजनप्रतिषेधसूत्रस्यैतन्मूलम् "तस्मादुपवसथे नाश्नीयादिति। एवं चोपवसथविषय एवारण्यभोजनप्रतिषेधः।

दानमपि निवर्त्तते। दीक्षणीयादिषु सौमिकेनैव दक्षिणादानेनानतेर्निर्वर्त्तितत्वात्।

ब्रह्मवरणं च सौमिकेन वरणेन कृतत्वात्।

उदवसानीयायां तु अग्न्यन्तरत्वादग्न्यन्वाधानं प्रवर्तत एव। व्रतोपायनमप्युन्मुक्तदीक्षत्वात्। दानं च विहितत्वात् "तस्य हिरण्यं ददातीति। आनत्यन्तरविधानाच्च ब्रह्मवरणम्। अतः प्रागुदवसानीयाया इति सूत्रितम् ॥ ४ ॥

पत्नीसन्नहनं च सयोक्त्रायाः ॥ ५ ॥

निवर्त्तते ॥ ५ ॥

---

(१) अत्र दीक्षणीयायां कृतत्वादिति हेतुर्न सम्भवति। दीक्षणीयाया अनिष्पन्नत्वेन तदन्तर्गताग्निविष्णुदेवतापरिग्रहरूपान्वाधानस्यासिद्धेः। अतस्तत्रान्वाधानं भवत्येव। तदीयान्वाधानेन प्रायणीयादिषु अन्वाधानस्य सिद्धत्वात्तत्र न भवति। अतः प्रभृतिशब्दस्य प्रायणीयादिपरत्वम्।

यजमानभागश्च भक्षप्रतिषेधात् ॥ ६ ॥

प्रतिषेधश्च द्रव्यान्तरविधानात् ॥ ६ ॥

न कर्मगुणत्वात् ॥ ७ ॥

नैतदेवं 'यजमानभागो न भक्ष्यते' इति । किं तर्हि भक्ष्यत एव । कर्मगुणो ह्यसौ । पुरुषार्थं हि द्रव्यान्तरविधानमिति ॥ ७ ॥

( उदककार्यार्थम्मदन्तीनामपामधिश्रयणम् )

उपसर्जनीरधिश्रयति (१)मदन्तीश्च व्रतवत् ॥ ८ ॥

उपसर्जन्यधिश्रयणं मदन्तीनामवसरविधित्सयोच्यते । व्रतवदिति गार्हपत्ये दीक्षितस्य श्रपणं दक्षिणाग्नौ पत्न्या इति ॥ ८ ॥

आ मुष्टिविसर्गादुदकार्थस्ततः ॥ ९ ॥

कर्त्तव्यः ॥ ९ ॥

( परिधिप्रस्तरविधृतिबर्हिषां काष्मर्यकाष्ठमयादित्वम् )

आतिथ्यायामेवापरो विशेष उच्यते—

काष्मर्यमयाः परिधय आश्वालः प्रस्तर ऐक्षव्यौ (२)विधृती बर्हिश्च ॥ १० ॥

विशेषाभावेपि बर्हिर्ग्रहणं चतुष्टयप्रतिपत्त्यर्थम् । वक्ष्यति हि ॥१०॥

( आतिथ्येष्टिपरिगृहीतपरिध्यादिचतुष्टयमेव अग्नीषोमीयोपसत्सु विनियोक्तव्यम् )

एतदेवाग्नीषोमीयोपसत्स्वपि चतुष्टयम् ॥ ११ ॥

स चायं व्यक्तिनियमः । एवकारकरणात् ॥ ११ ॥

आसाद्याग्निमन्थनमाहोमात्करोति ॥ १२ ॥

---

(१) मदन्तीपदस्योष्णजले शक्तिः । मदी हर्षग्लेपनयोरित्यनुशासनेन तप्तास्वप्सु तस्य प्रयोगात् ।

(२) बर्हिःप्रस्तरयोरन्तराले तिर्यक् प्रसार्यमाणौ दर्भौ विधृती इति प्रथमस्य तृतीयचरणे माधवाचार्याः ।

एतच्चेह ( श्रुतौ ) विहितम्, तच्चातुर्मास्येषूपनिबद्धं ( सूत्रकारेण ) पुनरिहातिदिष्टमिति ॥ १२ ॥

( इडान्ता आतिथ्येष्टिः )

इडान्तं भवति(१) ॥ १३ ॥

"तस्मात्स यज्ञ इडान्त" इति (श० ब्रा० ९।५।१।२१) वचनात् ॥१३॥

( तानूनप्त्रोपक्रमः )

ध्रौवं व्रतप्रदाने गृह्णात्यापतय इति ॥ १४ ॥

ध्रौवमाज्यं व्रतप्रदानभाजने गृह्णाति "आपतय" इत्यनेन मन्त्रेण ॥ १४ ॥

द्विश्च स्थाल्याः स्रुवेण तनूनप्त्रे शाक्वरायेति, शक्वन ओजिष्ठायेति ॥ १५ ॥

मन्त्रद्वयेन स्थाल्याः स्रुवेण गृह्णाति ॥ १५ ॥

गृह्णामीति सर्वत्र साकाङ्क्षत्वात् ॥ १६ ॥

गृह्णामीति च मन्त्रे अनुषङ्गः । साकाङ्क्षत्वात् । द्विश्च स्थाल्याः स्रुवेण गृह्णातीति । कुत एतत् । मन्त्रवाक्यभेदात् । "आज्यानि गृह्णाना" इति (श.ब्रा.३।४।२।९) चाज्यबहुत्वश्रवणात् ॥ १६ ॥

पूर्वशेषौ वोत्तरौ ॥ १७ ॥

वाशब्दः पक्षव्यावृत्तौ । पूर्वशेषभूतौ वोत्तरौ मन्त्रौ । न द्विः स्थाल्याः स्रुवेण ग्रहणम् । न ह्यत्र वचनमस्ति । न पूर्वमन्त्रेण सहैकवाक्यतां नोपयातः । अनेकविशेषणविशिष्टो हि सर्वैरेतैर्वायुरभिधीयत इति । "आपतये त्वा परिपतये गृह्णामि" इति (श.ब्रा.३।४।२।१०) हि प्रकृत्याह "यो वा अयं पवत एष आच पतति परिच पतति" इति (श.ब्रा.३।४।२।१०) । तथा "एष तनूनप्ता शाक्वर" इति (श.ब्रा.३।४।२।११) । "एष वै शक्वौजिष्ठ" इति (श.ब्रा.३।४।२।१२) । एकवाक्यतायां च गम्यमानायां भिन्नवाक्यता न युक्ता । अतो यन्मन्त्रवाक्यभेदात् द्विश्च स्थाल्याः स्रुवेणेति तन्नातीव युक्तरूपम् ॥ १७ ॥

---

(१) इदमातिथ्यमिति शेषः ।

प्रतिपुरुषंच ग्रहणमाज्यानि गृह्णाना इति श्रुतेः ॥ १८ ॥

यत्तु "आज्यानि गृह्णाना" इत्याज्यबहुत्वं तत्प्रतिपुरुषग्रहणेन परिह्रियते । तस्मादेकमेवेदं ग्रहणम्, न द्विः स्थाल्याः स्रुवेणेति सम्प्रदायः। अपरे तु द्विः स्थाल्याः स्रुवेण तूष्णीं ग्रहणमिच्छन्ति । तेषां पुनर्वचनमन्वेषणीयम् । न हि वचनमन्तरेणैषोऽर्थः शक्यते वक्तुमिति ॥१८॥

तानूनप्त्रमेतत् ॥ १९ ॥

अस्य तानूनप्त्रमितीयं संज्ञा वैदिकी ॥ १९ ॥

दक्षिणस्यां वेदिश्रोणौ निधायावमृशन्त्यृत्विजो यजमानश्चानाधृष्टमिति ॥ २० ॥

अनेन मन्त्रेण ॥ २० ॥

अद्रोहस्तेभ्यो न सतानूनप्त्रिणे द्रोग्धव्यमिति श्रुतेः ॥ २१ ॥

यैः सह तानूनप्त्रमाज्यं स्पृष्टं ते सतानूनप्त्रिणः । तेषां परस्परतोऽद्रोह इति ॥ २१ ॥

[ इति अष्टमाध्याये प्रथमा कण्डिका । ]

---

पल्यङ्ग्य निदधात्यपिधायामृन्मयेन ॥ १ ॥

पल्यङ्ग्य चालयित्वा अपिधायामृन्मयेन निदधाति । प्रकृतत्वात्तानूनप्त्रम् ॥ १ ॥

अपराह्णे व्रतमिश्रं दीक्षिताय प्रयच्छति ॥ २ ॥

अपराह्ण इत्यनुवाद एव प्राप्तत्वात् । व्रतस्य पुरुषार्थत्वाद्यद्यप्यसामर्थ्यं भवति तथापि क्रत्वर्थत्वात्तानूनप्त्रं दीयत एव ॥ २ ॥

बहुषु गृहपतये ॥ ३ ॥

बहुषु यजमानेषु गृहपतय एव तानूनप्त्रप्रदानम् । "यदि बहवो दीक्षेरन् गृहपतय एव व्रतमभ्युत्सिच्य प्रयच्छेयुः" इति ( श.ब्रा.३।४।२।१५ )। श्रुतेः ॥ ३ ॥

( अवान्तरदीक्षा )

अग्ने व्रतपा इत्याहवनीये समिधमाधाय मदन्तीरुपस्पृश्य गाढतरं मुष्टिमेखलं कुरुते ॥ ४ ॥

"अग्ने व्रतपा" इत्यनेन मन्त्रेणाहवनीये समिधमभ्याधाय मदन्तीरुपस्पृश्य गाढतरं मुष्टिमेखलं करोति । अवान्तरदीक्षेयमिति यजमानः करोति ॥ ४ ॥

पत्नी च गार्हपत्ये तूष्णीम् ॥ ५ ॥

चशब्दात्समिधमाधाय मदन्तीरुपस्पृश्य गाढतरं मुष्टिमेखलं करोति । बहुयजमानके सर्वेषामवान्तरदीक्षा ॥ ५ ॥

( यजमानषष्ठानाम्ब्रह्मादिऋत्विजां सोमालम्भादिकम् )

मदन्तीरुपस्पृश्य यजमानषष्ठाः सोममाप्याययन्त्यंशुरंशुरिति ॥ ६ ॥

चतुर्णामप्याद्यर्त्विजां प्रतिवेदमाप्यायनमाम्नातं, पञ्चमः प्रतिप्रस्थाता । एवं यजमानषष्ठा इति सम्प्रदायः ।

अपरे त्वग्नीधं पञ्चमं मन्यन्ते । आप्यायनं चालम्भमात्रम्, न सोमप्रक्षेपः । नियतपरिमाणत्वात् । सर्वाग्नेयपक्षे चाग्निष्टुदादिषु मन्त्रस्य विपरिणामः ॥ ६ ॥

आज्यमालभ्योपस्पृशेदपः सोममालिप्समानस्तथा विपर्यस्य, प्रत्येत्य प्रस्तरं निह्नुवत उत्तानहस्ता दक्षिणोत्ताना वेष्टा राय इति ॥ ७ ॥

तत्रस्थस्यापि प्रस्तरे निह्नवः सम्भवति । तन्मा भूदिति प्रत्येत्येति ग्रहणम् । निह्नवश्च प्रस्तरे पाण्योः करणम् ॥ ७ ॥

व्यूहनपरिष्वञ्जने कृत्वैके ॥ ८ ॥

तानूनप्त्रग्रहणादि कुर्वन्ति। शाखान्तरात्। तानूनप्त्रादेरवसरविधित्सया व्यूहनपरिध्यञ्जने अनूद्येते। संस्कारकत्वाच्चेडान्तत्वेऽपि सति एवमादीनां प्रवृत्तिरिष्यते। अपूर्वोत्पादकानां तु निवृत्तिर्युक्तरूपा। प्रतिपत्तित्वाच्च प्रतिपत्तीनां प्रवृत्तिरेव ॥ ८ ॥

( प्रस्तराञ्जनादिकम् )

समुल्लुप्य प्रस्तरमक्त्वा परिधींश्चादायाहाग्नीन्मदन्त्यापा३ इति ॥ ९ ॥

प्रस्तरं गृहीत्वाऽक्त्वा च परिधीनादाय विधृती च "अग्नीन्मदन्त्यापा३" इत्याह ( अध्वर्युः ) ॥ ९ ॥

मदन्तीत्यग्नीत् ॥ १० ॥

प्रत्याह ॥ १० ॥

ताभिरेहीति ब्रुवन्नध्यध्याहवनीयं हृत्वाऽभ्युक्ष्याग्नीधे प्रयच्छति निधानाय ॥ ११ ॥

"ताभिरेहि"इत्यमुं मन्त्रं ब्रुवन्नध्यध्याहवनीयं हृत्वा—अध्यधिशब्दः सामीप्ये उपरिभावे च—मदन्तीभिरभ्युक्ष्याग्नीधे प्रयच्छति निधानार्थम् ॥ ११ ॥

( सुब्रह्मण्याप्रैषः )

सुब्रह्मण्याञ्च प्रेष्यति सुब्रह्मण्ये सुब्रह्मण्यामाह्वयेति ॥ १२ ॥

चशब्दात्प्रतिपत्तीश्च परिसमापयति। ताश्च पूर्वतरम्। ततः सुब्रह्मण्याप्रैषः। आगन्तुत्वात् ॥ १२ ॥

( प्रवर्ग्योपसदौ )

प्रवर्ग्योपसदावतः ॥ १३ ॥

अत ऊर्ध्वं प्रवर्ग्योपसदौ भवतः। अन्यत्र पठितस्यावसरविधित्सयेदमुक्तं, न ह्यत्र ( श्रुतौ ) प्रवर्ग्यस्य पाठ इति ॥ १३ ॥

उपसदेव वाऽप्रवर्ग्ये ॥ १४ ॥

अप्रवर्ग्यशब्देन प्रथमयज्ञोऽभिधीयते। "तं न प्रथमयज्ञे प्रवृञ्ज्यात्" इति (श.ब्रा.१४।२।२।४४)। वचनात्। स च प्रथमप्रयोगः। "द्वितीये

वैव तृतीये वा''इत्यनुवादात् (श.ब्रा.१४।२।२।२५) । प्रथमयज्ञे उपसदेव भवति । वा तत्रापि प्रवर्ग्यः । शाखान्तरात् ''प्रथमयज्ञेऽप्येके'' इति ॥ १४ ॥

( उपसदिष्टिः )

प्रणीताद्युपसत् ॥ १५ ॥

प्रणीतानां यदादौ तदादि–वाचस्पतिप्रैषादीत्यर्थः । अग्न्यन्वाधानब्रह्मवरणयोरप्रसक्तत्वात् । उपसदिति च कर्मणो नामधेयम् । ''तेषु प्रेतेषूपसदोऽतन्वत'' (श.ब्रा.९।५।१।२२) इति हि श्रूयते ॥ १५ ॥

( अपेषणेपि आज्यसान्नाय्येष्टिषु दृषदुपलाहननम् )

(१)हविष्कृतमाह्वानाहननमपेषणे तीक्ष्णार्थत्वात् ॥ १६ ॥

हविष्कृदाह्वानकाले यदाहननं तत्पेषणाभावे न भवति । कुत एतत् । तीक्ष्णार्थत्वात् । तीक्ष्णकरणाय हि दृषदुपले आहन्येते । तीक्ष्णीकृताभ्यां हि पेषणमभिनिर्वर्त्यत इति ॥ १६ ॥

स्याद्वा धर्ममात्रत्वात् ॥ १७ ॥

वाशब्दः पक्षव्यावृत्तौ । भवेद्वा पेषणाभावेऽप्याहननम् । नैतत् तैक्ष्ण्यार्थम् । न हि शम्यया दृषदुपलयोस्तीक्ष्णतोपपादयितुं शक्यते । अतो धर्ममात्रमेतत् ॥ १७ ॥

किं च—

श्रुतेश्च ॥ १८ ॥

श्रुतिरप्यमुमर्थं ज्ञापयति धर्ममात्रमेतदिति । अत्र पुराकल्परूपा श्रुतिः । ''असुरघ्नी सपत्नघ्नी वाक् प्रविष्टा''(श ब्रा.१।१।४।१३) ''सा यज्ञमेव यज्ञपात्राणि प्रविवेश ततो हैनां न शेकतुर्निर्हन्तुम्'' इति (श.ब्रा.१।१।४।१७) प्रकृत्याह ''सैषाऽसुरघ्नी सपत्नघ्नी वागुद्वदति'' (श.ब्रा.१।१।४।१७) इति । ''स यत्रैष हविष्कृतमुद्वादयति तदेको दृषदुपले समाहन्ति''

(१) इदानीमिदं विचार्यते किं पेषणाभावे चोदकप्राप्तं दृषदुपलयोराहननं भवत्युत न भवतीति । किं तावत्प्राप्तम् । तत्र सूत्रेणैव पूर्वपक्षं करोति—

(श.ब्रा.१।१।४।१३) इति दृषदुपलयोराहननम् असुरसपत्नहननाय, न तीक्ष्णीकरणाय। तस्माद्धर्ममात्रमिति।

नन्वेवमपि द्वितीयान्तनिर्देशाद् दृषदुपलसंस्कार एवायं स्रुक्सम्मार्गवत्। ततश्च पेषणाभावे न भवति। अत्रोच्यते। नैष दृषदुपलसंस्कारः, वागुद्वादनमात्रं चोद्यते। यस्मात् "एतामत्र वाचं प्रत्युद्वादयति" (श.ब्रा.१।१।४।१३) इति प्रकृत्य पुनरुपसंह्रियते "स यस्य हैवं विदुष एतामत्र वाचं प्रत्युद्वादयन्ति पापीयाᳪंसो हैवास्य सपत्ना भवन्ति" (श.ब्रा.१।१।४।१७), इत्युपक्रमोपसंहारयोर्वाक्यस्य वागुद्वादनार्थता गम्यते, न दृषदुपलसंस्कारार्थतेति। एवं च भूतभव्यसमुच्चारणन्यायानुग्रहो भवति। भूतस्य भव्यार्थता न्याय्या, न भाव्यस्याहननस्य भूतार्थता। नन्वेवं सति आहननाददृष्टं कल्पनीयम्। सत्यमेवं, दृषदुपलसंस्कारपक्षेऽपि अदृष्टकल्पनाऽस्त्येवेति। तस्माददोषोऽयम्।

अपरे तु व्यावर्णयन्ति। द्वन्द्वैकवद्भूतस्य दृषदुपलस्य गुणविभक्त्या सप्तम्या निर्देशोऽयं "दृषदुपले समाहन्ति" इति। स्पष्ट एव दृषदुपलस्याहननं प्रति गुणभाव इति। एवं सति आज्यसान्नाय्येष्टिषु सर्वत्रैवाहननमिति ॥ १८ ॥

परिस्तरणपात्रसꣳसादनप्रोक्षणाज्यनिर्वपणाधिश्रयणानि कृत्वा स्फ्यादि करोति ॥ १९ ॥

उपसदो ऽपूर्वत्वज्ञापनार्थं परिस्तरणाद्युपादानम्, कुक्कुटाहननिरासार्थं च। तत्कुतः। यावदुक्तं ह्युपसत्कर्म। येनात्र स्रुवाघारो विधीयते। तद्विधानेन च यावत्किञ्चिददृष्टोपकारकमविहितं तत्सर्वमेव न भवति। यथाऽऽहननं स्फ्योदक्प्रहरणं च। तथोत्तराघारप्रयाजाज्यभागादि। स्फ्यादानं त्वत्र विधीयत एव। स्तृतत्वाद्वेदेः स्तम्बयजुर्हरणस्य प्राप्त्यभावात्। अतः स्फ्यादानविधेर्वाचनिकं स्तम्बयजुर्हरणमिति। अत्र च यद्यपि पर्यग्निकरणं नोद्घाटितं, तथापि द्रव्यसंस्कारादिष्यत एव। द्रव्यं चाघारादिविधानादाक्षिप्तमेव ॥ १९ ॥

बर्हिषः प्रच्छेदꣳ हरति ॥ २० ॥

स्तम्बयजुर्हरणे बर्हिषोऽवयवं प्रच्छिद्य प्रच्छिद्य हरतीति। एवं स्तृतैव वेदिरिति गम्यते ॥ २० ॥

मदन्तीरिति वा प्रेष्यति ॥ २१ ॥

वाशब्दश्चार्थ इति सम्प्रदायः। पुनर्वचनाच्च प्रैषस्य नियमः। मदन्त्युपादानसामर्थ्याच्च मदन्तीशब्दस्य (नियमः)॥ २१ ॥

मात्रावदिध्माबर्हिः ॥ २२ ॥

अष्टादशसंख्याके इध्मे प्राप्ते मात्रावदित्युच्यते। नव सामिधेन्यः स्पृश्यानुपस्पृश्ये च द्वे, एवमेकादश भवन्ति। बर्हिषश्चैकवृत्स्तरणविधानान्मात्रावदित्युक्तम् ॥ २२॥

स्रुवतृतीयाः स्रुचः सम्मार्ष्टि ॥ २३ ॥

स्रुग्बहुत्वाभावात्स्रुवेण सह बहुवचनम्। स्रुवतृतीयानां सम्मार्गो न वाच्योऽन्वयप्राप्तत्वात्। वाच्यो वा। आज्यस्थाल्याः सम्मार्गो मा भूदिति। कुतः प्राप्तिरिति चेत्। वक्ष्यति हि "आज्यस्थाली ध्रुवार्थे" इति। अनेन प्रापितः सम्मार्गो निवर्त्यते। यद्येवं, कार्यापत्तेः प्राप्नोत्येव सम्मार्गः। नैतदेवम्। ध्रुवाकार्यापत्तिरेव स्थाल्या न विद्यते। ध्रुवाया हि कार्यं स्थालीतो गृहीतस्य यज्ञार्थस्याज्यस्य धारणम्। तच्चेह न विद्यते। यद्येवं, कथमुक्तमाचार्येण "आज्यस्थाली ध्रुवार्थे"इति। प्रस्तराञ्जनार्थतयेत्यदोषः। न च ध्रुवायाः प्रस्तराञ्जनार्थं द्रव्यधारणं कार्यं, निर्दिष्टत्वात् कार्यस्य "अथ यच्चतुर्ध्रुवायां गृह्णाति सर्वस्मै तद्यज्ञाय गृह्णाति"इति। यथा जुहूपभृतोरन्यकार्ययोः सत्योः प्रकृतौ प्रस्तराञ्जनं विहितमेवं ध्रुवायामपि। एतच्चाङ्गीकृत्याचार्येणोक्तम् "आज्यस्थाली ध्रुवार्थे" इति। एवं च ध्रुवाकार्याभावात् स्थाल्याः संमृज्यर्थो दुर्लभ इति। सम्प्रदाये तु प्रागाज्यनिर्वापात्सप्रैषः सम्मार्गः क्रियत एव ॥२३॥

अष्टगृहीतं जुह्वां चतुरुपभृति यथाप्रकृति वा ॥ २४ ॥

अष्टगृहीतं जुह्वां ग्रहीतव्यम्, चतुर्गृहीतमुपभृति। "स वा अष्टौकृत्वो जुह्वां गृह्णाति चतुरुपभृति"इति (श०ब्रा०३।४।४।७) वचनात्। "अथो इतरथाऽऽहुश्चतुरेव कृत्वो जुह्वां गृह्णीयादष्टौ कृत्व उपभृति" इति (श०ब्रा०३।४।४।७) श्रुतत्वात् 'यथाप्रकृति वा' इत्युक्तम्। अत्र गृह्णातीतिप्रकृतिलिङ्गसंयोगात् प्रधानार्थत्वेऽपि सति प्रकृतिवदेव वचनात् ग्रहणम्। वचनाच्चानेनैव प्रधानासिनिर्वृत्तिः ॥ २४ ॥

एकवृत्स्तरणम् ॥ २५ ॥

वचनादेव ॥ २५ ॥

आज्यस्थाली ध्रुवार्थे ॥ २६ ॥

कृतव्याख्यानम् ॥ २६ ॥

स्रुवाघारमाघार्य सम्मृष्ट आश्राव्य सीद होतरित्येव ब्रूयात ॥ २७ ॥

स्रुवाघारविधानेन यावदुक्तमेतदिति गम्यते । सम्मृष्टेऽग्नौ 'आश्राव्य सीद होतः' इत्येव ब्रूयात् । "अथाश्राव्य न हातारं प्रवृणीते सीद होतरित्येवाह" (श०ब्रा०३।४।४।१०) इति वचनात् ॥ २७ ॥

प्रसूतोऽतिक्रामन्नग्नयेऽनुवाचयति ॥ २८ ॥

"स आहातिक्रामन्नग्नयेऽनुब्रूहीति । प्रसवश्चात्र उपसदि प्रयाजार्थोऽपि सन् वचनाद्भवति-"उपविशति होता होतृषदन, उपविश्य प्रसौति, प्रसूतोऽध्वर्युः स्रुचावादत्ते, स आहातिक्रामन्नग्नयेऽनुब्रूहि" इति (श०ब्रा०३।४।४।१०-११) ॥ २८ ॥

अर्द्धं हुत्वा सोमाय विष्णवे समानीय(१) ॥ २९ ॥

अर्द्धं हुत्वा सोमाय, अर्द्धं ततो विष्णवे समानीय । उपभृत्यष्टगृहीतपक्षे सर्वमेव जौहवं हुत्वा समानीय सोमाय विष्णवे च जुहोति । वचनसामर्थ्याच्च वैष्णवं समानयमानेनानुवाचनं कर्त्तव्यम् । "अथ यदुपभृत्याज्यं भवति तत्समानयमान आह विष्णवेऽनुब्रहीति (श० ब्रा०३।४।४।१३) ॥ २९ ॥

सादयित्वा स्रुचौ सोमाप्यायनाद्यासुब्रह्मण्याप्रैषात्॥ ३० ॥

आतिथ्यावत् ॥ ३० ॥

---

(१) मानवे 'घृतवतीमध्वर्यो स्रुचमास्यस्वेत्युच्यमाने स्रुचावादाय दक्षिणाऽतिक्रम्य यथादेवतमनुवाचयत्यग्निं यजति मध्ये सोममौपभृतं जुह्वां समानीय विष्णुं पूर्वार्धं' इति ।

कर्मविशेष उच्यते—

( उपसदिष्टौ विशेषः )

अकृत्वा प्रस्तरमुपसदं जुहोति स्रुवेण यात इत्ययःशयामन्वारब्धे ॥ ३१ ॥

निगदव्याख्यातम् ॥३१॥

( एकस्या उपसदो द्विरनुष्ठानम्पूर्वाह्णेऽपराह्णे च )

द्विरेकया चरति सुसायꣳ सुपूर्वाह्णे च ॥ ३२ ॥

एकयोपसदा द्विश्चरति । सायंशब्दोऽपराह्णवाची । पूर्वाह्णशब्दः प्रसिद्ध एव ॥ ३२ ॥

एवमितरे अन्वहꣳ रजःशयाꣳ हरिशयां च ॥ ३३ ॥

एवमेवेतरे द्वे उपसत्कर्मणी अन्वहं कर्त्तव्ये । रजःशयाꣳ हरिशयां च मन्त्रेणैवोपलक्षिते ॥ ३३ ॥

( एकाहस्त्र्युपसत्को द्वादशोपसत्कताऽहीनस्यैव )

एकाहस्त्र्युपसत्को द्वादश वा ॥ ३४ ॥

एकाहे प्रक्रान्ते एव पुनरेकाहग्रहणं द्वादशोपसत्कस्यानेकाहविषयप्रज्ञप्त्यर्थम् । इह पठितं द्वादशोपसत्कत्वं वाक्येनोत्काल्य अहीनमुपनीतम्—"तिस्र एव एकाहस्योपसदः कार्या द्वादशाहीनस्येति ॥ ३४ ॥

इति अष्टमाध्याये द्वितीया कण्डिका ।

---

( प्रथमादिषु तिसृषूपसत्सु त्रिस्तनादिव्रतम् )

त्रिस्तनं प्रथमायां दोहयति ॥ १ ॥

प्रथमायामुपसदि त्रिस्तनं व्रतम् ॥ १ ॥

एकापचयेनोत्तरयोः ॥ २ ॥

उत्तरयोः पुनरुपसदोरेकस्तनापचयेन व्रतम् ॥ २ ॥

विपर्यस्य वाऽनग्निचित्ये ॥ ३ ॥

अनग्निचित्ये अनग्निके सोमे विपर्यासो वा भवति। साग्निके तु त्रिस्तनाद्येव। एवमेव हि तत्र पठ्यते "ते त्रीन्स्तनानुपेयुस्ते द्वौ त एकम्" इति ॥ ३ ॥

एवं प्रवृद्धौ समं विभजेत् ॥ ४ ॥

उपसत्प्रवृद्धावेवमेव समो विभागः कर्त्तव्यः। "स्यादश्रुतत्वात्" इति न्यायात् ॥ ४ ॥

(द्वादशाहे आद्येषु चतुर्षु दिनेषु अयःशयोपसत्, पञ्चमादिषु चतुर्षु रजःशया, नवमादिषु हरिशया इत्येवम् उपसदां स्वस्थानविवृद्धिः)

(१) स्वस्थानविवृद्धिः ॥ ५ ॥

कर्तव्या, न दण्डकलितवदावृत्त्या। मन्त्राणामानुपूर्व्ययोगात्। इतरथा हरिशयां कृत्वा अयःशया प्राप्नोति। तत्र मन्त्रा नानुपूर्व्या युक्ता भवन्ति ॥ ५ ॥

( द्वितीयोपसद्दिने पूर्वाह्णोपसदं कृत्वा वेदिमानम् )

औपवसथ्यात्पूर्वेऽहनि पौर्वाह्णिक्या प्रचर्य वेदिं मिमीते ॥ ६ ॥

औपवसथ्यमहश्चतुर्दशी। तस्याः पूर्वं त्रयोदशी। तत्र पौर्वाह्णिक्योपसदा प्रचर्य वेदिमानम्। वेदिशब्दश्च संस्कारनिमित्तोऽतस्तदर्थानां पात्राणां प्रयोजिका वेदिः। प्रणीतास्तु सम्प्रदाये न क्रियन्ते। युक्ता पुनः प्रणीतानामुत्पत्तिः। तत्संस्काराभिनिर्वृत्त्यन्ते च प्रतिपत्तिरिति ॥६॥

पूर्वार्ध्यात्स्तम्भात्पुरस्तात्त्रिषु प्रक्रमेषु शङ्कुं निहन्ति सोऽन्तःपात्यः ॥ ७ ॥

स्तम्भसम्मितात् द्वारमध्यात्त्रिषु प्रक्रमेषु शङ्कुनिखननम्। "तस्मादयं पुरुष आत्तः सन्तृण्ण" इति (श०ब्रा०३।५।३।७) श्रुतेः। स्तम्भग्रहणं

(१) इदानीमिदं विचारणीयं किमुपसदां वृद्धिर्दण्डकलितवदावृत्त्यो त स्वस्थानवृद्ध्या इति। उभयथाऽपि सिद्धेरनियमे प्राप्ते नियममाह—

द्वारमध्योपलक्षणार्थम् । तथा च काण्वीया श्रुतिः "स वै शालायाः पूर्वार्ध्यात् प्राक्प्रक्रामति" इति । शङ्कोश्चान्तःपात्यसंज्ञा संव्यवहारार्था । शङ्कुनिखननाच्चोत्तरकालं वेद्युपकरणानामासादनप्रोक्षणे ॥७॥

तस्मात्पुरस्तात्षट्त्रिꣳशति ॥ ८ ॥

तस्मान्मध्यमाच्छङ्कोः प्राङ् षट्त्रिꣳशतं विक्रमान्प्रक्रामति तच्छङ्कुं निहन्ति"इति (श०ब्रा०३।५।१।४) ॥ ८ ॥

दक्षिणोत्तरौ च पञ्चदशसु पञ्चदशसु ॥ ९ ॥

चशब्दात्तस्मादेवान्तःपात्यात् । "अथ यत्त्रिꣳशद्विक्रमा पश्चाद्भवति"इति (श०ब्रा०३।५।१।७) श्रुतत्वात् पञ्चदशसु पञ्चदशस्वित्युक्तम् ॥९॥

अर्द्धसप्तदशेषु वा ॥ १० ॥

"अथो अपि त्रयस्त्रिꣳशत्स्युः" इति (श०ब्रा०३।५।१।८) वचनात् ॥१०॥

पूर्वार्ध्याच्च द्वादशसु द्वादशसु ॥ ११ ॥

शङ्कुं निहन्ति। "चतुर्विꣳशतिविक्रमा पुरस्ताद्भवति"इति (श० ब्रा०३।५।१।१०) श्रुतेः ।

प्रक्रमणं च समाख्ययाऽऽध्वर्यवम् । परिमाणं तु याजमानमपि सद् गुणत्वाद् बाध्यते । प्रधाना हि क्रिया, परिमाणं गुणभूतमिति ॥ ११ ॥

पृष्ठ्यामायस्य स्फ्यादि करोति खादिरेणाच्छादनात् ॥१२॥

पृष्ठ्यासंज्ञकं वरण्डकम् मध्ये पूर्वापरायतमुत्थाप्य स्फ्यादानादि कर्म करोति खादिरेण वज्रेणाच्छादनान्तम् । खादिरग्रहणं शक्यमवक्तुं, परिभाषितत्वात् । उच्यते च । तत्किमर्थम् । समानजातीयत्वाशङ्कानिवृत्त्यर्थम् । श्रूयते हि "तस्मात्खादिरो यूपो भवति खादिरः स्फ्य" इति । बैल्वादिषु यूपेषु स्फ्यस्यापि मा भूत्तज्जातीयतेति विशेषमाह ॥ १२ ॥

उपरवदेशात्स्तम्बयजुर्हरति ॥ १३ ॥

उत्तरांसात्पश्चादध्यर्द्धे पदे चात्वालम् ॥ १४ ॥

करोतीति शेषः । प्रक्रमद्वयपरिमाणं पदम् । तस्मिन्नर्द्धाधिके उत्तरांसात्पश्चाच्चात्वालं करोति । श्रूयते हि "तद्य एष पूर्वार्ध्य उत्तरार्ध्यः शङ्कुर्भवति तस्मात्प्रत्यङ् प्रक्रामति त्रीन्विक्रमांस्तच्चात्वालं परिलिखति" इति (श०ब्रा०३।५।१।२६) ॥ १४ ॥

यथोक्तं वा ॥ १५ ॥

वाशब्दो विकल्पार्थः । यथोक्तमिति पूर्वेणोत्करः सञ्चरं परिहाप्य । एवमपि श्रूयते "नात्र मात्राऽस्ति यत्रैव स्वयं मनसा मन्येताग्रेणोत्करं तच्चात्वालं परिलिखेत्" (श०ब्रा०३।५।१।२६) इति ॥ १५ ॥

( अग्नीषोमीयपशुयागदिने पौर्वाह्णिक्यापराह्णिक्योरुपसदोः समासेन प्रातरेव अनुष्ठानम् )

(१)प्रातरुपसदौ समस्य पौर्वाह्णिक्या प्रचर्यार्द्धव्रतं प्रयच्छति ॥ १६ ॥

प्रातश्चतुर्दशयामुपसत्समासः । तत्र पौर्वाह्णिक्या प्रचर्यार्धव्रतप्रदानम् ॥ १६ ॥

सर्वं वाऽग्नौ ॥ १७ ॥

साग्निके सर्वं वा प्रयच्छतीति विकल्पः ॥ १७ ॥

( उपसदन्ते प्रवर्ग्योत्सादनम् )

उभाभ्यां चरिते प्रवर्ग्यमुत्सादयति यथोक्तं कुर्याच्चेत् ॥ १८ ॥

उभाभ्यामुपसद्भ्यां चरिते प्रवर्ग्योत्सादनम् । यदि कृतः प्रवर्ग्यः ॥ १८ ॥

( प्रवर्ग्योत्सादनानन्तरमग्निप्रणयनादिकम् )

अग्निं प्रणयत्यौपनिवपनात्कृत्वा हविर्धाने स्थापयति पृष्ठ्यामुभयतो द्व्यरत्न्यन्तरे प्रक्षालिते प्राची उभयतः शालामावर्त्य वर्षीयो दक्षिणम् ॥ १९ ॥

---

(१) अथ सुत्यायाः प्राग्दिनकृत्यमाह—

अग्निप्रणयनमुपयमन्युपनिवपनान्तं कृत्वा अनसी (शकटे) स्थापयति पृष्ठ्यामुभयतो द्वारत्यन्तरे प्रक्षालिते प्राङ्मुखे शालाया उभयत आनीय एकं दक्षिणेन द्वितीयमुत्तरेण । "यद्वर्षीयस्तद्दक्षिणम्"इति श्रुतेः (श०ब्रा०३।५।३।८) वर्षीयो दक्षिणम् । अग्निप्रणयनमुपयमन्युपनिवपनान्तं निरूढपशुबन्धोदितमिहाभिधीयते । तदिह समाम्नातं (श्रुतौ) सत् अङ्गप्रधानार्थत्वादाहवनीयस्य तत्संस्काराच्चाग्नीषोमीयस्य भवति । अतस्तद्विकारे निरूढ उपदिष्टमाचार्येणेह पुनरतिदिश्यत इति ॥ १९ ॥

तयोश्छदिरध्यस्यति ॥ २० ॥

तयोर्हविर्द्धानयोश्छदिरारोपयति ॥ २० ॥

भित्तिं वाऽभावे ) २१ ॥

छदिषोऽभावे भित्तिम् । "यदिच्छदिर्न विन्देयुश्छदिःसम्मितां भित्तिम्" इति (श०ब्रा०३।५।३।९) श्रुतेः । छदिश्चतुःस्रक्तिः । पञ्चस्रक्तिश्च भित्तिः । प्रसिद्धेः ॥ २१ ॥

अन्यत्रापि ॥ २२ ॥

छदिषोऽभावे भित्तिरेव भवति ॥ २२ ॥

(१)रराट्यां पुरस्तादासजत्यैषीकीम् ॥ २३ ॥

हविर्द्धानयोः पुरस्तात् रराट्यामिषीकामयीमवलगयति ॥ २३ ॥

उच्छ्रायीभ्यां परिवार्य छदिः पश्चाच्च ॥ २४ ॥

चशब्दात्पुरस्ताच्चारोपयति ॥ २४ ॥

चतुर्गृहीतं शालाद्वार्ये जुहोति युञ्जत इति ॥२५॥

अनेन मन्त्रेण ॥ २५ ॥

---

(१) रलयोरैक्याल्ललाटमभिधीयते । तत्र भवा रराट्या, ललाटपट्टिकेति यावत् । तामिषीकामयीं करोति । रराटी हविर्धानस्य पूर्वद्वारे उपरिष्टात् कटिकेति धूर्तस्वामिनः । रराट्या तेजमीत्यनर्थान्तरमिति पितृभूतिः ।

(शालाद्वार्ये चतुर्गृहीतहोमानन्तरं ज्योतिष्टोमाङ्गं गार्हपत्यकार्यं तत्रैव)

स गार्हपत्योऽतः ॥ २६ ॥

अतः परं गार्हपत्यकार्यमत्र कर्त्तव्यम्। तच्च ज्योतिष्टोमे समाम्नानादत्रैव भवति। एवं च सति कुण्डपायिनामयनेऽग्निहोत्रादिषु प्राजहित एव गार्हपत्यः। न ह्यग्निहोत्रं ज्योतिष्टोमो न ज्योतिष्टोमाङ्गमिति। अग्नीषोमीयविकारेषु निरूढादिषु तर्हि शालाद्वार्ये गार्हपत्यकार्यमस्तु तत्प्रकृतौ दृष्टत्वात्। नैतदेवम्। न हि तदग्नीषोमीयाद्यर्थतयोच्यते, किं तर्हि प्रकरणे विधानात् प्रकरणिनोपसङ्गृह्यते। प्रकरणिनोपसङ्गृहीतत्वाच्च गार्हपत्यकार्यमगार्हपत्ये क्रियते। एवं च नैतदग्नीषोमीयार्थम्। अतस्तद्विकारेषु प्रकरणी उपसङ्ग्राहको नास्त्यगार्हपत्ये गार्हपत्यकार्यस्य। तेन गार्हपत्यएव गार्हपत्यकार्यमिति। एवं च कृत्वाऽग्नीषोमीयोपयोगे सति तद्विकारेषु वेदिस्तद्रूपा न भवति ॥ २६ ॥

( दक्षिणहविर्धानस्थ दक्षिणचक्रमार्गे हिरण्यं निधाय चतुर्गृहीतहोमः )

अपरं दक्षिणे वर्त्मनि दक्षिणस्यानसो हिरण्यं निधायाभिजुहोतीदं विष्णुरिति ॥ २७ ॥

अपरं चतुर्गृहीतं दक्षिणस्य हविर्द्धानस्य दक्षिणायां वर्त्तन्याᳫ हिरण्यं निधायाभिजुहोति "इदं विष्णुरित्यनेन मन्त्रेण। अस्य च चतुर्गृहीतस्य शालाद्वार्य एव संस्कारः ॥ २७ ॥

( चतुर्गृहीतशेषेण अक्षधुरोर्मन्त्रावृत्त्या भेदेनाञ्जनम् )

दक्षिणया द्वाराऽऽनीता पत्नी पाणिभ्याᳫ शेषं प्रतिगृह्याक्षधुरावनक्ति परागदेवश्रुताविति युगपत्तद्वचनत्वात् ॥ २८ ॥

दक्षिणया द्वाराऽऽनीता पत्नी पाणिभ्यां चतुर्गृहीतशेषं गृहीत्वाऽक्षधुरौ परागुपानक्ति नेतश्चामुतश्च "देवश्रुतावित्यनेन मन्त्रेण। तच्च युगपदञ्जनं द्वित्वाभिधायकत्वान्मन्त्रस्य ॥ २८ ॥

भेदे मन्त्रावृत्तिः सान्निपातित्वात् ॥ २९ ॥

भेदेन वाऽञ्जनम् । न हि दक्षिणेनैकेन पाणिना शक्यते युगपत्कर्तुमिति । तस्माद् भेदः । भेदे च मन्त्रावृत्तिः सान्निपातित्वादिति ॥ २९ ॥

( उत्तरहविर्धानस्य दक्षिणचक्रमार्गे पूर्ववत् चतुर्गृहीतहोमः अक्षधुरोरञ्जनं च )

स्रुक्स्थाल्यौ प्रतिगृह्य प्रतिप्रस्थातोत्तरस्येरावती इति पूर्ववत् ॥ ३० ॥

प्रतिप्रस्थाता स्रुक्स्थाल्यौ गृहीत्वोत्तरस्य हविर्द्धानस्य दक्षिणायां वर्त्तन्यां हिरण्यं निधायाभिजुहोति "इरावती" इत्यनेन मन्त्रेण ॥ ३० ॥

पत्नी चापरेणाग्नीन्परीत्योत्तरस्यानक्ति पूर्ववत् ॥ ३१ ॥

चशब्दादानीता सती । "पर्याणयन्ति पत्नीमुभौ जघनेनाग्नी" इति (श०ब्रा०३.५।३।१३) वचनात् ॥ ३१ ॥

इति अष्टमाध्याये तृतीया कण्डिका ।

---

( हविर्धानमण्डपनिष्पादनम् )

हविर्द्धानाभ्यां प्रवर्त्यमानाभ्यामनुवाचयति ॥ १ ॥

अनुवचनं कारयति होतारं प्रेषणेन ॥ १ ॥

त्रिरुक्तायामुद्गृह्येव वर्त्तनम् ॥ २ ॥

त्रिरुक्तायां प्रथमायामृचि अनसोरुद्गृह्येव वर्त्तनम् । "समुद्गृह्येव प्रवर्त्तयेयुर्यथा नोत्सर्जेताम्" इति (श०ब्रा०३।५।३।१७) वचनात् ॥ २ ॥

प्राचींप्रेतमिति वाचयति ॥ ३ ॥

यजमानम् ॥ ३ ॥

स्वं गोष्ठमिति च खर्जति(१) ॥ ४ ॥

---

(१) चक्रघर्षणजः शब्दः खर्जपदवाच्यः, एवं च खर्जति चक्रघर्षणजं शब्दं कुर्वत्यनसीत्यर्थः ।

चशब्दाद्वाचयति ॥ ४ ॥

पश्चादुत्तरवेदेस्त्रिषु प्रक्रमेषु मत्या वा नभ्यस्थे अभिमन्त्रयतेऽत्र रमेथामिति ॥ ५ ॥

न्यवयवयोः पादयोः मध्यावयवस्थयोरभिमन्त्रणम् ॥ ५ ॥

उत्तरेण परिक्रम्य दक्षिणमुपस्तभ्नाति विष्णोर्नुकमिति ॥ ६ ॥

द्वे अप्यनसी उत्तरेण परिक्रम्य दक्षिणमुपस्तभ्नाति 'विष्णोर्नुकमित्यनेन मन्त्रेण ॥ ६ ॥

दक्षिणत स्थूणामुपनिहन्ति विष्णवे त्वेति ॥ ७ ॥

उपनिहन्मीति च शेषः । दक्षिणत इति च दक्षिणपूर्वकोणोऽभिधीयते ॥ ७ ॥

दिवो वेत्युत्तरं प्रतिप्रस्थाता ॥ ८ ॥

उपस्तभ्नातीत्यनुवर्त्तते ॥ ८ ॥

उत्तरत स्थूणां पूर्ववत् ॥ ९ ॥

अध्वर्युरेव निहन्ति । उत्तरत इत्यनेन उत्तरपूर्वकोणोऽभिधीयते ॥ ९ ॥

उभे वा दक्षिणतः ॥ १० ॥

उपनिहन्येते । तथा च (दक्षिणपूर्वकोणे प्रथमा स्थूणा) दक्षिणापरे कोणे द्वितीया ॥ १० ॥

इतरतस्ततः ॥ ११ ॥

इतरत इत्यनेनोत्तरकोणावभिधीयेते ॥ ११ ॥

यदु च मानुष इति श्रुतेः ॥ १२ ॥ (श०ब्रा०३।५।३।२१)

यच्च मानुषे व्यापारे स्थूणादि तच्च करोति(१) ॥ १२ ॥

(१) अर्थात्, उपरि वलकादिनिधानबन्धनाधिकस्थूणानिखननादिभिर्यथा लोके छदिर्दृढीक्रियते तथा कुर्यात् ।

प्रतद्विष्णुरिति वाचयति मध्यमं छदि-
रालभ्य ॥ १३ ॥

आलभ्येति कारितत्वादध्येषणा-'मध्यमं छदिरालभस्व'इति ॥१३॥

उत्तरे च ॥ १४ ॥

द्वे वाचने चशब्दात्क्रियेते ॥ १४ ॥

विष्णोरराटमिति रराट्याम् ॥ १५ ॥

आलभ्य ॥ १५ ॥

विष्णोः श्नप्त्रे स्थ इत्युच्छ्राय्यौ ॥ १६ ॥

आलभ्य ॥ १६ ॥

उदगग्राणि च्छदीꣳषि पश्चाच्छ्रुतेः ॥ १७ ॥

"अथ यदिदं पश्चाच्छदिर्भवति" इति (श०ब्रा०३।५।३।२४) श्रूयते। तच्चोदगग्रेषु सम्भवति ॥ १७ ॥

द्वार्याः परिषीव्यति(१)लस्पूजानिप्रातिहृतया रज्ज्वा विष्णोः
स्यूरसीति ॥ १८ ॥

सूचीगतया रज्ज्वा द्वार्याः परिषीव्यति "विष्णोः स्यूरसीत्यनेन मन्त्रेण ॥ १८ ॥

विष्णोर्ध्रुवोऽसीति ग्रन्थिं करोति ॥ १९ ॥

उपक्रान्ते प्रमुञ्चति ॥ २० ॥

ग्रन्थिम् । उत्तरपूर्वद्वार्यायां परिषीवणपरिसमाप्तिरिति सम्प्रदायः ॥ २० ॥

प्राग्वꣳशꣳ हविर्द्धानम् ॥ २१ ॥

---

(१) लस श्लेषणे, पूज पूजायाम्, पूजितं शोभनं लस्यते श्लिष्यतेऽनयेति पूजितलसनीति प्राप्ते छान्दसत्वाल्लस्पूजनीति। स च दारुमयः सूचक इति याज्ञिकदेवाः।

भवति ॥ २१ ॥

निष्ठाप्य वैष्णवमसीत्यालभते ॥ २२ ॥

हविर्द्धानम् ॥ २२ ॥

( नित्याशनम् इडादिभक्षणं च हविर्धानमण्डपे न कर्तव्यम् )

भोजनभक्षणे चास्मिन्न कुर्युः ॥ २३ ॥

पुरुषार्थतया प्राप्तयोर्निषेधः ॥ २३ ॥

अद्वारेण सदोहविर्द्धाने प्रेक्षमाणं ब्रूयान्मा प्रेक्षथा इति ॥ २४ ॥

तच्चैतत्सदसि स्तोत्रशस्त्रकाले । एवं हि श्रूयते "तद्वा एतद् वृषा साम योषामृचः सदस्यध्येति" इति प्रकृत्याह "तस्माद्द्वारेण सदः प्रेक्षमाणं ब्रूयान्मा प्रेक्षथा" (श०ब्रा०४।६।७।८) इति । हविर्द्धानेऽपि "अथैतद् वृषा सोमो योषा अपो हविर्द्धानेऽध्येति"ति प्रकृत्य "तस्माद्द्वारेण हविर्द्धानं प्रेक्षमाणं ब्रयान्मा प्रेक्षथा" इति (श०ब्रा०-४।६।७।९) ॥ २४ ॥

( वेदीमध्ये वर्तमानां पृष्ठ्यासंज्ञाम्प्रागग्ररेखाम् उभयतः रत्निद्वयान्तराले द्वारस्थूणे पूर्वस्यां पश्चिमायां च कर्तव्ये )

पृष्ठ्यामुभयतो द्वार्ये ॥ २५ ॥

भवतः ॥ २५ ॥

( दक्षिणहविर्धानस्य पूर्वार्धे अधःप्रदेशे उपरवान् खनेत् )

दक्षिणस्यानसोऽधः प्रउगं खनत्युपरवान्(१) ॥ २६ ॥

दक्षिणस्यानसः प्रउगस्याधस्तात् उपरवान् खनति ॥ २६ ॥

इति अष्टमाध्याये चतुर्थी कण्डिका ।

---

(१) उपरवा अवटाः, श्वभ्रा इति यावत् । प्रउगम, प्राप्तयु गमीषासङ्गमापरार्धम् ।

( उपरवखननार्थमभ्यादानादि )

अभ्र्यादि करोत्यवटवदापरिलेखनात् ॥ १ ॥

अभ्र्यादानादि यूपावटवत्परिलेखनान्तम् ॥ १ ॥

चतुरः ॥ २ ॥

उपरवान्परिलिखति ॥ २ ॥

तांश्च—

अक्ष्णया व्याघारणवत् ॥ ३ ॥

उत्तरापरं वा प्रथमम् ॥ ४ ॥

अक्ष्णयेति चैवमर्थेनैवोच्यते ॥ ४ ॥

सम्यग्वा ॥ ५ ॥

"अथो अपि समीच एव परिलिखेत्" इति (श०ब्रा०३।५।४।७) वचनात् ॥ ५ ॥

उत्तरपूर्वं त्वन्त्यम् ॥ ६ ॥

सर्वपक्षेषु ॥ ६ ॥

प्रादेशमात्रांस्तदन्तरान् ॥ ७ ॥

परिलिखेत् ॥ ७ ॥

बृहन्नसीति यथापरिलिखितं खनति ॥ ८ ॥

येन क्रमेण परिलेखः ॥ ८ ॥

( यथाखातं पांसूत्किरणम् )

इदमहमित्युत्किरति यथाखातं प्रतिमन्त्रम् ॥ ९ ॥

पांसून् ॥ ९ ॥

उत्कृत्याङ्गिरामीति पश्चात्सर्वेभ्यः ॥ १० ॥

उत्किरेत्प्रदक्षिणम् ॥ १० ॥

बाहुमात्रान् ॥ ११ ॥

खनेत् ॥ ११ ॥

(१)अक्ष्णया सम्भिन्द्यादशक्तौ सम्यक् ॥ १२ ॥

सम्भेदनम् । अस्मिन्पक्षे पूर्वयोरसम्भेदनमिति सम्प्रदायः। नासिकासंस्तवात् ॥ १२ ॥

स्वराडित्यवमर्शयति यथाख्यातं प्रतिमन्त्रम् ॥ १३ ॥

अवमर्शयतीति कारितत्वात् अध्येषणा । यजमानश्च स्वराडिति प्रतिमन्त्रमवमर्शनं करोति यथाख्यातम् । अपरे तु समाख्यया अध्वर्योरेवावमर्शनमिच्छन्ति । प्रतिप्रस्थाता चाध्येषणे इति ॥ १३ ॥

( अवटयोः स्वं स्वं दक्षिणं हस्तं प्रवेश्याध्वर्युयजमानयोः परस्परसंमर्शनादि )

अध्वर्युयजमानौ सम्मृशेते पूर्वदक्षिणेऽध्वर्युरपरोत्तरे यजमानः ॥ १४ ॥

हस्तौ प्रक्षिप्यावटयोः परस्परतः संमृशेते ॥ १४ ॥

अध्वर्युः पृच्छति यजमान किमत्रेति ॥ १५ ॥

भद्रमित्याह ( यजमानः ) ॥ १६ ॥

प्रत्युक्ते—

तन्नौ सहेत्यध्वर्युरुपांशु ॥ १७ ॥

अयं च मन्त्रश्चोदितार्थाभिधायी अनेकयजमानके विपरिणस्यते । उपांशुत्वं च वागन्तपक्षे एव वक्तव्यं नोपांशुपक्षे इति ॥ १७ ॥

पुनर्दक्षिणापरेऽध्वर्युः पूर्वोत्तरे यजमानो यजमानः पृच्छत्यध्वर्यो किमत्रेति भद्रमिति प्रोक्ते तन्न इति यजमानः ॥ १८ ॥

---

( १ ) अक्ष्णयाशब्दोऽयं कर्णवचनः, न भुजेन कोट्या वा सम्भिन्दन्ति किं तर्हि कर्णेन । दक्षिणपूर्वमुत्तरापरं च छिद्रयन्ति, तथा दक्षिणापरं पूर्वोत्तरं चेत्यर्थः ।

आह । अयमपि मन्त्रश्चोदितार्थाभिधायी । अस्त्विति चाध्याहारः ॥ १८ ॥

( अवटानां प्रोक्षणादिकम् )

प्रोक्षत्येनान् रक्षोहण इति ॥ १९ ॥

अवटान् । भेदेन च प्रोक्षणं संस्कार्यभेदात् ॥ १९ ॥

भेदे मन्त्रावृत्तिः सान्निपातित्वात् ॥ २० ॥

बहुवचनं मन्त्रे पूजार्थम् ॥ २० ॥

अवनयनावस्तरणे चावटवद्रक्षोहणो रक्षोहण इति ॥ २१ ॥

यूपावटवदवनयनावस्तरणे कार्ये । इयांस्तु विशेषो रक्षोहणो रक्षोहण इत्यनेन मन्त्रेण ॥ २१ ॥

( अवटोपरि अधिषवणफलकयोरुपधानम् )

तनूनुपरि कुशान्कृत्वाऽधिषवणे फलके द्व्यङ्गुलान्तरे प्रक्षालिते प्राची अरत्नि-मात्रे सन्तृण्णे वोपदधाति पर्यूहति च रक्षोहणौ रक्षोहणाविति ॥ २२ ॥

तनून् अस्थूलान् अवटानामुपरि कुशान्कृत्वाऽधिषवणे फलके द्व्यङ्गुलान्तराले प्रक्षालिते प्रागग्रे अरत्निमात्रे सन्तृण्णे वा अन्तःशल्ये उपदधाति "रक्षोहणाविति" पर्यूहति च रक्षोहणावित्यनेन मन्त्रेण ॥२२॥

( तयोरुपरि चर्म निधाय पञ्चानां ग्राव्णां निधानम् )

तयोश्चर्माधिषवणं परिकृत्तं सर्वरोहितं निदधाति वैष्णवमसीति ॥ २३ ॥

तयोः फलकयोरुपरि चर्माधिषवणं परिकृत्तं सर्वरोहितं निदधाति "वैष्णवमसीत्यनेन मन्त्रेण ॥ २३ ॥

तस्मिन् ग्राव्णः पञ्च वैष्णवा स्थेति ॥ २४ ॥

तस्मिन् चर्माधिषवणे ग्राव्णः पञ्च "वैष्णवा स्थेत्यनेन मन्त्रेण निदधाति ॥ २४ ॥

खरं पुरस्तात्करोत्युद्धतावोक्षिते सिकतोपकीर्णं चतुरश्रम् ॥ २५ ॥

निगदव्याख्यातम् ॥ २५ ॥

( यजमानमात्रीमौदुम्बरीं मिनुयात् )

अन्तःपात्यात्षट् प्रक्रमान्प्राङ् यात्वा दक्षिणा सप्तमं महान्तं तत्रौदुम्बरीं मिनोति यजमानमात्रीम् ॥ २६॥

सा च—

यूपवच्छेते ॥ २७ ॥

अवटस्य पुरस्तात् ॥ २७ ॥

अभ्र्यादि करोत्याऽवस्तरणात् ॥ २८ ॥

यूपावटवत् ॥ २८ ॥

उद्दिवमित्युच्छ्रयति ॥ २९ ॥

औदुम्बरीम् ॥ २९ ॥

द्युतान इति मिनोति ॥ ३० ॥

अवटे प्रात्तपति ॥ ३० ॥

पर्यूहणाद्योपसेचनात्कृत्वा ध्रुवासीति वाचयत्यौदुम्बरी-मालभ्य "प्रजया भूयादिति" पशुभिरिति वा ॥ ३१ ॥

मन्त्रगतो विकल्पः ॥ ३१ ॥

( औदुम्बर्या मूर्धनि स्रुवेण होमः )

स्रुवेण विशाखे जुहोति घृतेन द्यावापृथिवी इति भूमिप्राप्ते स्वाहा करोति सर्वत्र मन्त्रवत्सु जुहोत्युपदेशात् ॥३२॥

"स्वाहाकारेण वा वषट्कारेण वा देवेभ्यो हविः प्रदीयत" इति ३२॥

अनाम्नातप्रतिषेधाच्च ॥ ३३ ॥

अनाम्नातेऽपि च स्वाहाकारे प्रतिषेधं ब्रुवन् स्वाहाकारप्रदानतां दर्शयति—"न स्वाहा करोत्यहुतादो वै देवानां मरुत" इति । अमन्त्रवत्सु पूर्णाहुत्यां स्वाहाकारो विहित एव । मन्त्रविषयोऽयमारम्भः ॥३३॥

इति अष्टमाध्याये पञ्चमी कण्डिका ।

( सदोमण्डपस्य मानम् )

नाभिदघ्नꣳ सदः ॥ १ ॥

तच्च कुड्यप्रमाणापेक्षया । "उच्छ्रिता ह्युपसर्पन्ति य उद्गातार आर्भव" इत्येतदन्यथा नोपपद्यते ॥ १ ॥

मत्या वा ॥ २ ॥

प्रमाणं भवति । एवमपि श्रूयत एव ॥ २ ॥

उदग्वꣳशम् ॥ ३ ॥

पृष्ठवंशेन ॥ ३ ॥

अष्टादशारत्न्येकविꣳशतिश्चतुर्विꣳशतिर्वा ॥ ४ ॥

आयामो भवति । आयामश्च दैर्घ्यमुच्यते ॥ ४ ॥

नव तिर्यग् अर्धायामो वा ॥ ५ ॥

दैर्घ्यस्य ॥ ५ ॥

(प्रागायामस्य मध्ये औदुम्बरीम् उदगायामस्य मध्ये पृष्ठ्यां मिनुयात्)

औदुम्बरीं मध्ये पृष्ठ्यामेके ॥ ६ ॥

"तन्मध्ये औदुम्बरीं मिनोति" इति (श०ब्रा०३.५।६।२) औदुम्बरीं मध्य इत्युक्तम् । पृष्ठ्यामेके । एतत्कुतः । अत्र हविर्द्धानस्य हि "पृष्ठ्यामुभयतो द्वार्यै" इत्युक्तम् (का०श्रौ०८।४।२५) । "तस्मादयं पुरुष आत्तꣳ सन्तृण्ण" इति ( श०ब्रा०३।५।३।७ ) वचनात् सदोऽपि तथैव । ( सदसः ) उदगायामस्य मध्ये पृष्ठ्या, प्रागायामस्य च औदुम्बरीत्युभयानुग्रहात् ॥ ६ ॥

( सदसो दक्षिणे तृतीयांशे, मध्ये अपरपूर्वपार्श्वयोश्च, क्रमेण छदिस्त्रयस्यारोपणम् )

इन्द्रस्य च्छदिरिति मध्यमं च्छदिरारोप्या-
परपूर्वे च ॥ ७ ॥

छदिषी आरोपयति । चशब्दो मन्त्रानुकर्षणार्थः ॥ ७ ॥

( सदसो मध्ये तृतीयांशे पूर्ववच्छदिस्त्रयमारोप्य तत उत्तरतश्छदिस्त्रयमारोपयेत् )

त्रित्रगौ चोत्तरतः ॥ ८ ॥

"उत्तरतस्त्रीणि परतस्त्रीणि" इति (श०ब्रा०३।६।१।२२) वचनात् ॥८॥

( सदः परित आच्छाद्य परिषीवणादीनि कुर्यात् )

परित्वेति परिवार्य परिषीवणग्रन्थ्यभिमर्श-
नान्यैन्द्रैः ॥ ९ ॥

"परित्वेत्यनेन मन्त्रेण परिवारणं कृत्वा परिषीवणग्रन्थिकरणाभिमर्शनानि हविर्द्धानवदैन्द्रैर्मन्त्रैः कर्त्तव्यानि ॥ ९ ॥

( हविर्धानमण्डपस्य पश्चार्धस्य उत्तरतः आग्नीध्रं मिनुयात् )

हविर्द्धानापरान्तमुत्तरेणाग्नीध्रमग्न्यगारद्वा-
रमन्तर्वेद्यर्द्धं भूयः सर्वं वा ॥ १० ॥

करोति । "अथ हविर्द्धानयोर्जघनार्द्धं समन्वीक्ष्य" इति (श०ब्रा०३।६।१।२६) प्रकृत्यैवमेव श्रुतत्वात् ॥ १० ॥

निष्ठाप्य वैश्वदेवमसीत्यालभते ॥ ११ ॥

आग्नीध्रम् ॥ ११ ॥

( आग्नीध्रीयादीन् सप्त धिष्ण्यान् निवपेत् )

धिष्ण्यान्निवपत्युद्धतावोक्षिते पुरीषन्निवपति
स्फ्येनान्वारब्ध उदङ्ङुपविश्य विभूर-
सीति प्रतिमन्त्रम् ॥ १२ ॥

धिष्ण्यान्करोति। उद्धतावोक्षितग्रहणेन च परिसमूहनादयः सर्व एव गृह्यन्ते स्मार्त्ताः। अन्यथा हि गृह्योऽभिहिताः। तदपचारे च स्मात्त प्रायश्चित्तम्। वेदेऽपि तेऽनूद्यन्ते "उद्धते वा ऽवोक्षितेऽग्निमादधाति" इति। पुरीषन्निवपति स्फ्येनान्वारब्ध उदङ्ङुपविश्य "विभूरसीति प्रतिमन्त्रम्॥ १२॥

आग्नीध्रीयं पूर्वम्॥ १३॥

आग्नीध्रीयं धिष्ण्यं पूर्वम्॥ १३॥

सिकताश्चोपरि॥ १४॥

दीयन्ते॥ १४॥

रौद्रेणेति सर्वत्र॥ १५॥

अनुषङ्गः॥ १५॥

षट् सदसि॥ १६॥

निवपति॥ १६॥

प्रत्यङ्मुखो द्वारमपरेण होतुः॥ १७॥

धिष्ण्यन्निवपति॥ १७॥

दक्षिणपूर्वेणौदुम्बर्यां मैत्रावरुणस्य॥ १८॥

धिष्ण्यं निवपति॥ १८॥

होतृधिष्ण्यमुत्तरेण चतुरः समान्तरान्ब्राह्मणाच्छ्ंसिपोतृनेष्ट्रच्छावाकानाम्॥ १९॥

धिष्ण्यान्निवपति॥ १९॥

(आग्नीध्राद्दक्षिणतः मार्जालीयम्)

आग्नीध्राद्दक्षिणं सम्प्रति वेद्यन्ते दक्षिणामुखो मार्जालीयम्॥ २०॥

संप्रतिशब्द आर्जवे॥ २०॥

( सदोद्वारस्य पुरस्तात् स्थित्वा आहवनीयादीनां समन्त्रकं सन्दर्शनम् )

सदोद्वारं पूर्वेण तिष्ठन्ननुदिशत्याहवनीयबहिष्पवमानदेशचात्वालशामित्रौदुम्बरिब्रह्मासनशालाद्वार्यप्राजहितान्त्सम्म्राडसीति प्रतिमन्त्रम् ॥ २१ ॥

अनुदेशश्च सन्दर्शनमात्रम्(१)। रौद्रेणेति च सर्वत्रानुषङ्गः। अयं च शाखान्तरादेकवचनान्तः। स्वशाखायां हि बहुवचनान्तः पठ्यते। तस्योपरिष्टाद्विनियोग इति वक्ष्यामः ॥ २१ ॥

उत्करं "समूह्योऽसि विश्ववेदा ऊनातिरिक्तस्य प्रतिष्ठेति ॥ २२ ॥

अत्रापि च रौद्रेणेत्यनुषङ्ग एव। शाखान्तरात् ॥ २२ ॥

( अग्नीषोमीयपशुयागार्थम्परिस्तरणादिकम् )

(२)परिस्तरणपात्रसंसादनप्रोक्षणाज्यनिर्वपणानि कृत्वोत्तरपरिग्रहादि करोति ॥ २३ ॥

परिस्तरणाद्युद्घाटनम् आहननव्युदासार्थमिति केचित्। तन्न। प्रतिषेधशासनाभावात्। एककर्तृकनियमार्थमित्यपरे। तदपि नैव। नियमशासनाभावात्। अतो गुणार्थमुद्घाटनम् आज्यनिर्वपणान्ते महावेदेरुत्तरपरिग्रहादि करोतीत्येवमर्थम्। उत्तरपरिग्रहादिशब्देन च खननादि द्रष्टव्यम्। सम्मर्शनान्तस्याभिनिर्वृत्तत्वात्। किं चाग्नीषोमीयस्य द्रव्यदेवतासंबन्धो नैवाभिहितः, येन परिस्तरणाद्यग्नीषोमीयार्थं सत्क्रियेत। स कस्य हेतोः। शाखान्तरे हि अवान्तरदीक्षाविमोकोत्तरकालम् अग्नीषोमीयस्य विधानम्। यथाब्राह्मणं चाचार्य उपनिब-

---

(१) तथा चाहुर्माधवाचार्याः-अनुदेशो नाम विद्यमानमेव पदार्थमनु त्वमेवं भवसीति निर्देश' इति।

(२) अथाग्नीषोमीयपशोरुपक्रममाह।

ध्नाति। तत्र चाचार्येणोक्तम् "अग्नीषामीयोऽतः पशुः" इति (का०श्रौ० ८।७।२३)। अतोऽत्र परिस्तरणाद्यभिधानं वचनात्। सवनीयेऽप्यवका-शावाचनान्ते तद्विधानम् "आग्नेयमग्निष्टोम आलभेत" इति (श०ब्रा० ४।२।५।१४)। तत्रैव सूत्रकारेणोपनिबद्धं "ध्रुवगोपं कृत्वा परिव्ययणादि करोति" इति (का०श्रौ०९।८।१)। सम्मूर्च्छिताकारं चापररात्रे परिस्त-रणाद्यभिधानं कृतमाचार्येण। ईदृश्येव हि तस्य शैली यथाब्राह्मण-मुपनिबध्नाति ॥ २३ ॥

( अन्तःपात्यसमीपे स्थित्वा इध्मं बर्हिरुपसादयेत्यन्तं प्रेष्य शाकटबर्हिरादिकमासादयेत् )

अन्तःपात्यसहितम् ॥ २४ ॥

अनुमार्जनं कर्म भवति। एवं हि श्रूयते "य एष वेदेर्जघनार्द्धे श-ङ्कुस्तत्प्रतियौति" इति ॥ २४ ॥

बर्हिरन्तं प्रेष्यति। तत्र सर्वमासादयति ॥ २५ ॥

यथाप्रेषितम्। सर्वग्रहणात् स्फ्यश्च स्वकाले ॥ २५ ॥

अत्रैव प्रोक्षणम् ॥ २६ ॥

इध्मवेदिबर्हिषाम्। उपरिष्टादपीध्मप्रोक्षणमभिहितं चोदकपरिप्रा-प्त्या। इदमन्यदपूर्वम्। एवं च सत्यग्नीषोमीये द्विः प्रोक्षित इध्मो भवति ॥ २६ ॥

इध्मं निधायाग्नीषोमीयाय वेदेस्तरणमग्रहणं प्रस्तरस्यापराह्णे ॥ २७ ॥

पदार्थतयाऽग्नीषोमीयार्थमिध्मं स्थापयित्वा वेदेस्तरणमपराह्णे। "सोऽपराह्णे वेदिँ स्तीर्त्वा" इति (श०ब्रा०३।६।३।४) वचनात्। तत्र चाग्रहणं प्रस्तरस्य ॥ २७ ॥

अर्द्धव्रते प्रत्ते प्रविश्य प्रणयनीयाधानम् ॥२८॥

प्रविश्येति निष्क्रमणं लक्ष्यते। तच्च कार्यार्थम्। कार्यं चोपरिष्टा-द्दृश्यते "परिवाप्यायै दोहनम्" इति (का०श्रौ०८।९।२७)। परिवाप्या इति च गवामपाकृतावस्थोच्यते। अतः शाखाच्छेदनार्थं निष्क्रमणम्

प्रवेशनेन लक्ष्यते। शालाम् प्रविश्य प्रणयनीयस्येध्मस्य शालाद्वार्य आधानम् ॥ २८ ॥

आज्याधिश्रयणस्रुक्सम्मार्जनोद्वासनावेक्षणानि कृत्वा शालाद्वार्यमपरेणास्ते यजमान उपस्थे सोमं कृत्वा ॥ २९ ॥

अत्र विशेषः। आज्याधिश्रयणपर्यग्निकरणे कृत्वा स्रुक्संमार्जनाद्यर्थः खण्डप्रैषः। ततः स्फ्योदकप्रहरणम्। प्रैषोत्तरकालं दृष्टत्वात्। पाण्योरवनेजनं तु सामर्थ्यात् पूर्वमेव क्रियते। आज्यावेक्षणं च पत्नीकर्तृकमत्र। इतरदुपरिष्टात्करिष्यते ॥ २९ ॥

(स्थाल्यामोप्य पत्न्यै समर्पितं सोमक्रयणीपदं शालाद्वार्यस्य पश्चिमतः परिकिरेत्)

शालाद्वार्यमपरेण सोमक्रयणीपदं परिकिरति ॥ ३० ॥

यच्च स्थाल्यामोप्तम् ॥ ३० ॥

(आहवनीयादिषु वा चतुर्धा विभज्य परिकिरेत्)

चतुर्द्धैक आहवनीयस्योपयमनीष्वाग्नीध्रीयस्याक्षोपाञ्जने च ॥ ३१ ॥

एके चतुर्द्धा पदप्रक्षेपं कुर्वन्ति। आहवनीयस्योपयमनीषु तथाऽऽग्नीध्रीयस्याक्षोपाञ्जने, चशब्दादिह च। एक इति ग्रहणं विकल्पार्थम् ॥ ३१ ॥

(आज्योत्पवनादिकम्)

आज्यप्रोक्षणीरन्तःपात्यदेश उत्पूय पश्वाज्यग्रहणम् ॥ ३२ ॥

आज्यस्य प्रोक्षणीनां चान्तःपात्यदेश उत्पवनं कृत्वा पश्वाज्यग्रहणं कर्त्तव्यम्। पशोरनुक्तत्वात्पश्वाज्यग्रहणमित्युक्तम् ॥ ३२ ॥

धारयन्त्याज्यानि ॥ ३३ ॥

नयनाय ॥ ३३ ॥

अपिव्रताश्चान्वारभन्ते यजमानम् ॥ ३४ ॥

(१)अपिव्रता गोत्रजास्तेऽन्वारभन्ते यजमानम् ॥ ३४ ॥

वाससा छादयत्येनान् ॥ ३५ ॥

सयजमानान् ॥ ३५ ॥

चरत्सु नाद्रियेत ॥ ३६ ॥

चरत्स्वपि व्रतेष्वनादरः । ततश्च प्रायश्चित्तं न भवति ॥ ३६ ॥

इति अष्टमाध्याये षष्ठी कण्डिका ।

( प्रचरण्या आहुतिद्वयं हुत्वा प्रणयनार्थं प्रैषं दत्त्वा आहवनीयं प्रति गमनं ग्रावादीन्गृहीत्वा )

प्रदीप्तमिध्मं "त्वꣳ सोमेति प्रचरण्याऽभिजुहोति ॥ १ ॥

प्रदीप्तं प्रणयनीयमिध्मं "त्वꣳ सोमेत्यनेन मन्त्रेण (२)प्रचरण्याऽभिजुहोति ॥ १ ॥

जुषाणो अप्तुरिति द्वितीयाम् ॥ २ ॥

आहुतिं जुहोति ॥ २ ॥

अग्नये प्रह्रियमाणायानुवाचयति, सोमाय प्रणीयमानायेति वा ॥ ३ ॥

वाशब्दो विकल्पार्थः ॥ ३ ॥

---

( १ ) अपिव्रतास्त उच्यन्ते येषां यजमानव्रते अपित्वमस्ति, दायाद्येनाविभक्ता इति पितृभूतिः । अपि संसर्गे, व्रतमिति कर्म नाम, संसृष्टं साधारणं कर्म येषां ते अपिव्रता अविभक्ता दायादाः, ते ह्येकेनापि कृष्यादि कर्म कृतं सर्वे उपजीवन्तीति हरिस्वामिनः ।

( २ ) प्रचरणी नाम पालाशी स्रुक् जुहूरेव, अन्यासु व्यापृतासु तया प्रचर्यत इति ।

आहवनीयं गच्छन्त्यादाय ग्रावद्रोणकलशसोम-
पात्राणीध्मं, चतुष्टयं च सन्नद्धं, वपाश्रपण्यौ,
रशने, शकलवृषणमरणी च ॥ ४ ॥

ग्रावादीन्यादायाहवनीयं प्रति गच्छन्ति। (१)द्रोणकलशस्य स्वशब्दाभिधानात् सोमपात्रशब्देन ग्रहपात्राणि गृह्यन्ते, न चमसादीनि। इध्मोऽग्नीषोमीयार्थः, चतुष्टयं च। वपाश्रपण्यौ, रशने च। शकलवृषणमरणी च मन्थनार्थानि। यद्यपि चात्र मन्थनं वैकल्पिकं तथापि सवनीयार्थं नयनमिति ॥ ४ ॥

अग्ने नयेति वाचयति ॥ ५ ॥

(आग्नीध्रीये धिष्ण्ये अग्निं निधाय हुत्वा आग्नीध्रे ग्रावादीनां निधानम्)

उत्तरेण सदो हृत्वाऽऽग्नीध्रेऽग्निं निदधाति ॥ ६ ॥

ग्रावद्रोणकलशसोमपात्राणि च ॥ ७ ॥

तानि च होमोत्तरकालम्। "स निहिते जुहोति" (श०ब्रा०३।६।३।१२) इत्यभिधाय "तदेव निदधति ग्राव्णः" (श०ब्रा०३।६।३।१३) इत्युक्तमिति ॥ ७ ॥

अयन्न इति जुहोत्यस्मिन् ॥ ८ ॥

आहवनीये मा भूदित्यस्मिन्नित्युच्यते ॥ ८ ॥

उत्तरेण परिक्रम्याहवनीयस्योत्तरतो निदधात्यन्यदाज्य-
सोमवर्जम् ॥ ९ ॥

आग्नीध्रीयमुत्तरेण परिक्रम्य आज्यसोमवर्जमाहवनीयस्योत्तरतो निदधाति ॥ ९ ॥

धिष्ण्यावन्यत्राध्वर्योः ॥ १० ॥

अध्वर्युग्रहणादन्येषामनियमः। "तस्माद्ध्वर्युः समया धिष्ण्यान्नातीयात्" इति (श०ब्रा०३।६।२।२०) श्रुतत्वात् ॥ १० ॥

(१) द्रोणकलशो द्रुममयः कलशाकारो वैकङ्कतः, यस्योपरि धाराग्रहा गृह्यन्त इति।

( प्रोक्षणादिप्राकृतपदार्थानुष्ठानम् )

इध्मप्रोक्षणादि करोति ॥ ११ ॥

वैकृतावसरे प्राकृतानुवृत्त्यर्थमिदमुक्तम् ॥ ११ ॥

खरोत्तरार्द्ध एकवृत्स्तरणं पश्चाद्वोत्तरवेदेः ॥ १२॥

इति विकल्पः । शास्त्रस्य तुल्यत्वात् ॥ १२ ॥

आऽऽहवनीयेक्षणात्कृत्वोरुविष्णविति जुहोति ॥ १३ ॥

आऽऽहवनीयेक्षणादिति । कुत एतत् । अत्र हि परिधिपरिधान-पदार्थः परिसमाप्यत इति ॥ १३ ॥

पुरस्ताद्वा समिधावाधायेति श्रुतेः ॥ १४ ॥

पुरस्ताद्वा जुहोति नाहवनीयेक्षणान्ते । "अभ्याधाय समिधावथ जुहोति" इति (श० ब्रा० ३।६।३।१४-१५) श्रुतत्वात् अयं च मन्त्रश्चोदितार्थाभिधायी । इध्माभिहोमार्थाज्यसंस्कार एवेह भवतीति । आग्नीध्रीये च । वैसर्जनहोमार्थत्वात् तस्य-सर्वाणि चैतानि वैसर्जनानीति ॥ १४ ॥

( जुह्वादीनि आज्यस्थाल्यन्तानि आसाद्य दक्षिणे शकटे कृष्णाजिनमास्तीर्य सोमनिधानम् )

आसाद्याज्यानि दक्षिणेऽनसि कृष्णाजिनमास्तीर्य तस्मिन्सोमं निदधाति देवसवितरिति ॥ १५॥

आज्यासादनं प्राकृतमेव । ततश्चालम्भनमुदकोपस्पर्शनं च कृत्वेति । एवं श्रूयते "आसाद्य हवीꣳषि सम्मृश्याप उपस्पृश्य राजानमादाय प्रतिपद्यत" इति । आचार्येण चात्राज्यासादनमात्रमेवोक्तम् । ल्यबादेशसामर्थ्यादालम्भादि लभ्यत एवेत्यभिप्रायः । एवं च सति यत्र प्राकृतवैकृतौ ल्यबादेशौ तत्र प्राकृतमेव पूर्वं कर्त्तव्यमिति । यथा "आसाद्य हवीꣳष्यग्निं मन्थति" "आसाद्य हवीꣳषि सम्मृशति" इति । मन्त्रश्चोदितार्थाभिधायी न्यग्रोधे विपरिणम्यते ॥ १५ ॥

( अन्वारब्धं सोमं विसृज्य उपस्थानम् )

एतत्त्वमिति विसृज्योपतिष्ठते ॥ १६ ॥

विसर्गोपदेशात्पूर्वतरमन्वारम्भः सोमस्य । तस्य याजमानत्वात्

यजमान एवोपस्थान इति । मन्त्रश्चोदितार्थाभिधायी न्यग्रोधे विपरिणस्यते ॥ १६ ॥

( हविर्धानान्निष्क्रम्य समिदाधानादि कृत्वा यजमानस्य अङ्गुलिविसर्गः)

स्वाहा निरिति निष्क्रम्याग्ने व्रतपा इत्याहवनीये समिधमाधाय मदन्तीरुपस्पृश्याङ्गुलीर्विसृजते ॥ १७ ॥

अत्र च यजमानस्य कर्तृत्वम् । अङ्गुलिविसर्गोपदेशात् । ल्यबादेशसामर्थ्याच्च । तथा च मन्त्रलिङ्ग "स्वाहा निर्वरुणस्य पाशान्मुच्ये" इति । अवान्तरदीक्षोन्मोचनाच्चानेकयजमानके प्रतियजमानं भवति ॥ १७ ॥

( पत्न्याश्च अङ्गुलिविसर्गः )

पत्नी च गार्हपत्ये तूष्णीं मदन्तीरुपस्पृश्य ॥ १८ ॥

गार्हपत्ये समिधमाधाय मदन्तीरुपस्पृश्याङ्गुलीर्विसृजते ॥ १८ ॥

चात्वाले मदन्तीः कृत्वा ॥ १९ ॥

प्रतिपत्तिश्चरितार्थत्वात् ॥ १९ ॥

( अतः परं दीक्षितस्य भोज्यान्नता )

नामग्रहणभोजने अस्यातः कुर्वन्ति ॥ २० ॥

बहुवचनोपदेशात्पुरुषमात्रधर्मः । "तस्मादस्यात्राश्नन्ति मानुषो हि भवति तस्मादस्यात्र नाम गृह्णन्ति" इति (श०ब्रा०३।६।२।२१) वचनात्पूर्वं प्रतिषेधो गम्यते। विहितश्चासौ "तस्माद्दीक्षितस्य नाश्नीयात्" इति (श०ब्रा०३।६।२।२१) । अतश्च भोक्तुरेव व्यतिक्रमे प्रायश्चित्तम् ॥ २० ॥

व्रत्यनिवृत्तिः ॥ २१ ॥

अतः परं पयोव्रतं निवर्त्तते ॥ २१ ॥

हविःशेषभक्षः ॥ २२ ॥

यद्भक्षयति तद्धविःशेषम् । तच्च प्रातः । येनाद्य निषेधः "तस्मादुपवसथे नाश्नीयात्" इति (श०ब्रा०९।५।१।६) । "प्रातः सोमान् हविःशेषांश्च भक्षयति" इति श्रुतेः । स चायं सवनीयशेषो न हविर्मात्रस्य । सवनीयान्हि प्रकृत्य श्रूयते "अथ यन्नानापुरोडाशा भूयो हविरुच्छिष्टमसत्समाप्त्या" इति (श०ब्रा०४।६।८।१७) बहुयजमानके नाना

पुरोडाशान्विधायोच्यते । भूयो हविरुच्छिष्टमसत्कथं नाम तच्च समाप्तिर्भविष्यति । अतः सवनीयशेषोऽयमिति गम्यते । सूत्रकारप्रस्थानाच्च । "प्रत्यग्नि सवनीयपुरोडाशा भूयो हविरुच्छिष्टमसत्समाप्त्या इति श्रुतेः" (का०श्रौ०१२।२।२) ॥ २२ ॥

( अग्नीषोमीयपशुयागः )

अग्नीषोमीयोऽतः पशुः ॥ २३ ॥

किमर्थमिदमुच्यते । अस्मिन्नेव ह्यवसरे पशोर्दैवतासम्बन्धः श्रुतावभिहितः । यथाश्रुति च सूत्रकारः सूत्रमारभते । परिस्तरणादयो हि पदार्थाः सौमिकैर्व्यतिषक्ताः पठ्यन्ते, तथैवोपनिबद्धाः । "उपांशु चरन्ति प्रागग्नीषोमीयात्"(का०श्रौ०७।२।२६) इत्येवमर्थमेवोच्यते "अग्नीषोमीयोऽतः पशुः" इति । साद्यस्क्रे च श्रूयते "पुरोडाशो वाऽग्नीषोमीयस्थाने" (का०श्रौ०२२।३।२८) इति, सोऽत्र यथा स्यादिति ॥ २३ ॥

( अग्नीषोमीयपुरोडाशयागः )

तद्देवत्यः पशुपुरोडाशः ॥ २४ ॥

"यद्देवत्यः पशुर्भवति तद्देवत्यं पुरोडाशमनुनिर्वपति" इति (श० ब्रा०३।८।३।१) श्रुतेः । अतश्च पश्वन्तरेऽपि तद्देवत्यो भवति नाग्नीषोमीय इति ॥ २४ ॥

इति अष्टमाध्याये सप्तमी कण्डिका ।

---

अभ्र्यादि करोति ॥ १ ॥

आज्यासादनान्तस्याभिनिर्वृत्तत्वात् अभ्र्यादेरेवावसर इति ॥ १ ॥

दक्षिणेन हविर्द्धानं पाश्विडाँ हरति ॥ २ ॥

सदसि होतोपविष्टः, तं प्रति नीयमानायाः प्रादक्षिण्येन स्मृत्यनुग्रह इति ॥ २ ॥

गुदतृतीयं च ॥ ३ ॥

दक्षिणेनैव ॥ ३ ॥

मार्जालीयं दक्षिणेन जाघनीम् ॥ ४ ॥

पत्नीशालां ह्यसौ नीयते। तत्र धिष्ण्यव्यवायो मा भूदिति ॥ ४ ॥

प्रत्याहृत्य वा सोमाहवनीययोरव्यवायात् ॥ ५ ॥

प्रत्याहृत्य वा यूपाहवनीयावन्तरेणैतानि नीयन्ते। कुत एतत्। सोमाहवनीययोरव्यवायात् दक्षिणेन वा प्रत्याहृत्य वेति। दक्षिणेन स्मृत्यनुग्रहः। इतरत्र चोत्तरोपचारितया श्रुत्यनुग्रहः। तस्मात्प्रत्याहृत्यैवेत्यवधार्यते ॥ ५ ॥

( पश्वेकादशिन्यां यूपैकादशिनीपक्षे यूपानां रथाक्षसंज्ञकचतुरधिकशताङ्गुलान्तरेण निखननम् )

यूपैकादशिनी चेद्रथाक्षमात्राण्यन्तराणि ॥ ६ ॥

चेच्छदो यद्यर्थः। यदि यूपैकादशिनी वक्ष्यमाणं स्तोमायनं वेति। उभयं हि विकल्पेन श्रूयत इति। तत्र रथाक्षमात्राणि यूपान्तरालानि॥६॥

( वेदिपूर्वार्द्धं वैकादशधा समं विभज्य निखननम् )

पूर्वार्द्धं वा समं विभज्य ॥ ७ ॥

पूर्वार्द्धसमविभागेन वा ॥ ७ ॥

पक्षसम्मिता वाऽग्नौ ॥ ८ ॥

यथोक्तं वा ॥ ८ ॥

( एकादशयूपानां निखननेतिकर्तव्यता )

यूपाहुत्यभ्र्यादानयवावपनानि सकृत् ॥ ९ ॥

भवन्ति। असन्निपातात् ॥ ९ ॥

भेदेनान्यत्सान्निपातित्वात् ॥ १० ॥

मध्यमं परिलिख्योत्तरं दक्षिणं वा व्यत्यासमितरान् ॥ ११ ॥

मध्यमं यूपावटं परिलिख्य तदनन्तरमुत्तरं दक्षिणं वा परिलिखति। इतरांश्च व्यत्यासेन ॥ ११ ॥

आऽवटहोमात्करोति ॥ १२ ॥

पदार्थानुसमयेन ॥ १२ ॥

अञ्जनाद्याचषालेक्षणात्कृत्वैकैकस्य ॥ १३ ॥

काण्डानुसमयेन । पदार्थानुसमये प्राप्ते वाचनिकः काण्डानुसमयः ॥ १३ ॥

श्वो वा दक्षिणोत्तराणामवगूहनान्तमालम्भनासम्भवात् ॥ १४ ॥

श्वो वा दक्षिणोत्तराणामवगूहनान्तं कर्म्म करोति । कुत एतत् । आलम्भनासम्भवात् । नह्यद्य पश्वालम्भः सम्भवति । अथवा आलम्भनासम्भवादिति–न ह्यद्य क्रियमाणे चषालेक्षणान्ते यूपालम्भः सम्भवति । उक्तं चैतत् "इदं वै यूपमुच्छ्रित्याध्वर्युरापरिव्ययणान्नान्वर्जति" (श०ब्रा०३।७।२।४) इति । अयं च वाक्यैकदेशोपन्यासः "तस्मादु प्रातरेवोच्छ्रयेत्"इत्यस्य शेषभूतः। न्याये हि सत्येतस्मिन् वाचनिकी चषालेक्षणान्ततैव भवति । वचनं हि तत्र "अपरिवीता वा एत एताꣳ रात्रिं वसन्ति"इति (श०ब्रा०३।७।२।४)। अतश्चषालेक्षणान्तता वाचनिकी। "तस्मादु प्रातरेवोच्छ्रयेत्"(श०ब्रा०३।७।२।४)इत्येतदपि वचनम्। अतो विकल्प एवायम् । अद्य वा चषालेक्षणान्ताः पक्षयूपाः, श्वो वाऽवगूहनान्ततेति । यच्चालम्भनासम्भवादिति, सोऽर्थवादवाक्यैकदेशोपन्यासो न न्याय इति ॥ १४ ॥

इयांस्तु विशेषः—

परिवीय मध्यममवगूहनान्तम् ॥ १५ ॥

पार्श्वयूपानामभ्यञ्जनप्रभृत्यवगूहनान्तं करोति सौत्येऽहनि ॥१५॥

अग्निष्ठे चैषाꣳ रशनाः परिवेष्ट्य वासयति ॥ १६ ॥

स चायं शेषयूपार्थो रशनासंस्कारो, नाग्निष्ठार्थः । एवं हि श्रूयते "अग्निष्ठाद् द्वे द्वे रशने आदायेतरान्परिव्ययति तेनैतानग्निष्ठान्करोति"इति। एवं च सत्यश्वमेधे वसत्यर्थासम्भवेऽपि अग्निष्ठे रशनाः कृत्वा परिव्ययणं कर्त्तव्यमिति ॥ १६ ॥

अभ्यञ्जनप्रभृति करोति ॥ १७ ॥

उक्तार्थम् ॥ १७ ॥

यथाखातमुच्छ्रयति ॥ १८ ॥

येन क्रमेणावटखननं तेनैव यूपोच्छ्रयणमिति प्रवृत्त्या ॥ १८ ॥

वर्षिष्ठो दक्षिणोऽनुपूर्वा इतरे ॥ १९ ॥

"स यो वर्षिष्ठः स दक्षिणार्ध्यः स्यादथ ह्रसीयान्" इति (श०ब्रा०३।७।२।७) श्रुतत्वात्। ह्रसीयस्ता चारत्निवशेनैव कर्त्तव्या, नानियमेन। तेषां ह्यत्र श्रवणं "पञ्चारत्निं परिवासयेत्" (श०ब्रा० ३।६।४।१८) इत्येवमादि। एवं च कृत्वा 'पञ्चारत्निः पञ्चदशपर्यन्तः सोम' इत्यस्य पक्षस्यैकादशिन्यामप्रसङ्ग एव। अपरिमितपक्ष एव भवति। तथा चान्त्यः षोडशारत्निरन्ततो भवति ॥ १९ ॥

तीव्रसुत्यग्निष्ठः प्राची च ॥ २० ॥

तीव्रसुत्यग्निष्ठो वर्षिष्ठः, प्राची च यूपपङ्क्तिर्भवति ॥ २० ॥

( रथाक्षमात्रान्तरालपक्षे यूपान्तरालवृद्धिवत् वेदिवृद्धिः )

यथायूपं वेदिवर्द्धनम् ॥ २१ ॥

रथाक्षमात्रान्तरालपक्षे ॥ २१ ॥

( यूपैकादशिन्यां दक्षिणतो द्वादशं यूपं निदध्यात् )

वार्षिष्ठाद्दक्षिणं (१)वितष्टं द्वादशं निदधात्येष त इति ॥२२॥

"द्वादश उपशयो भवति वितष्टस्तं दक्षिणत उपनिदधाति" इति (श०ब्रा०३।७।२।१) श्रुतेः। द्वादशग्रहणाच्च यूप एवायम्। तथा च श्रूयते "उपशयो यूपो भवति"। द्वादश इति च श्रवणात् यूपैकादशिन्यामेव भवति न पञ्चपश्वादाविति ॥ २२ ॥

( द्वादशेऽपि यूपे यूपधर्मा भवन्त्येव )

प्रोक्षणाद्यऽवगूहनात्करोत्यनर्थलुप्तम् ॥ २३ ॥

निखननाभावादवटसम्बन्धोऽनर्थः, सोऽत्र लुप्यते।

केचित् यूपधर्मानत्र नेच्छन्ति। कार्यप्रयुक्तत्वात्तेषाम्। यूपस्य कार्यं पशुनियोगः। स चेह नास्ति। तस्मादप्रवृत्तिर्धर्माणाम्। किं च उपशयो यूपो भवतीति वर्त्तमानापदेशात्। तस्मादप्यप्रवृत्तिर्धर्माणामिति।

---

(१) वितष्टमनष्टाश्रीकृतमिति पितृभूतिः।

अत्रोच्यते। स्यादेतदेवं यदि कार्यप्रयुक्ताः प्रोक्षणादयो भवेयुः। न त्वेते कार्यप्रयुक्ताः। किं तर्हि स्वरूपप्रयुक्ताः। न हि निष्पन्ने यूपस्वरूपे एते विधीयन्ते "यूपं प्रोक्षति यूपमनक्ति यूपं परिव्ययतीति। न च सिद्ध एव यूपोऽस्ति,यत्रैते धर्म्माः क्रियेरन्। तस्मादेभिरेव यूपो भाव्यत इति। यथौदनं पचति सक्तून् पिनष्टीति च। पाकेनौदनमभिनिर्वर्त्तयति पेषणेन च सक्तून्। यत्र पुनः स्वरूपनिष्पत्त्युत्तरकालं धर्मविधानम्, यथाऽऽहवनीयस्य सतः परिधिपरिधानं सम्मार्गश्चेति, तत्र कार्यप्रयुक्तता युक्ता। न चेह तथा। तस्मादप्यकार्यप्रयुक्तता धर्माणाम्। यत्तूक्तं वर्त्तमानापदेशान्न विधानमिति। अत्र ब्रूमः। भवति वर्त्तमानापदेशस्यापि पञ्चमलकारपरिकल्पनया विधायकत्वम्। यथा "आग्नेयोऽष्टाकपालो भवत्यैन्द्र एकादशकपालो भवति"इति। अत उपशयेऽपि धर्म्माणां प्रवृत्तिर्युक्तरूपैवेति न दुरुक्तम् ॥ २३ ॥

( उत्तरस्य यूपस्योच्छ्रयणं कृत्वाऽकृत्वा वा द्वादशस्य निधानम् )

अनुच्छ्रित्य वोत्तरम् ॥ २४ ॥

अस्य क्रिया ॥ २४ ॥

यथोच्छ्रितः सवनीयानालभत एकतृणेनोपाकृत्याग्नेयसारस्वतसौम्यपौष्णबार्हस्पत्यवैश्वदेवैन्द्रमारुतैन्द्राग्नसावित्रवारुणान् ॥ २५ ॥

( यूपोच्छ्रयणक्रमेणोपाकरणपूर्वकमाग्नेयादीन् पशूनालभेत )

उदक्संस्थता मा भूदिति यथोच्छ्रितग्रहणम्। विभवाच्चैकतृणेनेत्युक्तम् ॥ २५ ॥

( पश्वेकादशिन्यामेकयूपपक्षे यूपे आग्नेयं नियुज्योत्तरोत्तरं सारस्वतादीनां गले नियोजनम् )

एकयूपे पश्वेकादशिन्यामाग्नेयं नियुज्य तस्मिंस्तस्मिन्नितरानुदीचः ॥ २६ ॥

एकयूपे यदा पश्वेकादशिनी भवति तत्राग्नेयं नियुज्य तस्मिन्पशावितरानुदीचो रीत्या नियुनक्ति ॥ २६ ॥

( स्तोमायनसंज्ञकातिरिक्तानां पशूनां क्रमेण गमनम्, स्तोमायनानां तु युगपत् )

आग्नेयः प्रथमो गच्छत्यन्वारब्धो ऽनुपूर्व्या इतरे ॥२७॥

स्तोमायने तु युगपद्गमनम् ॥ २७ ॥

दक्षिणं च निघ्नन्त्येनमुत्तरमुत्तरमितरान् ॥ २८ ॥

दक्षिणमाग्नेयं निघ्नन्ति उत्तरमितरान् पशून् ॥ २८ ॥

( पशुगणे उपप्रैषादिकं सर्वं दिग्व्याघारणान्तं तन्त्रेण )

समानमुपप्रेष्यपरिपशव्येसंज्ञपयान्वगन्प्रोक्षण्युल्मुकासिशामित्रान्तर्द्धानप्रच्छेदस्तोकसम्प्रैषशामित्रनुशासनसंत्रादवनस्पतिस्विष्टकृदिडादिग्व्याघारणं समासिच्य प्रभूत्वात् ॥ २९ ॥

प्रभवन्ति ह्येतानि सकृत् कृतानि। स्विष्टकृदिडस्य तु "न द्रव्यभेदे गुणयोगादित्यनेनैव प्राप्तौ सत्यां ग्रहणार्थोऽयमारम्भः। युगपद्दैवतसमनन्तरमेव सौविष्टकृतानामैडानां च ग्रहणं मा भूदिति ॥ २९ ॥

( पशुगणे उखादिकमपि तन्त्रेण )

उखाशूलं वपाश्रपण्यौ च ३० ॥

विभवात् तन्त्रेणाभिसम्बध्यन्त इति प्राप्ते इदमाह—

न वसासन्देहात् ॥ ३१ ॥

नैतानि तन्त्रेण भवन्ति । कुत एतत्। वसासन्देहात्। सन्दिह्यते हि वसा उखैकत्वे। प्रकृतौ चाग्नीषोमीये स्ववसा हुता। इहापि स्ववसैव होतव्या सा च संसृष्टरूपत्वात् न ज्ञायत इति, तस्मादुखाभेदः। तद्भेदाच्च शूलवपाश्रपण्योरपि ॥ ३१ ॥

सौत्रामणीदर्शनाच्च ॥ ३२ ॥

अपि च सौत्रामण्यां शूलभेदो दृश्यते "शूलैश्च मासरेण चावभृथमभ्यवयन्ति" इति ॥ ३२ ॥

नाविरोधात् ॥ ३३ ॥

नैतदेवम् एतानि तन्त्रभावे विरुध्यन्ते। शक्नोति ह्युखा सर्वपशूनां श्रपणं कर्तुम्। तथा शूलं वपाश्रपण्यौ च। यच्चोक्तं वसासन्देहादिति। अत्र ब्रूमः। न हि प्रकृतावयमर्थः स्ववसा होतव्येति। "वसां जुहोति" इति हि श्रूयते। तच्चेहापि न विरुध्यते॥ ३३॥

यत्तूक्तं सौत्रामण्यां भेदो दृश्यते इति।

अत्र ब्रूमः—

पाकवैषम्यात्सौत्रामण्याम् ॥ ३४ ॥

उखाभेदः। विषमो हि तत्र पाकः। पशूनां जातिभेदात् ॥ ३४ ॥

( पशुगणे मनोतावसाहोमौ पृथक् )

मनोतावसाहोमौ कालभेदात् ॥ ३५ ॥

पृथग्भवतः ॥ ३५ ॥

( यूपैकादशिन्यां वशावपामार्जनान्ते शालाद्वार्यसमीपे पत्नी-यूपोच्छ्रयणम् )

यूपैकादशिन्या वशावपामार्जनान्तं कृत्वा शालाद्वार्ये पत्नीयूपोच्छ्रयणं नाभिमात्रस्य ॥ ३६ ॥

वशावपामार्जनान्तग्रहणेऽपि सति गर्भसद्भावे विरोधान्निरूहणान्त-एव कर्त्तव्यम्। शालाद्वार्ये इत्युक्तत्वाच्छालाद्वार्य आहवनीयः। पत्नीयूप इति संज्ञा। स च नाभिमात्रो भवति॥ ३६॥

( वक्ष्यमाणत्वाद्यूपशौ अन्यपशुविपरीतक्रमेण पदार्थाः )

परिस्तरणपात्रसादनप्रोक्षणाज्यनिर्वप-णाधिश्रयणानि कृत्वा स्फ्यादि करोति ॥ ३७ ॥

किमर्थमिदमुच्यते। पशौ हि व्यस्तरूपाः पदार्थाः कृताः। पूर्वं स्फ्यादि ततः परिस्तरणादीनि। इह पुनर्विहितत्वादग्नीनां पौर्णमासिक एव क्रमो न स्फ्यादानादिः॥ ३७॥

इति अष्टमाध्याये अष्टमी कण्डिका।

( पर्यग्निकृतोत्सर्गान्त एव त्वाष्ट्रपशुयागः )

त्वाष्ट्रो बस्तः पर्यग्निकृतमुत्सृजन्ति ॥ १ ॥

ाष्टृदैवतः त्वाष्ट्रः पशुः, (१)बस्तः पूतिगन्धः पशुः । "त्वाष्ट्रं पात्नी-
ालभेत"इति (शाखान्तरे) विधायोच्यते "यत्पर्यग्निकृतं पात्नीवत-
जन्ति" इति ॥ १ ॥

ात्रैतत्सन्दिह्यते । किं द्रव्योत्सर्गोऽयमुत कर्मोत्सर्गस्तदन्ताङ्ग-
विधानम् । किं तावत्प्राप्तम् । द्रव्योत्सर्ग इति । कुत एतत्—

आज्येन सꣳस्थापयतीति श्रुतेः ॥ २ ॥

ाज्येन हि संस्थापनं श्रूयते । उत्सृष्टे द्रव्ये द्रव्यान्तरेण परि-
ानं विधीयते । अपि च संस्थापनं प्रकान्तस्य भवति । प्रकान्त-
ाष्ट्र इति ॥ २ ॥

पशुपर्यग्निकरणाच्च ॥ ३ ॥

ापि च पशोः पर्यग्निकरणं श्रुतम्, पर्यग्निकृतस्य चोत्सर्ग
ते "यत्पर्यग्निकृतं पात्नीवतमुत्सृजन्ति"इति । तस्मादपि द्रव्यो-
ः ॥ ३ ॥

तदन्तं वा कर्मनामधेयात् ॥ ४ ॥

ाशब्दः पक्षव्यावृत्तौ । तदन्तं वा कर्म भवति । कुत एतत् ।
ामधेयात् । पात्नीवतमिति कर्मणो नामधेयम् । तस्य चानन्त-
सर्गसम्बन्धः । व्यवधानान्न पर्यग्निकृतेनेति । तस्मात्पात्नीवत
सर्गो न द्रव्यस्य । यत्तु "आज्येन संस्थापयति"इति श्रूयते, तदनेना-
ेन द्वितीयं कर्म प्रकृतत्वाष्ट्रानुवृत्त्या सहोपध्युपक्रममाज्यसाधनकं
ायते इति । यच्च पशुपर्यग्निकरणादित्युक्तम् पर्यग्निकृतमुत्सृज-
ते, तत् तत्कालार्थम् । पर्यग्निकरणान्ते कर्मोत्स्रष्टव्यमिति ॥ ४ ॥

त्वष्टृवनस्पत्योश्च प्रयाजेष्विज्यादर्शनात् ॥ ५ ॥

अपि च त्वष्टृवनस्पत्योः प्रयाजेष्विज्यां दर्शयति । "यत्त्वष्टारं च
पतिं चावाहयसि क्व नौ यजसि"इति प्रश्नपूर्वकमाह "त्वाष्ट्री नवमी

---

(१) बस्तो मुष्करः, प्रजनयिता । मुष्कावण्डौ, तौ विद्येते यस्य
ुष्करः । 'ऊषसुषिमुष्कमधो रः' इति पाणिनीयेनातिशये रः ।

प्रयाजयाज्या वानस्पत्या दशमी तत्रैनौ भागिनौ करोति" इति । एतच्च कर्म्मोत्सर्ग एवोपपद्यते । द्रव्योत्सर्गे हि द्रव्यान्तरेण त्वष्टृवनस्पती अभीज्येते एवेति । तस्मादपि तदन्ताङ्करोतिविधानमिति । समाप्तिप्रतिषेधश्च भवति "तं न सꣳस्थापयेत्पर्यग्निकृतमेवोत्सृजेत्" इति (श.ब्रा.३।७।२।८) । तच्च कर्मोत्सर्ग एवोपपद्यते न द्रव्योत्सर्गे ॥ ५ ॥

(अग्नीषोमीय वपामार्जनान्ते सूर्यास्तात्प्राक् सोमार्थं नदीतो जलाहरणम्)

अग्नीषोमीयस्य वपामार्जनान्ते वसतीवरिग्रहणꣳ स्यन्दमानानामनस्तमिते ॥ ६ ॥

अग्नीषोमीयग्रहणं त्वाष्ट्रेण व्यवहितत्वात् । तद्वपामार्जनान्ते वसतीवरीणां ग्रहणम् । वसतीवर्यश्च सोमार्था आप उच्यन्ते । "ता वै स्यन्दमानानां गृह्णीयात्" "दिवा गृह्णीयात्" इति (श.ब्रा.।३।९।२।४-६) वचनात् स्यन्दमानानामनस्तमित इत्युक्तम् ॥ ६ ॥

( दैवात्सूर्यास्ते मणिकतो जलाहरणम् )

अस्तमितश्चेन्निनाह्यात्पुरेजानश्चेत ॥ ७ ॥

"स यस्यागृहीता अभ्यस्तमियात्तत्र प्रायश्चित्तिः क्रियते यदि पुरेजानः स्यान्निनाह्याद् गृह्णीयात्" इति (श.ब्रा.३।९।२।८) श्रुतेः । निनाह्यशब्देन च मणिकोऽभिधीयते ॥ ७ ॥

अनीजानोऽन्यस्यापि समीपात्रसितस्य पुरेजानस्य ॥ ८ ॥

निनाह्याद् गृह्णाति ॥ ८ ॥

उभयाभाव (१) उल्कुषीꣳ हिरण्यं वोपर्युपरि धारयन्हविष्मतीरिति ॥ ९ ॥

अनेन मन्त्रेण गृह्णाति ॥ ९ ॥

अग्नेर्व इति निदधाति शालाद्वार्यमपरेण ॥ १० ॥

वसतीवरीः ॥ १० ॥

( सुब्रह्मण्याप्रैषः )

सुब्रह्मण्या च प्रेष्यति पैतापुत्रीयाम् ॥ ११ ॥

---

(१) उल्कुषीमुल्कामित्यर्थः ।

चशब्दान्निधानकाल एव ॥ ११ ॥

आदित्या(१)भ्यये ऽहुतायामपि ॥ १२ ॥

प्राग्वपाहोमादादित्याभ्ययश्चेद् अहुतायामपि गृह्णाति ॥ १२ ॥

दक्षिणाग्निहोमान्तमग्नीषोमीयमस्तमिते सꣳस्थाप्य व्युत्क्रामतेत्याह त्रिः ॥ १३ ॥

वसतीवरीभिर्व्यवधानादग्नीषोमीयग्रहणम् । यद्वा अग्नीषोमीयकर्मैव दक्षिणाग्निहोमान्तमितरे पशवः समिष्टयजुरन्ताः । विहितानि हि तेषां समिष्टयजूंषि "त्रीणि समिष्टयजूꣳषि जुहोति" "पशौ च" "याँ आवह इति वा पशौ" इति (का.श्रौ.५।२।९-१०-११) । अग्नीषोमीयस्य तु प्रतिषिद्धानि "तउपवसथेऽग्नीषोमीयं पशुमालेभिरे" इति (श.ब्रा.९।५।१।२३) प्रकृत्य "तस्मात्तस्य पशोः समिष्टयजूꣳषि न जुहोति" इत्याह (श.ब्रा.९।५ १।२३)। अतोऽग्नीषोमीयवर्जं पश्वन्तरे त्रीणि समिष्टयजूंषि भवन्ति । दक्षिणाग्निहोमश्चाग्नीषोमीयविकारत्वात् सर्वपशूनामस्तमित एवेति सम्प्रदायः ॥ १३ ॥

( शालाद्वार्यस्य पश्चिमतः पत्न्याः, उत्तरवेदेः पश्चिमतो यजमानस्योपवेशनपूर्वकं वसतीवरीसम्बन्धि कर्म )

व्युत्क्रामतेति त्रिरुक्ते—

शालाद्वार्यमपरेणास्ते पत्न्युत्तरवेदिमपरेण यजमान उपस्थे सोमं कृत्वा ॥ १४ ॥

आस्ते इत्यनुवर्त्तते ॥ १४ ॥

शालाद्वार्यमपरेण वसतीवरीः परिहरति ॥ १५ ॥

द्वारेण--

दक्षिणेन निर्हृत्य दक्षिणस्यामुत्तरवेदिश्रोणौ निदधातीन्द्राग्न्योरिति ॥ १६ ॥

अनेन मन्त्रेण ॥ १६ ॥

आहृत्य स्थाने निदधाति ॥ १७ ॥

(१) अभ्ययो ऽस्तसमयस्तत्रेत्यर्थः ।

स्थानं च शालाद्वार्यमपरेण ॥ १७ ॥

कलशं पत्न्यालभते ॥ १८ ॥

कलशशब्देन च तत्संस्काराद् द्रव्योपलक्षणम् ॥ १८ ॥

उत्तरेण परिक्रम्योत्तरस्यां पूर्ववत ॥ १९ ॥

उत्तरेणाग्नीन्परिक्रम्योत्तरस्यामुत्तरवेदिश्रोण्यां निदधाति । पूर्ववदिन्द्राग्न्योरिति ॥ १९ ॥

मित्रावरुणयोरिति वा ॥ २० ॥

विश्वेषां देवानामित्याग्नीध्रे ॥ २१ ॥

वसतीवरीनदधाति ॥ २१ ॥

( आसन्द्यां सोमनिधानादिकम् )

सोमं चासन्द्याम् ॥ २२ ॥

चशब्दादाग्नीध्र एव ॥ २२ ॥

दीक्षितश्च तत्र ताᳬं रात्रिᳬं सोमᳬं रक्षति ॥ २३ ॥

चशब्दान्निधानसमनन्तरमेव रक्षणम् ॥ २३ ॥

सुब्रह्मण्यां च प्रेष्यति । परिवाप्यायै दोहनम् ॥ २४ ॥

परिवाप्याशब्देन गवामपाकृतावस्थोच्यते । या या परिवाप्यावस्था तस्या दोहनमित्येकवचनम् । बह्व्यो हि ता दध्यर्थतया ॥२४॥

आवसथोन्मर्दनालङ्करणदन्तप्रक्षालनान्यध्वर्योरदीक्षितस्याध्वर्योरदीक्षितस्य ॥ २५ ॥

आवसथो वसत्यर्थं गृहम् । उन्मर्दनं चन्दनादि । अलङ्करणं स्रग्मालादि । दन्तप्रक्षालनं दन्तधावनम् । ताम्बूलमित्यपरे । एतान्यध्वर्योरदीक्षितस्य देयानि । अदीक्षितग्रहणाच्च नैषाऽङ्गदक्षिणा, संस्कारमात्रमेतदिति । अतश्चावसथस्यादानं, वसतिमात्रार्थत्वात् ॥ २५ ॥

इति नवमी कण्डिका ।

इत्युपाध्यायकर्कविरचिते कात्यायनसूत्रभाष्ये

अष्टमोऽध्यायः समाप्तः ।

# नवमोऽध्यायः ।

( अपररात्रे सौत्यकर्मोपक्रमः )

(१)अपररात्र ऋत्विजः प्रबोधयन्ति ॥ १ ॥

बहुवचनोपदेशाच्च यजमानेन सह केचनाप्राकृताः। "तान् सम्प्रबोधयन्ति ते ऽप उपस्पृश्याग्नीध्रमुपसमायन्ति त आज्यानि गृह्णत" इति श्रुतेः (श०ब्रा०३।९।३।१) । आज्यग्रहणेन च परिस्तरणाद्याक्षिप्तमत्राभिधीयते ॥ १ ॥

अप उपस्पृश्य शालाद्वार्ये परिस्तरणपात्रसंसादनप्रोक्षणाज्यनिर्वपणाधिश्रयणस्रुक्सम्मार्जनोद्वासनावेक्षणानि कृत्वाऽऽग्नीध्र उत्पूय पश्वाज्यग्रहणम् ॥२॥

शालाद्वार्यग्रहणं च श्रपणनियमार्थम् आहवनीये मा भूदिति । पश्वाज्यग्रहणमिति । कुत एतत् । पशोर्हि चोदनोपरिष्टात् । इहैव कस्मात्पशुर्न चोदितः । ब्राह्मणे ह्याश्विनान्ते विहितः "आश्विनं ग्रहं गृहीत्वा त्रिवृता यूपं परिवीयाग्नेयं पशुमुपाकरोति" इति । तदर्थमेतदिति पश्वाज्यग्रहणमित्युक्तम् ॥ २ ॥

आज्यान्यादाय सोमं चार्थवच्चाहवनीय इध्मप्रोक्षणादि करोति ॥ ३ ॥

अर्थवद्ग्रहणेन च ग्रावद्रोणकलशादीन्युच्यन्ते । तानि हि तत्र निहितानि । आहवनीय एव यदिध्मप्रोक्षणं तदादि करोति । आहवनीयग्रहणात् । एवं च कृत्वा यदधस्तनमिध्मप्रोक्षणं तन्न भवति । सकृत्प्रोक्षित एवेध्मः सवनीये तद्विकारे च ॥ ३ ॥

( सवनीयपशौ तद्विकारेच एकवृत्स्तरणम् )

अग्नीषोमीयवत्स्तरणम् ॥ ४ ॥

---

( १ ) उक्तमौपवसथ्यं कर्म । इदानीं सौत्यमुच्यते ।

प्राप्त एवैतस्मिन् पुनर्वचनमुपसंहारार्थं प्रस्थितशब्दवत् । यथा प्रस्थितशब्दः सौत्रामण्यामुपसंहृत इति । ततश्चान्येषां पशूनां त्रिवृदेव स्तरणं नैकवृदिति ॥ ४ ॥

( समविभक्तस्य सोमस्य अर्धं चर्मण उपरि स्थापितेषु ग्रावसु रथादवतारयेत् )

आऽऽज्यासादनात् कृत्वेषान्तरेणार्द्धसोममद्रिषु सम्मुखेषु निदधाति हृदे त्वेति ॥ ५ ॥

आज्यासदानान्तत्वेऽपि सत्यात्मालम्भनान्ते एव ईषान्तरेण सोमोपावहरणं कर्त्तव्यम् । ल्यबादेशसामर्थ्यात् "आसाद्य हवींषि सम्मृशति" इति । पूर्वनिपाताच्चार्द्धशब्दस्य समविभक्तस्यार्द्धं द्रष्टव्यम् । अद्रीणां च संमुखता सहकारिणां पठ्यते "स्थवीयाꣳस्यभ्यन्तराणि तानि मुखानि" इति ॥ ५ ॥

( याजमानमुपस्थानम् )

विश्वास्त्वामिति विसृज्योपतिष्ठते ॥ ६ ॥

विसर्गस्यालम्भपूर्वकत्वाद्याजमानमुपस्थानम् । आलम्भस्य याजमानत्वात् ॥ ६ ॥

एतेनाहरणꣳ सोमार्थस्याभिषवे ॥ ७ ॥

एतेनेतीषान्तरालमभिधीयते । तेनाहरणं सोमार्थस्याभिषवे वर्तमाने ॥ ७ ॥

नोद्धरणं ततो बहिर्द्धाभावात् ॥ ८ ॥

तेनोद्धरणं न कर्तव्यम् । बहिर्धा मा भूदिति ॥ ८ ॥

अभिषुतस्य चानवहरणं कृतत्वात् ॥ ९ ॥

अभिषुतस्य सतः शुष्काभिषवे तेन मार्गेणावहरणं(१) न कर्त्तव्यम् । कृतत्वात्संस्कारस्य ॥ ९ ॥

( पक्षिणां शब्दकरणात्पूर्वं प्रातरनुवाकोपाकरणम् )

प्राग्वाचं प्रवदितोः प्रातरनुवाकोपाकरणं दे-

(१) अवहरणमधिषवणे प्रक्षेप इत्यर्थः ।

देवेभ्यः प्रातर्यावभ्यो ऽनुब्रूहीति समिध-
मादधत् ॥ १० ॥

वयसां वाचः प्रवदनात्पूर्वं प्रातरनुवाकस्योपाकरणं "देवेभ्यः प्रातर्यावभ्योऽनुब्रूहि" (श०ब्रा०३।९।३।९) इति समिधमादधत् ॥ १० ॥

देवेभ्य इत्येके ॥ ११ ॥

प्रातरनुवाकमुपाकुर्वन्ति ॥ ११ ॥

सुब्रह्मण्यां च प्रेष्यति ॥ १२ ॥

चशब्दादनन्तरम् ॥ १२ ॥

प्रातरनुवाकं जाग्रदुपासीताध्वर्युः ॥ १३ ॥

"जाग्रद्धैवाध्वर्युरुपासीत"इति (श.ब्रा.३।६।३।११) वचनात् ॥१३॥

स्वप्याद्वा ॥ १४ ॥

"तस्मादु काममेव स्वप्यात्"इति श्रुतेः (श.ब्रा.३।९।३।११)। वचनाद्विकल्पः ॥१४॥

( प्रातरनुवाके होत्रा शस्यमाने इन्द्रादिदेवताकेष्टिः )

अग्नीदैन्द्रमेकादशकपालं निर्वपति, हरिभ्यां धानाः, पूष्णे करम्भं, सरस्वत्यै दधि, मित्रावरुणाभ्यां पयस्याम् ॥ १५ ॥

"इन्द्रस्य पुरोडाशो, हर्योर्धानाः, पूष्णः करम्भः, सरस्वत्यै दधि, मित्रावरुणयोः पयस्या" इति (श०ब्रा०४।२।५।२२) वचनात् ॥ १५ ॥

( हरिवदादिगुणविशिष्टेन्द्रदेवताका वेष्टिः )

इन्द्राय वा हरिपूषसरस्वतिमित्रावरुणवते धानादीनि यथासंख्यम् ॥ १६ ॥

वाशब्दः पक्षव्यावृत्तौ । इन्द्राय वैतद्गुणविशिष्टाय धानादीनि भवन्ति। कुत एतत् । "सर्व ऐन्द्रा भवन्ति"इति (श.ब्रा.४।२।५।१७) वचनात्। यत्तु हर्योर्धाना इति, तद् गुणेन देवताऽभिधानं लक्षणया।

यथा "स्विष्टकृते समवद्यति" इति । एवं च प्रैषवचनम् "इन्द्रो हरिवान् धाना अत्तु, पूषण्वान् करम्भं, सरस्वतीवान्दधि, मित्रावरुणवान्पयस्याम्" इति । तस्मादिन्द्राय हरिवदादिविशिष्टाय धानादीनि ॥ १६ ॥

इति नवमाध्याये प्रथमा कण्डिका

(सोमपात्राणां विशिष्टे देशे उन्नेतृकर्तृकं स्थापनम्)

उन्नेतुः पात्रयोजनम् ॥ १ ॥

वचनाद्भवति ॥ १ ॥

खरोत्तरपूर्वार्द्ध उपांᳪश्वन्तर्यामयोः ॥ २ ॥

पात्रयोजनम् ॥ २ ॥

तयोश्च—

दक्षिणमुपांᳪशोः ॥ ३ ॥

पात्रं भवति ॥ ३ ॥

तदपरेण द्विदेवत्यानि प्रत्यञ्चि ॥ ४ ॥

रीत्या ॥ ४ ॥

तेषां च—

रास्नावदैन्द्रवायवम् ॥ ५ ॥

रास्ना च मेखलोच्यते ॥ ५ ॥

अजकावं मैत्रावरुणम् ॥ ६ ॥

पात्रम् । अजकावशब्देन अजागलस्तनावुच्येते । अजागलस्तनाविव स्तनौ यस्य तत् अजकावम् । संज्ञेत्यपरे । "गाण्ड्यजकात्संज्ञायाम्" इति(१) ॥ ६ ॥

औष्ठमाश्विनम् ॥ ७ ॥

ओष्ठवदित्यर्थः ॥ ७ ॥

(१) सिद्धान्तकौमुद्यां तु गाण्डयजगादिति पाठो दृश्यते । उदाहृतं च तत्र अजगवं पिनाक इति ।

दक्षिणपूर्वार्द्धे शुक्रामन्थिनोः ॥ ८ ॥

तयोः—

दक्षिणः शुक्रस्य ॥ ९ ॥

आग्रयणस्थाली मध्ये ॥ १० ॥

खरस्य ॥ १० ॥

तस्याश्च—

दक्षिणोक्थ्यस्थाली सपात्रा ॥ ११ ॥

तथाऽऽदित्यस्थाल्युत्तरा ॥ १२ ॥

सपात्रा ॥ १२ ॥

तस्या एव—

ऋतुपात्रे पूर्वे स्रुक्पुष्कराकृती उभयतोमुखे काष्मर्यमये आश्वत्थे वा ॥ १३ ॥

आग्रयणस्थाल्याः पूर्वे ॥ १३ ॥

ऊर्ध्वानीतराणि प्रादेशमात्राणि मध्यसङ्गृहीतानि ॥ १४ ॥

( जीवन्मेषरोमनिमितमन्यतरतोदशं पवित्रं द्रोणकलशे निदध्यात् )

आग्रयणादपरां (१) परिप्लवाᳬ स्रुक्पुष्करा-म् । अधोऽधोऽक्षं प्रत्यञ्चं द्रोणकलशमत्युह्योपर्यु-पर्यक्षं पवित्रमस्मिन्करोति ॥ १५ ॥

---

(१) परि समन्तात्प्लवते गच्छतीति परिप्लवा चञ्चला, तया च द्रोणकलशादुद्धरणं क्रियते। अथवा परिप्लवेत्यस्या यौगिकी सञ्ज्ञा संव्यवहारार्था, एषा च द्रोणकलशमध्ये निहिता सती लघुत्वात्परिप्लवत इति याज्ञिकदेवः।

अधोऽधोऽक्षमित्यक्षस्याधस्तात् उपर्युपर्यक्षमित्युपरिष्टादक्षस्य नीत्वा पवित्रमस्मिन्करोति ॥ १५ ॥

शुक्लं जीवोर्णानाम् ॥ १६ ॥

शुक्लं जीवोर्णानामित्यनैडकीनामूर्णानाम् ॥ १६ ॥

( उभयतोदशं पवित्रम्परिप्लवायां निदध्यात् )

उभयतोदशं परिप्लवायाम् ॥ १७ ॥

पवित्रं करोति । अन्यतरतोदशं द्रोणकलशे ॥ १७ ॥

पूर्वेणोपस्तम्भनमुत्तरं ध्रुवस्थालीमनन्तर्हिते ॥ १८ ॥

उत्तरस्यानस उपस्तम्भनस्य पुरस्तात् अनन्तर्हिते ध्रुवस्थालीं स्थापयति । तां हि प्रकृत्य श्रूयते "अथैतं व्युह्य न तृणं चनान्तर्धाय" इति (श.ब्रा.४।२।४।२४) ॥ १८ ॥

धुरि प्रचरणीम् ॥ १९ ॥

धूःशब्दश्च शम्यान्तरालवाचक इत्युक्तम् (का.श्रौ.२।३।१३) । तत्र प्रचरणीं स्थापयति ॥ १९ ॥

पूर्वेणाक्षमुपरि पूतभृतम् ॥ २० ॥

उत्तरस्यैवानसोऽक्षस्य पुरस्तादुपरि पूतभृतं करोति ॥ २० ॥

तस्यैव—

परेणाधवनीयम् ॥ २१ ॥

प्रागक्षाद्दशचमसान्त्सवृन्तानधः ॥ २२ ॥

प्रत्यगेकधनानयुग्मानुदहरणांस्त्रिप्रभृत्यापञ्चदशभ्यः॥२३॥

अभूदुषा रुशत्पशुरित्युच्यमाने-

इति नवमाध्याये द्वितीयकण्डिका ।

( प्रचरणीहोमादयः )

चतुर्गृहीतं प्रचरण्या जुहोति शृणोत्वग्निरिति ॥ १ ॥

"अभूदुषा रुशत्पशुः"इत्यस्मिन्मन्त्रवाक्ये होत्रोच्यमाने चतुर्गृहीतं प्रचरण्या जुहोति "शृणोत्वग्निः" इति । स चायं कालार्थः संयोगः, कर्तृभेदात् पृथगर्थत्वाच्च नाङ्गाङ्गिलक्षण इति ॥ १ ॥

अपरं गृहीत्वोदङ् गच्छन्नाहाप इष्य होतरिति ॥ २ ॥

"अथापरं चतुर्गृतहीतमाज्यं गृहीत्वोदङ् प्रयन्नाहाप इष्य होतः"इति (श.ब्रा.३।९।३।१५) श्रुतेः ॥ २ ॥

प्रेष्यति च मैत्रावरुणस्य चमसाध्वर्यवेहि, नेष्टः पत्नीरुदानयै,कधनिन एता,ग्नीध्रात्वाले वसतीवरीभिः प्रत्युपतिष्ठासै होतृचमसेन चेति ॥ ३ ॥

अर्थभेदाच्चत्वारः प्रैषाः । प्रयोजनं सावसानमुच्चारणम् । चशब्दाद्गच्छन्नेव ॥ ३ ॥

अपो गत्वा देवीराप इत्यप्सु जुहोति ॥ ४ ॥

चतुर्गृहीतम् ॥ ४ ॥

कार्षिरसीति मैत्रावरुणचमसेनाज्यमपोहति ॥ ५ ॥

"अथ मैत्रावरुणचमसेनैतामाहुतिमपप्लावयति, कार्षिरसि"इति ( श.ब्रा.३।९।३।२६ ) वचनात् ॥ ५ ॥

समुद्रस्य त्वेति तेन गृह्णाति ॥ ६ ॥

मैत्रावरुणचमसेनापः ॥ ६ ॥

एकधनांश्चोन्नयन्ति ॥ ७ ॥

बहुवचनोपदेशात् एकधनिन एव । क्रियापदस्य स्वशब्दाभिधानाच्चशब्दो मन्त्रानुकर्षणार्थः ॥ ७ ॥

पाञ्चजनांश्च पत्न्यो द्वौ द्वौ ॥ ८ ॥

चशब्दादुन्नयन्ति । तथा च मन्त्रस्याप्रवृत्तिः । पत्नीशब्दे च

बहुवचनमुच्चारणार्थम्। बहुत्वस्यैकान्ततोऽभावात् ॥ ८ ॥

प्रत्येत्य चात्वालस्योपरि मैत्रावरुणचमसं वसतीवरीश्च सꣳस्पर्शयति समाप इति ॥ ९ ॥

मैत्रावरुणचमसस्था अपो वसतीवरीश्च संलगयति "समाप" इत्यनेन मन्त्रेण। प्रत्येत्येत्यवाच्यम्। अर्थप्राप्तत्वात्। उच्यते च। तत् किमर्थम्। सर्वेष्वागतेषु, नाध्वर्यावेवेति ॥ ९ ॥

इतरेतरस्मिन्व्यानयन्त्येके। मैत्रावरुणचमसे प्रथमम॥१०॥

संस्पर्शनव्यानयनयोर्विकल्पो, मन्त्रस्तु प्रवर्त्तत एव ॥ १० ॥

होतृचमसे वसतीवरीः कृत्वा यजमानाय प्रयच्छति निग्राभ्याः ॥ ११ ॥

ताः संज्ञाः संव्यवहारार्थाः। निग्राभ्यास्तु वाचयति निग्राभ्यास्वासिञ्चतीति चैवमर्थाः ॥ ११ ॥

होत्रा पृष्टः प्रत्याहोतेव नंनमुरिति ॥ १२ ॥

'अवेरपोऽध्वर्यो' इत्येवं होत्रा पृष्टोऽध्वर्युः प्रत्याह"उतेव नंनमुः"इति ( श.ब्रा.३।९।३।३१ ) ॥ १२ ॥

प्रचरणीसꣳस्रवमग्निष्टोमे जुहोत्यभावे चतुर्गृहीतं यमग्न इति ॥ १३ ॥

प्रचरणीसंस्रवमग्निष्टोमसंस्थे क्रतौ जुहोति "यमग्न" इति। तदभावे चतुर्गृहीतम्। "यद्यु नालꣳ होमाय स्यादपरं चतुर्गृहीतमाज्यं गृहीत्वा जुहोति"इति ( श.ब्रा.३।९।३।३२ ) ॥ १३ ॥

उकूथ्ये प्रथमं परिधिमालभते ॥ १४ ॥

अनेनैव मन्त्रेण ॥ १४ ॥

प्रविशत्येवान्यत्र ॥ १५ ॥

एवकारकरणादमन्त्रकं प्रवेशनम्, षोडशिन्यतिरात्रे च। तावेव हि प्रकृत्योच्यते"समुद्यैव तूष्णीमेत्य प्रपद्येत" इति (श.ब्रा.३।९।३।३३) ॥१५॥

ररराट्यालम्भनं वा षोडशिनि ॥ १६ ॥

अनेनैव मन्त्रेण ॥१६॥

छदिरतिरात्रे ॥ १७ ॥

मन्त्रेण आलभ्यते । वाशब्दो विकल्पार्थः । षोडश्यतिरात्रयोः तूष्णीं वा प्रविशति, रराट्याछदिषी वा मन्त्रेणालभत इति ॥१७॥

अतीत्य दक्षिणेन होतारं मैत्रावरुणचमसमाधवनीयेऽवनयति, वसतीवरीतृतीयं च "अग्निः प्रातःसवने पात्वस्मान्वैश्वानरो महीनां विश्वशम्भूः । स नः पावको द्रविणं दधात्वायुष्मन्तः सहभक्षाः स्यामे''ति ॥ १८ ॥

"अग्निः प्रातःसवने" इत्यनेन मन्त्रेण ॥१८॥

तावच्चैकधनानाम् ॥ १९ ॥

अवनीयते । युगपदवनयनम् ।अशक्यत्वात् भेदेनेत्यपरे ॥१९॥

एकधनस्थान उभयशेषन्निधाय-

इति नवमाध्याये तृतीया कण्डिका ।

---

अधिषवणे पर्युपविशन्ति ॥ १ ॥

वसतीवरीशेषमेकधनशेषं च एकधनस्थाने निधाय अधिषवणफलकयोः समन्तादुपविशन्ति ॥ १ ॥

उत्तरतोऽध्वर्युयजमानौ ॥२॥

तयोश्च—

पूर्वोऽध्वर्युः । अपरेण परीत्येतरे त्रयः ॥३॥

अध्वर्युपुरुषा हविर्द्धानापरान्ते उपविष्टानामुद्गातॄणामप्यपरेण । प्रतिप्रस्थाता प्रतिहर्त्तारमन्तरेण । उक्तो ह्यन्तर्बहिर्भाव "ऋत्विजां च यथापूर्वम्''इति ॥ ३ ॥

देवस्य त्वेत्यद्रिमादाय वाचं यच्छति प्राग्घिङ्कारात् ॥४॥

स उपा॑ᳪशुसवनः ॥५॥

तस्य उपा॑ᳪशुसवन इति वैदिकी संज्ञा संव्यवहारार्था । "तमुपा॑ᳪशुसवनेन मेक्षयति" इत्येवमाद्यर्था ॥ ५ ॥

निग्राभ्यासु वाचयत्युरस्येना निगृह्य निग्राभ्या स्थेति॥६॥

निग्राभ्यास्वित्यधिकरणासम्भवादालम्भसप्तमीयम् ॥ ६ ॥

उपा॑ᳪशुसवने सोमं मिमीत इन्द्राय त्वा वसुमते रुद्रवत इति पञ्चकृत्वः प्रतिमन्त्रम् ॥ ७ ॥

मिमीते प्रक्षिपति ॥ ७ ॥

यत्त इति मितालम्भनम् ॥ ८ ॥

यत्त इत्यनेन मन्त्रेण मितस्य सोमस्यालम्भनं करोति । अयं मन्त्रश्चोदितार्थाभिधायी ॥ ८ ॥

प्रतिप्रस्थाताऽᳪशून्षडादत्तेऽङ्गुल्यन्तरेषु द्वौ द्वौ कुरुते ॥ ९ ॥

मितात् सोमात् । स चायमुपदेशो ग्रहणार्थः ॥ ९ ॥

श्वात्रा स्थेत्यासिञ्चति निग्राभ्याः ॥ १० ॥

मिते सोमे ॥ १० ॥

प्रहरिष्यन्द्वेष्यं मनसा ध्यायेदमुष्मा अहं प्रहरामि न तुभ्यᳪ सोमेति॥ ११ ॥

"अथ प्रहरिष्यन्यं द्विष्यात्तं मनसा ध्यायेदमुष्मा अहं प्रहरामि न तुभ्यम्" इति (श.ब्रा.३।९।४।१७) वचनात् ॥ ११ ॥

अभावे तृणम् ॥ १२ ॥

मनसा ध्यायेत् । "यद्यु न द्विष्यादपि तृणमेव मनसा ध्यायेत्" इति (श.ब्रा.३।९।४।१७) वचनात्। स चायं पदार्थः क्रत्वर्थः । तृणाभिध्यानविधानात् ॥ १२ ॥

मा भेरिति प्रहरति ॥ १३ ॥

"मा भेः" इत्यनेन मन्त्रेण प्रहरति सोमे ॥ १३ ॥

एवं त्रिरभिषुणोत्यासेचं निग्राभ्याः ॥ १४ ॥

एवमभिषवं त्रिःकृत्वः करोत्यासिच्यासिच्य निग्राभ्याः ॥ १४ ॥

अष्टकृत्व एकादशकृत्वो द्वादशकृत्वः ॥ १५ ॥

प्रहारसंख्येयम् ॥ १५ ॥

सर्वे पञ्चवर्गाः पशुकामस्य । अष्टवर्गा ब्रह्मवर्चसकामस्य ॥ १६ ॥

गुणफलसम्बन्धोऽयम् ॥ १६ ॥

प्रतिवर्गं निग्राभं वाचयति होतृचमसेऽल्पानꣳशूनवधाय प्रागपागिति ॥ १७ ॥

प्रतिप्रहारवर्गं होतृचमसेऽल्पानꣳशूनवधाय "प्रागपागिति निग्राभं वाचयति ॥ १७ ॥

अद्रिणा चतुर्थम् ॥ १८ ॥

अद्रिणा होतृचमसे प्रक्षिप्तेन चतुर्थं वाचनम् ॥ १८ ॥

तूष्णीं वा ॥ १९ ॥

वाशब्दो विकल्पार्थः । तथा चाद्रिप्रक्षेपमात्रं भवति ॥ १९ ॥

उपाꣳशुं च गृह्णाति वाचस्पतये देवो देवेभ्यो मधुमतीरिति ॥ २० ॥

चशब्दात्प्रतिवर्गम् ॥ २० ॥

प्रतिप्रस्थातोपगृह्णाति पात्रम् ॥ २१ ॥

प्रतिप्रस्थातोपाꣳशुपात्रं गृह्णाति गृह्यमाणे ग्रहे ॥ २१ ॥

आत्तानां च द्वौ द्वावन्तर्दधाति ग्रहणभेदात् ॥ २२ ॥

आत्तानामꣳशूनां चशब्दात्प्रतिप्रस्थाताऽङ्गुल्यन्तरेषु द्वौ द्वावन्त-

र्दधाति गृह्यमाणे ग्रहे । द्वौ द्वाविति कुत एतत् । ग्रहणभेदात् । भिन्नानि हि त्रीणि ग्रहणानि । षडंशवः । अतो द्वौ द्वावित्युक्तम् ॥२२॥

किं च—

मन्त्रलिङ्गाच्च ॥ २३ ॥

"अꣳशुभ्यां गभस्तिपूत" इति ॥ २३ ॥

षड्वा श्रुतिसामर्थ्यात् ॥ २४ ॥

षडपि वाऽन्तर्दधाति । "षड्भिः पावयति" इति (श.ब्रा.४।१।१।२) श्रुतिसामर्थात् । एवं श्रुतिः समर्था सङ्गतार्था भवति । एवं च पक्षद्वयोपन्यासेऽपि पूर्व एव पक्षः सम्प्रदाये अङ्गीकृतः । उक्तहेतुत्वात् । षड्भिः पावयतीत्यत्र कथम् । त्र्यवयवे ग्रहणे द्वाभ्यां द्वाभ्यामन्तर्धीयमानाभ्यां षड्भिः पूत एव भवति ॥ २४ ॥

यत्त इत्याचान्तसोमे निदधाति ॥ २५ ॥

"यत्त" इत्यनेन मन्त्रेणात्तानंशूँल्लुतासोमे निदधाति ॥ २५ ॥

परिमृज्याऽसादनमुपाꣳश्वन्तर्यामयोः ॥ २६ ॥

ग्रहेषु यत्परिमृज्य सादनमुक्तं तदिह प्रतिषिध्यते ॥ २६ ॥

अभिचरन्त्सादयेदविसृजन्नमुष्य त्वा प्राणꣳ साद-यामीति । उदानमित्यन्तर्यामम् ॥ २७ ॥

अभिचरन्त्सादयत्यविमुञ्चन् "अमुष्य त्वा प्राणꣳ सादयामि" इत्यनेन मन्त्रेण । अमुष्येति चाभिचर्यमाणस्य षष्ठ्यन्तेन नामादेशः ॥ २७ ॥

पाणिना चापिदधात्यमुष्य त्वा प्राणमपि-दधामीति । उदानमित्यन्तर्याममम् ॥ २८ ॥

चशब्दादभिचरन्नेव ॥ २८ ॥

स्वाहेत्युरकोर्वन्तरिक्षमिति निष्क्रमणम् ॥ २९ ॥

हविर्धानात् ॥ २९ ॥

अन्वारभतेऽन्यस्मै प्रदाय होतृचमसम् ॥ ३० ॥

यजमानोऽध्वर्युम् ॥ ३० ॥

वरं वृत्वा ददाति च ॥ ३१ ॥

वरवरणं च यज्ञसमाप्तिप्रार्थनम्। यद्यपि च श्रूयते "तेऽस्मा एतं वरꣳ समर्द्धयन्ति क्षिप्रे न इमं ग्रहं जुहवदिति" (श.ब्रा.४।१।१।२१) तथापि यागपरिसमाप्तिरेवास्मिन्ग्रहे आशंसितेति। उत्तमप्रयाजवत्। एवं श्रूयते "ते प्रातःसवन एव सर्वं यज्ञꣳ समस्थापयन्निति (श.ब्रा. ४।१।१।७)। ददाति च वरम्॥ ३१॥

स्वां कृत इति हुत्वा पात्रमुन्मार्ष्टि ॥ ३२ ॥

"स्वां कृत" इति हुत्वा ग्रहं, तत्पात्रमूर्ध्वमुन्मार्ष्टि ॥ ३२ ॥

प्रथमे परिधा उत्तानं पाणिं प्रागुपमार्ष्टि देवेभ्यस्त्वेति ॥ ३३ ॥

उत्तानग्रहणाच्चाधःपरिधि भवति ॥ ३३ ॥

वासउरोबाहुषु श्लिष्टमꣳशुमभिचरञ्जुहुयाद्देवाꣳशविति ॥ ३४ ॥

आग्रयणस्थाल्याꣳ शेषैकदेशमासिच्याꣳशुं प्रास्यति तृतीयसवनाय ॥ ३५ ॥

उपाꣳशुपात्रशेषश्चासावेकदेशश्चेति शेषैकदेश इति सम्प्रदायः। उपांश्वन्तर्यामयोः शाखान्तरे शेषभक्षप्रतिषेधात् ॥ ३५ ॥

प्राणाय त्वेति पात्रसादनम् ॥ ३६ ॥

"प्राणाय त्वेत्युपांशुपात्रासादनम्। सादयामीत्यध्याहारः ॥३६॥

उपाꣳशुसवनं पाणिना प्रमृज्योदञ्चं व्यानाय त्वेति सꣳस्पृष्टम् ॥ ३७ ॥

उदञ्चमुदङ्मुखम्। मुखं चास्य येनाभिषवः कृतः। उपांशुपात्रसंस्पृष्टं सादयति "व्यानाय त्वेत्यनेन मन्त्रेण ॥ ३७ ॥

इति नवमाध्याये चतुर्थी कण्डिका।

उपांशवभिषवोऽभिहितः । इदानीं महाभिषवविशेषव्याचिख्यासयेदमुच्यते—

उपविष्टयोरभिषुण्वन्ति चत्वारः पर्युपवेशनसामर्थ्यात् ॥ १ ॥

उपांश्वभिषवे ह्येकोऽभिषोता अष्टौ कृत्वोऽभिषुणोत्येकवचननिर्देशात् । इह चत्वारोऽभिषुण्वन्ति । कुत एतत् । "अथाधिषवणे पर्युपविशन्ति" ( श.ब्रा.३।९।४।१ ) इत्येतद्वचनं समर्थं सङ्गतार्थं भवति । परि समन्तादुपविशन्ति पर्युपविशन्तीति ॥ १ ॥

आप्यायनान्तोऽभिषवस्त्रिपर्यायः ॥ २ ॥

पर्यायत्रयान्ते आप्यायनं भवति ॥ २ ॥

मत्या ॥ ३ ॥

तत्रामतिरुक्ता । इह मत्या प्रहरणम् । मतिशब्दश्चेच्छावाची । यावता रसप्रच्युतिर्भवति ॥ ३ ॥

पर्यायादिषु निग्राभ्यासेचनम् ॥ ४ ॥

रसप्रच्युत्यर्थं क्रियते ॥ ४ ॥

प्रथमे वा प्रभूत्वात् ॥ ५ ॥

वाशब्दः पक्षान्तरपरिग्रहे । प्रभवति हि प्रथमपर्याये सिक्तमुदकं रसप्रच्युत्यै । उपांशवभिषवे तु प्रतिपर्यायमासेको युक्तः, प्रतिपर्यायमेव हि तत्र ग्रहणमिति । इह पुनर्न तथा ॥ ५ ॥

निग्राभान्ते सरसानꣳशून्त्सम्भरण्याऽऽधवनीयेऽवधायावधूयाहरति ॥ ६ ॥

निग्राभवाचनान्ते सम्भरण्या सरसानंशूनादायाधवनीयेऽवधायावधूयाहरति ॥ ६ ॥

एवं द्विरपरम् ॥ ७ ॥

एवमेव द्विरपरमभिषवकर्म कर्त्तव्यम् ॥ ७ ॥

पूर्ववन्निग्राभ्याः ॥ ८ ॥

निग्राभान्ते उक्तेऽपि पुनार्नग्राभ्यावचनमद्रिणा चतुर्थप्रतिपत्त्यर्थम् ॥ ८ ॥

इदानीं लाघवायाभिषवयोरुभयोरथैक्यप्रतिपादनायेदमाह—

पूर्वे वोपा॑ᳪशुं गृहीत्वा गृहीत्वाऽऽप्यायनसम्भरणे कृतत्वात् ॥ ९ ॥

पूर्वाभिहिते पत्रोपांश्वभिषवे उपांशुं गृहीत्वा गृहीत्वाऽऽप्यायनसम्भरणे क्रियेते । नहि तत्र ते कृते इति । एवं चाभिषवयोर्युगपदनुष्ठाने लाघवमिति ॥ ६ ॥

धर्ममात्रं पर्युपवेशनम् ॥ १० ॥

नन्वेवं सति पर्युपवेशनमसमर्थम् । सोमक्रयणीपदपर्युपवेशनवद्धर्ममात्रमित्यदोषः ॥ १० ॥

अभिषवविपर्यासो वाऽभिमृष्टादᳪशूनपकृष्य निग्राभ्याश्चानुपूर्व्ययोगादनात्तस्य चाभिमानसामर्थ्यात्॥ ११ ॥

अभिषवद्वित्वं वा भवति ।।द्वित्वे च सति विपर्यासोऽभिषवयोः । कुत एतत् । आनुपूर्व्ययोगात् । आनुपूर्व्येण हि क्रमेण द्वावप्याम्नातौ । अध्वरान्त्ये हि ब्राह्मणे महाभिषवो, ग्रहाद्येउपांश्वभिषव इति । मन्त्राणामप्येवमेवानुपूर्व्ययोगो भवति । उत्तरो ह्युपांशुग्रहमन्त्रपाठः । अत एव चाभिमृष्टादंश्वपकर्षो निग्राभ्याणां च कर्त्तव्यः । न ह्यन्यथा द्वित्वानुपूर्व्यं सम्भवतः । अपि चानात्तरसे सोमे सोमाभिमानो भवति सोमबुद्धिर्भवति । तस्मादप्यंश्वपकर्षः । अथवाऽभिमानसामर्थ्यादितिमीङ् हिंसायाम् । अनात्तरसे सोमे हिंसा क्रियमाणा समर्था भवति । उपांशुग्रहणोत्तरकाले हि हिंसा क्रियमाणा असमर्थिका ॥ ११ ॥

ऋजीषभावाच्च ॥ १२ ॥

प्रत्युत द्रव्यान्तरबुद्धिर्भवति । तस्मादप्यंश्वपकर्षः । अतोऽभिषवद्वित्वम् । द्वित्वे च विपर्यास इति ॥ १२ ॥

प्रोह्य द्रोणकलशमृजीषमुखेष्वद्रिषु निदधत्युद्गातारः॥ १३॥

प्रपूर्वस्य वहेः कृतसम्प्रसारणस्यैतद्रूपं प्रोह्येति । अभिषवणफल-

प्रदेशमूढ्वेत्यर्थः । ऋजीषमुखेष्वद्रिषु निदधत्युद्गातारः ॥ १३ ॥

पवित्रं च वितन्वन्त्युदक् ॥ १४ ॥

पवित्रमन्यतरतोदशमुदगग्रम् अवाङ्नाभि वितनुयुः । एवमेव हि छान्दोग्ये श्रूयते इति ॥ १४ ॥

स्वयं वाऽकुर्वत्सु ॥ १५ ॥

स्वयमध्वर्युः करोत्यकुर्वत्सूद्गातृषु ॥ १५ ॥

आधवनीयादुन्नेता निग्राभ्यास्वासिञ्चति । ताः पवित्रे यजमानः ॥ १६ ॥

आसिञ्चति ॥ १६ ॥

ततो ग्रहग्रहणमाध्रुवान्माध्यन्दिने च पञ्च प्रथमान् ॥ १७ ॥

तत एव धारायां गृह्णाति ॥ १७ ॥

शुक्रो द्रोणकलशे ॥ १८ ॥

द्रोणकलशे यः सोम आपतति तस्य शुक्र इतीयं संज्ञा संव्यवहारार्था ॥ १८ ॥

ततोऽन्येऽनादेशे ॥ १९ ॥

ततः शुक्रादन्ये ग्रहा गृह्यन्ते । येषां योनिर्नादिष्टा ॥ १९ ॥

सावित्रपात्नीवतहारियोजनोपक्षीणानाग्रयणात् ॥ २० ॥

उपक्षीणांश्च ( कालभूयस्त्वेन शुष्कान् ) गृह्णाति ॥ २० ॥

पूतभृतश्चमसान् ॥ २१ ॥

गृह्णाति ॥ २१ ॥

तृतीयसवने वैश्वदेवम् ॥ २२ ॥

पूतभृत एव । अन्याभावादवाच्यमिति चेत् । स्यान्न्यायोपप्रदर्शनार्थत्वात् ॥ २२ ॥

अनादिष्टांश्चेहोन्नयनश्रुतेः ॥ २३ ॥

अनादिष्टयोनींश्च पूतभृत एव गृह्णाति । "अतो हि देवेभ्य उन्नय-

न्यतो मनुष्येभ्योऽतः पितृभ्यस्तस्माद्वैश्वदेवः पूतभृत्" इति (श०ब्रा० ४।४।१।१२) श्रुतेः ॥ २३ ॥

दशापवित्रेण परिमृज्य परिमृज्यैष ते यो-
निरिति ग्रहसादनम् ॥ २४ ॥

दशापवित्रमुभयतोदर्श, तेन परिमृज्य परिमृज्य "एष ते योनिरिति ग्रहसादनम् ॥ २४ ॥

नायोनिकेषु ॥ २५ ॥

येषां ग्रहाणां सन्निधौ योनिर्न पठ्यते तत्र योन्यासादनं न भवति । कुत एतत् । समाम्नायाभावात् ॥ २५ ॥

सर्वेष्विति वात्स्योऽविशेषोपदेशात् ॥ २६ ॥

वात्स्य आचार्यः सर्वेष्वेव योन्यासादनं मेने । अविशेषेण हि ग्रहमात्रमुद्दिश्य योन्यासादनं पठ्यते ॥ २६ ॥

किं च—

सावित्रर्तुग्रहप्रतिषेधाच्च ॥ २७ ॥

सावित्रग्रहे ऋतुग्रहेषु च प्रतिषेधो दृश्यते । "तं न सादयत्यसन्नो ह्येष सविता" इति (श०ब्र०४।४।१।७) । ऋतुग्रहेषु च "न सादयति तस्मादयमसन्नः संवत्सरः परिप्लवते" (श०ब्रा०४।३।१।७) । तच्च योन्यासादनस्य सर्वग्रहविषयत्वे उपपद्यते ॥ २७ ॥

प्रतिवषट्कारं हुत्वा वषट्कर्तुर्भक्षहरणम् ॥ २८ ॥

यत्रानुवषट्कारोऽस्ति तत्र प्रतिवषट्कारं होमः । हुत्वा च वषट्कर्त्रे भक्षहरणम् । "वषट्कर्तुर्भक्षमुपनयेत्" इति शाखान्तरात् । स्वश्रुतावपि "वषट्कर्तुर्भक्ष" इति ॥ २८ ॥

यथास्वं चमसात् ॥ २९ ॥

भक्षहरणं भवति समाख्यानात् ॥ २९ ॥

यत्रैकपात्रे वषट्कारनिमित्तः समाख्यानिमित्तश्च भक्षस्तत्र कस्य पूर्वं भक्ष इत्यनियमे प्राप्ते आह—

वषट्कर्तुर्वा पूर्वं श्रुतिसामर्थ्यात् ॥ ३० ॥

वषट्कर्त्तैव पूर्वो भक्षयेत् । श्रुतिप्रतिपादितो ह्यसौ । इतरस्तु समाख्यानात्कल्प्यते ॥ ३० ॥

उन्नेतोन्नयति समाख्यानात् ॥ ३१ ॥

इति नवमाध्याये पञ्चमी कण्डिका ।

---

उदितेऽन्तर्यामग्रहणमुपयामगृहीत इति ॥ १ ॥

"रात्रिᳪ सन्तमन्तर्यामं तमुदिते जुहोति"इति (श०ब्रा०४।१।२।१४) श्रुतेः ॥ १ ॥

उपाᳪशुवदनाम्नातवरशेषासेचनवर्जम् ॥ २ ॥

उपाᳪशुवत् क्रिया । इयांस्तु विशेषः । अनाम्नातो यो मन्त्रः, वरवरणप्रदाने, शेषासेचनं च न भवति । सर्वहुतः क्रियते । भक्षस्य शाखान्तरे प्रतिषेधात् । अनाम्नातश्च मन्त्रः स्वाहाकारः, "उर्वन्तरिक्षमन्वेमीति च ॥ २ ॥

अपमार्ष्टर्यत्र ॥ ३ ॥

नोन्मार्ष्ट ॥ ३ ॥

प्रथमे च न्युब्जेन पाणिना प्रत्यक् ॥ ४ ॥

प्रथमे च परिधौ न्युब्जेन पाणिना प्रत्यगुपमार्ष्टि ॥ ४ ॥

उपाᳪशुसवनसᳪस्पृष्टस्योदानाय त्वेति पात्रसादनम् ॥ ५ ॥

उपाᳪशुसवनपात्रसंस्पृष्टस्य पात्रस्य "उदानायत्वेत्यनेन मन्त्रेणासादनम् ॥ ५ ॥

ऐन्द्रवायवं गृह्णात्यावायविति ॥ ६ ॥

अनेन मन्त्रेण ॥ ६ ॥

अपगृह्य पुनरिन्द्रवायू इति ॥ ७ ॥

गृह्णाति ॥ ७ ॥

मैत्रावरुणमयं वामिति ॥ ८ ॥

पयसा श्रीणात्येनं कुशावन्तर्धाय राया वयमिति ॥९॥

एनं ग्रहं कुशावन्तर्धाय पयसा श्रीणाति "राया वयम्"इत्यनेन मन्त्रेण। "तं पयसा श्रीणाति" इति (श०ब्रा०४।१।४।८) द्वितीयान्तनिर्देशात् प्रधानभूतो ग्रहः। गुणविभक्तिनिर्देशात् पयसो गुणभूतता। अतो ग्रहसंस्कारत्वादप्रदेयं पयः। अतश्च प्रदेयधर्मा न प्रवर्त्तन्ते ॥९॥

एवं सर्वत्र श्रयणेषु ॥ १० ॥

कुशान्तर्धानम् ॥ १० ॥

शुक्रं बैल्वेन वा तं प्रत्नथेति ॥ ११ ॥

शुक्रं गृह्णाति बैल्वेन वा पात्रेण वैकङ्कतेन वा "तं प्रत्नथेति ॥११॥

अयं वेन इत्येके ॥ १२ ॥

मन्थिनमयं वेन इति ॥ १३ ॥

सक्तुभिः श्रीणात्येनं "मनो न येष्विति ॥ १४ ॥

एनं मन्थिनम् ॥ १४ ॥

आग्रयणं द्वयोर्धारयोर्ये देवास इति ॥ १५ ॥

आग्रयणं गृह्णाति धाराद्वयात् "ये देवास" इति मन्त्रेण। साचैका धारोन्नेतृकर्तृका अपरा याजमानीति(१) ॥ १५ ॥

दशापवित्रेणाग्रयणमुपगृह्य त्रिर्हिंकृत्य सोमः पवत इति सकृच्छेषम् ॥ १६ ॥

दशापवित्रेणाग्रयणं गृहीत्वा त्रिर्हिंकृत्य "सोमः पवत" इति च त्रिरुक्त्वा मन्त्रशेषं सकृदाह। मन्त्रश्चोदितार्थाभिधायी ॥ १६ ॥

प्रथमस्थानेन प्राग्देवतादेशात् ॥ १७ ॥

---

(१) अन्ये त्वाहुः आग्रयणस्थाल्यां य उपांशुग्रहशेषस्तं पात्रान्तरे कृत्वा पृथगासेचनं तस्य कार्यम्, सा चैका धारा। द्वितीया तु प्राकृत्येव यजमानो यामासिञ्चति, तदपि समूलम् इति देवभाष्ये।

देवतादेशात्पूर्वं प्रथमस्थानम् । यजुषः उपांशुत्वापवादोऽयम् ॥१७॥

प्रातःसवने चोच्चैःकर्माणि ॥ १८ ॥

उच्चैःकर्माणि यान्यैष्टिकपाशुकानि । चशब्दात्तेषामपि प्रथमं स्थानम् ॥ १८ ॥

मध्यमेन माध्यन्दिने ॥ १९ ॥

माध्यन्दिने यानि नीचैर्यानि चोच्चैस्तेषां मध्यमस्थानम् ॥ १९ ॥

उत्तमेन तृतीयसवने ॥ २० ॥

यानि नीचैरिति ॥ २० ॥

उक्थ्यमुपयामगृहीत इति ॥ २१ ॥

उक्थ्यं गृह्णाति "उपयामगृहीत इति । तच्चैतत्प्रकल्पनमात्रम् । अतो वाग्यमप्रदक्षिणावर्त्तने अत्र न भवतः । उक्थ्यविग्रहेषु भविष्यतः ॥ २१ ॥

ध्रुवं "मूर्धानं दिव" इति ॥ २२ ॥

गृह्णाति ॥ २२ ॥

आ होमादस्य सुन्वन्न मूत्रपुरीषे कुर्यात् ॥ २३ ॥

"एतस्य होमान्न सर्पेन्न प्रस्रावयेत" इति (श०ब्रा०४।२।४।७) ॥ २३ ॥

वैश्वानरं च जानन् ॥ २४ ॥

गृह्णाति । जानञ्छब्दो विकल्पार्थः । ज्ञानार्थ एवेत्यपरे । "स यदि तं चरकेभ्यो वा यतो वाऽनुब्रुवीत" इति (श०ब्रा०४।२।४।१) वचनात् ॥ २४ ॥

पूर्णान् स्थालीग्रहानर्धपूर्णं द्रोणकलशं कृत्वा सर्वमासिञ्चति सुन्वन् ॥ २५ ॥

पूर्णान् स्थालीग्रहान् कृत्वा सम्पातसोमेनार्धपूर्णं च द्रोणकलशं कृत्वा सर्वं होतृचमसमासिञ्चति यजमानः ॥ २५ ॥

अध्वर्युप्रतिप्रस्थातृप्रस्तोत्रुद्गातृप्रतिहर्तृसुन्वन्तः

समन्वारब्धा निष्क्रामन्ति ॥ २६ ॥

अध्वर्य्वादयः समन्वारब्धा निष्क्रामन्ति हविर्धानात् । उत्तर उत्तरः पूर्वमन्वारभते । समासोक्तानां क्रमाभावात् ॥ २६ ॥

अध्वर्युः प्रथमो यथासंख्यमितरे ॥ २७ ॥

इत्युक्तम् ॥ २७ ॥

हुत्वा वा समन्वारभेरन् ॥ २८ ॥

विप्रुड्ढोमोत्तरकालं वा समन्वारभन्ते, आदौ वेति विकल्पः । शास्त्रस्य तुल्यत्वात् ॥ २८ ॥

यस्त इति विप्रुषाᳫ होमं जुह्वति ॥ २९ ॥

अध्वर्य्वादयः । विप्रुड्ढोम इति संज्ञा ॥ २९ ॥

अध्वर्युर्वा ॥ ३० ॥

जुहोति । सर्वे वेति विकल्पः ॥ ३० ॥

वेदितृणे अध्वर्युरादत्ते । प्रह्वा उदञ्चो गच्छन्ति ॥ ३१ ॥

नीचैर्व्यवस्थिता उदञ्चो गच्छन्ति ॥ ३१ ॥

अन्यतरत्तृणं चात्वाले प्रास्यति देवानामिति ॥ ३२ ॥

उद्गातृणा पुरस्तादितरत्तूष्णीम् ॥ ३३ ॥

प्रास्यति ॥ ३३ ॥

जपत्सु "सोमः पवत" इति पवमानोपाकरणं प्रस्तोत्रे तृणे प्रयच्छन् ॥ ३४ ॥

जपत्सूद्गातृषु पवमानमुपाकरोति "सोमः पवत" इत्यनेन मन्त्रेण प्रस्तोत्रे तृणे प्रयच्छन् । पवमानमिति च स्तोत्रसंज्ञा ॥ ३४ ॥

सर्वेषु ॥ ३५ ॥

वमानेष्वेवमुपाकरोति । अतिदेशात्तत्प्राप्तेरवाच्यतेति चेत्।
तेदेशो हि भवति माध्यन्दिने "समन्वारब्धनिष्क्रमणादि करोति
दग्नीन् इति प्रैषात्" (का०श्रौ०१०।१।१६)। तथा तृतीयसवने
वारब्धनिष्क्रमणादि करोति माध्यन्दिनवत्" इति (का०श्रौ०१०
। सत्यमेवम्। अतृणो वा, कुशमुष्टिं वा प्रयच्छन् उपाकरोति
योरपि उत्तरत्र प्राप्तिर्माभूदिति सर्वेष्वित्युक्तम् ॥ ३५ ॥

अतृणो वा ॥ ३६ ॥—

इति नवमाध्याये षष्ठी कण्डिका ।

---

कुशमुष्टिं वा ॥ १ ॥

प्रयच्छन् बहिष्पमानएवोपाकरोति ॥ १ ॥

प्रत्यङ्मुखा उपविशतः पुरस्ताद्दक्षिणो यजमानः ॥ २ ॥

प्रत्यङ्मुखा उपविशतोऽध्वर्युप्रतिप्रस्थातारौ द्वित्वोपदेशात्। पुरस्तादुद्गातृणाम्। तयोश्च दक्षिणो यजमान उपविशति ॥ २ ॥

स्तूयमान उन्नेताऽऽधवनीयं पवित्रमन्तर्धाय पूतभृत्यासिञ्चति ॥ ३ ॥

स्तूयमाने बहिष्पवमाने उन्नेता पवित्रमन्तर्धायाधवनीयसोमं पूतभृत्यासिञ्चति ॥ ३ ॥

---

(१) अतिदेशप्राप्तिं दृष्टान्तेन स्पष्टीकरोति अतिदेशोहीति । "समन्वारब्धनिष्क्रमणादि करोति" इत्येकम् अतिदेशं प्रदर्श्य "समन्वारब्धनिष्क्रमणादि करोति माध्यन्दिनवत्" इति द्वितीयम् अतिदेशं प्रदर्शयति। सत्यमेवमित्यादिना समाधत्ते। सर्वेषु पवमानेषु "सोमः पवते" इति मन्त्रेण प्रस्तोत्रे तृणे प्रयच्छन् इत्यस्यैव संबन्धो यथा स्यात् न तु उत्तरत्र वक्ष्यमाणयोः "अतृणो वा, कुशमुष्टिं वा प्रयच्छन्" इत्यनयोः इत्येतदर्थं सर्वेषु इत्युक्तम्।

स्तोत्रान्ते प्रेष्यत्यग्नीदग्नीन्विहर बर्हि स्तृणी-
हि पुरोडाशाँ२ अलङ्कुरु प्रतिप्रस्थातः
पशुनेहीति ॥ ४ ॥

विहरणस्तरणालङ्करणेषु अग्नीदुपदेशात् । पश्वानयने तु प्रतिप्रस्थाता । अयं च प्रैषः सवनीयपश्वर्थत्वात् सवनीयविकारेष्वपि प्रवर्त्तते । अत्र पाशुकानां पदार्थानाम् अवटहोमान्ते चषालेक्षणान्ते वा प्रैषदानम् । सवनीयविकारेष्वप्ययमेवावसरः । तेन ऋतुपश्वादावेकयूपावटहोमान्ते चषालेक्षणान्ते वा भवति । अनेकयूपे त्ववटहोमान्त एव । न हि चषालेक्षणान्ते सर्वयूपानामवस्थानम् । "श्वो वा दक्षिणोत्तराणामवगूहनान्तम्" (का०श्रौ०८।८।१४) इत्युक्तत्वात् ।

प्रतिप्रस्थातः पशुनेहीत्ययमेकवचनान्तः प्रैषोऽग्निष्टोमे समाम्नात एकादशिनीपक्षेऽपि किमयमेकवचनान्त एव प्रयुज्यते उतानभिधायकत्वादप्रयोग इति । किं तावत्प्राप्तम् । अप्रयोगः । न ह्येकवचनान्तः शक्नोति बहून्वदितुमिति । न चायमप्रयुज्यमानो ऽनर्थको भवति । एकपशुपक्षेऽस्य प्रकरणे समाम्नानमर्थवदेवेत्येवं प्राप्ते उच्यते ।

अनेकपशुपक्षेऽप्येकवचनान्त एव प्रयुज्यते । किं कारणम् । प्रातिपदिकार्थः प्रधानभूतो वचनार्थश्च गुणभूतः । न च प्रधानार्थाभिधाने सम्भवति गुणार्थाभिधानं न सम्भवतीत्यप्रयोगो युक्तरूपः । तस्मादनेकपशुकेऽप्यविकृत एव प्रयुज्यत इति ॥ ४ ॥

यथान्युप्तं धिष्ण्येष्वाग्नीध्रादङ्गारान्निवपति ॥ ५ ॥

अग्नीदग्नीन्विहरेत्यस्यार्थः ( प्रयोजनम् ) । येन क्रमेण धिष्ण्यनिर्वापः कृतः तेनैव क्रमेणाग्नीध्रादङ्गारनिवापं करोति ॥ ५ ॥

अनुपृष्ठ्यां बर्हि स्तृणाति ॥ ६ ॥

अपरत आरभ्यापूर्वान्तात् । पुरोडाशालङ्करणं तु चोदकपरिप्रापितत्वात् नाभिहितमाचार्येण ॥ ६ ॥

आश्विनं गृह्णात्यन्वारब्धे वा "या वामिति ॥ ७ ॥

आश्विनं ग्रहं गृह्णाति अन्वारब्धेऽनन्वारब्धे वा शुक्रात्पूतभृतो वा "या वामित्यनेन मन्त्रेण ॥ ७ ॥

ग्रहानवेक्षयति यथागृहीतमवकाशान्वाचयन् "प्राणाय म इति प्रतिमन्त्रम् ॥ ८ ॥

वाचयन्नवेक्षयतीत्युभयत्र कारितत्वादध्येषणा । 'वर्चोदा वर्चसे पवस्व' इति ब्रुवन्नीक्षस्वेत्येवमिति सम्प्रदायः ॥ ८ ॥

अग्रहत्वादुच्यते—

उपांशुसवनं द्वितीयम् ॥ ९ ॥

यथागृहीतमित्यस्यापवादः—

आश्विनं षष्ठम् । शुक्रामन्थिनौ युगपत् । पूतभृदाधवनीयौ च "विश्वाभ्यो म इति ॥ १० ॥

चशब्दात् युगपदेव ॥ १० ॥

कोऽसीति द्रोणकलशम् ॥ ११ ॥

वाचयन्नीक्षयति ॥ ११ ॥

भूर्भुवः स्वरिति जपति ॥ १२ ॥

यजमानः ॥ १२ ॥

ज्ञातप्रियानूचानानवकाशयेत् ॥ १३ ॥

"तान् वै न सर्वमिवावकाशयेत्" इति (श०ब्रा०४।५।६।५) प्रकृत्यैवमेवहि श्रूयते इति ॥ १३ ॥

इति नवमाध्याये सप्तमी कण्डिका ।

---

ध्रुवगोपं कृत्वा परिव्ययणादि करोति रशनामुदुह्य पूर्वाम् ॥ १ ॥

ध्रुवगुप्तिश्च कटपटादीनामन्यतमेनावगूहनम् । ध्रुवगोप्तृ राजपुत्रस्य निरूपणमित्यपरे । भवति हि शाखिनां वचनम् "काकुभो राजपुत्रः प्राप्नोति ध्रुवस्य गोप्ता" इति । न पुनरादृतमाचार्येणैतत्केनाप्यभिप्रायेण । पूर्वां रशनामुदुह्य परिव्ययणादि करोति । अस्मिन्नेव

ह्यवसरे पशुचोदना शाखान्तरे "आश्विनं ग्रहं गृहीत्वा त्रिवृता यूपं परिवीयाग्नेयं सवनीयं पशुमुपाकरोति" इति । माध्यन्दिनीयायामपि "आग्नेयमग्निष्टोम आलभेत" इति (श०ब्रा०४।२।५।१४) ॥ १ ॥

आग्नेयोऽग्निष्टोमे सवनीयः पशुरैन्द्राग्नश्चो-
क्थ्ये द्वितीयः ॥ २ ॥

चशब्दात्सवनीय एव ॥ २ ॥

ऐन्द्रो वृष्णिः षोडशिनि तृतीयः, सरस्वत्यै
चतुर्थोऽतिरात्रे मेषी वा ॥ ३ ॥

"आग्नेयमग्निष्टोम आलभेत" इति प्रकृत्य सर्वमेतच्छ्रूयत इति ॥३॥

एतत्स्तोमायनम् ॥ ४ ॥

स्तोमायनमिति संज्ञा संव्यवहारार्था । "स्तोमायनं वैकादशिना वा" इत्येवमाद्यर्था ॥ ४ ॥

होतृनामग्रहणान्तं कृत्वेतरांश्चाश्राव्याश्राव्य
प्रवृणीते यथालिङ्गम् ॥ ५ ॥

होतृनामग्रहणान्तं पाशुकं कृत्वा इतरांश्च आश्राव्याश्राव्य प्रवृणीते। चशब्दाद्धोतारं च । यथालिङ्गमिति । यो यो येन लिङ्गेन लिङ्ग्यत इति । ( सूत्रकारेण ) होतुरनभिहितमपि "इन्द्रं होत्रात्" इति वरणम् ( कर्तव्यम् ) । इन्द्रं हि होता ऋतुग्रहेषु यजत इति ॥ ५ ॥

ततः—

अश्विनाध्वर्यू आध्वर्यवात् ॥ ६ ॥

इत्येवमादि । अत्र चाध्वर्योर्द्वितीयः प्रतिप्रस्थाता । वरणं च नेष्टा करोति ॥ ६ ॥

मित्रावरुणौ प्रशास्तारौ प्राशास्त्रात् ॥ ७ ॥

तत्र द्वितीयोऽच्छावाकः ॥ ७ ॥

इन्द्रो ब्रह्मा ब्राह्मणादिति ब्राह्मणाच्छंसिनम् ॥ ८ ॥

अत्र ब्राह्मणाच्छंसिग्रहणं लिङ्गं माभूत् ब्रह्मणो वरणमिति ॥ ८ ॥

मरुतः पोत्राद्, ग्रावो नेष्ट्राद्, अग्निराग्नीध्रात्, अग्निं दैवीनामिति यजमानम् ॥ ९ ॥

वृणीते । अत्र चोक्तमाचार्येण "सुन्वन्निति सुत्ये" (का०श्रौ०८।४।३)। अयं च मन्त्रश्चोदितार्थाभिधायी बहुयजमानके विपरिणस्यते । पाशुकमपि यजमानवरणमत्रैवेति सम्प्रदायः । प्रवृतहोमानामुपरिष्टात्पाशुकं यजमानवरणमित्यनुरूपतरम् ॥ ९ ॥

(१)यथाप्रवृतं प्रवृतहोमौ जुहोति "जुष्टो वाचे भूयासं जुष्टो वाचस्पतये देवि वाग्यत्ते वाचो मधुमत्तमं जुष्टतमं तस्मिन्मा धाः स्वाहा सरस्वत्या इति ॥ १० ॥

पात्रकान इति द्वितीयाम् ॥ ११ ॥

आहुतिं जुहोति ॥ ११ ॥

वपामार्जनान्तं कृत्वा सयजमाना धिष्ण्यानुपतिष्ठन्ते विभूरसीति प्रतिमन्त्रम् ॥ १२ ॥

सयजमाना ऋत्विजः ॥ १२ ॥

उत्करान्तं कृत्वा वागसीति सदोऽभिमर्शनम् । ऋतस्य द्वाराविति द्वार्ये ॥ १३ ॥

अभिमृश्येते येन द्वारेण प्रवेशनम् । मन्त्रलिङ्गात् "मा मा सन्तासमिति ॥ १३ ॥

अभिमन्त्रणमुत्तरैः ॥ १४ ॥

मन्त्रैः ॥ १४ ॥

अध्वनामध्वपत इति सूर्यम् ॥ १५ ॥

---

(१) यथावृतं येन क्रमेण प्रवरणं तेन होत्रादयः सर्वे द्वे द्वे आहुती जुह्वति समिदाधानं कृत्वा प्रचरण्याज्येन ।

अभिमन्त्रयते ॥ १५ ॥

मित्रस्य मेत्यृत्विजः ॥ १६ ॥

अभिमन्त्रयते । अतश्च याजमानमभिमन्त्रणम् ॥ १६ ॥

अग्नयः सगरा इति धिष्ण्यान् ॥ १७ ॥

अभिमन्त्रयते ।

एतत्सर्पणम् ॥ १८ ॥

अस्य कर्मणः सर्पणमितीयं सञ्ज्ञा। अभिमन्त्रणानि याजमानानीति सम्प्रदायः । एवं च सूर्याभिमन्त्रणे धिष्ण्याभिमन्त्रणे च ऊहः प्रवर्त्तते । अध्वर्युकर्तृकाणीत्यपरे । ऋत्विगभिमन्त्रणमेव याजमानमिति ॥ १८ ॥

इति नवमाध्याये अष्टमी कण्डिका ।

---

सदोऽभिमर्शनादि चोत्तरयोः सवनयोः ॥ १ ॥

सर्पणं भवति, धिष्ण्योपस्थानादि वा ॥ १ ॥

पुरोडाशैश्चरति ॥ २ ॥

ये ते अलङ्कृताः पुरोडाशास्तैश्चरति । तत्र चैकः पुरोडाशः । छत्रिन्यायेन बहुवचनम् ॥ २ ॥

एकं प्रदानम् ॥ ३ ॥

देवतागुणभेदेऽपि वचनसामर्थ्यात् ॥ ३ ॥

एकपात्र्यामासाद्य मध्ये पुरोडाशः पुरस्ताद्धानाः प्रतिदिशमितराणि यथासंख्यं प्रदक्षिणम् ॥ ४ ॥

येषामेव पात्र्युचिता तेषामेकत्वं विधीयते । दध्नः पयस्यायाश्च उखास्थयोरेव प्रतिदिशमासादनम् । यथासंख्यातानां च प्रादक्षिण्यमिति ॥ ४ ॥

प्रातः प्रातः सत्रस्येन्द्राय पुरोडाशानामनुवाचयति ॥ ५ ॥

एवमनुवाचनं कारयति ॥ ५ ॥

आश्राव्याह प्रातः प्रातः सवस्येन्द्राय पुरोडाशान्प्र-
स्थितान्प्रेष्येति ॥ ६ ॥

प्रैषविशेषार्थमिदमुक्तम् ॥ ६ ॥

एवं यथासवनमनुवाचनप्रैषौ ॥ ७ ॥

माध्यन्दिनस्य सवनस्य, तृतीयस्य सवनस्येति ॥ ७ ॥

उपभृति चावद्यति । पशुपुरोडाशवत्—॥ ८ ॥

अवदानग्रहणसमनन्तरमेव । वत्युपदेशात् ॥ ८ ॥

उभयꣳ हुत्वा होतृधिष्ण्ये पुरोडाशान्निदधाति ॥ ९ ॥

उभयमिति प्रधानं सौविष्टकृतं च हुत्वा होतृधिष्ण्ये पुरोडाशान्निदधातीति च । कुत एतत् । एवं हि श्रूयते "होतृधिष्ण्यादिडामादधाति" इति । पुरोडाशेषु च निहितेषु होतृधिष्ण्यादिडा ऽऽहिता भवति ॥ ९ ॥

निरवत्तां वेडाम् ॥ १० ॥

वाशब्दः पक्षव्यावृत्तौ । न पुरोडाशान्निदधाति, निरवत्तामेवेडाम् । निरवत्ता च प्राशित्रादिभिरपि गृहीतैर्भवति । एवं च "होतृधिष्ण्यादिडामादधातीति यथाश्रुतमेतद्भवति । इतरथा ऽऽदधातिना ग्रहणं लक्ष्येत । तच्चायुक्तं श्रुतार्थसम्भवे सति ॥ १० ॥

द्विदेवत्यैश्चरति ॥ ११ ॥

अवसरार्थमिदमुच्यते ॥ ११ ॥

वायव इन्द्रवायुभ्यामनुवाचयति । प्रतिप्रस्थाताऽऽदित्य-
पात्रेण द्रोणकलशादुपयामगृहीतोऽसीति
गृहीत्वा गृहीत्वा द्विदेवत्यानन्-
जुहोत्युत्तरार्धे ॥ १२ ॥

द्विदेवत्याननुजुहोतीति त्रयाणामपि द्विदेवत्यानामनुहोमः

क्रियते। ऐन्द्रवायवस्य वषट्कारद्वयम्। तत्र द्वितीयस्य वषट्कारस्य पश्चादनुशब्दोपदेशात् ॥ १२ ॥

उत्तरार्द्धाधिकारोपजिजीविषयेदमुच्यते—

अनुवषट्कृतेऽपि ॥ १३ ॥

उत्तरार्द्ध एव जुहोति येषां ग्रहाणामनुवषट्कारोऽस्ति। द्विदेवत्यानां तु नैवानुवषट्कारः ॥ १३ ॥

अनुवषट्कारार्थमेवेदमुच्यते—

आश्रुतप्रत्याश्रुतप्रैषाश्च समत्वात् ॥ १४ ॥

आश्रावणादयोऽनुवषट्कारेऽपि प्रवर्त्तन्ते। कुत एतत्। समत्वात्। समो ह्ययमनुवषट्कारयागो वषट्कारयागेन। द्वावपि हि सोमयागाभ्यासौ। यागोद्देशेन च विहिता आश्रावणादयः। तेनानुवषट्कारेऽपि प्रवर्त्तन्त इति ॥ १४ ॥

एवं प्राप्त उच्यते—

नानन्तर्यात् ॥ १५ ॥

नैतेषामनुवषट्कारे प्रवृत्तिः। कुत एतत्। आनन्तर्यात्। "वषट्कृत्यानवानमनुवषट्करोति" इत्यानन्तर्यं विरुध्यते ॥ १५ ॥

स्यादविरोधात् ॥ १६ ॥

स्यादाश्रावणादि, यदि विरोधो न स्यात्। अस्ति तु विरोधः। तस्मादप्रवृत्तिरिति। अपरे त्वैन्द्रवायवविषयमेवेदमधिकरणं व्यावर्णयन्ति ॥ १६ ॥

"प्रतिप्रस्थाताऽऽदित्यपात्रेण द्विदेवत्याननुजुहोतीति प्रक्रान्तम्।

तत्रेदमुच्यते—

शेषं शेषमादित्यस्थाल्यामासिञ्चत्यादित्येभ्यस्त्वेति ॥ १७ ॥

प्रतिहोमं शेषमादित्यस्थाल्यामासिञ्चति "आदित्येभ्यस्त्वेत्यनेन मन्त्रेण। प्रतिप्रस्थातैवाधिकारात्। आसिञ्चामीति चाध्याहारः॥ १७ ॥

समासिच्य तेनापिदधाति विष्ण उरु गायेति ॥ १८ ॥

समासिच्यान्ते मैत्रावरुणाश्विनाभ्यामपि कृते यागे तेनैव पात्रेणादित्यस्थालीमपिदधाति "विष्ण उरु गाय" इत्यनेन मन्त्रेण ॥ १८ ॥

उन्नीयमानेभ्योऽनुवाचयति ॥ १९ ॥

उन्नीयमानानुवाचनं कारयत्युन्नेतैव । स हि समाख्ययोन्नयनं करोति । तच्छेषमनुवाचनम् । अतोऽत्रापि तस्यैव कर्तृत्वम् । लिङ्गाच्च "यो वाव कर्म करोति स एव तस्योपचारं वेद" इति ॥ १९ ॥

चमसेषून्नयति नवस्वपरेणोत्तरवेदिं निधाय ॥ २० ॥

नवस्विति दशमस्युदासार्थम् । तस्य हि पश्चादुन्नयनास्नानमिति ॥ २० ॥

शुक्रादुपस्तरणाभिघारणे ॥ २१ ॥

क्रियेते । मध्यमन्तु "पूतभृतश्चमसान्" इति (का०श्रौ० ९।८।२१) पूतभृतः । एकैकश्च त्रिरवत्तः क्रियते । पदार्थस्यैतावत्त्वात् ।

होतृचमसे प्रथमम् ॥ २२ ॥

प्रथमं होतृचमसे उन्नयनम् । तस्य हि प्रथमः पाठः "प्रैतु होतुश्चमस" इति (श०ब्रा०४।२।१।२९) ॥ २२ ॥

इति नवमाध्याये नवमी कण्डिका ।

शुक्रामन्थिभ्यां चरतः ॥ १ ॥

द्विवचनोपदेशात् प्रतिप्रस्थाता च । स हि सन्निकर्षाद्गृह्यते ॥ १ ॥

विभागार्थमाह—

शुक्रेणाध्वर्युर्मन्थिना प्रतिप्रस्थाता ॥ २ ॥

प्रोक्षिताप्रोक्षितौ यूपशकलावादायापिधानं प्रोक्षिताभ्याम्, अपमार्जनमप्रोक्षिताभ्यामपमृष्टः शण्ड इत्यध्वर्युरपमृष्टो मर्क इति प्रतिप्रस्थाता ॥ ३ ॥

प्रोक्षिताभ्यां शकलाभ्यामपिधानं ग्रहयोः, अपमार्जनमप्रोक्षिताभ्याम् अपमृष्टः शण्ड इत्यध्वर्युरपमृष्टो मर्क इति प्रतिप्रस्थाता ग्रहयोरेव कुरुतः ॥ ३ ॥

देवास्त्वेति निष्क्रामतो यथालिङ्गम् ॥ ४ ॥

यथालिङ्गग्रहणं च मन्त्रविभागार्थम् ॥ ४ ॥

अपरेणोत्तरवेदिमरत्नी सन्धायोत्तरवेदिश्रोण्योर्निधत्तोऽविसृजन्तौ दक्षिणस्यामध्वर्युरुत्तरस्यां प्रतिप्रस्थाताऽनाधृष्टासीति ॥ ५ ॥

अध्वर्युप्रतिप्रस्थातारौ अपरेणोत्तरवेदिं परस्परतोऽरत्नी सन्धायोत्तरवेदिश्रोण्योर्निधत्तोऽविसृजन्तौ ग्रहौ दक्षिणस्यामध्वर्युरुत्तरस्यां प्रतिप्रस्थाता "अनाधृष्टासीत्यनेन मन्त्रेण । स चायमुत्तरवेदिसंस्कारो वाक्यशेषात्—"तद्रक्षोभिरेवैतदुत्तरवेदिमनाधृष्टां कुरुत" इति (श० ब्रा०४।२।१।१५)। मन्त्रलिङ्गाच्चानाधृष्टासीति । प्रयोजनम् , यत्रोत्तरवेद्यकरणं तत्रैतन्न भवति । प्रयोजनवद्ग्रहसंस्कार इत्यपरे । अपिधानापमार्जनसंस्कारमध्येऽभिधानात् । प्रयोजनवत्त्वाच्च ग्रहयोः । तस्माद् ग्रहसंस्कार एवायम् । मन्त्रलिङ्गवाक्यशेषावर्थवादप्रायौ ॥ ५ ॥

सुवीर इति दक्षिणं यूपदेशं गच्छत्यध्वर्युः । सुप्रजा इति प्रतिप्रस्थातोत्तरम् ॥ ६ ॥

मन्त्रद्वयमपि चोदितार्थाभिधायि ॥ ६ ॥

अपरेण यूपमरत्नी सन्धत्तः सञ्जग्मान इति यथालिङ्गम् ॥ ७ ॥

पूर्वेणाशक्तौ ॥ ८ ॥

( यूपमपरेण संधानाशक्तौ ) यूपं पूर्वेण ( संधानम् ) ॥ ८ ॥

अप्रोक्षितौ निरस्यतो निरस्तः शण्ड इत्यध्वर्युर्निरस्तो मर्क्क इति प्रतिप्रस्थाता ॥ ९ ॥

यूपशकलौ । शण्डग्रहणे मर्कग्रहणे चासुरत्वादुदकोपस्पर्शनं भवति ॥ ९ ॥

आहवनीये प्रोक्षितौ प्रास्यतः "शुक्रस्याधिष्ठानमित्यध्वर्यु-
"र्मन्थिन इति प्रतिप्रस्थाता ॥ १० ॥

अच्छिन्नस्येति जापित्वाऽऽश्राव्याह प्रातः प्रातः सत्र-
स्य शुक्रवतो मधुश्चुत इन्द्राय सोमान्प्र-
स्थितान्प्रेष्येति ॥ ११ ॥

जपोऽध्वर्योरेव ॥ ११ ॥

इति नवमाध्याये दशमी कण्डिका ।

---

उभयतो यूपं प्रत्यङ्मुखौ जुहुतः । सा प्रथमे-
त्यध्वर्युः प्रथमम् ॥ १ ॥

ग्रहं जुहोति ॥ १ ॥

तमनु प्रतिप्रस्थाता ॥ २ ॥

अनेनैव मन्त्रेण । जुहुत इति द्विवचनोपदेशात् ॥ २ ॥

चमसाध्वर्यवश्च ॥ ३ ॥

चशब्दात्तमन्विति । मन्त्रस्तु ग्रहविषय एव । "तौ वै वषट्कृतौ सन्तौ मन्त्रेण हूयेते" इति (श०ब्रा० ४।२।१।२६) श्रुतेः ॥ ३ ॥

प्रेष्यति च ॥ ४ ॥

चशब्दादनन्तरम् ॥ ४ ॥

प्रैतु होतुश्चमसः प्रब्रह्मणः प्रोद्गातॄणां प्रयजमानस्य
प्रयन्तु सदस्यानाᳫं होत्राणां चमसाध्वर्यव उपा-
वर्त्तध्वᳫं शुक्रस्याभ्युन्नयध्वमिति ॥ ५ ॥

प्रैतु होतुश्चमस इति सर्वत्र केचिदनुषङ्गमिच्छन्ति । आदावेव व्यवस्थितः सर्वेषां द्योतक इति सम्प्रदायः । होत्राश्च प्रशास्तृब्राह्म-

णाच्छंसिपोतृनेष्ट्रग्नीधः। तेषां चमसानामुपावर्त्तनम् प्रेषितम्। शुक्रस्याभ्युन्नयनमिति ॥ ५ ॥

आगम्य प्रतिप्रस्थाता शेषꣳ शुक्रपात्रे ऽवनयति ॥ ६ ॥

एत्य जुहोतिस्थानात् प्रतिप्रस्थाता मन्थिशेषं शुक्रपात्रेऽवनयति॥६॥

तꣳ स होतृचमसे ॥ ७ ॥

अवनयति। "तमध्वर्युर्होतृचमसेऽवनयति भक्षाय" इति (श० ब्रा० ४।२।१।२९) श्रुतत्वात् ॥ ७ ॥

पञ्चसून्नयन्ति ॥ ८ ॥

"होत्राणां चमसाध्वर्यव उपावर्त्तध्वꣳ शुक्रस्याभ्युन्नयध्वम्" (श०ब्रा०४।२।१।२९) इत्युक्तत्वात् ॥ ८ ॥

तानाश्राव्याश्राव्य प्रेष्यति नामग्राहं यज यजेति प्रशास्त्रादीन् ॥ ९ ॥

नाम गृहीत्वा गृहीत्वा प्रेष्यत्यसौ यजेति ॥ ९ ॥

ब्रह्मन्यजेति ब्राह्मणाच्छꣳसिनम् ॥ १० ॥

प्रेष्यति ॥ १० ॥

प्रथमं हुत्वोत्तमं वा तृम्पन्त्विति जपति ॥ ११ ॥

प्रथमं चमसमुत्तमं वा हुत्वा तृम्पन्त्विति जपति ॥ ११ ॥

होतारं प्रत्यङ्ङुपसीदत्ययाडग्नीदिति ॥ १२ ॥

अनेन मन्त्रेण ॥ १२ ॥

द्विदेवत्यान् भक्षयति पूर्वः प्रथमचोदनाद्धोमाभिषव-कारी भक्षयेदिति श्रुतेः ॥ १३ ॥

द्विदेवत्यशेषान् भक्षयत्यध्वर्युः। कुत एतत्। होमाभिषवकारिणो हि भक्षः श्रूयते। "हविर्धाने ग्रावभिरभिषुत्याहवनीये हुत्वा प्रत्यञ्चः प्रतिपरेत्य सदसि सोमान्भक्षयन्ति" इति। अत्र च वाक्ये हविर्द्धाने ग्रावभिरभिषवो वाक्यान्तरपरिप्राप्तो ऽनूद्यते। यदाहवनीये जुहोतीति होमश्च। तथा "उदरमेवास्य सदस्तस्मात्सदसि

भक्षयन्ति" इति (श०ब्रा० ३।६।१।१) सर्वमनूद्यते । होमाभिषवनिमित्तो भक्षो भवतीत्येतदत्र विधीयते । अतश्च होमाभिषवकारिणो भक्षो भवतीति । स च भक्षयन्पूर्वो भक्षयतीति । कुत एतत् । प्रथमचोदनात् । प्रथमभक्षचोदनात् । एवं प्राथम्यमवगम्यते । अभिषुत्य हुत्वा भक्षयतीति । सन्निधानाच्च । वषट्कर्तृभक्षस्य ह्यसन्निहितः सोमस्तस्माद्वषट्कारनिमित्तात्पूर्वोऽभिषवनिमित्तो भक्षः ॥ १३ ॥

होता वा वचन-मन्त्रवर्ण-कारणेभ्यः ॥ १४ ॥

होता वा पूर्वो भक्षयेत् । कुत एतत् । वचनात् । वचनं हि भवति । वषट्कर्त्ता प्रथमो भक्षयतीति । प्रथमश्चैवं भक्षयति यावदन्यो न भक्षयति ।

किञ्च मन्त्रवर्णाच्च "एते वदन्ति शतवत्सहस्रवदभिक्रन्दन्ति हरितेभिरासभिः । विष्ट्वी ग्रावाणः सुकृतः सुकृत्यया होतुश्चित्पूर्वे हविरद्यमाशतेति । चिच्छब्दः अप्यर्थे । ग्रावाणो वदन्ति होतुरपि पूर्वं हविरद्यम्भक्षितवन्तो वयमिति । यदि च होतुः पूर्वं भक्षणमुचितं तदैतदुपपद्यते ।

किंच कारणानुपूर्व्याच्च । वषट्कृते जुहोतीति पूर्वं कारणं होतुः, पश्चादध्वर्योरिति । ननु च पूर्वतरमभिषवः कारणम् । नेत्युच्यते । न ह्यभिषव एव कारणं, किं तर्हि होमश्चाभिषवश्च । कथं ज्ञायते । एकवाक्यत्वात् । अभिषुत्येत्यपरिसमाप्तं वाक्यं हुत्वा भक्षयतीत्यत्र परिसमाप्यते । तस्मादुभयोः समुदितयोर्निमित्तभावो भक्षं प्रति नैकैकस्येति । यत्रत्वेवंविधैकवाक्यता न भवति तत्र व्यस्तयोरपि निमित्तता भवति । यथा "यस्य पिता पितामहः सोम न पिबेदिति । तस्माद्धोतुरेव पूर्वं कारणमिति ॥ १४ ॥

एवं प्राप्ते ब्रूमः--

नाध्वर्युः समभिव्याहारात् ॥ १५ ॥

नैतदेवं वषट्कर्तुः पूर्वो भक्ष इति । किं तर्हि अध्वर्योरेव । पूर्वतरं समभिव्याहृतत्वात् भक्षस्य । "तत्प्रातरभिपद्याभिषुत्याग्नौ जुहोति तदग्नावमृतं दधात्यथ भक्षयतीति । (श०ब्रा०९।५।१।१०) अभिषुत्याग्नौ हुत्वेत्यनुवादोऽयम् । केवलमथशब्दार्थोऽत्राप्राप्त आनन्तर्यं स विधीयत इति । तस्मादध्वर्योः पूर्वतरं भक्षः ॥ १५ ॥

यत्तूक्तं वषट्कर्त्ता प्रथमो भक्षयतीति । तत्परिह्रियते—

मन्त्राणां चाविधानात् ॥ १६ ॥

चशब्दाद्वचनस्य च । अविधायकत्वात् । कथमविधायकत्वमिति-चेत् । सौम्येक्षणविधिपरत्वाद्वाक्यस्य । सौम्यं चरुमुद्रात्रे ह्रियमाणं होता पूर्वतरमवेक्षते । वषट्कर्त्ता हि प्रथमः सर्वभक्षान् भक्षयतीत्य-नुवादोऽयम् । कुतः प्राप्तिरिति चेत् । समाख्याभक्षापेक्षया प्राप्तिः ॥ १६ ॥

यच्चोक्तं कारणानुपूर्व्यादिति । अत्र ब्रूमः—

कारणस्य च समत्वात् ॥ १७ ॥

समं हि कारणमुभयोः । "सह वै वषट्कारेण जुहुयात् वषट्कृते वा" इति । तस्मादध्वर्युरेव पूर्वो भक्षयेदिति ॥ १७ ॥

ऐन्द्रवायवं प्रतिगृह्यात्वैतु वसुः पुरुवसुरिति ।
होतृवद्भक्षणम् ॥ १८ ॥

होतृशास्त्रातिदेशोऽयम् । स च 'ऐन्द्रवायवं मुखस्य ढौकयित्वा चक्षुषोर्मैत्रावरुणं, श्रोत्रयोराश्विनम्' इति ॥ १८ ॥

वाग्देवी जुषाणा सोमस्य तृप्यतु सह प्राणेन स्वाहे-
त्येवं सर्वत्र सोमानां भक्षणम् ॥ १९ ॥

द्विदेवत्यव्यतिरेकेणापि । मन्त्रश्चोदितार्थाभिधायी ॥ १९ ॥

वचनादन्यत् ॥ २० ॥

वचनादन्यदपि भवति । यथा "इन्द्रश्च सम्राडिति ॥ २० ॥

भक्षे हि मेति वा यथालिङ्गम् ॥ २१ ॥

"भक्षे हि मेति वाऽनुवाकेन सोमभक्षणं भवति । तत्र च यथालिङ्गं ग्रहणादि कर्त्तव्यम् । अनुवाकश्च शाखान्तरसमधीतोऽपि कथञ्चि-न्नाभिहित आचार्येण ॥ २१ ॥

एवमितरौ प्रतिमन्त्रमैतु वसुर्विदद्वसुरैतु वसुः
संयद्वसुरिति ॥ २२ ॥

मैत्रावरुणाश्विनौ ग्रहौ प्रतिगृह्णाति ॥ २२ ॥

शेषः शेषः होतृचमसेऽवनयति ॥ २३ ॥

प्रतिग्रहम् ॥ २३ ॥

पुरोडाशमात्रामैन्द्रवायवे प्रास्यति पयस्यां मैत्रावरुण आश्विने धानाः ॥ २४ ॥

पयस्याधानानामपि मात्रा एव। पुरोडाशमात्रा अनुदका इति बहुवचनोपदेशात्। मात्राशब्दश्चैकदेशवाची। अतश्च न सर्वप्रासनमिति ॥ २४ ॥

तानि प्रतिप्रस्थाता दक्षिणस्य हविर्धानस्योत्तरे वर्त्मनि निदधाति ॥ २५ ॥

तानीति द्विदेवत्यपात्राणि ॥ २५ ॥

इडामादधाति ॥ २६ ॥

होतृधिष्ण्यात् ॥ २६ ॥

चमसांश्चोद्यच्छन्ति ॥ २७ ॥

चशब्दाद्युगपत् ॥ २७ ॥

इति नवमाध्याये एकादशी कण्डिका।

---

मार्जिते वाजिनेन चरन्ति सूक्तवाकशंयोर्वाकयोरन्यार्थत्वात् ॥ १ ॥

इडामादधातीतीडोपक्रान्ता, ऽतस्तन्मार्जनान्ते वाजिनेन चरन्ति। अधस्ताद्विकृत्यवधिकाः पौरोडाशिकाः पदार्थाः। प्रातरनुवाककाले निर्वापः। बहिष्पवमानोत्तरकाले ऽलङ्करणम्। वपान्ते च प्रचारः। इडाऽऽधानोत्तरकालं च नैवावधिविधानम्, अतः पौरोडाशिका वाजिनयागादयः सर्व एवात्र कर्त्तव्याः। वाजिनग्रहणमुपलक्षणार्थम्। ननु च सूक्तवाकोत्तरकालं वाजिनयागः प्रकृतौ कृतः—

"प्रहृत्य तृणं तेन चरति" इति, इहापि तत्रैव करिष्यते । नैतदेवम् । सूक्तवाकशंय्वोर्वाकयोरन्यार्थत्वात् । पश्वर्थाः सूक्तवाकादयः । ते च "आग्निमारुतादूर्ध्वमनुयाजैश्चरन्ति" इत्यनुयाजोत्कर्षेणोत्कृष्टाः । निःसन्दिग्धं च पाशुकानामनुयाजानामुत्कर्षः । येनाचार्येणोक्तम् "आग्नीध्र उत्पूय पश्वाज्यग्रहणम्" इति ( का.श्रौ.९।१।२ ) । पाशुकान्याज्यानि तत्साध्यत्वाच्चानुयाजा अपि पाशुका एवेति । प्रसङ्गेन च पाशुकान्यङ्गानि सवनीयानामुपकुर्वन्ति । न च तैरुत्कृष्यमाणैः पौरोडाशिकानामुत्कर्षो युक्तः । कुत एतत् । असम्बन्धात् । न हि पौरोडाशिकानां पाशुकानां च सम्बन्धोऽस्ति । तस्माद्वाजिनयागादीनामिहैवानुष्ठानं युक्तरूपमिति ॥ १ ॥

एवं प्राप्ते ब्रूमः —

यथोक्तं वाऽप्रसङ्गात् ॥ २ ॥

वाशब्दः पक्षव्यावृत्तौ । नेह वाजिनयागादयः कर्त्तव्याः । किं तर्हि "प्रहृत्य तृणं तेन चरति" इत्यत्रैव । ननु प्रासङ्गिकत्वादनुत्कर्ष इत्युक्तम् । अत्रोच्यते । अप्रसङ्गात् । न हि पाशुकान्यङ्गानि पुरोडाशेषु प्रसज्यन्ते । कुतः । साधारणत्वात्तन्त्रस्य । साधारणं हि तन्त्रम् । उभयोरपि सोमतन्त्रमध्ये आम्नानात् । तत्र न ज्ञायते किं पाशुकं तन्त्रं पुरोडाशेषु प्रसज्यते, पौरोडाशिकं वा पशाविति । न च परस्परतोऽनयोरङ्गाङ्गिभावः । यथा पशोः पशुपुरोडाशस्य च । उभयोरपि हि प्रकरणात्सोमाङ्गतेति । तस्मात्तन्त्रसाधारण्यात्साधारणानामेवानुयाजानामुत्कर्ष इति ।

यत्तूक्तम् पश्वाज्यग्रहणमाचार्येण । न तत्पश्वर्थतयैव । सपाशुकचातुर्मास्यन्यायेन महत्त्वात्पशुतन्त्रस्य साधारण्येऽपि सति तत्तन्त्राभ्युपगमात् पश्वाज्यग्रहणमित्युक्तम् । तस्मात्तत्रकाल एव वाजिनयागादयो नेहेति ।

अपि च व्यूहने पशुदेवतायाः सवनीयदेवतानां च युगपदभिधानं दृश्यते "अग्नेर्वनस्पतेरिन्द्रस्य वसुमतो रुद्रवत" इत्येवमादि । तच्च तन्त्रस्य साधारण्य उपपद्यते । इतरथा प्रतिसवनं सवनीयेषु परिसमाप्यमानेषु युगपदुच्चारणं न भवेत् । भवति च । तस्मादपि साधारणं तन्त्रम् । ननु व्यूहने वसुमदादिगुणक इन्द्रोऽभिधीयते । न च

सवनीयेष्वेतद्गुणत्वम् । अत्रोच्यते । वचनसामर्थ्यात्—सवनीयनिर्वापे हरिवदादिगुणक इन्द्रः, "प्रातः प्रातः सवस्येन्द्राय पुरोडाशानामिति च निर्गुणो यागे, व्यूहने तु वसुमदादिगुणक इति । नास्ति वचनस्यातिभारः । व्यूहनं हि प्रकृत्य वचनं भवति "अग्नेर्वनस्पतेरिन्द्रस्य वसुमत" इत्येवमादि ॥ २ ॥

होतृचमसेन सोमं भक्षयतः ॥ ३ ॥

द्विवचनोपदेशात् प्रतिप्रस्थाता च ॥ ३ ॥

हिन्व मे गात्राणि हरिवः शिवो मे सप्तर्षीनुपतिष्ठस्वाऽवार्ङ् मे नाभेः सीद मा मेऽवाङ् नाभिमातिगा इति गात्राणि सᳯस्पृशन्ते ॥ ४ ॥

भक्षणोत्तरकालं सर्वभक्षेषु । होतृचमसे च शुक्रशेषस्य होमाभिषवनिमित्तमध्वर्योर्भक्षणम् । मन्थिशेषस्य च प्रतिप्रस्थातुः । शुक्रामन्थिनोर्होतृचमसस्य च वषट्कारनिमित्तं होतुस्तन्त्रेण भक्षणम् । पुनर्ब्रह्मोद्गातृयजमानचमसेषु होतुर्वषट्कारनिमित्तो भक्षः । इतरेषां समाख्यानिमित्तम् । प्रशास्त्रादिचमसेष्वप्येवम् । विशेषस्त्वध्वर्युरप्यत्र प्रष्टव्यः । स च पश्चात् पश्चात्कालीनत्वात् । पुनर्होता होतृचमसे समाख्यानिमित्तं भक्षयत्यध्वर्युप्रतिप्रस्थातारौ पृष्ट्वा । ततः पुनरभ्युन्नीतेषु अध्वर्युर्होमाभिषवनिमित्तं भक्षयेत् । प्रशास्त्रादयश्च वषट्कारसमाख्यानिमित्तं तन्त्रेण । प्रस्थितयागनिमित्तं तु होता साक्षिभूतः अत्र प्रष्टव्य एव ॥ ४ ॥

आप्यायस्वेति द्वाभ्यां चमसानालभन्ते ॥ ५ ॥

चमसिनः ॥ ५ ॥

सोमं वा सिञ्चन्ति मन्त्रेणासम्भवात् ॥ ६ ॥

आप्यायनस्य । वाशब्दोऽवधारणे । पूर्वमाशङ्कितमुपसत्स्वालम्भमात्रेणाप्यायनस्य दृष्टत्वात् ॥ ६ ॥

असर्वभक्षास्तान् ॥ ७ ॥

आप्याय्य ॥ ७ ॥

दक्षिणस्य हविर्धानस्य पश्चादक्षं निदधाति चमसानधः ॥ ८ ॥

पश्चादक्षमित्यक्षस्य पश्चात् । अधश्च नोपरिष्टादिति ॥ ८ ॥

ते नाराशꣳसा आ वैश्वदेवात् ॥ ९ ॥

तेषामावैश्वदेवात् 'नाराशंसा' इति संज्ञा संव्यवहारार्था "अथ यदि नाराशꣳसेषु सन्न" इत्येवमाद्यर्था ॥ ९ ॥

पुरोडाशशकलमादाय समुपहूताः स्म इत्युक्त्वोत्तिष्ठति ॥ १० ॥

अच्छावाकायैतत्प्रयच्छन्नाहाच्छावाक वदस्व यत्ते वाद्यमिति ॥ ११ ॥

एतदिति । शकलम् ॥ ११ ॥

उपो अस्मानिति ब्रुवति होतारमाहोपहवमयं ब्राह्मण इच्छते तꣳ होतरुपह्वयस्वेति ॥ १२ ॥

"उपो अस्मान्" इति ब्रुवत्यच्छावाके होतारमाह "उपहवमयं ब्राह्मण इच्छते तꣳ होतरुपह्वयस्व" इत्येवम् ॥ १२ ॥

उपहूत उन्नीयमानायानुवाचयति ॥ १३ ॥

उपहूते होत्रा उन्नीयमानायानुवाचनं कारयत्युन्नेता ॥ १३ ॥

अच्छावाकचमसमुन्नयति होत्राचमसवत्सर्वम् ॥ १४ ॥

होत्राः प्रशास्त्रादयः । तेषां चमसानां यथोन्नयनं द्रोणकलशात्कृतं तद्वत् । सर्वग्रहणाच्च तृम्पन्त्विति जपो लभ्यते ॥ १४ ॥

आनिधानात्कृत्वा ॥ १५ ॥

अच्छावाकचमसम् ॥ १५ ॥

पूर्वश्चाग्नीध्रादतः ॥ १६ ॥

अग्नीध्रचमसात् पूर्वो भवत्यतः परमच्छावाकचमसः ॥ १६ ॥

आग्नीध्रे हविर्यज्ञर्त्विज इडां प्राश्नन्ति ॥ १७ ॥

ऋत्विग्ग्रहणं यजमानव्युदासार्थम्। हविर्यज्ञग्रहणं च शेषर्त्विजामिति ॥ १७ ॥

पत्नी चान्यच्छालायाम् ॥ १८ ॥

पत्नी चान्यदोदनादि शालायां भक्षयति ॥ १८ ॥

उपविष्टेऽच्छावाके ॥ १९ ॥

इति नवमाध्याये द्वादशी कण्डिका।

ऋतुग्रहैश्चरतो द्रोणकलशादुपयामगृहीतोऽसि मधवे त्वेति द्वादश प्रतिमन्त्रम् ॥ १ ॥

चरत इति द्विवचनोपदेशात् प्रतिप्रस्थाता च। द्रोणकलशादिति नियमो वचनात्। द्वादशग्रहणाच्च द्वादशानामुत्तमयोर्यौगपद्यम्, न तु त्रयोदशस्य। "मधवे त्वेत्येवमादिभिर्मन्त्रैः प्रतिमन्त्रम्। "मधवे त्वेत्यध्वर्युर्गृह्णाति, "माधवाय त्वेति प्रतिप्रस्थाता ॥ १ ॥

अध्वर्योः पूर्वः पूर्वो मन्त्रः ॥ २ ॥

उत्तर उत्तरः प्रतिप्रस्थातुः ॥ ३ ॥

मन्त्रः ॥ ३ ॥

युगपत्प्रथमौ गृह्णीत, उत्तमौ च, व्यत्यासं मध्ये, प्रचरणं च सर्वेषाम् ॥ ४ ॥

व्यत्यासेन ॥ ४ ॥

निष्क्रामत्येकः प्रविशतीतरः ॥ ५ ॥

हविर्धानात्। अध्वर्युप्रतिप्रस्थातारौ ॥ ५ ॥

उत्तर उत्तरः प्रतिप्रस्थाताऽपरकालत्वात् ॥ ६ ॥

तयोश्चोत्तरः प्रतिप्रस्थाता भवति देशतः कालतश्चापरकालत्वात् ॥ ६ ॥

उभयतोऽध्वर्युं पात्रेण परिप्रगृह्णाति ॥ ७ ॥

प्रतिप्रस्थाता प्रविशन्तं निष्क्रामन्तं च ॥ ७ ॥

सर्वहुताः प्रागुत्तमाभ्याम् ॥ ८ ॥

उत्तमग्रहयोः पूर्वे सर्वहुताः कर्त्तव्याः ॥ ८ ॥

ऋतुनेति षट् प्रेष्यतः ॥ ९ ॥

ऋतुना प्रेष्येत्येवं षट्सु प्रैषः ॥ ९ ॥

ऋतुभिरिति चतुरः पात्रमुखे विपर्यस्य ॥ १० ॥

ऋतुभिः प्रेष्येत्येवं चतुर्षु प्रेष्यति । पात्रमुखविपर्यासेन च ग्रहणं होमश्च ॥ १० ॥

षड्वदुत्तमौ ॥ ११ ॥

उत्तमौ तु षड्वद्भवतः, पात्रमुखविपर्यासेन प्रेषणेन च ॥ ११ ॥

यजमानः प्रेषितो होतरेतद्यजेति ब्रूयात् ॥ १२ ॥

"गृहपते यजेत्येवं प्रेषितो यजमानो "होतरेतद्यजेति ब्रूयात् । ततश्च होतुस्तद्याज्यापाठः ॥ १२ ॥

अध्वर्यू च ॥ १३ ॥

प्रेषितौ सन्तावेवमेवाहतुर्होतरेतद्यजेति । एक एवाहेत्यपरे । परार्थत्वात् ॥ १३ ॥

त्रयोदशं गृह्णीयादिच्छन्नुपयामगृहीतोऽस्यꣳ हसस्पतये त्वेति ॥ १४ ॥

अनेन मन्त्रेण । यदि त्रयोदशं गृह्णीयादिति विकल्पः ॥ १४ ॥

तं च—

प्रतिप्रस्थातारमनुजुहोति ॥ १५ ॥

अध्वर्युः ॥ १५ ॥

अन्यतरस्मिञ्छेषौ कृत्वा वशिनैन्द्राग्नं गृह्णाति प्रतिप्रस्थातेन्द्राग्नी इति ॥ १६ ॥

अन्यतरस्मिन्पात्रे ग्रहणशेषौ कृत्वा वशिना रिक्तेन पात्रेणैन्द्राग्नं ग्रहं गृह्णाति प्रतिप्रस्थाता "इन्द्राग्नी इत्यनेन मन्त्रेण ॥ १६ ॥

आहरति भक्षꣳ होतृपोतृनेष्ट्रग्नीद्ब्राह्मणा-

च्छꣳसिप्रशास्तृभ्यः ॥ १७ ॥

यो यस्य वषट्कर्त्ता स तेन सह भक्षयेत्। उपहवप्रार्थनं तु साधारण्यात्सर्वेभ्यः ॥ १७ ॥

त्रिपर्यस्य पात्रꣳ होतृपोतृनेष्टृच्छावाकानाम् ॥ १८ ॥

भक्षाहरणम्। भक्षाहरणाम्नानाच्चासर्वहुतत्वम्। अतश्च विकल्पः, सर्वहुताः प्रागुत्तमाभ्यामसर्वहुता वेति ॥ १८ ॥

होतरेतद्यजेत्यत्र चिन्त्यते। किं याज्यामात्रमपनीतम् उत वषट्कारोऽपीति। किं चातः। यदि याज्यामात्रमपनीतं यजमानस्यैव वषट्कारो भक्षश्च। अथोभयं ततो होतुरेव भक्षः। किं तावत्प्राप्तम्—

यावदुक्तꣳ होतुर्यजमानयोगाद्वरणवत् ॥ १९ ॥

होतरेतद्यजेत्यनेन याज्यामात्रमपनीयते न वषट्कारः। कुत एतत्। यजमानयोगाद्वरणवत्। यथा वरणं यजमानयोगि एवं वषट्कारोऽपि। वषट्कारायैव हि वरणम्। अतो यजमानस्यैव वषट्कारः। तन्निमित्तं च भक्षणम्। अथवा वरणवदिति मतुबयम्। एवं वरणवद्वषट्करणं भवतीति ॥ १९ ॥

एवं प्राप्त उच्यते—

कारणाद्वा होतृभक्षः ॥ २० ॥

वाशब्दः पक्षव्यावृत्तौ। होतुर्वा भक्षो भवति। किं कारणम्। वषट्कारनिमित्तत्वाद्भक्षस्य। होतरेतद्यजेत्यनेन न याज्यामात्रमपनीतम्। किं तर्हि वषट्कारोऽपि। एवमेवहि होत्रा इष्टं भवति। अपि च श्रूयते "याज्यायाः अनवानं वषट्करोतीति। तस्मादुभयमपनीयते याज्या वषट्कारश्च, तन्निमित्तश्च भक्ष इति ॥ २० ॥

यत्तूक्तं वरणवदिति। अत्रोच्यते—

॥ अप्राप्तेर्वरणम् ॥ २१ ॥

वरणं भक्षप्राप्तेर्न निमित्तं भवति। वषट्कारनिमित्तता हि भक्षस्योक्ता। विभक्तिव्यत्ययेन वा सूत्रं व्याख्येयम्। वरणाद्प्राप्तिर्भक्षस्य ॥ २१ ॥

विपर्यस्य पात्रꣳ होतुर्द्विर्भक्षणम् ॥ २२ ॥

होतरेतद्यजेत्यनयोर्ग्रहयोः ॥ २२ ॥

तावद्वा सर्वहुतस्त्वात्पूर्वेषाम् ॥ २३ ॥

तावदेव वा भक्षणं भवति, यतोऽन्ये सर्वहुता इति ॥ २३ ॥

निर्हृत्य पात्रꣳ होतुः पुरस्तात्प्राङास्ते ॥ २४ ॥

मार्जालीये प्रक्षाल्य पात्रं होतुः पुरस्तात्प्राङुपविशत्यध्वर्युः ॥२४॥

अभिहुतः शोꣳसावेत्यावृत्योथामोदैवेति प्रतिगृणाति प्रणवावसानयोः ॥ २५ ॥

'शोंसावेत्यनेन होत्राऽऽहूतोऽध्वर्युरावृत्य "ओथामोदैवेति प्रतिगृणाति ऋचः प्रणवे ऽवसाने च ॥ २५ ॥

ओमिति वा ॥ २६ ॥

प्रतिगृणाति ॥ २६ ॥

शस्त्रान्ते नित्यम् ॥ २७ ॥

ओमिति प्रतिगरः ॥ २७ ॥

वागन्तो वा पूर्वः ॥ २८ ॥

पूर्वः प्रतिगरो वागन्तो वा भवति। वाशब्दो विकल्पार्थः ॥ २८ ॥

ऐन्द्राग्नमादायाश्राव्याहोक्थशा यज सोमस्येति ॥ २९ ॥

ऐन्द्राग्नं ग्रहमादायाश्राव्याह "उक्थशा यज सोमस्येति प्रेष्यति॥२९॥

एष प्रैषः सशस्त्राणाम् ॥ ३० ॥

सशस्त्राणां ग्रहाणामेष प्रैषो भवति ॥ ३० ॥

नाराशꣳसानां च कम्पनꣳ हूयमाने ॥ ३१ ॥

नाराशंसचमसानां च कम्पनं हूयमाने सशस्त्रे ग्रहे ॥ ३१ ॥

निहितेषु चेद्धोमः सशस्त्रस्य ॥ ३२ ॥

अपरेणोत्तरवेदिं निहिताः निहिता उच्यन्ते। तेषु चेत्सशस्त्रस्य होमः तदा चमसानामपि होमो भवति ॥ ३२ ॥

भक्षप्रभृत्यानिधानात्कृत्वा—

इति नवमाध्याये त्रयोदशी कण्डिका।

---

वैश्वदेवं गृह्णाति ॥ १ ॥

शुक्रपात्रेण द्रोणकलशादन्वारब्धे वौमास इति ॥ २ ॥

ऐन्द्राग्नस्य भक्षप्रभृत्यापात्रनिधानात्कृत्वा वैश्वदेवं गृह्णाति द्रोणकलशाच्छुक्रपात्रेणान्वारम्भे कृते वा अकृते वा "ओमास" इत्यनेन मन्त्रेण ॥ २ ॥

शुक्रं पूतभृत्यासिच्य द्रोणकलशपवित्रयोजनम् ॥ ३ ॥

शुक्रस्य पूतभृत्यासेकं कृत्वा द्रोणकलशपवित्रयोः स्वस्थाने योजनं क्रियते ॥ ३ ॥

पशुपुरोडाशप्रथमान्त्सवनीयान्निर्वपति पयस्यावर्जम् ॥ ४ ॥

प्रतिसवनं हि सवनीयाः पुरोडाशाः श्रूयन्त इति। पयस्यावर्जमिति कुतः। प्रातःसवन एवैषा मैत्रावरुणी पयस्याऽवक्लृप्ता भवति नेतरयोः सवनयोरिति ॥ ४ ॥

स्तोत्रमुपाकरोति तृणाभ्यां ग्रहमुपस्पृश्यो-

पावर्त्तध्वमिति ॥ ५ ॥

तृणाभ्यां वैश्वदेवं ग्रहमुपस्पृश्य प्रस्तोत्रे तृणे प्रयच्छन् "उपावर्त्तध्वमित्यनेन मन्त्रेण स्तोत्रमुपाकरोति ॥ ५ ॥

एवं धुर्येषु सर्वत्र ॥ ६ ॥

स्तोत्रोपाकरणम्। धुर्याणि चावृत्तिस्तोत्राण्युच्यन्ते। पवमानेषु त्वनावृत्त्या स्तुत्यभिनिर्वृत्तिः। स्तुतमनुशंसतीति। ततो वैश्वदेवस्य

शस्त्रम् । पुनस्तस्यैव यागकाले नाराशंसानां कथनम् ॥ ६ ॥

ततः—

सर्वभक्षाश्चमसाः ॥ ७ ॥

मार्जालीये पात्रप्रक्षालनम् ॥ ८ ॥

ग्रहपात्रस्य चमसानां च ॥ ८ ॥

उक्थ्यं विगृह्णाति त्रैधं देवेभ्यस्त्वेति सर्वेभ्यः ॥ ९ ॥

त्रैधमुक्थ्यं विगृह्णाति "देवेभ्यस्त्वेति सर्वेभ्यः प्रशास्त्रादिभ्यः ॥ ९ ॥

मित्रावरुणाभ्यां त्वेति वा प्रशास्त्रे ॥ १० ॥

विगृह्णाति वेति विकल्पः । तुल्यशास्त्रत्वात् ॥ १० ॥

तूष्णीꣳ सादनम् ॥ ११ ॥

"न योनौ सादयेत्" इति (श० ब्रा० ४।२।३।१८) वचनात् ॥ ११ ॥

स्तोत्रमुपाकरोति ॥ १२ ॥

स्तोत्रावसरविधित्सयेदमुक्तम् । विधिस्तु पूर्वमेवोक्तः ॥ १२ ॥

उक्थशा यज सोमानामिति प्रैषोऽनाराशꣳसेषु ॥ १३ ॥

अनाराशंसेषु चमसेषु । इह चानाराशंसाश्चमसाः ॥ १३ ॥

यस्य विग्रहस्तस्य प्रथमं चमसमुन्नयति ॥ १४ ॥

स्वस्थानव्यवस्थितमेव । इह च प्रशास्तुर्विग्रहः प्रथमः ॥ १४ ॥

ग्रहशेषं चास्मिन्नासिञ्चति ॥ १५ ॥

हुत्वा ग्रहम् । तच्छेषं तच्चमस आसिञ्चति । "तदुह चरकाध्वर्यवो विगृह्णन्ति" (श०ब्रा०४।२।३।१५) इत्येतन्नोपनिबद्धमाचार्येण ॥ १५ ॥

एवं प्रतिप्रस्थातोत्तराभ्याम् ॥ १६ ॥

विग्रहाभ्यां प्रचरति ॥ १६ ॥

इयांस्तु विशेषः—

इन्द्राय त्वेति ब्राह्मणाच्छꣳसिने ॥ १७ ॥

ब्राह्मणाच्छंसिविग्रहे ।

इन्द्राग्निभ्यां त्वेत्यच्छावाकाय ॥ १८ ॥

अच्छावाकविग्रहे। प्रातर्विग्रहं च पात्रप्रक्षालनान्तं कर्म । प्रागच्छावाकविग्रहात्। केचित्सूत्रं पशुविशसनमिच्छन्ति ।"स प्रातःसवन आलब्ध आ तृतीयसवनाच्छ्रप्यमाण उपशेते" इति (श० ब्रा० ४।२।५।१३) वचनात्। तन्नेति सम्प्रदायः। प्रकृतौ हि पशुपुरोडाशान्ते विशसनमाम्नातम् "पुरोडाशेन प्रचर्याथ पशुं विशास्ति" इति (श०ब्रा० ३।८।३।३)। इह चालङ्करणादय उत्कृष्टाः। माध्यन्दिने हि सवने तेषामाम्नानं "पुरोडाशाँ२ अलङ्कुर्विति (श०ब्रा०४।२।५।११)। इह प्रागलङ्करणात् ये पदार्थाः तदन्ते पशुविशसनस्य युक्तरूपतेति ॥ १८ ॥

प्रागच्छावाकविग्रहात्सोमोपावहरणम् ॥ १९ ॥

कर्त्तव्यम् ॥ १९ ॥

वसतीवर्यर्धं चासिञ्चत्याधवनीये "विश्वे देवा मरुत इन्द्रो अस्मानस्मिन् द्वितीये सवने न जह्युः। आयुष्मन्तः प्रियमेषां वदन्तो वयं देवानाᳪ सुमतौ स्यामेति ॥ २० ॥

अनेन मन्त्रेण ॥ २० ॥

एकधनार्धं च ॥ २१ ॥

चशब्दादनेनैव मन्त्रेणाधवनीय एवासिञ्चति ॥ २१ ॥

चरिते सर्वैः प्रशास्तः प्रसुहीति ब्रूयात ॥ २२ ॥

सर्वैर्ग्रहैश्चरिते "प्रशास्तः प्रसुहीति ब्रूयात् ॥ २२ ॥

प्रसूतानाᳪ सर्पणम् प्रसूतानाᳪ सर्पणम् ॥ २३ ॥

इति नवमाध्याये चतुर्दशी कण्डिका।



इति श्रीकर्कोपाध्यायकृते कात्यायनसूत्रभाष्ये नवमोऽध्यायः।



# दशमोऽध्यायः ।

सर्पणादि माध्यन्दिनम् ॥ १ ॥

सर्पणमादौ कृत्वा माध्यन्दिनं सवनं प्रतिपत्तव्यम् । किमर्थमिदमुच्यते । ये माध्यन्दिनगता विशेषास्तेऽत्र यथा प्रवर्त्तिष्यन्त इति ॥१॥

होतृचमसे वसतीवरीः कृत्वा यजमानाय

प्रयच्छत्युष्णीषं ग्रावस्तुते ॥ २ ॥

उष्णीषञ्च शिरोवेष्टनार्थं वासोऽभिधीयते । तद् ग्रावस्तुते प्रयच्छति ॥ २ ॥

अद्र्यादानप्रभृति त्रिपर्यायानभिषवान्करोति ॥ ३ ॥

यथा प्रातःसवनेऽभिहिताः ॥ ३ ॥

अत्र विशेषमाह—

आत्तमभि मिमीते ॥ ४ ॥

य आत्तो ग्रावा तमभि सोमं मिमीते प्रक्षिपति ॥ ४ ॥

कुत एतत्—

उपांशुसवनस्यानिङ्गनश्रुतेः ॥ ५ ॥

उपांशुसवनोपांशुपात्रान्तर्यामपात्राणाम् अनिङ्गनमचालनं श्रूयते—"तानि वा अनिङ्ग्यमानानि शेरआ तृतीयसवनात्" इति (श.ब्रा.४।१।२।२५) । न चाचाल्यमाने तस्मिन्नधिषवणे सोममानं शक्यते कर्तुमिति ॥५॥

इहा३ इहा३ इति प्रथमः पर्यायः ॥ ६ ॥

अभिषवस्य ॥ ६ ॥

अविलम्बितो द्वितीयस्तूर्णस्तृतीयः ॥ ७ ॥

अविलम्बितग्रहणाच्च प्रथमो विलम्बितः । स चायं वृत्तिधर्मः । वृत्तिधर्माह्येते विलम्बितादयः । तथा चाह "अभ्यासार्थे द्रुतां वृत्तिं प्र-

योगार्थे तु मध्यमाम् । शिष्याणां तु हितार्थाय कुर्याद् वृत्तिं विलम्बिताम्'' इति । प्रयोजनमविलम्बिततूर्णयार्मात्रालोपो न भवति । इहा इहा इति च वीप्सोपदेशात् प्रतिप्रहारमभ्यासः । अत्र च केचिन्मन्त्रान्तरोपदेशात् ''मा भेरित्यस्याप्रवृत्तिमिच्छन्ति । नेत्युपाध्यायपादाः । येन पूर्वमन्त्रमबाधमानस्यापीहेत्यस्य निवेशो भवत्येव ॥ ७ ॥

अविलम्बितस्थान उत्तमे बृहद्बृहदिति ॥ ८ ॥

उत्तमेऽभिषवे अविलम्बितपर्यायस्य स्थाने बृहद्बृहदिति प्रयोगः शाखान्तरात् ॥ ८ ॥

अर्धे वाऽविशेषोपदेशात् ॥ ९ ॥

अभिषवार्धे वा बृहद्बृहदित्यनेन कर्तव्यम् । कुत एतत् । अविशेषोपदेशात् । अविशेषेण हि माध्यन्दिनानां पठ्यते ''इहा३ इहा३ इत्यभिषुणोतीन्द्रमेवैतदाच्यावयति बृहद्बृहदितीन्द्रमेवैतदाच्यावयति'' इति (श.ब्रा.४।३।३।१)। यद्येवम् 'अविशेषात् विशेषो बलवानिति विशेषाङ्गीकरणमेव युक्तरूपम् । तस्मादविलम्बितस्थाने उत्तमे बृहद्बृहदित्येव सिद्धान्तः । अविशेषोपदेशस्तु यथाम्नातस्यानुवादकः ॥ ९ ॥

शुक्रप्रभृति चतुर्णां ग्रहणम् ॥ १० ॥

ग्रहाणाम् ॥ १० ॥

आग्रयणꣳ स्त्रतृतीयाभ्यो धाराभ्यः ॥ ११ ॥

गृह्णाति । धाराद्वयमस्त्येव । आग्रयणं तु प्रतिप्रस्थाता आ सिञ्चति ॥ ११ ॥

प्रागुक्थ्यान्मरुत्वतीयमृतुपात्रेणेन्द्रमरुत्व इति ॥ १२ ॥

गृह्णाति ॥ १२ ॥

उत्तरमेके ॥ १३ ॥

मरुत्वतीयं गृह्णन्ति । यदा त्वन्तराऽऽग्रयणोक्थ्यौ षोडशी गृह्यते तदा मरुत्वतीयो मुष्टिग्रहः । धारां हि प्रकृत्योच्यते ''माध्यन्दिने च पञ्च प्रथमान्'' इति ॥ १३ ॥

समन्वारब्धनिष्क्रमणादि करोत्याऽग्नीदग्नीनिति प्रैषात् ॥ १४ ॥

प्रातःसवनिकमात्रोपदेशोऽत्र अतिदिष्टः ॥ १४ ॥

सदसि पवमानोपाकरणम् ॥ १५ ॥

भवति ॥ १५ ॥

अहर्गणे च सर्वत्र प्रायणीयोदयनीयवर्जम् ॥ १६ ॥

अहर्गणे च सदसि पवमानोपाकरणं भवति। सर्वत्रग्रहणात् सर्वपवमानेषूपाकरणं सदसि भवति। ततश्च बहिष्पवमानमपि अहर्गणे सदस्येव भवति प्रायणीयोदयनीयौ वर्जयित्वा ॥ १६ ॥

पशुनेहीत्यपकृष्य दधिघर्माय दध्याहर दक्षिणा उपावर्त्तयेति प्रैषोपचयः ॥ १७ ॥

अग्नीदग्नीनिति प्रैषे पशुनेहीत्येतदपकृष्य "दधिघर्माय दध्याहर दक्षिणा उपावर्त्तयेति प्रैषोपचयो भवति ॥ १७ ॥

सप्रवर्ग्ये दधिघर्मः ॥ १८ ॥

ततश्चाप्रवर्ग्ये "दधिघर्माय दध्याहरेति न भवति ॥ १८ ॥

उपविश्य सदसः पुरस्तात्सपवित्रायामग्निहोत्रहवण्यां ग्रहणं यथोक्तम ॥ १९ ॥

सदसः पुरस्तादग्निहोत्रहवण्यां सपवित्रायां दधिघर्मस्य ग्रहणम्। यथोक्तग्रहणं च मन्त्रप्रवृत्त्यर्थम्। अवान्तरसामान्याच्च। सपवित्रता शाखापवित्रेण ॥ १९ ॥

होतर्वदस्व यत्ते वाद्यमित्याह। वाद्यान्ते श्रातः हविरित्युत्तिष्ठन्नाह ॥ २० ॥

होतुर्यद्वाद्यं तदन्ते "श्रातः हविरित्युत्तिष्ठन्नाह ॥ २० ॥

दधिघर्मस्य यजेति प्रेष्यति ॥ २१ ॥

अत्र चोदकपरिप्राप्त्या "इन्द्रं दधि घर्मस्य यज" इति प्रैषः ॥ २१ ॥

हुतशेषं घर्मर्त्विजः सयजमानाः समुपहाता भक्षयन्ति यथोक्तम् ॥ २२ ॥

हुतशेषग्रहणाच्च स्रुच्यः शेषः। तथा च श्रूयते "अनुवषट्कृतआहरन्ति भक्षमिति (श.ब्रा.१४।३।१।३०)। घर्मर्त्विग्ग्रहणं चेतरर्त्विग्व्युदासार्थम्। समुपहावमित्युपहूयोपहूय भक्षणम्। यथोक्तग्रहणं च मन्त्रप्रवृत्त्यर्थम् ॥ २२ ॥

(१) प्राणभक्षं वाऽदीक्षिताः ॥ २३ ॥

कुर्वन्ति। वाशब्दो विकल्पार्थः। दीक्षितास्तु नियोगतः प्रत्यक्षभक्षमिति ॥ २३ ॥

पशुपुरोडाशेन प्रचर्य पुरोडाशादि करोत्याधिष्ण्यनिधानात् ॥ २४ ॥

पशुपुरोडाशेन भागपरिहरणान्तेन प्रचर्य सवनीपुरोडाशादि करोत्या धिष्ण्यनिधानान्तम्। तत्रैषे तूक्तो विशेषः ॥ २४ ॥

उन्नीयमानेभ्यश्चानुवाचनप्रभृत्या चमसनिधानात् ॥ २५ ॥

चशब्दात्करोति ॥ २५ ॥

इति दशमाध्याये प्रथमा कण्डिका।



दशसूत्रपति ॥ १ ॥

चमसेषु ॥ १ ॥

माध्यन्दिनस्य सवनस्य निष्केवल्यस्य भागस्य शुक्रवतो मधुश्चुत इन्द्राय सोमान्प्रस्थितान्प्रेष्येति ॥ २ ॥

प्रस्थितप्रैषः ॥ २ ॥

मन्थीवत इति वा मधुश्चुत स्थाने ॥ ३ ॥

वाशब्दो विकल्पार्थः ॥ ३ ॥

(१) प्राणेन भक्षः प्राणभक्षः, नासिकयाऽवघ्राणमित्यर्थः।

इडां भक्षयित्वा शालाद्वार्ये दाक्षिणहोमो वासःप्रबद्ध् हिरण्य् हवन्यामवधाय चतुर्गृहीतमुदुत्यमिति ॥ ४ ॥

जुहोति । शालाद्वार्यग्रहणमाहवनीयव्युदासार्थम् । दक्षिणासम्बद्धश्च होमो दाक्षिणहोमः । दक्षिणाच्च क्रतुदक्षिणोच्यते नात्रेयादीनाम् । उपचारवृत्तो हि तत्र दक्षिणाशब्दः । वाससि बध्वा हिरण्यं हवन्यामवधाय चतुर्गृहीतम् "उदुत्यमिति जुहोति ॥ ४ ॥

चित्रं देवानामिति द्वितीयाम् ॥ ५ ॥

आहुतिं जुहोति । द्वितीयाग्रहणाच्चतुर्गृहीतं सहिरण्यता च प्राप्यते ॥ ५ ॥

आग्नीध्रीयेऽग्ने नयेति ॥ ६ ॥

जुहोतीत्यनुवर्त्तते । अत्र हिरण्यचतुर्गृहीते न स्तोऽनुपदेशात् ॥६॥

अयन्न इत्यपरामश्वं चेद्युक्तं दद्यादयुक्तं वा ॥ ७ ॥

"अथ यद्यश्वं युक्तं वाऽयुक्तं वा दास्यन्स्यादथ द्वितीयां जुहुयाद्यद्यु न नाद्रियेत" इति (श०ब्रा०४।३।४।१२) वचनात् । यद्यपि दक्षिणायोगेन युक्तोऽश्वः अथाप्ययुक्तोऽङ्गं दक्षिणा भवति तथापि होतव्या । यथा "शताश्वरथमध्वर्यवे ददाति' इति । तत्र चाश्वाहुतेरपकर्षः । दास्यन्निति वचनात् । ननु चेह श्रूयते "चतस्रो वै दक्षिणा हिरण्यं गौर्वासोऽश्व" (श०ब्रा०४।३।४।७) इत्यश्वनियमाच्चेच्छब्दो यद्यर्थः ( कथं सङ्गच्छते ) । एवं चेद्विकृत्यर्थो भविष्यति । यथा "उल्मुके उदूहत्यनुयाजाश्चेत्" इति (का०श्रौ०२।७।२६) ॥ ७ ॥

वासोहिरण्ये ददाति ॥ ८ ॥

दक्षिणाम् ॥ ८ ॥

सहिरण्यो यजमानः शालां पूर्वेण तिष्ठन्नभिमन्त्रयते दक्षिणा बहिर्वेदि तिष्ठन्तीर्दक्षिणतो "रूपेण व" इति ॥ ९ ॥

दृष्टार्थत्वात्प्रदेयहिरण्येन सहिरण्यो यजमानः शालां पूर्वेण तिष्ठन्

दक्षिणतो बहिर्वेदि तिष्ठन्तीर्दक्षिणा अभिमन्त्रयते "रूपेण व" इत्यनेन मन्त्रेण। एतच्चाभिमन्त्रणं गवाम्। "ऋतस्य पथा प्रेत" इति मन्त्रलिङ्गात्। अयं च मन्त्रश्चोदितार्थाभिधायी ॥ ९ ॥

गवाᳬ शतं द्वादशं वाऽतिक्रामति ॥ १० ॥

"तᳬ शतेनैव दक्षयति" इति (श०ब्रा०४।३।४।३) वचनात्। द्वादशं तु शाखान्तरात् ॥ १० ॥

मन्थौदनतिलमाषाश्च ॥ ११ ॥

चशब्दान्नीयन्ते। एते च पुरुषसंस्कारार्थाः न दक्षिणेति सम्प्रदायः। तथा च श्रूयते "चतस्रो वै दक्षिणा हिरण्यं गौर्वासोऽश्व" इति (श०ब्रा०४।३।४।७)। दानं त्वेषां पुरुषसंस्काराय न दाक्षिण्याय। मन्थौदनादिसंस्कृताः पुरुषाः कर्मानुष्ठास्यन्तीति। प्रयोजनं सक्तूषु प्रवर्त्तन्ते। एतेषामपि दक्षिणासम्बन्ध इत्यपरे ॥ ११ ॥

अन्तरा शालासदसी दक्षिणेनाग्नीध्रं तीर्थेन ॥ १२ ॥

गवादीनामतिक्रमणम् ॥ १२ ॥

सुब्रह्मण्यां च प्रेष्यति वा ॥ १३ ॥

न वेति विकल्पः ॥ १३ ॥

आऽऽग्नीध्रादनुगच्छति सुन्वन् ॥ १४ ॥

आग्नीध्रं यावद्यजमानः अनुगच्छति गवादीन् ॥ १४ ॥

प्रागनुवाचनाच्च ॥ १५ ॥

"इन्द्राय मरुत्वतेऽनुब्रूहीत्यतः प्राक्सुन्वन्नेव प्रत्येतव्यः ॥ १५ ॥

सदो गच्छति "वि स्वरिति ॥ १६ ॥

प्रेक्षते "यतस्व सदस्यैरिति सदस्यान् ॥ १७ ॥

ब्राह्मणमद्येत्याग्नीध्रगमनम् ॥ १८ ॥

तच्च दक्षिणादानाय। अतश्च सक्तू न भवति। सदोगमनं तु भवत्येव ॥ १८ ॥

उपविश्य हिरण्यमस्मै ददात्यस्मद्राता इति ॥ १९ ॥

उपविश्याग्नीध्रे हिरण्यमस्मै ददाति "अस्मद्राता" इत्यनेन मन्त्रेण। हिरण्यग्रहणं च दक्षिणाद्रव्योपलक्षणार्थम्। एवं हि श्रूयते "तद्यदग्नीधे प्रथमाय दक्षिणां (१)नयन्ति" इति (श०ब्रा०४।३।४।२०)। समस्तानां च दक्षिणात्वं न हिरण्यस्यैवेति ॥ १९ ॥

आत्रेयाय चाग्नीध्रवत्सदसः पुरस्तादुपविष्टाय क आत्रेयं क आत्रेयमिति त्रिरुक्त्वा सकृच्छेषमहालेयमवालेयमकौद्रेयमशौभ्रेयमवामरथ्यमगौपवनमिति ॥२०॥

चशब्दादात्रेयाय च सदसः पुरस्तादुपविष्टाय हिरण्यं ददाति। आग्नीध्रवदिति मन्त्रो लभ्यते। इयांस्तु विशेषः—क आत्रेयं क आत्रेयमित्युक्त्वा ततो मन्त्रेण ददाति ॥ २० ॥

ऋत्विग्भ्यो दक्षिणा ददाति ॥ २१ ॥

ऋत्विग्ग्रहणं चमसाध्वर्युव्युदासार्थम् ॥ २१ ॥

पृथक् शतानि पुरुषभेदात् ॥ २२ ॥

प्रत्यृत्विजं शतं शतं देयम्। कुत एतत्। ऋत्विग्भेदात् ॥ २२ ॥

प्रतिविभागो वा कर्मप्राधान्यात् ॥ २३ ॥

प्रतिविभागेन वा दानम्। कुत एतत्। कर्मप्राधान्यात्। कर्मप्रधाना हि दक्षिणा, न सम्प्रदानप्रधाना। अतश्च प्रतिविभाग इति ॥२३॥

यथारम्भं द्वादशद्वादशाद्येभ्यः, षट् षड् द्वितीयेभ्य, श्चतस्रश्चतस्रस्तृतीयेभ्य, स्तिस्रस्तिस्र इतरेभ्यः ॥ २४ ॥

ऋत्विजः प्रकृत्यैवं हि श्रूयते "भागिनः अर्धिनस्तृतीयिनः पादिन" इति। यथारम्भमिति ब्रह्मादिभ्यो वक्ष्यमाणक्रमेण ॥ २४ ॥

ब्रह्मोद्गातृहोतृभ्यः ॥ २५ ॥

अध्वर्युभ्यां च हविर्धान उपविष्टाभ्याम् ॥ २६ ॥

ददाति ॥ २६ ॥

---

(१) ददातीति पाठः श०ब्रा० पुस्तके दृश्यते।

"अग्नये त्वेति हिरण्यं प्रतिगृह्णीतः ॥ २७ ॥

द्विवचनोपदेशात् अध्वर्युप्रतिप्रस्थातारौ ॥ २७ ॥

रुद्राय त्वेति गां, बृहस्पतये त्वेति वासो, यमाय त्वेत्यश्वम् ॥ २८ ॥

प्रतिगृह्णीत इत्यनुवर्त्तते ॥ २८ ॥

कोऽदादित्यन्यत् ॥ २९ ॥

प्रतिगृह्णीतः । अन्यच्च दक्षिणाद्रव्यव्यतिरिक्तम् । एवं हि श्रूयते "अथ यदन्यद्ददाति कामेनैव तद्ददातीदं मेऽप्यमुत्रासदिति तत्प्रत्येति कोऽदात्" इति (श०ब्रा०४।३।४।३२) ॥ २९ ॥

इच्छतो मन्त्रवचनम् ॥ ३० ॥

प्रतिग्रहमन्त्रवचनमिच्छया ॥ ३० ॥

प्रत्येत्य प्रस्तोतृप्रशास्तृब्राह्मणाच्छंसिपोतृनेष्ट्रच्छावाकोन्नेतृग्रावस्तुत्सुब्रह्मण्येभ्यः ॥ ३१ ॥

हविर्धानात्प्रत्येत्य सदसि व्यवस्थितेभ्यो ददाति ॥ ३१ ॥

प्रसृप्तेभ्यश्चान्यत् ॥ ३२ ॥

प्रासर्पकेभ्यश्चान्यद्ददाति ॥ ३२ ॥

कण्वकश्यपयाचमानवर्जम् ॥ ३३ ॥

कण्वकश्यपौ गोत्रतः । याचमानः प्रार्थयिता । एतेभ्यो न देयम् ॥ ३३ ॥

ज्ञातये चाश्रोत्रियाय ॥ ३४ ॥

न देयम् । श्रोत्रियाय तु ज्ञातयेऽपि दीयत एव ॥ ३४ ॥

न रजतं दद्याद् बर्हिषि "पुराऽस्य संवत्सराद् गृहे रुदन्तीति श्रुतेः ॥ ३५ ॥

बर्हिःशब्देन कर्मोपलक्ष्यते । तत्र रजतं न देयम् । निन्दार्थवादात् ॥ ३५ ॥

पत्नी च ददाति ॥ ३६ ॥

दीयमानमनुजानाति । द्रव्यसाधारण्यात् ॥ ३६ ॥

सर्वेभ्यो दत्त्वा प्रतिहर्त्रे पश्चात् ॥ ३७ ॥

सर्वेभ्यः प्रतिषिद्धेभ्य इति केचित् । तन्न, प्रतिषेधवैयर्थ्यप्रसङ्गात् । तस्मात्सर्वेभ्यो येभ्य एव दानमप्रतिषिद्धमिति । पश्चात्प्रतिहर्त्रे ददाति । "प्रतिहर्त्र उत्तमाय ददाति" इति (श०ब्रा०४।३।४।२२) वचनात् ॥ ३७ ॥

इति दशमाध्याये द्वितीया कण्डिका ।



इन्द्राय मरुत्वते ऽनुवाचयति ॥ १ ॥

"अथाहेन्द्राय मरुत्वते ऽनुब्रूहि" इति इति (श०ब्रा०४।३।४।२३) वचनात् ॥ १ ॥

अदानमतः ॥ २ ॥

अतः परमदानम् । पूर्वं तु यावदिच्छं दानम् ॥ २ ॥

ऋतुपात्रेण मरुत्वतीयग्रहणमुपयामगृहीतोऽसि मरुतां त्वौजस इति ॥ ३ ॥

अनेन मन्त्रेण ॥ ३ ॥

अध्वर्युमनु जुहोति ॥ ४ ॥

एनं ग्रहं प्रतिप्रस्थाता ॥ ४ ॥

सशस्त्रे त्वानुपूर्व्ययोगात् ॥ ५ ॥

तुशब्दः पक्षव्यावृत्तौ । सशस्त्रे मरुत्वतीये ऽध्वर्युमनु हूयते, न प्रथमे । एवं मन्त्राणामानुपूर्व्ययोगः कृतो भवति ॥ ५ ॥

तृतीयश्रुतेश्च ॥ ६ ॥

"तेभ्य एतं तृतीयं ग्रहमगृह्णादुपयामगृहीतोऽसि मरुतां त्वौजस" इति (श०ब्रा०४।३।३।९) । पूर्वं तु मुख्यत्वादध्वर्युणा सतं, तच्चोक्तेन न्यायेनानुपपन्नमिति ॥ ६ ॥

वशिना मरुत्वतीयग्रहणं मरुत्वन्तमिति ॥ ७ ॥

वशिना रिक्तेन पात्रेण मरुत्वतीयं गृह्णाति "मरुत्वन्तमित्यनेन मन्त्रेण। तच्च ऋतुपात्रेण। "ऋतुपात्रेण मरुत्वतीयं गृह्णाति" इति वचनात् ॥ ७ ॥

निर्हृते पात्रे होता शंसति ॥ ८ ॥

पूर्वमरुत्वतीयस्य भक्षोत्तरकालं पात्रनिर्हरणे कृते इत्यर्थः। होता शंसतीति यदुक्तं भवति, होतुः पुरस्तात्प्राङास्त इति। गतस्तोत्रो ह्ययं माध्यन्दिनेन पवमानेन ॥ ८ ॥

जनिष्ठा उग्र इत्येतस्यां मदामोदैवेति प्रति

गरः सकृत ॥ ९ ॥

"जनिष्ठा उग्र" इत्यस्यामृचि पादशः शस्यमानायां यत्र क्वचन प्रदेशे "मदामोदैवेति सकृत्प्रतिगरः ॥ ९ ॥

तत्स्थाने विकृतौ ॥ १० ॥

तस्याः स्थाने विकृतौ या भविष्यति तस्यामपि "मदामोदैवेति सकृत्प्रतिगरः ॥ १० ॥

आ निधानात्कृत्वा माहेन्द्रं गृह्णाति वैश्वदे-

ववन्महाँ इन्द्र इति ॥ ११ ॥

महामरुत्वतीयस्य आपात्रनिधानात्कृत्वा माहेन्द्रं गृह्णाति वैश्वदेववदिति। यदुक्तं भवति शुक्रपात्रेण द्रोणकलशादन्वारब्धे वेति च। "महाँ इन्द्र" इत्यनेन मन्त्रेण ॥ ११ ॥

शुक्रं पूतभृत्यासिच्य पृष्ठमुपाकृत्य प्रेष्यत्यभिषोतारो-

ऽभिषुणुतौलूखलानुद्वादयताग्नीदाशिरं विनय

सौम्यस्य वित्तादिति ॥ १२ ॥

पूतभृति शुक्रासेकं कृत्वा पृष्ठस्तोत्रमुपाकृत्य प्रेष्यत्यभिषोतारोऽभिषुणुतेति। चत्वारः प्रैषार्थाः ॥ १२ ॥

ऋजीषमिश्रमꣳशुमभिषुण्वन्ति यथाकथाचा-
नुदकम् ॥ १३ ॥

उदकस्यानाम्नानात् ॥ १३ ॥

आधवनीये करोति ॥ १४ ॥

तत एव हि पावनं श्रूयत इति ॥ १४ ॥

त्रिपर्यायान्वाऽभिषवोपदेशात् ॥ १५ ॥

वाशब्दः पक्षव्यावृत्तौ । त्रिपर्यायान्वाऽभिषवान्करोति, न यथाकथा-च । अभिषोतारो ऽभिषुणुतेति ह्यभिषवोपदेशो भवति । स च यथा-भूता दृष्टस्तथा भूत एव कर्त्तव्य इति । उदकस्य त्वनाम्नातत्वादेवा-भावः ॥ १५ ॥

मानाभिमर्शनवर्जं कृतत्वात् ॥ १६ ॥

मानाभिमर्शने तु कृतत्वादेव न क्रियेते ॥ १६ ॥

पूतभृति पावनꣳ शुक्राभावात् ॥ १७ ॥

सोमस्य पावनं पूतभृति कर्त्तव्यम् । न ह्यत्र शुक्रो विद्यते । "अथै-तन्निर्धीतशुक्रं यत्तृतीयसवनमिति (श०ब्रा०४।३।५।१७) ॥ १७ ॥

स्तूयमाने कुम्भे चर्जीषस्यावधानम् ॥ १८ ॥

चशब्दात्पूतभृति च पावनम् ॥ १८ ॥

सवनीया अपयस्याः ॥ १९ ॥

"प्रातःसवन एवैषा मैत्रावरुणी पयस्याऽवक्लृप्ता भवति नेतरयोः सवनयोरिति ( श०ब्रा०४।२।५।२२ ) ॥ १९ ॥

सौम्यश्चरुर्वारुणश्चैककपालोऽधिकौ ॥ २० ॥

अधिकग्रहणात्सवनीयैः सहत्वं गम्यते । ततश्चाग्नीध्र एव क-र्तृत्वम् ॥ २० ॥

आ पात्रप्रक्षालनात्कृत्वोक्थ्यं विगृह्णाति पूर्वव-
दिन्द्राय त्वेति सर्वेभ्यः ॥ २१ ॥

माहेन्द्रस्तोत्रादिपात्रप्रक्षालनान्तं कृत्वोक्थ्यं विगृह्णाति । पूर्ववदिति त्रैधम् । इन्द्रायत्वेति सर्वेभ्यः । "इन्द्राय त्वेन्द्राय त्वेत्येव माध्यन्दिने सवन ऐन्द्रꣳ हि माध्यन्दिनꣳ सवनम्" इति ( श०ब्रा०४।२।३।१४ ) ॥ २१ ॥

वसतीवरीश्चासिञ्चतीदं तृतीयꣳ सवनं कवीनामृतेन ये चमसमैरयन्त । ते सौधन्वना: स्वरानशाना: स्विष्टिं नोऽभि वसीयो नयन्त्विति ॥ २२ ॥

अनेन मन्त्रेण प्रागच्छावाकविग्रहात् ॥ २२ ॥

एकधनशेषं च ॥ २३ ॥

चशब्दादनेनव मन्त्रेणासिञ्चति ॥ २३ ॥

प्रसुतान्तं भवति ॥ २४ ॥

सर्पणस्योत्तरत्राभिधानात् ॥ २४ ॥

इति दशमाध्याये तृतीया कण्डिका ।

---

एहि यजमानेत्याह हविर्धानं प्रविशन्त्यध्वर्यु-यजमानप्रतिप्रस्थात्रग्नीदुन्नेतार: ॥ १ ॥

वचनसामर्थ्यात् "ते सम्प्रपद्यन्ते ऽध्वर्युश्च यजमानश्च" इत्येवमादि ( श०ब्रा०४ ३ ५।९ ) ॥ १ ॥

पत्नी चापरेण ॥ २ ॥

द्वारेण । चशब्दात्प्रविशति ॥ २ ॥

अपिहितद्वार आदित्यपात्रमादाय सꣳस्रवाँश्चोपरि पूतभृतस्तत आदित्यग्रहं गृह्णाति सꣳस्रवे-भ्यः कदा चनेति ॥ ३ ॥

अपिहितद्वारे हविर्धाने आदित्यपात्रं गृहीत्वा संस्रवांश्च य आदित्यस्थाल्यामासिक्ताः उपरि पूतभृतः संस्रवेभ्य आदित्यग्रहं गृह्णाति "कदा चनेत्यनेन मन्त्रेण ॥ ३ ॥

अपगृह्य पुनः कदा चनेति ॥ ४ ॥

द्वितीयग्रहणम् ॥ ४ ॥

दध्ना श्रीणात्येनं पश्चिमेऽन्ते मध्ये वा यज्ञो देवानामिति ॥ ५ ॥

एनम् आदित्यग्रहं दध्ना श्रीणाति मध्ये पश्चिमे वाऽन्ते "यज्ञो देवानाम्" इत्यनेन मन्त्रेण ॥ ५ ॥

उपांशुसवनेन मिश्रयति विवस्वन्नादित्येति ॥ ६ ॥

उपांशुसवनेन मिश्रयति ग्रहं "विवस्वन्नादित्येति ॥ ६ ॥

उपांशुसवनमुन्नेत्रे प्रयच्छत्यासृज ग्रावाण इति चाह ॥ ७ ॥

चशब्दात्प्रयच्छन्नासृज ग्रावाण इत्याह ॥ ७ ॥

आधवनीये चमसे वा सोमवति ग्रावाणोऽवधाय स्थाने निदधाति ॥ ८ ॥

"तानाधवनीये वा सृजति चमसे वा राजानमुन्नीय" इति (श० ब्रा०४।३।५।१८) वचनात् । तत्स्थानं चाधिषवणयोरुपरि ॥ ८ ॥

अपावृतद्वारे निष्कामतो ग्रहमपिधाय पाणिना स्थाल्या वा ॥ ९ ॥

अर्थप्राप्तत्वादपावरणमवाच्यमिति चेत् । वाच्यं वा द्वयोरपि यथा स्यात् । अर्थप्राप्त्या ह्येकस्यापावरणम् । निष्कामत इति द्विवचनोपदेशात् प्रतिप्रस्थाता द्वितीयः ॥ ९ ॥

अन्वारब्ध आदित्येभ्योऽनुब्रूहीत्याह । प्रैषानुवाचनयोरन्यतरास्मिन्नाह प्रियेभ्यः प्रियधामभ्यः प्रियव्रते-

भ्यो महस्वसरस्य पतिभ्य उरोरन्तरिक्षस्याध्यक्षेभ्य इति ॥ १० ॥

"अथाहादित्येभ्योऽनुब्रूहीत्यत्र सम्पश्येद्यदि कामयेताश्राव्य त्वेव सम्पश्येदादित्येभ्यः प्रेष्य" इत्येवमादि (श०ब्रा०४।३।५।२०)। अत्र केचित् ब्रूहीति प्रेष्येति च क्रियापदयोरनन्तरमेव विशेषणपदोच्चारणं कुर्वन्ति। एवमेव हि ब्राह्मणपाठः "आदित्येभ्यः प्रेष्य प्रियेभ्यः प्रियधामभ्य" इति। नैतदेवमिति सम्प्रदायः। येन 'प्रियेभ्यः प्रियधामभ्यः प्रियव्रतेभ्य' इत्येवमादीनि देवताविशेषणानि। विशिष्टदेवतापदोत्तरकालं चानुब्रूहि प्रेष्येति च युक्तम्। "इन्द्राय मरुत्वते ऽनुब्रूहीति यथा, यथा च देवाय सवित्रेऽनुब्रूहीति। तस्मादुत्तरकालीनमेव क्रियापदमिति। यस्तु ब्राह्मणपाठः स विशेषणपदविधानार्थो न क्रमार्थः ॥ १० ॥

हुत्वा प्रतिप्रस्थात्रे प्रयच्छति शेषौ ॥ ११ ॥

ग्रहशेषं स्थालीशेषं च। अत एव स्थालीतः सशेषग्रहणं, सशेषश्च ग्रहहोमः ॥ ११ ॥

अत्र सर्पणमादित्यग्रहस्य प्राक्तृतीयसवनश्रुतेः ॥ १२ ॥

अस्मिन्नवसरे सर्पणं भवति। यस्मादादित्यग्रहः प्राक्तृतीयसवनात् श्रूयते "ते संस्थित एव माध्यन्दिने सवने पुरा तृतीयसवनादेतमजुहवुः" इति (श०ब्रा०४।३।५।२)। सर्पणं च तृतीयसवनादि। ततोऽपि पुराऽस्य होमः। पुराशब्दश्चात्र प्राथम्यवाची। माध्यन्दिनसवनस्य संस्थाश्रुतेः "ते संस्थित एव माध्यन्दिने सवने" इति। न चान्यत्सवनान्तरमस्ति। तस्मात्पुरा तृतीयसवनात् प्रथमं तृतीयसवनादिति द्रष्टव्यम्। यत्तु तुरीयादित्यसवनमिति तत्प्राक् सर्पणात् क्रियमाणस्योपचारवृत्त्या द्रष्टव्यम्। प्रयोजनं तृतीयसवनधर्म एवास्येति ॥१२॥

इति दशमाध्याये चतुर्थी कण्डिका।

आग्रयणमादायासिञ्चति पवित्रेऽधिपूतभृतम् ॥ १ ॥

आग्रयणं गृहीत्वा पूतभृत उपरिष्टात् पवित्रे आसिञ्चति नेष्टा ॥ १ ॥

प्रतिप्रस्थाता च संस्रुवौ ॥ २ ॥

चशब्दादासिञ्चति ॥ २ ॥

आधवनीयादुन्नेतोदञ्चनेन चमसेन वा ॥ ३ ॥

आसिञ्चति ॥ ३ ॥

तत आग्रयणं गृह्णाति ॥ ४ ॥

ततो धाराचतुष्टयात्। "तं चतसृणां धाराणामाग्रयणं गृह्णाति" इति ( श०ब्रा०४।३।५।२२ ) वचनात् ॥ ४ ॥

उक्थ्यं चोत्तरेष्वेकया ॥ ५ ॥

चशब्दादुक्थ्यं च गृह्णात्युत्तरेषु संस्थाविशेषेषु एकया धारया। सा आधवनीयादुन्नेतृकर्तृका। निष्ठितत्वादितरासां धाराणाम् ॥ ५ ॥

पूतभृत्याशिरमासिञ्चत्याशीर्म ऊर्जमुत सुप्रजास्त्वमिषं दधातु द्रविणꣳ सुवर्चसम्। सञ्जयन् क्षेत्राणि सहसाऽहमिन्द्र कृण्वानो ऽन्यानधरान्त्सपत्नानिति ॥ ६ ॥

दधि विनीतं यत् तदाशिरम् ॥ ६ ॥

अदस्मै नर इत्येनमवेक्षते पत्नी ॥ ७ ॥

पूतभृतम् ॥ ७ ॥

समन्वारब्धनिष्क्रमणादि करोति माध्यन्दिनवत् ॥ ८ ॥

इयांस्तु विशेषः—प्रतिप्रस्थातः—

पशौ संवदस्वेत्युपचयस्थाने ॥ ९ ॥

प्रातःसवनप्रभृत्या संवादाच्छ्रुतेः ॥ १० ॥

श्रुतिग्रहणात्प्रतिज्ञोत्प्रेक्ष्यते। अयं पशुः प्रातःसवनप्रभृत्यासंवादाच्छ्रप्यते। कुतः। श्रुतेः "स प्रातःसवन आलब्ध आ तृतीयसवनाच्छ्रप्यमाण उपशेते" इति ( श०ब्रा०४।२।५।१३ )॥ १०॥

शमित्रनुशासनप्रभृतीडान्तं कृत्वा पुरोडाशादि चेडाभक्षात्॥ १२॥

शमित्रनुशासनं त्रिः प्रच्यावयतादित्येकम्। यत्त्वा पृच्छादिति द्वितीयम्। तत्प्रथममर्थात्प्रातःसवन एव गतम्। इह तु द्वितीयशमित्रनुशासनप्रभृति द्रष्टव्यम्। शमित्रनुशासनप्रभृति पश्विडान्तं कृत्वा चशब्दात्पुरोडाशादि करोति आ इडाभक्षात्॥ १२॥

अत्रविशेषः—

चमसैरेव॥ १२॥

अतिदेशसूत्रेण पुरोडाशादि सर्वं प्राप्तम्। तत्र शुक्रामन्थिप्रचारनिवृत्त्यर्थं चमसैरेवेत्येवकारकरणम्॥ १२॥

होतृचमसं गृहीत्वाऽऽश्राव्याह तृतीयस्य सवनस्य ऋभुमतो विभुमतो वाजवतो बृहस्पतिमतो विश्वदेव्यावतस्तीव्राँ२॥ आशीर्वत इन्द्राय सोमान्प्रास्थितान्प्रेष्येत्याशीर्वत इति शुक्रस्थाने॥ १४॥

यत्र 'शुक्रस्याभ्युन्नयध्वमिति तत्र 'आशीर्वतोऽभ्युन्नयध्वमिति प्रयोगः॥ १४॥

प्रागिडाभक्षाद्धविर्धाने यथास्वं चमसेषूपास्यन्ति पुरोडाशमात्रा अनुदकाः पिण्डपितृयज्ञवद्दानप्रभृति प्रागवघ्राणात्॥ १५॥

इडाभक्षात् पूर्वं हविर्धाने यथास्वं चमसेषु पुरोडाशमात्रा उपक्षिपन्ति उदकवर्जं पिण्डपितृयज्ञवत् प्रागवघ्राणात्॥ १५॥

पितृशब्दस्य सम्बन्धिशब्दत्वात् स्वपितृभ्यो दानप्राप्तौ इदमाह—

यजमानपितृभ्यो वा तस्य फलाधिकारात् ॥ १६ ॥

वाशब्दः पक्षव्यावृत्तौ । यजमानपितृभ्य एव दद्युर्न स्वपितृभ्यः । तस्यहि फलाधिकारः । तदीयं च द्रव्यमत्र त्यज्यते यागावशिष्टम् । अतस्तत्पितृभ्य एव प्राप्नोति । येषां चर्त्विजां चमसा न विद्यन्ते, ते यथासन्नचमसेषु दद्युर्यथा नेष्टृचमसे ऽध्वर्यव(१) इति ॥१६॥

भक्षयित्वेडामुपांश्वन्तर्यामपात्रयोरन्यतरेण सावित्रग्रहणं वाममद्येति काले पात्नीवतमितरेण ॥ १७ ॥

एवमेव हि श्रूयते पात्नीवतं प्रकृत्य "यदि सावित्रमुपांशुपात्रेण गृह्णीयादन्तर्यामपात्रेणैतं यदि सावित्रमन्तर्यामपात्रेण गृह्णीयादुपांशुपात्रेणैतम्" इति (श०ब्रा०४।४।२।१०) ॥ १७ ॥

इति दशमाध्याये पञ्चमी कण्डिका ।

---

देवाय सवित्रे ऽनुवाचयति ॥ १ ॥

"अथाह देवाय सवित्रे ऽनुब्रूहि" इति (श०ब्रा०४।४।१।७)वचनात् ॥१॥

अभक्षितेन महावैश्वदेवग्रहणमुपयामगृहीतोऽसि सुशर्मासीति ॥ २ ॥

अभक्षितेनेति । तेनैव पात्रेण । भक्षश्चात्र न भवति । "अभक्षितेनेति तत्प्रतिषेधात् ॥ २ ॥

होता शंसति ॥ ३ ॥

किमर्थमिदमुच्यते । होतुः पुरस्तात्प्राङास्त इति यदुक्तं भवति । गतस्तोत्रोऽयमिति च ज्ञापनाय ॥ ३ ॥

एकया च दशभिश्चेति शस्यमाने द्विदेवत्यानि प्रतिप्रस्थाता प्रक्षाल्य खरे निदधाति ॥ ४ ॥

---

(१) अध्वर्यवश्चमसाध्वर्यव इत्यर्थः ।

एकया च दशभिश्चेत्यस्मिन्मन्त्रवाक्ये शस्यमाने द्विदेवत्यपात्राणि प्रतिप्रस्थाता प्रक्षाल्य खरे निदधाति ॥ ४ ॥

प्रद्यावा यज्ञैरित्येतासु मदामोदैवेति त्रिः प्रतिगरः ॥ ५ ॥

"प्रद्यावा यज्ञैरित्येतासु यत्र क्वचन प्रदेशे शस्यमानासु "मदामोदैव" इत्यव्यवहितः त्रिः प्रतिगरो भवति। अव्यवहिते हि त्रिसंख्या प्रवर्त्तते ॥ ५ ॥

(१)स्वादुष्किलीयासु चेच्छन् ॥ ६ ॥

त्रिः प्रतिगृणाति ॥ ६ ॥

आ पात्रप्रक्षालनात्कृत्वा सौम्येन चरति ॥ ७ ॥

महावैश्वदेवस्य आ पात्रप्रक्षालनान्तं कृत्वा सौम्येन चरुणा प्रचरति ॥ ७ ॥

आज्येनोभयतः परियजति ॥ ८ ॥

अधस्ताच्चोपरिष्टाच्च ॥ ८ ॥

अन्यतरतो वा ॥ ९ ॥

वेति विकल्पः ॥ ९ ॥

घृतस्य यजेत्याह घृतशब्दउपाꣳशु ॥१०॥

वचनादुपांशुद्रव्योच्चारणम्। मन्त्रलिङ्गाच्चाग्नेर्देवतात्वम् "घृताहवनो घृतपृष्ठो अग्निः" इति। तस्य चोपांशुयाजविध्यन्तेनोपांशुत्वम्॥१०॥

सौम्यस्य यजेति सौम्येन चरन् ॥ ११ ॥

वचनाद्द्रव्योच्चारणम्। देवतापदोच्चारणं तु चोदकेनैव। उपरिष्टादपि च वैष्णवो घृतयागः। मन्त्रलिङ्गादेव "उरु विष्णो विक्रमस्व" इति। अन्यतरश्चेत् घृतयागो मन्त्रलिङ्गादेवाग्नावैष्णवो भवति ॥ ११ ॥

यावदुक्तꣳ सौम्यस्य पुनर्ग्रहणात् ॥ १२ ॥

सौम्यचरोर्यावदुक्तं भवति। शेषकार्याण्यपि न प्रवर्त्तन्ते। पुन-

---

(१) आग्निमारुतशस्त्रमध्ये स्वादुष्किलीयानामिकाः काश्चन ऋचः तास्वित्यर्थः।

ग्रहणं हि भवति । "स आज्यस्योपस्तीर्य द्विश्चरोरवद्यत्यथोपरिष्टादाज्यस्याभिघारयत्याश्राव्याह सौम्यस्य यजेति वषट्कृते जुहोतीति (श०ब्रा०४।४।२।५) । एवं च व्यूहने वचनात् सोमस्योच्चारणम् ॥ १२ ॥

आज्यमासिच्योद्गात्रे सौम्यं प्रयच्छति । चतुर्गृहीतं प्रचरण्या धिष्ण्येषु जुहोति यथान्युप्तं (१)प्रभात्रयञ्छालाकान्प्रदीप्य प्रदीप्य विभूरसीति प्रतिमन्त्रम् ॥ १३ ॥

चतुर्गृहीतं प्रचरण्या धिष्ण्येषु जुहुयात् येन क्रमेण न्युप्ताः प्रभावयन् जुहोति न पुनर्गृह्णाति । शलाकान्प्रदीप्य प्रदीप्य धिष्ण्येषु जुहोति विभूरसीत्येभिर्मन्त्रैः प्रतिमन्त्रम् । तिसृभिः शलाकाभिः शालाको भवति । ते च प्रतिधिष्ण्यं त्रयस्त्रयो भवन्ति ॥ १३ ॥

आग्नीध्रीये पुनः पश्चादिच्छन् ॥ १४ ॥

जुहोति । तच्च तूष्णीं काण्वशाखापाठात् ॥ १४ ॥

उपयामगृहीतोसि बृहस्पतिसुतस्येति प्रतिप्रस्थाता पात्नीवतं गृह्णाति ॥ १५ ॥

"उपयामगृहीतोऽसि बृहस्पतिसुतस्येत्यनेन मन्त्रेण प्रतिप्रस्थाता पात्नीवतं गृह्णाति ॥ १५ ॥

प्रचरणीशेषेण श्रीणात्येनमहं परस्तादिति ॥ १६ ॥

"अथ यः प्रचरण्याᳬ सᳬस्रवः परिशिष्टो भवति तेनैनᳬ श्रीणाति" इति ( श०ब्रा०४।४।२।१३ ) ॥ १६ ॥

अग्नीत्पात्नीवतस्य यजेत्याह ॥ १७ ॥

एतावानेव प्रैष इति सम्प्रदायः ॥ १७ ॥

अग्ना३इ पत्नीवन्नित्युत्तरार्धे जुहोति ॥ १८ ॥

आहवनीयस्य ॥ १८ ॥

प्रेष्यति चाग्नीन्नेष्टुरुपस्थमासीद नेष्टः पत्नीमुदानयो-

---

( १ ) चतुर्गृहीतं विभज्य सर्वेषु धिष्ण्येषु प्रापयन्नित्यर्थः ।

द्वात्रा संख्यापयोन्नेतर्होतुश्चमसमनून्नय सोमं

माऽतिरीरिच इति ॥ १९ ॥

प्रेष्यति चेति चशब्दादग्नीधे भक्षमाहृत्योपहवप्रत्युपहवौ करोति।
तः प्रेष्यति । एवं हि श्रूयते "आहरत्यध्वर्युरग्नीधे भक्षः स
ाहाध्वर्य उप मा ह्वयस्वेति तं न प्रत्युपह्वयेत को हि हतस्य निरष्ट-
। प्रत्युपहवस्तं वै प्रत्येवोपह्वयेत जुह्वत्यस्याग्नौ वषट्कुर्वन्ति
स्मात्प्रत्येवोपह्वयेताथ सम्प्रेष्यति" इति ( श०ब्रा०४।४।२।१६ )।
तुश्चमसमनून्नय" इति होतृचमसग्रहणं सर्वचमसोपलक्षणार्थम्।
मं माऽतिरीरिच इत्यतिरेकप्रतिषेधार्थम् ॥ १९ ॥

प्रभावयेत्युक्थ्यादिषु ॥ २० ॥

प्रैषः । तत्र सोमेनार्थः ॥ २० ॥

आग्नीध्रे भक्षणं वषट्कारोपह्वानाभ्याम् ॥ २१ ॥

आग्नीध्रे पात्नीवतस्य भक्षणम् । तत्र स्थितेन हि वषट्कारः कृतः
हवप्रत्युपहवौ च ॥ २१ ॥

सपात्र आसीदति नेष्टुरुपस्थम् ॥ २२ ॥

सह पात्रेणाग्नीन्नेष्टुरुपस्थमासीदति। "स बिभ्रदेवैतत्पात्रमग्नी-
टुरुपस्थमासीदति" इति ( श०ब्रा०४।४।२।१८ ) वचनात् ॥ २२॥

अत्र वा भक्षणं पात्रहरणसामर्थ्यात् ॥ २३ ॥

अत्र वा भक्षणम्भवति यत्र नेष्टोपविष्टः। कुत एतत् । पात्रहरणं
मर्थवद्भवति । इतरथाऽदृष्टार्थता स्यात् । न च दृष्टे सत्यदृष्टा-
युक्ता ॥ २३ ॥

अग्नीत्प्रक्षाल्य पात्रं खरे करोति ॥ २४ ॥

पात्नीवतसम्बन्धि ॥ २४ ॥

इति दशमाध्याये षष्ठी कण्डिका ।

यज्ञायज्ञियꣳ स्तोत्रमुपाकरोति होतृचमसमुपस्पृश्य ॥ १ ॥

होतृचमसोपस्पर्शनं शाखान्तरात् ॥ १ ॥

प्रोर्णुते चेच्छन्नुद्गातृवत् ॥ २ ॥

लोकवत्सकर्णकम् । उद्गातृवदकर्णकम् ॥ २ ॥

पत्नीꣳ सदः प्रवेश्यापरेणोत्तरत उपविष्टामुद्गात्रा

समीक्षयति प्रजापतिर्वृषासीति ॥ ३ ॥

नेष्टा पत्नीं सदः प्रवेश्य अपरेण द्वारेण उद्गातॄणामुत्तरत उपविष्टामुद्गात्रा सह समीक्षणं कारयति । कारिते चाध्येषणा— 'पत्न्युद्गातारमीक्षस्वेति । "प्रजापतिर्वृषाऽसीत्यनेन मन्त्रेण समीक्षते पत्नी ॥ ३ ॥

पान्नेजनीभिरभिषिञ्चति विवृत्य दक्षिणोरुम् ॥ ४ ॥

विपरावृत्य दक्षिणमूरुं पान्नेजनीभिरभिषिञ्चति पत्नी । अत्र छान्दोग्ये वचनं प्रतिहिङ्कारमीक्षणम् प्रतिनिधनं चोर्वासेकः ॥ ४ ॥

उद्गात्राऽनुज्ञाता गच्छति, ईक्षिता वा त्रिः ॥ ५ ॥

पत्नी त्रिरीक्षिता वा गच्छति । तथाच त्रिः उद्गात्रीक्षणोर्वासेकौ भवतः ॥ ५ ॥

एवान इन्द्रो मघवेति शस्यमाने ध्रुवꣳ होतृचमसेऽवन-

यति ध्रुवं ध्रुवेणेति ॥ ६ ॥

"एवान" इत्यस्मिन्मन्त्रवाक्ये शस्यमाने ध्रुवं होतृचमसेऽवनयति "ध्रुवं ध्रुवेणेत्यनेन मन्त्रेण ॥ ६ ॥

अवनयामि—स्थाने गृह्णामीति वा ॥ ७ ॥

अवनयामीत्यस्य स्थाने गृह्णामीति वा वाक्यशेषः ॥ ७ ॥

वैश्वानरं यजमानस्य गृहीतश्चेत् ॥ ८ ॥

गृहीतश्चेद्वैश्वानरो यजमानचमसेऽवनयेत् ॥ ८ ॥

पात्रप्रक्षालनान्तेऽनुयाजाः समिदादि ॥ ९ ॥

"आग्निमारुतादूर्ध्वमनुयाजैश्चरन्ति" इति वचनात्। समिदादीति च समिद्ग्रहणस्य यदादौ तदादि उल्मुकसमासादीत्यर्थः। अनुयाजार्थो ह्युल्मुकसमास इति ॥ ९ ॥

उक्थ्यविग्रहणमुत्तरेष्विन्द्रावरुणाभ्यामिन्द्राबृहस्पतिभ्यामिन्द्राविष्णुभ्यामिति ॥ १० ॥

उत्तरेषु संस्थाविशेषेषूक्थ्यविग्रहणम् "इन्द्रावरुणाभ्यामित्येवमादिभिर्मन्त्रैः ॥ १० ॥

स्तुतशस्त्रे अधिके षोडशी चेत् ॥ ११ ॥

अषोडशिन्यपि षोडशिनो ग्रहणं विहितम् "अप्यग्निष्टोमे ग्रहीतव्यः, अप्युक्थ्ये ग्रहीतव्य" इति। अग्निष्टोमसंस्था च यज्ञायज्ञियाग्निमारुतान्ता। उक्थ्यसंस्था चोक्थ्यविग्रहणान्ता। तदन्ते षोडशियागो विकल्पेन। तत्र च स्तोत्रशस्त्रमात्रमेवाधिकं भवति। न यथा षोडशिसंस्थे तृणहिरण्ये कृष्णोऽश्व इत्येवमादि। एवमेव शाखान्तरेऽस्य विधानमिति ॥ ११ ॥

तृतीयसवने प्रसवः ॥ १२ ॥

अप्रसव इति केचित्। तदनुपपन्नम्। प्राप्तिपूर्वकत्वात्प्रतिषेधस्य। न चास्य प्राप्तिरुक्ता। तस्मात्तृतीयसवनेऽत्र प्रसव इति सूत्रं व्याख्येयम्। विहितं च शाखान्तरेषु "सवनीये सर्पन्तीति। यत्सवनान्ते सर्प तदत्र भवतीति सूत्रार्थः ॥ १२ ॥

स्रुग्व्यूहनमग्नेर्वनस्पतेरिन्द्रस्य वसुमतो रुद्रवत आदित्यवत ऋभुमतो विभुमतो वाजवतो बृहस्पतिमतो विश्वदेव्यावतः सोमस्योज्जितिमित्यग्निर्वनस्पतिरिन्द्रो वसुमान् रुद्रवानादित्यवानृभुमान्विभुमान्वाजवान् बृहस्पतिमान्विश्वदेव्यावान्त्सोमस्तमपनुदन्त्विति ॥ १३ ॥

शाखान्तरोपदेशात् ॥ १३ ॥

पशुदेवतावनस्पतिभ्यां वा सोमोपदेशादितरासाम् ॥१४॥

पशुदेवतावनस्पतिभ्यामेव वा स्रुग्व्यूहनमभिसम्बध्यते, न वसुमदादिदेवताभिः। कुत एतत्। सोमोपदेशात्तासाम्। सोमे हि ता उपदिश्यन्ते 'इन्द्राय त्वा वसुमते रुद्रवत इन्द्राय त्वाऽऽदित्यवत' इत्येवमादिनेति ॥ १४ ॥

एवं प्राप्ते उच्यते—

सर्वा वा सवनीयसौम्यभावात् ॥ १५ ॥

सर्वा वा वसुमदाद्या अपि व्यूहनेनाभिसम्बध्यते। कुत एतत्। सवनीयेषु सौम्ये च भावात्तासाम्। कथं कृत्वा। सर्वत्र हीन्द्रोऽभीज्यते। सवनीयान्प्रकृत्य हि श्रूयते "सर्व ऐन्द्रा भवन्तीति। ननु च गुणभेदोऽत्र। किं क्रियतां वचनमत्र। निर्वापे हि हरिवदादिविशिष्ट इन्द्रो, यागे च निर्गुणो, व्यूहने च वसुमदादिविशिष्ट इति। वचनेन हि विधानम्। नास्ति वचनस्यातिभारः। तस्मात्साधूक्तं "सर्वा वा सवनीयसौम्यभावादिति। सौम्ये निःसन्दिग्ध एव सद्भावः॥ १५ ॥

इति दशमाध्याये सप्तमी कण्डिका।

---

विमुच्य स्रुचौ द्रोणकलशे हारियोजनग्रहणमुपयामगृहीतोऽसि हरिरसीति ॥ १ ॥

चोदकपरम्परापरिप्राप्तं स्रुग्विमोकं कृत्वा द्रोणकलशे हारियोजनग्रहणम् "उपयामगृहीतोऽसि हरिरसीत्यनेन मन्त्रेण ॥ १ ॥

धानाश्चावपति हर्योर्धाना इति ॥ २ ॥

चशब्दादनन्तरम्। श्रयणं चैतत् शाखान्तरश्रवणात् "धानाभिर्हारियोजनं श्रीणाति" इति। प्रयोजनं श्रयणधर्मोऽत्र भवति ॥ २ ॥

उन्नेताऽनुवाचयति मूर्धनि कृत्वा धानासोमेभ्यो ऽनुब्रूहीति ॥ ३ ॥

एतावानेव प्रैष इति सम्प्रदायः।

इन्द्राय धानासोमेभ्य इत्यपरे। तत्पुनर्युक्तमयुक्तं वेति विचारणीयम्। न ह्यत्र चोदकप्राप्तिरस्ति। "अनुवाचनप्रैषो यथादेवतम्" (का० श्रौ०१।९।१३)इत्येतद्द् दर्शपूर्णमासविषयम्। अतोऽत्र दुर्लभा प्राप्तिर्देवतापदोच्चारणस्य। एवं च कृत्वा 'इन्द्राय मरुत्वतेऽनुब्रूहीति वचनात् "देवाय सवित्रेऽनुवाचयतीति वचनाद्देवतापदोच्चारणम्। यदुच्यते "आश्राव्याह दधिघर्मस्य यजेति, तत्र चोदकपरिप्राप्त्या देवतापदोच्चारणम्। इह पुनर्न तथा घर्म इवेति सम्प्रदायः ॥ ३ ॥

आश्राव्याह धानासोमान्प्रस्थितान् प्रेष्येति ॥ ४ ॥

उन्नेतैवाभिप्रवृत्तत्वात्। तथा च लिङ्गम्--"द्वौ वोन्नेतारौ कुर्वीत तयोर्यतरो नाश्रावयेदित्युन्नेतुराश्रावणं दर्शयति ॥ ४ ॥

भक्षँ हरेदिच्छन् ॥ ५ ॥

इच्छन्सर्वहुतं करोति धानावर्जम् ॥ ५ ॥

उत्तरवेदौ वा निधाय विलाभम् ॥ ६ ॥

उत्तरवेदौ वा निधाय द्रोणकलशं विलभ्य विलभ्य धानाः। वा सदसि विलाभः ॥ ६ ॥

यस्ते अश्वसनिरिति प्राणभक्षं भक्षयित्वोत्तरवेदौ निवपन्ति ॥ ७ ॥

धानाः। उत्तरवेदावपि विलाभे सदस्येव प्राणभक्षः। तत्र हि सर्वभक्षाणां विधानम् "उदरमेवास्य सदस्तस्मात्सदसि भक्षयन्ति" इति(श०ब्रा०३।६।१।१)। धानाभक्षणं सर्वेषाम् "अथैतस्य हारियोजनस्य सर्व एव लिप्सन्त" इति(१) ॥ ७ ॥

शाकलाधानं देवकृतस्येति प्रतिमन्त्रम् ॥ ८ ॥

तच्च सर्वेषां सहकारिणामपि विधानसामर्थ्यात् ॥ ८ ॥

---

(१) इदं शाखान्तरवाक्यम्। "तस्मादेतस्मिन् सर्वेषामेव भक्षः" इति हि स्वशाखीयम्। (श०ब्रा०४।४।३।१०)

अपरेण चात्वालं यथास्वं चमसान्पूर्णपात्रानवमृशन्ति हरितकुशानवधाय संवर्चसेति ॥ ९ ॥

चात्वालमपरेण चमसान्पूर्णपात्रान्कृत्वा हरितकुशानवधाय यथास्वमवमृशन्ति 'संवर्चसेति । बहुवचनोपदेशात् अधिकाराच्च सहकारिवचनाच्च सर्वर्त्विजः । येषामपि चमसा न सन्ति तेऽपि यथाख्यया सन्निहितानां चमसानवमृशन्ति ॥ ९ ॥

मुखान्यालभन्ते ॥ १० ॥

पूर्णपात्रावमर्शानन्तरम् ॥ १० ॥

दधिक्राव्ण इत्याग्नीध्रे दधिभक्षणम् ॥ ११ ॥

सर्वे कुर्युरधिकारात् । सहकारिप्रत्ययाच्च ॥ ११ ॥

पत्नीसंयाजाः पशुवत् ॥ १२ ॥

पशुवदिति किमर्थमुच्यते । बहवो ह्यत्र सवनीयाः पुरोडाशाः समानतन्त्राः । भूयसां सधर्मत्वन्यायात्तदीया मा भूवन्निति । यद्येवमस्तु तथेति । नैतदेवम् । पशुतन्त्रं ह्यत्र महत्, लघु पौरोडाशिकम् । तेन बृहद्घोषाकटकन्यायेन पाशुकतन्त्राभ्युपगम एव युक्तरूप इति साधूच्यते पशुवदिति ॥ १२ ॥

समिन्द्र ण इति नव समिष्टयजूꣳषि जुहोति प्रतिमन्त्रम् ॥ १३ ॥

साभ्यासमिदमेकं कर्मेत्युक्तमेव । नवसंख्या तु पाशुकी । तत्तन्त्राभ्युपगमात् । तथा च पशुगणे सवनीयपशुविकारत्वान्नवैव भवन्ति ॥ १३ ॥

आसन्द्यौदुम्बर्यौ चात्वालꣳ हरति ।
सोमलिप्तं च ॥ १४ ॥

हरति ॥ १४ ॥

कृष्णविषाणामेखले चात्वाले प्रास्यति माहिर्भूरिति ॥ १५ ॥

अहिपृदाकुशब्दयोरुपमानार्थत्वात् बहुत्वेऽप्यनूहः ॥ १५ ॥

प्रतिप्रस्थाता च शङ्कुयोक्त्रे तूष्णीम् ॥ १६ ॥

चशब्दाच्चात्वाले प्रास्यति ॥ १६ ॥

उरुꣳहीति वाचयति यजमानम् ॥ १७ ॥

साम प्रेष्यति गाथ ब्रूहीति वा ॥ १८ ॥

वेति विकल्पः ॥ १८ ॥

व्यध्वोदकान्तयोश्च ॥ १९ ॥

साम प्रेष्यति । व्यध्वशब्देनार्धपथ उच्यते ॥ १९ ॥

सर्वे निधनमुपयन्ति ॥ २० ॥

सर्वशब्दो निरवग्रहः सर्वर्त्विग्विषयः ॥ २० ॥

आहृतमादायावभृथं गच्छन्ति स्यन्दमाना-

नाꣳ स्थावराः ॥ २१ ॥

यच्चात्वालमाहृतमासन्द्यौदुम्बर्यादि तदादायावभृथं कर्तुं यन्ति स्यन्दमानानामपां याः स्थावरा आपः । "स यः स्यन्दमानानाꣳ स्थावरो ह्रदः स्यात्" इति (श०ब्रा०४।४।५।१०) वचनात् ॥ २१ ॥

तदभावेऽन्याः ॥ २२ ॥

"यद्यु ता न विन्देदपि या एव काश्चापोऽभ्यवेयात्" इति (श० ब्रा०४।४।५।१०) ॥ २२ ॥

नमो वरुणायेति वाचयत्यपोऽवक्रमयन् ॥ २३ ॥

"नमो वरुणायेत्यमुं मन्त्रं वाचयति बाहुगृहीतं यजमानमपोऽवतारयन् ॥ २३ ॥

प्रास्य समिधं चतुर्गृहीतेनाभिजुहोत्यग्नेरनीकमिति ॥ २४ ॥

समिधमप्सु प्रास्य चतुर्गृहीतेनाभिजुहोति "अग्नेरनीकमित्यनेन मन्त्रेण ॥ २४ ॥

अपरेण प्रयाजान्बर्हिर्वर्जम् ॥ २५ ॥

अपरेण चतुर्गृहीतेन बर्हिर्वर्जं प्रयाजान्करोति । अपरग्रहणं पूर्वचतुर्गृहीतहोमस्यावसरप्रज्ञप्त्यर्थम् । न हि तस्यावसरोऽभिहित इति । किं च समानयनव्युदासार्थं च ॥ २५ ॥

अप्सु जुहोति ॥ २६ ॥

आहवनीयकार्ये अपां विधानम् । अतश्च तद्धर्मसम्बन्धो भवति ॥२६॥

एककपालेनावदायं चरतीति ॥ २७ ॥

"वारुणेनैककपालेनावभृथमभ्यवयन्ति" इति वचनात् । स च पूर्वमेवाभिहितः "सौम्यश्चरुर्वारुणश्चैककपालोऽधिकौ" इति। एककपालानां हि सर्वहुतत्वमुक्तमाचार्येण, तेनोच्यते "ऽवदायं चरतीति॥२७॥

ऋजीषस्येच्छन्नवद्येदग्नीवरुणाभ्याᳬ सर्वहुतᳬ शेषम् ॥२८॥

करोति ॥ २८ ॥

ऋजीषस्य च सकृत्पूर्वे चेत् ॥ २९ ॥

"स यद्यमुत्रर्जीषस्य द्विरवद्येदथात्र सकृत्" इति (श०ब्रा०४ ४। ५।१७) वचनात् ॥ २९ ॥

वश एतत्कुर्यात् ॥ ३० ॥

वशशब्दो हीच्छावचनः । इच्छयैतत्षडाहुतिकं करोति । इच्छयाऽन्यत्प्रकारान्तरम् ॥ ३० ॥

तच्चाह—

यजमानोक्तावाज्यभागौ बर्हिर्वर्जं चानुयाजौ ॥ ३१ ॥

इच्छयैतद्दशाहुतिकं करोति। यजमानोक्काविति । सहकारिवचनाद्यौ वा यजमानो ब्रूयादिति ॥ ३१ ॥

अन्यतरत्कृत्वा ॥ ३२ ॥

इति दशमाध्याये ऽष्टमी कण्डिका ।

समुद्रे त इत्यृजीषकुम्भं प्लावयति ॥ १ ॥

अत्र पक्षद्वयस्यान्यतरदेकं कर्तव्यम् । नान्ये पदार्थाः । येन प्रयाजाज्यभागानुयाजानामेव पुनर्विधानम् । अतो यावदुक्ताऽस्य । प्रतिपत्तयस्तु क्रियन्ते । "समुद्रे त इत्यनेन मन्त्रेण ऋजीषकुम्भं प्लावयत्युदके ॥ १ ॥

देवीराप इति विसृज्योपतिष्ठते ॥ २ ॥

विसृज्य ऋजीषकुम्भम्, उपतिष्ठते "देवीराप" इति ॥ २ ॥

अवभृथेति मज्जयति ॥ ३ ॥

ऋजीषकुम्भं बोलयतीत्यर्थः ॥ ३ ॥

कृष्णाजिनान्तं च मा मैद्रयं ज्यैष्ठ्यꣳ श्रैष्ठ्यं व्यौषीरिति ॥४॥

चशब्दान्मज्जयति । कृष्णाजिनान्तं च प्रकृतत्वादासनकृष्णाजिनम् ॥ ४ ॥

पुत्रायैनत्प्रदाय वरुणप्रघासवत्स्नानप्रभृत्या समिदाधानात् ॥ ५ ॥

एतदिति कृष्णाजिनम् । वारुणप्रघासिकावभृथवत्स्नानं कृत्वाऽऽसमिदाधानात्करोति । तदीयोपदेशस्यातिदेशोऽयम् । न हि तद्धर्मप्रवृत्तिरत्रेति । इत एव हि तत्र धर्माः प्रवृत्ताः ॥ ५ ॥

सोमलिप्तं प्रास्यति ॥ ६ ॥

चरितार्थत्वात्प्रतिपत्तिः ॥ ६ ॥

अदानं पूर्वयोः ॥ ७ ॥

वाससोः । अतिदेशापवादोऽयम् ॥ ७ ॥

उद्वयमित्युन्नेत्रोन्नीता आमहीयां जपन्तो गच्छन्ति "अपाम सोमममृता अभूमागन्म ज्योतिरविदाम देवान् । किं नूनमस्मान् कृणवदरातिः किमु धूर्तिरमृत मर्त्यस्ये"ति ॥ ८ ॥

जपश्च सर्वेषां बहुवचनोपदेशात् । सहकारिणामपि विधानसामर्थ्यात् । अस्मिश्चावसरे व्रतग्रहणं भवत्युन्मुक्तदीक्षत्वात् । ततो बर्हिर्होमादि ॥ ८ ॥

शालाद्वार्यमपरेणास्ते यजमानः कृष्णाजिनमङ्के कृत्वा स्रुवाहुतिं जुहोति "मैद्रयं ज्यैष्ठय॑ श्रैष्ठ्यमग्निर्दधातु स्वाहे"ति ॥ ९ ॥

स्रुवाहुतिं जुहोति अध्वर्युः आहवनीये "मैद्र्यं ज्यैष्ठय॑ श्रैष्ठ्यमग्निर्दधातु स्वाहा" इत्यनेन मन्त्रेण ॥ ९ ॥

कृष्णाजिनं निधायोदयनीया प्रायणीयवत् ॥ १० ॥

वतिः प्रायणीयधर्मातिदेशार्थः ॥ १० ॥

तथा चाह—

पथ्यास्वस्तिश्चतुर्थी ॥ ११ ॥

इति । "शालामुखीये उदयनीयया चरन्ति" इति च शाखान्तरात् शालाद्वार्ये कर्त्तव्या ॥ ११ ॥

पात्रप्रोक्षणाद्याऽऽज्यासादनात्सवनीयवत् परिव्ययणादि मैत्रावरुणी वशाऽनूबन्ध्या ॥ १२ ॥

पात्रप्रोक्षणग्रहणं शालाद्वार्ये श्रपणनियमव्युदासार्थम् । सवनीये हि पात्रासादनविधानेन शालाद्वार्ये श्रपणनियमो ज्ञापितः । तद्वदत्रापि मा भूदिति पात्रप्रोक्षणादीत्युक्तम् । सा च सवनीयवदिति । यदुक्तं भवति सकृत्प्रोक्षित इध्मः, आग्नीध्रउत्पवनम्, एकवृत्स्तरणमिति । परिव्ययणस्य पश्वङ्गत्वेन विधानात्तदपवर्गे चापवर्गमाशङ्क्य परिव्ययणादीत्युक्तम् । मित्रावरुणदेवत्या वशा रिक्ता सा च गौर्भवति । 'गौरनुबन्ध्येति वचनात् ॥ १२ ॥

स्वर्वंवगूहनादि वा कृतत्वात् ॥ १३ ॥

स्वर्वंवगूहनादि वा कर्त्तव्यं, न परिव्ययणादीति । कुत एतत् । कृतत्वात्परिव्ययणसंस्कारस्य । यूपसंस्कारो ह्ययम् । स च यूपः

सर्वपश्वर्थः । संस्कारोऽपि तद्वदेवेति । अत एव स्वर्ववगूहनादीत्युत्तरपदप्रधानो बहुव्रीहिः । स्वर्ववगूहनं यस्यादौ तदादि । तच्चोपाकरणम् । एवं सत्युपाकरणमन्थनयोरत्र नियम इति ॥ १३ ॥

वशाऽभाव उक्षा ॥ १४ ॥

"यदि वशां न विन्देदप्युक्षवश एव स्यात्" इति (श०ब्रा०४।५।१।९) ॥ १४ ॥

उभयाभावे पयस्या ॥ १५ ॥

कर्त्तव्या ॥ १५ ॥

आसाद्यैनामाज्यभागप्रभृतीडान्तामेके ॥ १६ ॥

एके आदितो ब्राह्मणतर्पणान्ताम् । विकल्प एवायम् ॥ १६ ॥

उदवसानीयाऽऽग्नेयः पञ्चकपालः समारूढनिर्मथिते ॥ १७ ॥

उदवसानीयेष्टिरुच्यते । तत्र चाग्नेयः पञ्चकपालो भवति । समारोपश्च प्राजहिते कर्त्तव्यः । गार्हपत्यो हि स इति ॥ १७ ॥

हिरण्यं दक्षिणाऽनड्वान्वा ॥ १८ ॥

वेति विकल्पः ॥ १८ ॥

पशुवद्वाऽऽहुतिः ॥ १९ ॥

"अथो चतुर्गृहीतमेवाज्यं गृहीत्वा" इति ( श०ब्रा०४।५।१।१६ ) श्रुतेः ॥ १९ ॥

तदन्ते सायमाहुतिः ॥ २० ॥

देया ॥ २० ॥

सोमाङ्गं सन्निधिविरोधाभ्याम् ॥ २१ ॥

सा च सोमाङ्गं भवति । सोमसन्निधौ विधानात् "अथ यदैवैषोदवसानीयेष्टिः सन्तिष्ठतेऽथ सायमाहुतिं जुहोति" इति (श०ब्रा०४।५।१।१६) । अपि च नित्यत्वे सति कालो विरुध्यते ॥ २१ ॥

नित्या वा प्रातराहुतिश्रुतेः ॥ २२ ॥

अथ वा नित्यैषा न सोमाङ्गम् । कुत एतत् । प्रातराहुतिश्रवणात् "काल एव प्रातराहुतिम्" इति ( श०ब्रा०४।५।१।१६ ) । सोमयागनिमित्तः सायमाहुतेरपकर्ष इति ॥ २२ ॥

नियतक्रियाऽतः ॥ २३ ॥

अतः परं नित्यानां क्रिया न प्रागतः । उन्मुक्तदीक्षत्वेऽप्यवभृथादूर्ध्वमिति ॥ २३ ॥

एष प्रथमः सोमः ॥ २४ ॥

"एष वाव प्रथमो यज्ञानां यज्ज्योतिष्टोम" इति । सर्वविकाराणामयं प्रथमः सोमः ॥ २४ ॥

आदीप्य प्रविशन्ति ॥ २५ ॥

आदीपनं च बर्हिषः । तद्धि प्रकृत्य श्रूयते "यदनुपोष्य प्रयायात् ग्रीवाबद्धमेनं ( यजमानं ) स्वर्गं नयेरन्" इति । निन्दार्थवादोऽयमनुपोषस्य ॥ २५ ॥

षडुत्तरेऽत्यग्निष्टोम उक्थ्यः षोडशी वाजपेयोऽतिरात्रोऽप्तोर्यामः ॥ २६ ॥

अत्रात्यग्निष्टोमवाजपेयाप्तोर्यामाणां ज्योतिष्टोमस्य प्राथम्यविधानेनोत्तरकालता सिद्धा । उक्थ्यषोडश्यतिरात्राणामप्याचार्येणैव ज्ञापितोत्तरकालता "उक्थ्यं चोत्तरेऽत्रेकयेति, ( का०श्रौ०१०।५।५ ) "उक्थ्यविग्रहणमुत्तरेष्विन्द्रावरुणाभ्यामिति च ( का०श्रौ०१०।८।१० ) । तेनात्र विकारप्रदर्शनार्थं षडुत्तर इत्युच्यते, न क्रमार्थम् । षडुत्तरे षट् विकारा इत्यर्थः । उत्तरो हि विकारो भवति प्रकृत्यपेक्षया, प्रकृतिश्च पूर्वेति । तत्र च अत्यग्निष्टोमवाजपेयाप्तोर्यामाणां "ज्योतिष्टोमधर्मा एकाहद्वादशाहयोः" (का०श्रौ०१२।१।१) इत्यनेनैव विकारत्वं ज्ञापितम् । ज्योतिष्टोमप्रकरणसमधीतानामपि चोक्थ्यादीनामसमानविधानता । नित्यानित्यसंयोगविरोधात् । अतस्तेऽपि विकारा एव । तेन क्रतुविकारत्वस्यावाच्यत्वात्संस्थाविकारार्थोऽयमारम्भः । षडुत्तरे षट् संस्थाविकारा इति । तत्रोक्थ्यषोडश्यतिरात्राणामग्निष्टोमविकारत्वम् । अत्यग्निष्टोमस्याप्यग्निष्टोमसंशब्दनात् अग्निष्टोमविकारत्वम् । वाजपे-

यस्य षोडशिविकारत्वम् । कथं ज्ञायते । येन क्रतुपशूंस्तत्र दर्शयति— "आग्नेयमग्निष्टोम आलभते अग्निर्वा अग्निष्टोमोऽग्निष्टोममेवैतेनोज्जयत्यैन्द्राग्नमुक्थ्येभ्य आलभत ऐन्द्राग्नानि वा उक्थान्युक्थ्यान्येवैतेनोज्जयत्यैन्द्रं षोडशिन आलभते इन्द्रो वै षोडशी षोडशिनमेवैतेनोज्जयति" इत्येवमभिधाय "सारस्वतं सप्तदशाय स्तोत्रायालभते तदेतदनतिरात्रे सति रात्रे रूपं क्रियत" इति ( श०ब्रा०५।१।३।१ ) षोडशिक्रतुपशूनामिह दर्शनं भवति । अतिरात्रेऽप्येते भवन्तीति चेत् । न । "अनतिरात्रे सति रात्रे रूपं क्रियत" इति श्रुतेः । तस्मात्षोडशिविकारो वाजपेय इति । अप्तोर्यामेऽपि "तिरोह्न्येभ्यो रात्रिपर्याय उत्तम" इति तिरोह्न्यानां दर्शनं भवति । तेनातिरात्रविकारोऽप्तोर्याम इति गम्यते । षडुत्तरे षड् विकारा इति विकारत्वज्ञापनस्य प्रयोजनं किमिति चेत् । स्वस्वप्रकृत्यपेक्षया क्रतुकरणं यथा स्यादिति । तेनात्यग्निष्टोमे आग्निष्टोमिकं क्रतुकरणं, वाजपेये षोडशिनः, अप्तोर्यामे च अतिरात्रिकम् , उक्थ्यादिषु तूक्तमेवेति । अत एव च सूत्रकारेण अत्यग्निष्टोमोऽग्निष्टोमानन्तरं पठितः, षोडश्यनन्तरं वाजपेयः, अतिरात्रसमनन्तरमप्तोर्याम इति । तथा च धर्मसूत्रकारेण गोतमेनाप्युक्तम् "अग्निष्टोमोऽत्यग्निष्टोम" इत्येवमाद्यभिधाय 'सप्तसोमसंस्था' इति । तस्मात् षडुत्तरे षट् संस्थाविकारा इति सूत्रार्थः । अत्यग्निष्टोमादयो विकृताभिः संस्थाभिः संस्थिता इति ॥ २६ ॥

तेषामुक्थ्योऽच्छावाकमभि सन्तिष्ठते होतारमितरे ॥ २७ ॥

तेषां संस्थाविशेषाणाम् उक्थ्योऽच्छावाकमभिसन्तिष्ठते । होतारं चेतरेऽभिसन्तिष्ठन्ते । किमर्थमिदमुच्यते । वाजपेये हि श्रूयते "षोडश्यन्ते स्तोत्रश्रमसैरेवेति । स्तुतमनुशंसतीति च तच्छस्त्रं होतुर्यथा स्यादिति । तथा सोमातिरेके क्वचिदुक्तम् "ऐन्द्रावैष्णवं होता शंसतीति । तथा पूर्ववद्धोतेति । क्वचिच्च नोक्तमाचार्येण यथा "अतिरात्राच्चेत् बृहन्महाव्रतमेके यथोक्तमिति । अत्रापि स्तुतमनुशंसतीति होतुः शस्त्रं यथा स्यादिति अनुक्तसङ्ग्रहार्थं होतारमितर इत्युक्तम् ॥ २७ ॥

वैश्यराजन्ययोः सोमे न्यग्रोधस्तिभीनुपन-
ह्येच्छन् भक्षाय ॥ २८ ॥

वैश्यराजन्ययोः सोमयागे कर्त्तव्ये (१)न्यग्रोधस्तिभीनुपनह्येच्छन् भक्षाय इच्छन् होमायापि । भक्षो हि हुतशेषस्यैव भवति । तस्माद्धोमायापीति । एवं होमदर्शनं भवति-"यदान्यांश्चमसानुन्नयन्त्यथैनमुन्नयन्ति यदैताञ्जुहोत्यथैनं कुशतरुणेनोपहत्य जुहोतीति ॥ २८ ॥

क्रयणप्रभृत्यनुसोममावृता समानमासादनं
प्रागभिषवात् ॥ २९ ॥

क्रयणप्रभृति सह सोमेन सोमावृता समानमासादनादि कर्तव्यम् । सोमद्रव्यविकाराच्च प्रकृतावप्यूहः प्रवर्त्तत एव ॥ २९ ॥

चमसोन्नयनकाले वाऽहृत्य दध्नोन्मृद्य त-
च्चमसमनून्नयेत् ॥ ३० ॥

विकल्प एवायम् । तुल्यशास्त्रत्वात् ॥ ३० ॥

हूयमानेषु कुशतरुणेन जुहोत्यहं त्वदस्मी-
त्यहं त्वदस्मीति ॥ ३१ ॥

इति दशमाध्याये नवमी कण्डिका ।

---

इति श्रीकर्कोपाध्यायकृतौ कात्यायनसूत्रभाष्ये दशमोऽध्यायः ।

---

(१) तथाच 'शाखान्तरं' यदि राजन्यं वैश्यं वा याजयेत्स यदि सोमं विभक्षयिषेन्न्यग्रोधस्तिभिनीराहृत्य ताः सम्पिष्य दधन्युन्मृद्य तस्मै भक्षं प्रयच्छेन्न सोमम्' इति । 'स्तिभिन्योऽङ्कुराः फलानि वा, इति तद्भाष्यकारः ।

# एकादशोऽध्यायः ।

ब्रह्मत्वमतः ॥ १ ॥

आध्वर्यवमनुविहितम् । अतः परं ब्रह्मत्वं व्याख्यायत इति ॥ १ ॥

वाग्यतः कर्मणि वर्त्तमाने ॥ २ ॥

तच्च सौमिके । ऐष्टिकपाशुकेषु तूक्तमेव ॥ २ ॥

हिरण्यवत्याᳬ हुतायां दक्षिणाऽनुगच्छत्याक्रयात् ॥ ३ ॥

हिरण्यवत्यामाहुतौ हुतायां दक्षिणतो व्यवस्थितो ऽनुगच्छत्याक्रयात् ॥ ३ ॥

क्रीते प्राङ्कतीत्य पूर्वेणानः परीत्यापरेण वा दक्षिणो ऽनुगच्छत्यानिधानात् ॥ ४ ॥

क्रीते सोमे पदार्थतया प्राङ्गत्वा दक्षिणतो व्यवस्थितमनः पूर्वेणापरेण वा गत्वा अनुगच्छत्यासोमनिधानात् ॥ ४ ॥

दक्षिणाग्निं वाऽपरेण घर्मे ॥ ५ ॥

दक्षिणाग्निमपरेण वा प्रवर्ग्ये, वा दक्षिणेनेति सम्प्रदायः । अन्ये त्वाहवनीयं दक्षिणेनेति विकल्पमिच्छन्ति । दर्शपूर्णमासयोर्दृष्टत्वात् । तत्पुनर्नातीव युक्तरूपम् । न ह्यत्र दर्शपूर्णमासिकी धर्मप्रवृत्तिरपूर्वत्वात् ॥ ५ ॥

स्तम्बयजुर्हरिष्यत्याहवनीयदेशं दक्षिणेनास्ते वेदिसहितः ॥ ६ ॥

स्तम्बयजुर्हरिष्यत्यध्वर्यौ आहवनीयदेशं दक्षिणेनास्ते वेदिसंलग्नः ॥ ६ ॥

एवᳬ सर्वत्र प्रागग्नीषोमप्रणयनात् ॥ ७ ॥

आहवनीयदेशं दक्षिणेनास्ते। सर्वत्रग्रहणात्पूर्ववत् स्वपूर्वेषु ॥ ७ ॥

कर्मणः कर्मणो वा सहितस्तत्तदेवान्वेत्य ॥ ८ ॥

दक्षिणत आस्ते। अत्र चैके तत्तदेवान्वेत्येति बहिर्वेदावेवेच्छन्ति। अपरेत्वन्तर्वेदावपीति विप्रतिपत्तिः ॥ ८ ॥

आहवनीये प्रणीयमानेऽप्रतिरथस्य द्वादश ब्रुवन्नग्नौ ॥९॥

अनुगच्छति ॥ ९ ॥

सर्वत्रैके ॥ १० ॥

प्रणयनोद्देशेन विधानात्। तत्पुनरयुक्तम्। प्रणयनविशेषे विहितत्वात्। तस्मादग्नावेव ॥ १० ॥

स्तीर्णायां यथार्थमेत्य ॥ ११ ॥

आस्ते दक्षिणतः। नियमार्थमिदमुक्तम् ॥ ११ ॥

अग्नीषोमप्रणयनायोत्तरेण धिष्ण्याञ्छालाद्वार्यं पूर्वेणेत्यास्ते दक्षिणतः ॥ १२ ॥

शालाद्वार्यस्यैव ॥ १२ ॥

हुते च सोममादायाग्निमन्वेति ॥ १३ ॥

हुते च वैसर्जिने सोमं गृहीत्वा चशब्दात् शालाद्वार्यं पूर्वेणाग्निमन्वेति ॥ १३ ॥

यजमानो वा सोमं हरेत् ॥ १४ ॥

तुल्यशास्त्रत्वात् ॥ १४ ॥

अन्यस्मै प्रदायानिहिते यथेतमेत्यास्ते दक्षिणतः ॥१५॥

अन्यस्मै प्रदाय सोमम् अनिहित आग्नीध्रे अग्नौ उत्तरेण धिष्ण्यानेत्यास्ते तस्यैव दक्षिणतः ॥ १५ ॥

हुते च सोममादायाहवनीयं चातीत्य ॥ १६ ॥

हुते वैसर्जिने सोममादाय चशब्दादन्यस्मै प्रदाय सोममाहवनीयमतीत्य चशब्दादास्ते दक्षिणतः ॥ १६ ॥

